प्रत्ययार्थत्वेन भावनायाः प्राधान्यात्फलवाक्यविहितशुद्धभावनानुवादेन सोमादिवाक्यैरनादृतपौर्वापर्यैर्युगपत्सर्वधात्वर्थविधानान्न गुणन्यायो ऽस्तीत्याशयः । ननु सोमादिवाक्येषु भावनाविध्यभावे विशेषणसम्बन्धमात्रार्थं भावनाभिधानावृत्तिः स्यान्न चासौ युक्तेत्याशङ्क्याह * यद्यपीति * असत्यां गतौ गुणानुरोधेनापि प्रधानावृत्तिर्युक्तेत्याशयः । न तु केवलप्रकृतिप्रयोगासम्भवमात्रात्प्रत्ययावृत्तिसिद्धेः केवलप्रत्ययप्रयोगासम्भवः किमर्थमुक्त इत्याशङ्क्याह * यदि त्विति * फलसत्त्वादौ विशेषणान्वयाभिधानावृत्तिरिष्टेत्याह * दृष्टा चेति * अनन्यगतिगुणसम्पादनार्थो चानुष्ठानावृत्तिरपि दृष्टा किमुताभिधानावृत्तिरित्याह * तथेति * नन्वेवं सति भिन्नवाक्योपादानाद्धात्वर्थानां प्रत्येकमेव भावनाविशेषणता युक्तेत्याशङ्क्याह * तस्मादिति * यस्मात्कल्पनालाघवाय संहत्य विशेषणत्वं प्रतीयते तस्मात्सर्वधात्वर्थविशिष्टैकभावनाभिधानार्थत्वेनानेकार्थत्वात्सर्वं प्रकरणमेकं वाक्यमित्यर्थः । तस्मादित्युपसंहारभाष्यं सङ्क्षिप्य व्याचष्टे * एकमिति * संहत्य विशेषणत्वकल्पनस्यादृष्टकल्पनालाघवहेतुकत्वाभिधानार्थमत इति भाष्यं व्याचष्टे * एकं चेति * तृतीयपूर्वपक्षाभिधानार्थं यद्वेति भाष्यं स्वत्वपरित्यागांशेत्यनेन व्याख्यातत्वादसार्वत्रिकत्वेन चानादृत्य तथोक्तत्वादुपेक्ष्य स्वमते पूर्वपक्षैकध्याभिधानायाद्यं पूर्वपक्षं दूषयितुमारभते * अयमेव चेति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * श्लोकं व्याचष्टे * यदि हीति * अदृष्टार्थभावनाभेदान्यथानुपपत्त्या भावनाभेदवदपूर्वभेदस्यापि अवश्याभ्युपगन्तव्यत्वापत्तेः किमनेन पूर्वपक्षेण सिद्धान्तप्रतिकूलं क्षतं स्यादित्यर्थः कथमेकशब्दोपादानात्समुदायत्वापादनमित्यपेक्षिते समुदायानुवादरूपेण वा * फलादिसम्बन्धेन वेत्युक्तम् * पौर्णमासीमित्येकशब्दोपादानं तावद्यजिनानूद्यमानानां यागानां समुदायत्वापादनार्थमेव राजसूयेनेत्यस्य फलान्वयपरत्वात्समुदायापादनार्थत्वाभावे ऽप्येकशब्दोपादानेनैकफलान्वयात्समुदायत्वापत्तिरित्याशयः । ज्योतिष्टोमशब्दस्य सर्वप्राकरणिकया होमाद्यवच्छिन्नभावनासमूहवाचित्वमाशङ्कते * ननु चेति * यजिसामानाधिकरण्याद्भावनावाचितैव तावदयुक्ता धात्वर्थद्वारलक्षणया तु तद्वाचित्वाभ्युपगमे ऽपि यजिमात्रसामानाधिकरण्याद्धोमाद्यवच्छिन्नभावनासमूहवाचिता दुराशङ्केति परिहरति * नेति * उपसंहरति * तस्मादिति * का तर्हि भाष्यस्य गतिरित्याशङ्क्याह * एवं त्विति * यथेन्द्रायुधं लोहितशु-

ऌकृष्णाद्याभधातुभिः संहत्यानुरज्यते तथा सर्वधात्वर्थैर्भावनेति तिद्वाभाष्यव्याख्या भावनैक्योपपादनार्थत्वेनादृष्टार्थानामित्यादि-ाष्यं व्याचष्टे * तत्सिद्ध्यर्थात्विति * कर्मभेदे हीत्यनेनाभ्युच्य ःकमपूर्वमिति अकारप्रश्लेषो भाष्ये सूचितः भावनैक्ये समुदाय-ाब्दानुपपत्तिमाशङ्क्य धात्वर्थसमुदायानुरक्तस्यैकस्य भावनाख्यस्य कर्मणो ऽनुरञ्जकस्य समुदायस्यावयवभूतानां धात्वर्थानां समुदा-ोऽभिप्रेत इत्येवं व्याचष्टे * तस्मादिति * भाष्यं च धात्वर्थानां समुदायाप्रतीतेः कथं संहत्यानुरञ्जकतेत्याशङ्कानिरासार्थत्वे यस्मा-कल्पनालाघवाय भावनैक्यं युक्तं तस्मात्तत्सिद्ध्यर्थं धात्वर्थसमु-ायो ऽनुरञ्जकः कर्तु वेदस्येष्टो ऽवसीयत इत्येवं व्याख्येयम्। अथ ेति भाष्यं पक्षान्तराभावेनायुक्तमाशङ्क्य परमतेनोपसंहारार्थत्वेन व्याचष्टे * अत इति * स्वमतेनोपपत्त्यन्तरार्थत्वेन व्याचष्टे * शङ्कां त्वेति * अभिन्नार्थत्वामेवोत्तरस्तमेवेति भावनैक्याभिधानेन दर्श-यतीत्याह * तदिति * परेषां व्याख्यानं दूषयितुमुपन्यस्यति * ए-वमिति * दूषयति * तन्नेति * स्वमतेन भावनापरामर्शितया त-च्छब्दं व्याचष्टे *तस्मादिति* पूर्वभाष्यपर्यालोचनयाप्येष पदार्थः प्र- ४४६।१
तीयतइत्याह * तथा चेति* एतदेवोपपादयति *अतइति* तस्मा-दित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * यजत्यादित्रये धात्व-र्थैक्यादपि भावनैक्यमित्युपपत्त्यन्तराभिधानार्थं यद्वेति भाष्यं व्या-चष्टे * तस्मादिति * यजत्यादित्रयं धात्वर्थैक्यादपि भावनैक्यमि-त्युपपत्त्यन्तराभिधानार्थं यद्वेति भाष्यं व्याचष्टे *यद्वेति* ननु नैकां-शसाम्यमात्रेण धात्वर्थैक्यं युक्तमर्थैकांशसाम्येन सादृश्याद् गौण-वृत्त्या ददातिजुहोतिभ्यां यजत्यर्थानुवादो ऽभिहितः सो ऽपि गौण-त्वदोषापत्तेरयुक्त इत्याशङ्क्याह * अथापीति * जघन्यत्वसाम्याद् गौणतैव लक्षणा शब्देनोक्ता समुदायवाचिना वा त्यागाख्यैकदेशे वृ-त्तिर्लक्षणाभिमता गुणसम्बन्धार्थामिति भाष्यावयवं व्याचष्टे * गुणे-ति * को गुण इत्यपेक्षायामाह *एकत्रेति* प्राकाशावध्वर्यवे ददा-तीतिवत्सम्बन्धविधानोद्वाक्यभेदाभिप्रायः दक्षिणाकालत्वलक्षणो गुणो दाक्षिणशब्देनाभिमतः। ननु दक्षिणानयनोत्तरकालमेतद्धोमविधानात् क्रमेणैव दक्षिणाकालत्वप्राप्तेस्तत्प्रख्यन्यायेन दाक्षिणशब्दस्य नामत्वाद् गुणविधित्वं नास्तीत्याशङ्कते * नन्विति * धात्वर्था-नुवादपक्षे गुणविधित्वापत्तिरिति परिहरति * कर्मेति * अस्मिश्च पक्षे सन्देहभाष्यगता यजत्यादिशब्दा श्रुतिवृत्ता एवेत्याह * तदा चेति * कार्यशब्दस्वरूपक्रमानुरोधात्क्रियासामान्यवाचिना करो-

तिना तद्विशेषोक्तिक्रियालक्षणाद्वाच्यधात्वर्थविषयो ऽर्थाक्षेप्यापूर्वविषयो वेत्याह * एकामिति * संहत्यकारित्वे कार्यैक्य * लाशादेकामित्युक्तम् * एकं धात्वर्थमेकं वापूर्वं त्रयो धातवो गमयन्तीति कुर्वन्तिशब्दार्थे व्याख्याते ददातिजुहोत्योर्गुणसम्बन्धार्थत्वेन धात्वर्थाविधायकत्वात्कथं धात्वर्थसाध्यापूर्वगमकतेत्याशङ्क्य * तदेत्युक्तम् * यजत्यर्थानुग्राहकगुणविधायकत्वेन तयोर्यजत्यनुग्राहकत्वात्तत्सहकृतस्य यजतेरपूर्वगमकत्वमाभिप्रेत्य संहत्येत्युक्तमित्याशयः * तस्मादिति * पूर्वपक्षोपसंहारभाष्यं फलतो भावनैक्योपसंहारार्थत्वेन व्याचष्टे * तस्मादिति * उत्तराधिकरणे पूर्वशब्दस्य फलतः कर्मविषयतया व्याख्यास्यमानत्वादिहाव्याख्या सिद्धान्तसूत्रं व्याचष्टे * उच्यतइति * शब्दान्तरस्य धात्वर्थभेदद्वारा भावनाभेदप्रमाणत्वं वक्तुम् * धात्वर्थभेद इत्युक्तम् * धात्वर्थस्य प्रयत्नाख्यभावनाजन्यत्वात्तद्भेदस्य भावनाभेदकत्वासम्भवमाशङ्क्य ज्ञापकहेतुत्वं वक्तुम् * विज्ञेयमित्युक्तम् * संख्यादित्रयस्य भावनाभेदकत्वाभावे ऽपि धात्वर्थभेदाद्भावनाभेदसिद्धिं वक्तुम् *सर्वत्रेत्युक्तम्* कृतानुबन्धत्वव्याख्यानायोत्तरार्द्धम्। ननु भावनावाचिप्रत्ययैक्यात् भावनायाः स्वतस्तावदैक्यप्रतीतेः प्राधान्याच्च धात्वर्थभेदे ऽप्यावृत्त्यनुपपत्तेः कथं धात्वर्थभेदाद्भेद इत्याशङ्क्य निरस्य श्लोकार्थं प्रपञ्चयति * यद्यपीति * सम्बन्धिनिरूपणाधीननिरूपणस्य सम्बन्धस्य सम्बन्धिभेदेन ज्ञेयनिरूपणाधीननिरूपणस्य ज्ञानस्य ज्ञेयभेदेन भेददर्शनाद्यद्धीनं निरूपणं तत्तद्भेदेन भिद्यतइति व्याप्तेर्धात्वर्थाधीननिरूपणत्वाद्भावनाया धात्वर्थभेदेन भेदो ऽनुमीयत इत्याशयः। कथमनुरञ्जकभेदस्यानुरज्यभेदाक्षेपकतेत्याशङ्क्याह * न हीति * भावनाया धात्वर्थावच्छेदं विना भावनान्तराद्व्यावृत्त्यप्रतीतेरेकभावनावच्छेदकत्वविरोधप्रसङ्गेनैकस्यां भावनायामनेकानुरञ्जकसमावेशायोगादनुरञ्जकभेदो ऽनुरज्यभेदमाक्षिपतीत्याशयः। त्रयाणामप्येकस्यां भावनायां समावेशो न सम्भवति किमुत प्रकरणगतानां सर्वधात्वर्थानामिति त्रय इत्यनेनोक्तम्। ननु प्रत्येकमनुरञ्जकत्वे माभूत्समावेशः समुच्चितानामेव तु धात्वर्थानामेकभावनानुरञ्जकत्वं घटपटाविति युगपत् घटपटज्ञाने घटपटयोरिवैकज्ञानानुरञ्जकत्वं भविष्यतीत्याशङ्क्याह * न चेति * युगपत् घटपटसंयुक्तेनेन्द्रियेण घटपटविषयैकज्ञानोत्पत्तावपि ज्ञानजन्यार्थप्रकाशाख्यस्य फलस्याश्रयभूतघटपटभेदेन भेदात् घटप्रकाशांशे घटस्यानुरञ्जकत्वं पटप्रकाशांशे पटस्येत्यंशभेदेनोभयोरेकज्ञानानुरञ्जकत्वं तूक्तम्। धात्व-

ास्यानुकरणांशनिवेशेन भावनानुरञ्जकत्वात्करणांशस्य चैक्यान्ना-
कानुरञ्जकत्वापेक्षेत्याशयः। ननु समुच्चितानामेव करणांशनिवेशो
ाविष्यतीत्याशङ्क्याह * अन्योन्येति * भिन्नशब्दोपादाने ऽपि धा-
ुसमूहात्प्रत्ययोत्पत्तत्वादग्नीषोमयोरिव धात्वर्थसमुच्चयः स्याद्धा-
ोस्तु प्रकृतित्वेनोपादेयतया विवक्षितसंख्यत्वान्न समूहात्प्रत्ययो-
पत्तावग्नीषोमयोरिव धात्वर्थसमुच्चयः स्याद्धातोस्तु प्रकृतित्वेनो-
ादेयतया विवक्षितसंख्यत्वान्न समूहात्प्रत्ययोत्पत्तिरित्याह * न
ार्ति * नन्वेकस्मिन्पदे ऽनेकधातूपादानाभावे ऽपि प्राकरणिकानां
नर्वधातूनां प्रयोगवाक्यैकवाक्यत्वात्तद्विहितायां भावनायां प्राकर-
णेकसर्वधात्वर्थानां निवेशो भविष्यतीत्याशङ्क्याह * न चेति *
ायोगवाक्ये शुद्धभावनाप्रतीत्यभावात्सोमादिवाक्येषु च भावनावि-
धेनिरपेक्षधात्वर्थविध्ययोगात्साकाङ्क्षत्वाभावेन प्राकरणिकसर्वधा-
वर्थानुरक्तैकभावनाविधानरूपैकार्थत्वाभावान्नैकवाक्यता युक्तेत्या-
ायः। ननु कल्पनालाघवायापूर्वैक्यावधारणात्तस्य च भावनैक्यं
वेनानुपपत्तेः सर्वप्राकरणिकवाक्यानामेकभावनाप्रयोजनत्वेनैका-
र्थ्यादेकवाक्यता भविष्यतीत्याशङ्क्याह * न चेति * रूपादुत्तर-
काले हि विनियोगप्रयोजने इत्यनेन न्यायेनादृष्टप्रयोजनभेदाभेदयो-
र्मन्त्रभेदाभेदपूर्वकत्ववत्कर्मभेदो भेदपूर्वकत्वावगतेर्नापूर्वैक्येनैकार्थ्ये
ऽप्येकवाक्यकल्पना युक्तेति प्रत्याख्यानप्रकारं प्रकृते योजयितुमाह
* न चेति * ननु फलवाक्ये भावनाया धात्वर्थानुरागविवक्षायां
फलं प्रत्युपादेयविधेयगुणत्वाद्धात्वर्थे च प्रत्युद्देश्यानुवाद्यप्रधानत्वाद्वै-
रूप्यापत्तेः शुद्धाया विधेयत्वात्सोमादिवाक्यैस्तदनुवादेन यागादि-
धात्वर्थानुरागविधानमेकवाक्यत्वाभ्युपगमेन वा सर्वधात्वर्थानुरक्तै-
कभावनाविधानं युक्तमिति पूर्वपक्षाशयमाशङ्क्य निरस्यति * यदि
चेति * ननु भिन्नवाक्यगतैरपि धात्वर्थैरनुरागसम्भवे किमित्यप्र-
तीयमानैकवाक्यत्वकल्पनेत्याशङ्क्याष्टदोषविकल्पपरिहाराय समुच्च-
यसिद्ध्यर्थत्वं सूचयितुम् * युगपद्वेत्युक्तम् * पृथक्शब्देन धात्व-
र्थानुरागनिरपेक्षतोक्ता प्रत्ययेन शुद्धभावनोपादाने ऽप्यशक्यानुष्ठान-
त्वाद् बुद्धाया विधेयत्वासम्भवसूचनार्थो विधिवाच्युत्पत्तिशब्दः। भा-
वनायाश्च धात्वर्थवत् कारकत्वानभ्युपगमात्कर्मकरणत्वाभावेन तन्नि-
मित्तोद्देश्योपादेयत्वाद्यभावाद्धात्वर्थनिरपेक्षायाश्चाविहितत्वेन धा-
त्वर्थान्वये ऽप्यनुवाद्यत्वाभावान्न वैरूप्यापत्तिरित्याशयः। यदा च
धात्वर्थनिरपेक्षाया भावनाया विधेयत्वं न सम्भवति तदा ददात्या-
दीनां धात्वर्थानां मध्ये केन चिदेकेन धात्वर्थेन समस्तैर्वा धात्वर्थैर-

वच्छिन्नोत्पादयितव्या न शुद्धेत्याह *इतीति* ननु समस्तधात्वर्थावच्छिन्नभावनोत्पत्तिपक्षे पूर्वपक्षासिद्धिः स्यादित्याशङ्कयाह *तत्रेति* समस्तानामपि संहत्यावच्छेदकत्वायोगात्प्रत्येकमवच्छेदकत्वावगतेः प्रतिधात्वर्थं भावनाविधौ विहिताया विध्यसम्भवाद्भेदसिद्धिरित्यर्थः। अथैकेन धात्वर्थेनावच्छिन्ना भावनैकहायन्येव क्रयो विधीयते ऽन्ये तु धात्वर्थास्तस्यामेव भावनायां हिरण्यादीनीव क्रये विधीयमानानि न भावनाभेदमापादयन्तीत्युच्यन्ते तत्राप्येकहायनीवाक्येनैकगुणोपादानरूपकर्मोत्पत्तिचिन्हवदिह कस्मिंश्चिद्वाक्ये भावनोत्पत्तिचिन्हाभावेन व्यवस्थाहेत्वभावादगृह्यमाणविशेषतया सर्वत्र भावनाविध्यापत्तेर्दुर्वारो भावनाभेद इत्याह * अथेति * धात्वर्थान्तरेषु भावनाविध्यभावसूचनार्थं तावच्छब्दः अथागृह्यमाणविशेषत्वे ऽप्यनेकोत्पत्त्यानर्थक्याद्येन केन चिदेकेन धात्वर्थेनानुरक्ताया भावनाया उत्पत्तिरिष्यते तथाप्येकधात्वर्थानुरक्तायां धात्वर्थान्तरस्य गुणन्यायेनानिवेशाद्भावनाभेद एवेत्याह * येन केन चिदिति* धातुशब्दो ऽर्थपरः श्लोकं व्याचष्टे * येनैव हीति * सर्वप्रकरणैकवाक्यत्वविवक्षया वाक्यशब्दप्रत्याख्यानं वाक्यभेदविवक्षया प्र-
४४८।१ करणशब्दः एतदेवोदाहरणनिष्ठं विवृणोति * ददातिर्हीति * सर्वत्र पदश्रुतिगम्यत्वात् तुल्यबलत्वमाशङ्कते * ननु चेति* धात्वर्थान्तरानुक्तभावनाविशेषान्वयस्य श्रुत्यानवगतेरतुल्यबलत्वमाह * सत्यमिति * ननु भावनायाः स्वतो वैलक्षण्यानवभासेन सर्वत्रैक्याद्यागानुरक्तान्या दानानुरक्तान्येति भेदव्यवहारो न युक्त इत्याशङ्कते * ननु चेति * भिन्नधात्वर्थानुष्ठाने प्रयत्नाख्यभावनाव्यक्तिवैलक्षण्यस्य स्वसंवेद्यत्वाद्वैलक्षण्यानवभासेन सामान्यस्यैक्यं वाच्यं तत्विष्टमेवेत्युपहासेन परिहरति * केन चेति * धात्वर्थानुरक्तभावनाव्यक्तिवाची कर्मशब्दः व्यक्तेरपि धात्वर्थवैलक्षण्यं विना वैलक्षण्याप्रतीतेर्न भेदो ऽस्तीत्याशङ्किता स्वाशयं दर्शयति * नन्विति * धात्वर्थवैलक्षण्याख्यसामग्र्यपेक्षो ऽपि भावनाव्यक्तिवैलक्षण्यावभासो बाधाभावात्प्रमाणमिति निराकरोति * कथमिति* बाधाभावे ऽप्यन्योपाधिकत्वाच्छब्दभेदप्रत्ययवद्भावनाभेदप्रत्ययो मिथ्येत्याशङ्किता स्वाशयं विवृणोति * नन्विति * अन्यसन्निधिजन्यत्वमात्रं वौपाधिकत्वमभिप्रेतमन्यधर्माध्यासनिबन्धनत्वं वेति विकल्पं मनसि कृत्वाद्ये कल्पे तावत्प्रतिवर्णव्यञ्जकध्वनिभेदाद्भिन्नध्वनिसन्निधिजन्यत्वस्य सत्त्वे ऽपि गकारो ऽयं ककारो ऽयमित्यादिप्रत्ययभेददर्शनादनैकान्तिकत्वं तदभिप्रायत्वेन दृष्टान्तस्य साध्य-

विकल्पत्वमाह * नैतदिति * अथ द्रुतो ऽयं मध्यमो ऽयं विलम्बितो ऽयमित्यादिभेदप्रत्ययदृष्टान्तेनान्यधर्माध्यासनिबन्धनत्वं भावनाभेदप्रत्ययस्य मिथ्यात्वे हेतुरभिप्रेतः । सो सिद्धः ध्वनिधर्मो हि त्रिचतुःपञ्चकमात्रत्वरूपा द्रुतादिवृत्तयस्तस्मादुच्चारणं तेषां मात्राकालं प्रतीयते द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयमिति शब्दे मात्रानिषेधात् । तत्कल्पनानुपपत्तेर्वस्तुतो सत्वादध्यासेन प्रतीयन्तइति युक्तम् । धात्वर्थधर्मस्त्वनन्तरं नियमेन किं चिदुत्पादनरूपो भावनाफलस्यानन्तरोत्पत्तिनियमाभावान्न भावनायां प्रतीयते पूर्वापरीभावानिष्पन्नत्वरूपस्तु भावनायामपि व्यापारत्वेन वास्तवत्वान्नाध्यस्त इत्याशयेनाह * न चेति * द्रुतादिधर्मरहिताच्छब्दाद्विलक्षणधर्मतार्थान्तरशब्देनानन्तरं किं चिदुत्पादननियमरूपधर्मरहिताच्च भावनाख्यात्प्रयत्नाद्विलक्षणधर्मता व्यतिरिक्तशब्देन विवक्षिता । पूर्वापरीभावानिष्पन्नत्वरूपधात्वर्थधर्मतुल्यत्वप्रदर्शनार्थो नात्यन्तवाच्यदूरशब्दः उपसंहरति * तस्मादिति * एवं धात्वर्थाधाननिरूपणत्वाद्धात्वर्थभेदे वास्तवं भावनास्वरूपभेदमुक्त्वेदानीं स्वरूपेण भावनाव्यक्त्यैक्ये ऽपि शब्दान्तरादिभिर्विधेयरूपभेदस्य व्युत्पाद्यत्वाद्धात्वर्थानुरक्ताया एव च भावनाया विधेयत्वाद्धात्वर्थानुरक्तरूपेण भेदो भविष्यतीति वक्तुं वृद्धानां श्लोकं पठति *आह चेति* रक्तेन लाक्षादिनोपधानेनावरुद्धे स्फटिके चोदिते सति कृष्णफाटिकमानयत्यादिचोदनया यद्विहितं तद्रक्तचोदनाविहिते स्फटिके कार्ष्ण्यादेर्निवेशो योगात्तस्मादन्यद्यथा गृह्यते तथैकधात्वर्थावरुद्धा भावना विधाने सति या धात्वर्थान्तरचोदनास्तास्ता भावनान्तरविषयाः स्युरित्यर्थः । नन्वेवं सति गुणन्यायादेव भेदसिद्धेः शब्दान्तरानर्थक्यं स्यादित्याशङ्क्याह * यस्मात्त्विति * पूर्वपक्षनिरुत्तरीकरणायैतदुक्तं । वस्तुतस्तु यस्मात्प्रत्ययः कृतधात्वर्थावच्छेदमेव स्वार्थं वदति तस्मात्फलवाक्ये ऽपि शुद्धभावनानवगतेर्नैकस्यां भावनायामनेकधात्वर्थावच्छेदः सम्भवतीत्येतदिह व्युत्पाद्यमित्याशयः । ननु

प्रकृतिप्रत्ययौ ब्रूतः प्राधान्येन सहेति यत् ।
भेदेनैवाभिधाने हि प्राधान्यं तत्तयोच्यते ॥
स्याच्चेत्स उभयोर्वाच्यः प्रत्ययार्थः कथं भवेत् ।
व्यपदिश्येत नैकेन यद्यर्थ उभयोरसौ ॥
सर्वदा तूच्यते यस्मात्प्रकृत्यर्थोपसर्जनः ।
तेनासावुभयोरर्थः प्रयोजनतयोदितः ॥
यान्यावयवशक्तिभ्यां शक्तिःकाचित्पदाश्रया ।

विद्यते यत एकस्माद्विशिष्टार्थगतिर्भवेत् ॥ इति

शब्दे प्रकृतिप्रत्यययोरप्यन्विताभिधानस्य निरस्तत्वात्कृतानुबन्धमेव स्वार्थं प्रत्ययो वदतीत्ययुक्तमित्याशङ्क्य * प्रकृतीत्युक्तम् *

नित्यं विशिष्टएवार्थे प्रत्ययो यत्प्रवर्त्तते ।
तत्पूर्वतरविज्ञातप्रकृत्यर्थविशेषणात् ॥

इत्यनेन न्यायेनान्वितानभिधाने ऽपि परश्चेति प्रत्ययस्य प्रकृतिपरत्वस्मृतेर्वृद्धप्रयोगरूपाच्चाचारात्स्वार्थाभिधाने प्रकृतिप्रत्ययक्रमस्य नित्यं विवक्षितत्वावगतेरवर्ज्जनीया विशिष्टार्थावगतिरित्याशयः । इममेवार्थं तद्भूतताधिकरणभाष्येण द्रढयति * यथोक्तमिति * यजेतेत्यनेनेति भाष्येण कृतानुबन्धत्वादिति सूत्रावयवं व्याख्याय ननु धात्वर्थसमुदायेनैवावच्छेदाख्यो ऽनुबन्धो भावनाया भविष्यतीत्याशङ्कानिरासार्थं प्रयोगेति भाष्यमुत्पत्तिवाक्यशेषत्वेनापि धात्वर्थसमूहस्यापि सत्ताशब्दोक्तभावनान्वयोपपत्तेरयुक्तमाशङ्क्योपपादयति * प्रयोगवाक्येति * उत्पत्तिवाक्येनैव सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि सम्बन्ध्यन्ते न परस्परेणेतीन्द्रियकामाधिकरणवार्त्तिकवक्ष्यमाणन्यायेन प्रयोगवाक्ये भावनोत्पत्त्यभावान्नान्येषां तच्छेषत्वं सम्भवतीत्याशङ्क्योत्पत्तिलक्षणार्थेन सत्ताशब्देन प्रयोगवाक्ये भावनोत्पत्तिर्विवक्षितेति भावनाशब्देन सूचितम् । समुदायानुरागकल्पनस्यापूर्वकल्पनालाघवार्थत्वात्फलान्वयकल्पत्वाच्चापूर्वस्य फलान्वयस्य च धात्वर्थोत्पत्तिवाक्यानां प्रयोगवाक्यशेषत्वाधीनत्वात्समुदायानुरागकल्पनस्य प्रयोगवाक्यशेषत्वहेतुकतेत्यर्थः । ननु धात्वर्थावच्छेदानपेक्षेण स्वरूपेण भावनाया भाव्यनिष्ठत्वात्फलान्वयोपपत्तेस्ताहश्याश्च धात्वर्थोत्पादकसोमादिवाक्यानपेक्षाद्भावनोत्पादकात् ज्योतिष्टोमवाक्यात्प्रतीतेः किमर्थो सोमादिवाक्यानां ज्योतिष्टोमवाक्यशेषत्वापेक्षेत्याशङ्क्याह * नेति* धात्वर्थावच्छेदं विनानुष्ठेयत्वात्फलान्वयो न सम्भवतीत्याशयः । प्रकरणान्तरगतासु राजसूयादिभावनासु ज्योतिष्टोमभावनान्वयातिदेशसूचनार्थं बहुवचनम् । ननु भिन्नानामपि भावनानामेकप्रयोगवाक्यग्रहणात्समुदितानामेवापूर्वसाधनत्वाभ्युपगमेन कल्पनालाघवोपपत्तेः कथं प्रयोगवाक्यशेषत्वाद्धात्वर्थसमूहस्यैकभावनान्वयावगतिरित्याशङ्क्याह * अवधृतेति * अवधृतभेदानामेकवाक्योपादाने ऽप्येकशब्दानुपादानात्समुदायानुवादरूपतयैकीकरणमशक्यमित्यर्थः । स्वर्गकामो यजेतेत्युपश्लेषलक्षणया श्रुत्या धात्वर्थसंपादकस्य यागस्यैव भावनासम्बन्धो ऽवगम्यतइति श्रुतेति भाष्या-

क्तार्थव्याख्यार्थं सन्निहितयोरपीति भाष्ये दानहोमयोः प्रयोगवाक्ये ऽनुपादानान्नैकवाक्योपादानलक्षणः संनिधिरस्तीत्यपिशब्दसूचितमर्थं व्याचष्टे * न चेति * श्रुत्येतिशब्दं यजेरुपलक्षणार्थत्वशङ्कानिरासस्सूचनार्थत्वेन व्याचष्टे * न चेति * ननु यागायागसङ्कलिङ्गसमवायाद्यजिप्रवृत्तेस्तदान्तर्गतस्य यागस्याप्युक्तत्वान्न स्वार्थत्यागापत्तिरित्याशङ्क्य * अहोभयेति * भावनावद्धात्वर्थानामपि सङ्ख्योपत्तिहेतुत्वभावात्स्वरूपेण यागाभिधाने युगपद् वृत्तिद्वयापत्तिरित्याशयः। तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * भावनावाचिप्रत्ययैक्यात् शब्दान्तरात्वानुपपत्तिमाशङ्क्य शब्दान्तरं चेत्युपक्रमपूर्वकं शब्दान्तरत्वोपपादनार्थं तत्रार्थान्तरमित्यादि च शब्दान्तरहेतुकभावनाभेदोपसंहारभाष्यमेकहेलया व्याचष्टे * अतश्चेति * ननु यथा केवलस्य प्रधानस्य फलसाधनत्वज्ञानमुत्पन्नमपि करणस्येतिकर्त्तव्यतापेक्षत्वात्सेतिकर्त्तव्यताकस्य फलसाधनत्वज्ञानेन बाध्यते तथा केवलस्य धात्वर्थस्य भावनावच्छेदकत्वज्ञानमुत्पन्नमपि जन्यत्वेन तस्य भावनावच्छेदकत्वात् कारकानपेक्षेण च प्रत्ययवाच्याख्यभावनामात्रेण धात्वर्थाजननात्सिद्धरूपकारकाभ्युपगमे च तस्य निर्व्यापारस्य कारकत्वायोगाद्व्यापारकल्पनायां गौरवापत्तेर्धात्वर्थरूपकारकावच्छिन्नस्य धात्वर्थस्य भावनावच्छेदकत्वज्ञानेन बाधिष्यतइत्याशङ्कानिरासार्थं नन्विति भाष्यं व्याचष्टे * न चेति * दृष्टेनैव द्रव्यसम्प्रदानादिना कारकसङ्घेन दानादिधात्वर्थनिष्पत्तेर्न तन्निष्पादकधात्वर्थान्तरापेक्षेत्याशयः। यदा च शुद्धभावनाप्रतीत्यभावाद्धात्वर्थान्तरानपेक्षत्वान्न विभज्यमानसाकाङ्क्षत्वं भावनाभेदे च भावयितव्यापूर्वभेदावश्यम्भावान्न संहत्यैकार्थं तदेकवाक्योपादानाभावादपि धात्वर्थसम्पाद्यस्यैकभावनावच्छेदकता न युक्तेत्यभिधानार्थं तस्मादिति भाष्यं न वैतत्पदत्रयमेकवाक्यतां गच्छतीत्यादिना सा भावयितव्यापूर्वभेदादृते नैव भिद्यतइत्यन्तेन च व्याख्यातप्रायत्वान्न व्याख्यातं यजत्यादित्रये धात्वर्थैक्यादपि भावनैक्यमित्युपपत्त्यन्तरनिरासार्थं न चेत्यादिभाष्यं व्याचष्टे * न चेति * भाष्यस्थो दाधातुमिति शब्दो धातुलक्षणार्थः परसम्बन्धार्थत्वादित्यनेनासेचनार्थत्वात् जुहोतेरित्युपलक्षितमित्यासेचनशब्देन सूचितम्। ननूद्देशत्यागप्रक्षेपसमुदायवाचिनो जुहोतेस्त्यागपरस्वत्वापादनसमुदायवाचिनश्च ददातेस्तदेकदेशत्यागमात्रलक्षणायैकार्थ्यं भविष्यतीत्याशङ्क्याह * न चेति * देवतोद्देशसद्भावे ऽप्यासेचनपरस्वत्वापादानापेक्षो मात्रशब्दः त्यागमीत्रार्थत्वादिति भाष्ये ऽपि मात्रशब्दो ऽनेन सूचितः।

कालार्थे च तद्धितास्मृतेर्दाक्षिणशब्दस्य दक्षिणाकालवाचित्वात्प्रसिद्धेर्विधौ चावाचकशब्दायोगादर्थाक्षिप्तसाध्यांशसामानाधिकरण्याच्च नामत्वावगतेः कर्मण एव विधेयत्वात्सिद्धो भेद इत्याह * न चेति * धात्वर्थभेदाभेदचिन्तायां ददातिवाक्ये गुणविधौ सम्बन्धविधेराघाराग्निहोत्राधिकरणे निराकरिष्यमाणत्वाद्वाक्यभेदापत्तेः पूर्वपक्षायोगादुक्तोदाहरणानुपपत्तिप्रसक्तेर्नेह तच्चिन्तेति प्रसङ्गाद्दर्शयितुमाह * ददातिना त्विति * प्रयोजनभाष्यं धात्वर्थसङ्घस्यैकं भावनावच्छेदकत्वे सर्वेषामेकापूर्वसाधनत्वादङ्गाङ्गित्वाभावः पूर्वपक्षे सिद्धान्ते ज्योतिष्टोमयागाङ्गतेतरधात्वर्थानामित्येवं स्पष्टत्वान्न व्याख्यातम् ।

॥ समिदाद्यपूर्वभेदाधिकरणम् ॥ २ ॥

## एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥ १ ॥

ननु शब्दभेदरूपत्वेन सञ्ज्ञायाः शब्दान्तरसादृश्यादनन्तरविचार्यत्वासमाप्तेः कथमभ्याससर्वानन्तरं विचार्यतेत्याशङ्क्याह *शब्दान्तरेति * धात्वर्थविषयत्वेन सञ्ज्ञायास्तन्मात्रभेदकत्वाच्छब्दान्तरस्य तु धात्वर्थवाचित्वे ऽपि धात्वर्थस्य स्पष्टभेदत्वेनाभेदाशङ्कायोगाद्विशेषणशब्दानां च विशेष्यपरत्वेन धात्वर्थमात्रे धातोरपर्यवसानाद्धात्वर्थभेदद्वारा भावनाभेदकत्वाद्वैलक्षण्यमभ्यासस्य तु पुनर्विधानात्मकत्वाद्विधेश्च धात्वर्थानुरक्तभावनाविषयत्वेनोभयभेदकत्वाद्भावनाभेदकत्वांशेन साम्याद्धातुभेदे धात्वर्थभेदाद्भावनाभेदो धात्वर्थभेदे तर्हि धात्वर्थाभेदाद्भावनाया अप्यभेद इति च प्रत्युदाहरणरूपेण पूर्वपक्षसौकार्यादनन्तरसङ्गतिरित्याशयः। उदाहरणासंभवेनाभ्यासचिन्तामाक्षेप्तुं भाष्योक्तं तावदुदाहरणमुपन्यासपूर्वकमाक्षिपति * तत्रेति * ननु प्रमाणान्तरसम्भवे ऽप्यभ्यासो ऽपि प्रमाणं न वेति चिन्ता भविष्यतीत्याशङ्क्याह * षडपीति * एकस्मिन्विषये ऽनेकप्रमाणव्यापृतावेकप्रमाणव्युत्पादनेनैव कर्मभेदसिद्धेः प्रमाणान्तरस्य व्युत्पादने परस्याधिकस्यानन्यलभ्यस्य भागस्य भज्यमानस्य फलस्य लाभो नास्तीत्यर्थः । तर्हि उदाहरणान्तरं भवत्वित्याशङ्क्याह * न चेति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * नन्वैन्द्रवायवादिनाम्नः संस्कार्यसोमपरत्वेनोक्तगतिद्वयाभावात्तद्युक्तमाख्यातमुदाहरणं भविष्यतीत्याशङ्क्याह * ऐन्द्रवायवमिति * देवतालक्षणगुणविधानार्थत्वादैन्द्रवायवादिनाम्नो वा ऽपि गुणाद्भेद इत्यर्थः । भिन्नादिनाम्नस्तर्हि निमित्तार्थत्वेनागुणवि-

धानार्थत्वात्तद्युक्तमाख्यातं भेदकं स्यादित्याशङ्क्याह * भिन्न इति* प्रकरणान्तरेण भेदसिद्धेरभ्यासस्य चाभेदकत्वान्नोदाहरणतेत्यर्थः। कैश्चिद्वैशाख्याममावास्यायां सप्तदशमारुतीस्त्रिवत्सरा उपाकरोति सप्तदश पृश्नीनुक्षणस्तान्पर्यग्निकृतानेतरा लभते प्रेतरात्सृज्जन्ति ततः संवत्सरा नवनीतपृश्नारुणा आनयन्ति तांश्चैवोक्षणस्तान्पर्यग्निकृतानेतरा लभन्ते प्रेतरान्सृजन्ति ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्षणन्पर्यग्निकृतानेतरेतरा लभन्ते प्रेतरान्सृजन्ति ततः संवत्सरे पिशङ्गीरानयन्ति तांश्चैवोक्षणस्तान्पर्यग्निकृतानैतरा लभन्ते प्रेतरां सृजन्ति ततः सम्वत्सरे सारङ्गीरानयन्ति तांश्चोवोक्षणस्तान्पर्यग्निकृतानैतरा लभन्ते प्रेतरात्सृजन्तीति पञ्चशारदीयाख्याहीनसम्बन्धिषु पशुषु विहितेषु पञ्चकृत्वः पर्यग्निकरणाभ्यासमुदाहृतमुपन्यासपूर्वकं निरस्यति * ये त्विति * पञ्च शारदीयास्तथेति चेदित्येकादशाधिकरणे प्राजापत्योत्सर्गवदुक्षणामप्युत्सर्गः संस्कारनिषेध इति प्राप्ते संस्कारनिषेधे सति त्रींस्त्रीनुक्षण एकैकस्मिन्नहन्यालभेरन्यं चोत्तम इति प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदापत्तेर्नवमोपान्त्यव्युत्पादितारण्योत्सर्गवत्कर्मशेषनिषेधेन चोदनैकवाक्यत्वादिति सूत्रेण सिद्धान्तयित्वा संस्काराणां च दर्शनादिति सूत्रान्तरेण प्रतिवर्षं संस्कारानुवाददर्शनात्कर्मैक्ये च द्रव्याभेदेन पुनः पुनः संस्कारानर्थक्यात्प्रतिवर्षं कर्मसमाप्तिरवसीयतइत्युक्त्वा ननु वचनमेतद्भविष्यतीत्याशङ्क्य पर्यग्नि करोति पर्यग्निकृतांश्चोत्सर्जन्तीत्यनेकार्थविधौ वाक्यभेदापत्तेर्वत्सतरीषु च प्रकृतिप्राप्तानुवादत्वात्तत्साहचर्येणोक्षस्वप्यनुवादतैव न्याय्येति भाष्यकृद्वक्ष्यति। नन्वविधेयत्वात्पर्यग्निकरणस्य पुनर्विधानरूपाभ्यासाभावे ऽपि यागानां पुनर्विधानेन भेदस्यैकादशे वक्ष्यमाणत्वादुदादरणत्वं भविष्यतीत्याशङ्क्याह * न चात्रेति * द्रव्यदेवतान्वयकल्पत्वाद्यागानां तद्भेदेन गुणादेव यागभेदावगतेर्नाभ्यासस्य व्यापारो ऽस्तीत्याशयः। उदाहरणासम्भवमुपसंहरतीति भाष्योक्तमेवोदाहरणं समाधातुमाह * यथोदाहृतेष्वेव त्विति * भिन्ने जुहोत्यादेरनुपादेयार्थस्याख्यातान्वितस्यापि नाम्नस्तत्पारतन्त्र्यभावात् * प्रायेणेत्युक्तम् * श्लोकं व्याचष्टे * यानीति * ननु सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्त्यनादित्यनेन न्यायेनाश्रुताख्याततत्केतेष्वपि वाक्येषु तत्कल्पनेनाख्यातवत्त्वान्न क्व चित्संज्ञागुणयोर्भेदकत्वं स्यादित्याशङ्कते * नन्विति * कल्पस्याख्यातस्य कल्पकपारतन्त्र्येण भेदाभेदयोरव्यापारात् ज्योतिरादौ चैतेन सहस्रद-

क्षिणेन यजेतेत्यादिगुणान्वयव्यापारेणैतेनार्द्धिकामो यजेतेत्यादिफला-न्वयव्यापारेण च श्रुतस्याप्याख्यातस्य भेदाभेदयोरव्यापारात्तदन्वितस्यापि नाम्नो ऽपि भेदकत्वमविरुद्धमिति परिहरति * तत्रेति * भेदव्यापाराभावमात्रं सम्भवशब्देनोक्तम्। ननु यच्छब्दाद्यनुपबद्धस्याख्यातस्य विधेयान्तरोपादानात्प्राक् प्रकृतनिवेशनिश्चये ऽप्याख्यातसामानाधिकरण्यं विना संज्ञात्वानिश्चयात्कथं तयाभेद इत्याशङ्क्य * तत इत्युक्तम् * यागसंज्ञात्वानिश्चये ऽप्यधिकारार्थाथशब्दान्वयेनानुष्ठेयक्रियासंज्ञात्वनिश्चयाद्भेदकत्वोपपत्तिरित्याशयः । नन्वेवं सत्यैन्द्रवायवं गृह्णात्युद्भिदा यजेतेत्यादिनाम्नामाख्यातपारतन्त्र्याद्भेदकत्वानुपपत्तेः सर्वाणि परस्परासङ्गतोत्पत्तिकगुणयोगाद्भिद्यन्ते नाम्नैव चैवमादीनां भेद इति चायुक्तं स्यादित्याशङ्क्याह * यत्रापीति * आनर्थक्यप्रतिहतानां विपरीतं बलाबलमितिन्यायेनागत्या तत्र भेदकतेत्याशयः । एकसंज्ञावरुद्धे संज्ञिनि संज्ञान्तरस्याप्यसम्भवाद् गुणशब्देन संज्ञाप्युपलक्षिता आनर्थक्यनिमित्तत्वप्रदर्शनायैवादिशब्देनाक्रियमाणो यागे न शक्यः कर्त्तुमित्यनर्थकः स्यादित्युदाहृतम्।नन्वेवं सत्यत्रापि गुणादेव भेदसिद्धेः किमभ्यासोपन्यासेनेत्याशङ्क्याह * तच्चेति * आख्यातस्य भेदकत्वसम्भवे तत्पारतन्त्र्याद् गुणस्य भेदकत्वं नास्तीत्याशयः।ननु भाष्ये पूर्वभेदाभेदस्य सन्देहाभिधानात्किमेकस्य कर्मणो वाचकमनेकस्येत्ययुक्तमुक्तमित्याशङ्क्य द्वेधा व्याचष्टे * किमिति * यजतिशब्दः किम् यागे ऽभ्यासपूर्वमन्यत्कर्मैकं विधत्ते किं वा प्रतियजतिशब्दाभ्यासमन्येषां कर्मणां भेद इति द्वितीयव्याख्यायां भाष्यार्थः।अपूर्वशब्दो ऽन्यवाची कर्मविशेषणमित्याशयः । पूर्वपक्षं प्रतिजानाति * किमिति * हेतुप्रश्नोत्तरत्वेन शब्दान्तरइति भाष्यं पूर्वोक्तभेदहेत्वभावाभिधानार्थत्वेन व्याचष्टे * कुत इति * इहेति भाष्यं कर्मप्रत्यभिज्ञाख्याभेदहेत्वन्तरार्थत्वेन व्याचष्टे * अपि चेति * शब्दस्य तत्त्वात्पूर्वमेव कर्मबुद्धौ निवेशितमित्यर्थः।श्लोकं व्याचष्टे * यथैवेति * नन्विति भाष्येणानन्यपरविधिपुनः श्रुतविधेयकर्मभेदं विनानर्थक्यापत्तेर्भेदकत्वमाशङ्क्य सत्यमिति भाष्येणार्थशब्दो ऽभिधेयवाची प्रयोजनवाची वेति विकल्प्याद्यपक्षे प्रयोजनाभावे ऽप्यभिधेयसद्भावानर्थक्यमित्युक्तं तद्व्याचष्टे * यथा चेति * वार्त्तिके निष्प्रयोजनत्ववाच्यनर्थशब्दः । ननु वेदस्य प्रयोजनवदर्थाभिधायित्वनियमस्यार्थवादाधिकरणे स्थितत्वान्निष्प्रयोजनत्वापादकः कर्मैक्यपक्षो न युज्येतेत्याशङ्क्याह * न चेति * स्वरूपपरत्वे ऽर्थवादानां प्रत्यक्षादिविरोधेनाप्रामाण्यापत्तेः स्तुत्यर्थता-

का पुनः श्रुतेश्च पूर्वकर्मविधायित्वे ऽप्यनपेक्षत्वेनाप्रामाण्यानापत्तेः निष्प्रयोजनत्वमात्रेण न भेदकत्वं कल्प्यमित्याशयः। न चेति भाष्येण निष्प्रयोजनतापि नास्तीत्युक्तं तत्र भाष्योक्तस्य देवताविध्यर्थत्वस्य गुणनिमित्तभेदापत्तेरयुक्तत्वेनापरितोषात्स्वयं तावत्प्रयोजनत्रयमाह * अस्ति चेति * मन्त्रवत्कर्मकालप्रयोगितैकं प्रयोजनमित्याशयः। विधिश्रवणात्प्रयोगार्हरूपाभावेन प्रयोज्यत्वानुपपत्तेरपरितोषात्प्रयोजनान्तरमाह * अथ वेति * प्रतिप्रधानप्रयोगमावृत्तिराभीक्ष्ण्यं आदिशब्देनातिशयः। नन्वाभीक्ष्ण्ये द्वे भवतइति स्मृतेः पञ्चकृत्वो ऽभ्यासो न युक्त इत्याशङ्क्याह * अस्ति हीति * सकृत्प्रयुक्तात्प्रतीते ऽप्यर्थे तात्पर्यातिशयद्योतनार्थत्वादभ्यासस्यातिशयातिरेकार्थो ऽभ्यासातिरेक इत्यर्थः। पञ्चकृत्वो ऽप्यभ्यासो दृश्यतइत्याह * तथेति * इन्द्रस्य त्वष्टृपुत्रवधात्तेजोधर्ममाविशद् बलं वायुं रूपमश्विनौ अर्द्धमात्मन्यतिष्ठन्ततः पाण्डुपत्न्यां कुन्त्यां धर्मेण तेजोनिक्षिप्तं युधिष्ठिरो ऽभवद्वायुनिक्षिप्तं बलं भीमः इन्द्रनिक्षिप्तं देहार्द्धमर्जुनः अश्विभ्यां माद्र्यां निक्षिप्तं रूपं नकुलसहदेवाविति पञ्चापीन्द्रावयवप्रकृतित्वादिन्द्रा एवेति पञ्चेन्द्रोपाख्याने कुमार्यैव वृद्धतां प्राप्तया पतिं मे देहीति पञ्चकृत्वो वरमीश्वरः प्रार्थित इति श्रूयतइत्यर्थः। नन्वेवं सति पतिपञ्चकवद्यागपञ्चकमपि स्यादित्याशङ्क्याह * न चेति * अर्थान्तरविवक्षया प्रयुक्तस्य शब्दस्यार्थान्तरकल्पनया प्रत्यवस्थानं छलं निद्रिते ऽप्यमनस्के वा प्रबोध्यमाने बुध्यस्व बुध्यस्वेति यावत्प्रबोधं वृद्धकुमार्याश्च यावद्वरलाभमभ्याससम्भवे ऽप्यपौरुषेयत्वाद्वेदे तादृगाशयानुपपत्तेः। प्रतिप्रधानानुष्ठानमावृत्तेश्च न्यायादेव सिद्धेरनुष्ठानादरस्य च विधित एव सिद्धेरपरितोषात्पञ्चानां विकल्पेन विधातृतेति तृतीयं प्रयोजनमाह * अथ वेति * अध्येतृभेदाभावाद्व्यवस्थितविकल्पानुपपत्तेरेकस्मिन्नध्येतरि विकल्पे सर्वाध्ययनानर्थक्यापत्तेरपरितोषाद्भाष्योक्तं प्रयोजनमभ्युपेत्यवादेनानुसन्धत्ते * अथ वेति * ननु समिदादिशब्दानां देवताविध्यर्थत्वानिरासेन नामधेयत्वस्य वक्ष्यमाणत्वाद्देवताविधानार्थता न युक्तेत्याशङ्क्याह * कर्मेति * विध्यपेक्षितविधेयविशेषसमर्पणार्थत्वान्नामधेयस्य प्राक्सिद्धविशेषापेक्षिण्यनुवादे ऽनुपपत्तेरगत्या गुणार्थत्वापत्तिरित्यर्थः। वैश्वदेवादिनामधेयस्य गुणाद्युपबन्धोपयोगेनार्थवत्त्वादनुवादे ऽप्युपपत्तिरित्याशयः। प्रत्यभिज्ञायाः कर्मैक्यप्रामाण्याभावे ऽपि गुणविधावुपपदाक्रान्तविधिशक्तित्वेन कर्मानुवादावगतेर्गुणविधित्वस्याप्यभ्युपेत्यवादत्वं सूचयितुमाह * त-

स्मादपीति * वस्तुतस्तु प्रत्यभिज्ञैवाभेदे हेतुरित्याह*यत्रापि चेति* न देशान्तरस्थशब्दार्थप्रत्यभिज्ञानोक्तिरतिशयार्था विधेयभेदज्ञानं च विना विध्यभ्यासाज्ञानाद्विध्यभ्यासाद्विधेयरूपभेदाभ्युपगमे ऽन्यन्योन्याश्रयापत्तेः पुनरुच्चारणरूपाद्वाचकाभ्यासाद्वाच्यभेदो ऽभ्युपगन्तव्यस्तत्र जातेर्भेदायोगाद्व्यक्तेर्वाच्यत्वापत्तेस्तस्याश्चानित्यत्वाच्छब्दार्थसम्बन्धानित्यत्वाद्वेदाप्रामाण्यापात्तिरित्याशयेनाह * यदि चेति * यदा त्वन्ये त्वभेदमाचार्याः कर्मणामेव मन्यन्तइत्येतन्मताश्रयणेनैकैव यागव्यक्तिर्गकारादिव्यक्तिवन्नित्येष्यते तदा तद्व्यतिरिक्तजात्यभावात्प्रत्यभिज्ञानायास्तद्विषयत्वाशङ्कानुपपत्तेर्व्यक्त्यैक्यप्रामाण्यं स्पष्टमेवेत्याशयेनाह *किं चेति* संख्यानिबन्धनस्तु भेदो द्रव्यादिकारकात्मकव्यञ्जकभेदोपाधिको वर्णास्वेव द्रुतादिभेदोपाधिक इत्याशयः। अस्मिंश्च पक्षे ऽभ्यासार्थत्वेनापि पुनःश्रुत्युपपत्तेर्न कर्मप्रतीकतास्तीत्याह * यद्यपि चेति * स एव तर्ह्यस्त्वित्याशङ्क्याह * न चेति * ज्योतिष्टोमे ग्रहणान्वयित्वेन श्रुतानां देवतानां प्रकरणेन ग्रहणद्वारा योगान्वयात्प्रकरणस्य च युगपत्सर्वाङ्गग्राहित्वात्समुच्चयावगतेः प्रत्येकं च ग्रहणान्वयासंहतानां यागान्वयायोगाभ्यासो युक्तो न त्वत्र देवतासमुच्चयहेतुरस्तीत्याशयः। पूर्वपक्षप्रयोजनं चानेन समर्थितं तस्मादित्युपसंहारभाष्यस्थमपूर्वशब्दमयागेभ्यो ऽन्यत्ववाचितया व्याख्यातुमाह*तस्मादिति *, भाष्योक्तां सूत्रव्याख्यां स्पष्टयति * एवमिति * विधेरप्रवृत्तप्रवर्त्तनस्वभावत्वाद्विहितविधावप्रामाण्यापत्तेर्विधिपुनःश्रवणस्य भेदकत्वावश्यम्भावात्कर्मैक्यवादिना कर्मानुवादाभ्युपगमेन विधिपुनःश्रवणप्रभावो वाच्य इति मत्वा तदेव प्रश्नपूर्वमुपपादयति * कथमिति * नन्वन्याक्षिप्तशक्तित्वाभावे ऽपि विपरिवृत्तेरनुवादो ऽवसीयतइत्याशङ्क्याह * यदि हीति * ननु व्रीहिभिर्यजेतेत्यादौ विपरिवर्त्तमानस्यैवानुवादाभ्युपगमादवश्यमनुवादे विपरिवृत्तेः किं चित्कारो वाच्यसूत्रानुवादत्वं चेत्तथा न क्रियते किं तर्हि क्रियतइति पृष्टवोत्तरमाह * किं तर्हीति * समान्यतस्त्वनुवादत्वप्रसिद्धिरन्याक्षिप्तविधिशक्तित्वादेवेत्याह * तत्सामान्येति * एतदेव व्याचष्टे * यदा [illegible] नन्वनेकविध्यशक्तौ न क्व चिद्विशिष्टविधिः स्यादित्याशङ्क्याह * तां चेति * विपरिवृत्त्यभावे विशिष्टविधिरगत्या स्यादित्याशयः । ननु य एवं विद्वान्पौर्णमासीं यजतइत्यादौ रूपालाभादिनाप्युच्चारणदर्शनात्किमन्याक्षिप्तत्वेनेत्याशङ्क्याह * धात्वर्थेति * चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् गृह्णाति अष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तत्

गृह्णातीति वाक्यान्तराभ्यां जौहवोपभृताज्यद्रव्यलाभान्मान्त्रवर्णिकदेवतालाभाच्चान्नान्यो नोत्तारणहेतुरस्तीत्याशयः । ननु सामान्यतो ऽनुवादत्वाप्रसिद्धावपि प्रकृतस्यानुवाद इत्यनुवादविशेषत्वमेव तर्हि विपरिवृत्तेरास्त्वित्याशङ्क्याह * सर्वत्रैवेति * शब्दशक्त्यावगतस्य विधित्वस्यासम्भवावधारणं विना नानुवादकता युक्तेत्याशयः।अतो ऽनुवादाकाङ्क्षा प्राप्तिश्चानुवादत्वे हेतुर्न प्राप्तिमात्रमित्युपसंहरति * तस्मादिति * अनुवादत्वावधारणे ऽनुवादाकाङ्क्षायां हेतुत्वाभिधानस्य प्रकृतोपयोगमाह *तत्रेति* पूर्वं तेनैव शब्देनेत्यनेन प्रत्यभिज्ञानात्कर्मैक्यावगतेर्न तद्विरुद्धो भेदः पुनर्विधानात् सिध्यतीति यदुक्तं तद् दूषयितुमनुभाषते * यस्त्विति * दूषयति* प्रमाणेति * एतदेव विवृणोति * तथा हीति * श्लोकं व्याचष्टे * विधायका हीति * ननु दध्यादिवाक्ये ऽपि तर्हि कर्मान्तरत्वं स्यादित्याशङ्क्याह * यत्र पुनरिति * प्रत्यभिज्ञानस्यापि जातिविषयत्वेनोपपत्तेर्नात्यन्तबाध इत्याह * तस्मादिति * सामान्येनैक्ये चेदविवादः कस्य तर्ह्यत्र भेदश्चिन्त्यतइत्यपेक्षायामाह * तथा हीति * पश्वादीनां यागत्वसामान्यैक्ये ऽपि पशुत्वाद्यवान्तरसामान्यात्मकविशेषरूपेणान्योन्यं पशूनां चाग्नीषोमीयादीनां सोमानां ज्योतिष्टोमादीनाम् इष्टीनां च दर्शपूर्णमासाधानानां विधेयात्मकव्यक्तिरूपेणान्योन्यं भेदश्चिन्त्यत इत्यर्थः । सर्वत्र शब्देन संख्यादिसाधारणतास्याभिधानस्योक्ता । ननु विधिश्रुत्या कर्मान्तरज्ञानवद्यजिश्रुत्यैवैक्यज्ञानान्न बलाबले विशेष इत्याशङ्कते * ननु चेति * यागत्वमात्रज्ञानं तथा नैक्यज्ञानमिति परिहरति * नेतदिति * श्लोकं व्याचष्टे * न हीति * ननु शब्दार्थरूपस्येह भेदाभेदविचाराद्यक्तेश्चाशब्दार्थत्वाच्छब्दार्थभूतस्य च सामान्यस्यैक्याद्यजिश्रुत्यैव कर्मैक्यज्ञानसिद्धिरित्याशङ्कितां स्वाशयं विवृणोति * नन्विति * शब्दावाच्यत्वेनेतरासामवाच्यत्वाच्छब्दार्थतायामेवैक्यापत्तेर्विपरीतसाधनो हेतुरित्याशयेन परिहरति * येनैवेति * नन्ववाच्यत्वे सत्यैक्यवद्भेदस्याप्यनवगमात्कथं विपरीतसाधनतेत्याशङ्कां प्रश्नपूर्वं निरस्यति * कथमिति * विधेयरूपस्येह भेदाभेदविचाराज्जातेश्चाननुष्ठेयत्वेनाविधेयत्वात्तल्लक्षितानां व्यक्तीनामेव विधेयत्वावगतेर्विधेयसमर्पकस्य यजेस्तात्पर्यवृत्त्या व्यक्तिविषयत्वेनैक्यज्ञाने व्यापाराभावाद्विहितविधानायोगेन विधिपुनःश्रुत्या सन्निधिकृतैक्यज्ञानबाधाद्भेदज्ञानसिद्धिरित्याशयः । श्लोकं व्याचष्टे * यदिति * गत्वादिवन्न चैतेष्वित्यनेन व्यक्त्याकृतिभेदाभावमुक्तं दूषणायानुभाषते * यत्त्विति *

दूषयति * सत्यमिति * कर्मव्यक्तीनां स्वरूपेण क्षणिकत्वाद्व्यक्त्याकृतिभेदादिप्रमेयस्य विधेयरूपस्य विधिनित्यत्वेन नित्यत्वाद्विधेयरूपव्यक्त्याकृतिभेदो ऽपन्होतव्यः स च शब्दान्तरादिभेदप्रमाणं विना नास्तीत्येतावता न तत्सद्भावे ऽप्यपह्नोतुं शक्य इत्याशयेन श्लोकं व्याचष्टे * यथैवेति * व्रीहियवद्रव्यभेदे ऽप्याग्नेयादेरभ्युदयानिमित्तदेवताभेदे ऽपि चाभेदसूचनार्थं यजमानादीत्यादिशब्देन द्रव्यदेवतोपादानम्। एतदेव व्यवहारेण द्रढयति * तथा हीति * यागहोमादिकर्मव्यक्तिवद्यागव्यक्तीनां स्वरूपवैलक्षण्यानुपलब्धेर्भेदानुपपत्तिशङ्कानिरासार्थत्वेन प्राक् तस्मादिति व्याचष्टे * न चेति * यन्मात्रमिति श्लोकार्थमुपसंहरति * अतो ऽत्रेति * अतः शब्दपरामृष्टप्रामाण्याविशेषमुपपादयति * न हीति * इष्ट्यादिषु समस्तेषु प्रत्येकं वा भेदप्रत्ययस्यानौपाधिकत्वाद् बाधाभावाच्च न प्रामाण्ये विशेष इत्यर्थः । देशादिभेदे ऽपि विधेयरूपेण व्यक्त्यभेदोपसंहारमेवकारसूचितं विवृणोति * तेनेति * येन कारणेन शब्दान्तरादिषट्कावधिरेव भेदस्तेन व्यक्तिभेदे शब्दान्तरादिप्रमाणाभावाच्छब्दव्यक्तिवद्यागव्यक्तिषु नित्याभिव्यञ्जकभेदाद्भेदप्रतीतिरित्याशयः।ननु कर्मणः पूर्वापरीभूतानिष्पन्नत्वरूपत्वान्नित्यत्वं न सम्भवतीत्याशङ्क्य कूटस्थनित्यत्वाभावे ऽपि नित्याविधिविषयत्वरूपेण प्रवाहनित्यत्वसूचनार्थम् * तासु विधेयरूपास्वित्युक्तम् * एकाविधिविषयभूतव्यक्तिवद्भिन्नविधिविषयभूतेष्विष्ट्यादिषु भेदप्रत्ययस्याभिव्यञ्जकभेदानिबन्धनत्वानिरासायैवकारः । ननु सङ्कल्पात्मकयागस्वरूपस्य मानसप्रत्यक्षगम्यत्वाद्विधेयरूपस्य च विधिगम्यत्वात्कथं देशाद्यभिव्यङ्ग्यतेत्याशङ्क्याह * तेभ्यश्चेति * विधेयरूपाश्रयस्य यागस्वरूपस्य देशादिभिर्निष्पादनादनिष्पन्ने चाश्रयरूपे सदाश्रयविधेयरूपाप्रतीतेर्देशादिना विधेयरूपाभिव्यक्तिरित्याशयः । द्रव्यदेवतामात्राद्यागसिद्धेर्न देशादिभ्यो यागसिद्धिरित्याशङ्क्य * फलेत्युक्तम् * देशादीतिकर्त्तव्यतारहिताद्यागात्फलासिद्धेर्विधेयरूपोपलक्षितफलसाधनत्वरूपेण यागस्य देशादिभ्यः सिद्धिरित्याशयः । यदा त्वथ प्रत्यक्षे नित्ये एवेति शब्दाधिकरणभाष्यानुसाराद् बुद्धिकर्मणोरपि वर्णवत् कूटस्थनित्यतेष्यते तदा यागनित्यत्वे पूर्वकल्पनानुपपत्त्या शङ्कानिरासार्थत्वेनायं ग्रन्थो ऽनुष्ठानं नित्ययागाभिव्यञ्जकमाश्रित्य शब्दाभिव्यञ्जकादुच्चारणाच्छब्दफलार्थप्रतीतिसिद्धिवत्तेभ्यो नित्ययागाभिव्यञ्जकेभ्यो ऽनुष्ठानेभ्यो यागफलस्य सिद्धिस्तेषां क्षणिकत्वाद्युक्ता ऽपूर्वकल्पनेत्येवं योज्यः ।नन्वनित्याना-

मपि व्यक्तीनां नित्यसामान्योपलक्षितानां नित्यविधिविषयत्वोपपत्तेर्व्यक्तिनित्यत्वाभ्युपगमो वृथेत्याशङ्क्याह * यागत्वमेव चेति * विध्यन्तरविषयव्यावृत्तावान्तरसामान्यं विनानन्यविहितविधिविषयोपलक्षणायोगाद्यागत्वातिरिक्तस्य वावान्तरसामान्यस्याभावाद्व्यक्तीनामेव प्रवाहरूपेण कूटस्थत्वेन वा नित्यताभ्युपगन्तव्येत्याशयः। ननु भिन्नासु ज्योतिष्टोमादिव्यक्तिषु अभिन्नस्यैकाहादिशब्दस्य तज्जन्यस्य च प्रत्ययस्य यागत्वातिरिक्तावान्तरसामान्याभावेऽनुपपत्तेस्तान्येष्टव्यानीत्याशङ्कते * नन्विति * एकोपाधियोगादुपपत्तेः हरिहरति * नेति * एकाहशब्दस्योपाधिमाह * एकेनेति* अहीनशब्दस्याह * द्व्यादिभिरिति * यजिचोदिताहर्गणयोगस्योपाधित्वं प्रागित्यनेन सूचितम्। ननु द्वादशाहस्यापि यजिचोदिताहर्गणयोगेनाहीनत्वात्तस्मात्प्रागिति कस्मादुक्तमित्याशङ्क्याभ्युपैतिचोदितत्वसत्रलक्षणस्यापि सद्भावेन तस्य केवलाहीनत्वासम्भवादित्याह * स त्विति * आसीरन्नित्यसिचोदितगतस्योपेयुरित्युपैतिचोदितगतस्य वा सततानुष्ठानस्य सत्रशब्दोपाधित्वमाह * तदवधिकमेवेति * द्वादशाहस्याप्यवधित्वेन सत्रतोक्ता सहस्रसम्वत्सरं तदायुषामसम्भवान्मनुष्येष्वित्यत्र षष्ठाधिकरणे सहस्रसम्वत्सरशब्दस्याहः सहस्रवाचितया वक्ष्यमाणत्वात्षड्त्रिंशत्सम्वत्सरादेस्तदवधिककालत्वे ऽपि पूर्वपक्षे स्थित्वा सहस्रसम्वत्सरपर्यन्ततोक्ता सर्वसत्रान्ते विधानाद्वा यागगतपशुसोमातिरिक्तहविष्कत्वमिष्टिशब्दस्य पशुहविष्कत्वं पशुशब्दस्य, सोमहविष्कत्वं होमशब्दस्योपाधिमाह * हविर्विशेषेति * वस्तुवृत्तिकथनार्थं चेदमेकाहत्वाद्यवान्तरजात्यभावाभिधानं तत्सद्भावे ऽपि त्वनेकज्योतिष्टोमविश्वजिदादिविधेयसाधारण्येनैकाहत्वादेरसाधारणविधेयोपलक्षणत्वायोगाद्व्यक्तिनित्यताभ्युपगन्तव्येत्याह * अथापीति * स्वमतेन शब्दान्तरादिषट्कस्य विधेयरूपभेदे व्यापारमभिप्रेत्य भिन्नानामपि व्यक्तीनां यजिवाच्यैकयागत्वजात्योपलक्षितानामेकविधिविषयत्वोपपत्तेर्विधिविशेषविषयत्वाच्च विधेयान्तरेभ्यो व्यावृत्युपपत्तेर्यागत्वातिरिक्तावान्तरजात्यभावो ऽभिहितः स्वरूपभेद एव तु शब्दान्तरादिषट्कव्यापाराभ्युपगमे विधेयान्तरव्यावर्त्तकप्रतिविध्यसाधारणावान्तरज्योतिष्टोमत्वादिजात्या विना विधेयान्तरेभ्यो व्यावृत्त्यनुपपत्तेर्ज्योतिष्टोमादिव्यक्त्याकृतिभेदे ऽप्यदोषाद्गकारादिवद्व्यक्त्याकृतिभेदो नास्तीति यदुक्तं तदयुक्तमित्याशयेन * आहैवमिति * एकाहत्वादिर्ज्योतिष्टोमत्वादीनि प्रतिविध्यसाधारणान्यवान्तरसामा-

न्यानि यदि कल्पन्ते ततश्च स एवायं ज्योतिष्टोम इत्यादिप्रत्यभिज्ञायाः सामान्यविषयत्वोपपत्तेर्देशादिभेदाद्व्यक्तयो यदि भिन्ना भवन्ति तथा प्यदोष इत्यर्थः ॥ स्वरूपभेदाभेदचिन्तापक्षे भिन्नानां व्यक्तीनामेकविधिविषयत्वरूपैक्यस्यानादरसूचनार्थो ऽत्यन्तशब्दः पराभिमतत्रैलोक्यवर्त्तियागव्यक्त्यैक्याभ्युपगमे ऽप्यनुष्ठानभेदविषयत्वेन भेदप्रमाणानां व्यापाराद् प्रौढ्या दर्शयति * तथेति * कर्मभेदं कुर्यादिति भाष्यमस्मिन्पक्षे न युज्येतेत्याशयेनाशङ्कते * नन्विति * भाष्यस्यायुक्तत्वे ऽपि भेदचिन्ताप्रयोजनं तावत्सिद्ध्यतीति परिहरति * सर्वथा तावदिति * भाष्यमप्युपपादयितुमाह * तथापि त्विति * ग्रहयागेषु ज्योतिष्टोमवाक्येन ज्योतिष्टोमरूपतयानुष्ठानविधानात् ज्योतिष्टोमरूपतायाश्च सर्वाभ्यासेष्वैक्यान्नानुष्ठानभेदचोदनेति विशेषनिमित्तमित्याशयः विशेषनिमित्तान्तरमाह * अभ्यासेष्विति * ज्योतिष्टोमरूपावयव्युत्पादनात्तदपेक्षया ग्रहयागाभ्यासेष्ववयवबुद्धिर्न प्रयाजाभ्यासेष्वित्यतो ऽपि निमित्ताद्विशेषः । वैषम्यमित्यपिशब्दाभ्याहारेण योज्यम् । नन्वेवमपि कर्मभेदशब्देनैवंविधवैषम्यसूचनस्य किं प्रयोजनमित्याशङ्क्याह *एतज्ज्ञानस्य चेति* प्रयाजाभ्यासवत् ग्रहाभ्यासेष्वप्यनुष्ठानभेदचोदनायां धर्मग्रहणशक्तापूर्वभेदात्पशुसोमाधिकरणपूर्वपक्षवत्सिद्धान्ते ऽपि सोमविकारेष्वेकस्यैव ग्रहणस्य धर्मैः सकृदनुष्ठानेन च भवितव्यमिति प्रकृतितुल्यानुष्ठानं पशुसोमाधिकरणसिद्धान्तप्रयोजनं न सेत्स्यतीत्याशयः । प्रौढेरेव सबीजत्वार्थं भाष्यसम्मतिमाह * तस्मादिति * अस्यैव स्वमतत्वशङ्कानिवृत्त्यर्थं वक्ष्यमाणमेव भाष्यं स्वमतेनान्यथा व्याचष्टे * अथ चेति * बहुकृत्वो ऽपीति पूर्वपक्षभाष्योक्तार्थानुभाषणार्थं नन्विति भाष्यं विहितविधानानर्थक्यापत्तेर्विधिपुनः श्रुतेः कर्मान्तरविधिशक्त्यवगमादयुक्तमाशङ्क्य व्याचष्टे * नन्विति * उच्यतइत्यादिभाष्यं समिदादिशब्दानां देवताविधित्वस्य नवमे निराकरिष्यमाणत्वादयुक्तमाशङ्क्याभ्युपेत्यवादत्वेन व्याचष्टे * तत्रेति * कीदृशो ऽभ्युपेत्यवाद इत्यपेक्षायां पुनःश्रुतेर्देवताविधानाक्षिप्तशक्तित्वात्कर्मभेदकत्वाभावे ऽपि गुणाद्भेदो भविष्यतीत्येवं रूपं वक्तुं समिद्वाक्येन शुद्धे यागे विहिते तनूनपादादिवाक्ये देवताविध्युपपत्तेर्न गुणाद्भेद इत्याशङ्कानिरासार्थं समिधो यजतीत्यादिभाष्यं व्याचष्टे * यत्तावदिति * भाष्यस्थस्य देवताशब्दस्योपलक्षणार्थत्वज्ञापनार्थो द्रव्यशब्दः गुणस्य भेदकत्वाय पूर्वकर्मसंयोगासम्भवाभिधानार्थं तत्रेति भाष्यं व्याचष्टे * उभयमपि चेति * अभ्युपेत्यवादस्वरूपार्थं स

एष इति भाष्यं व्याचष्टे * अवश्यं चेति * समिद्वाक्यन्यायमुत्तरेषु वाक्येष्वतिदिशति * एवमिति * अस्याप्यभ्युपेत्यवादत्वोपपादनार्थं गुणविधित्वं द्रव्यविधित्वेन देवताविधित्वेन चेत्येवं विकल्प्याद्यं पक्षं तावन्निरस्यति * गुणेति * द्वितीयान्तेन शब्देन द्रव्यविधिर्निरस्त इत्यर्थः । गुणविधित्वमपि कीदृगित्यध्याहृत्य योज्यं होमे च प्रतिपत्तिकर्मणि प्रस्तरप्रहरणादौ प्रक्षिप्यमाणांशेन कर्मभूतद्रव्यान्वयसम्भवे ऽपि यागे कथंचिद् द्रव्यस्य प्राधान्यलक्षणकर्मत्वायोगान्न कर्मभूतद्रव्यान्वयः सम्भवतीत्याह * विशेषेण चेति * प्रयाजे ऽपि चेदित्यत्राधिकरणे श्रुत्याविनियुक्तानां मन्त्राणां स्वार्थसमवायकल्पकत्वासम्भवान्मान्त्रवर्णिकदेवताप्राप्त्यभावेन तत्प्रख्यन्यायाभावान्नामधेयत्वानुपपत्तेर्विष्णुं यजतीतिवत्समिदादिशब्दानां द्वितीयान्तानां देवानां विधित्वं पूर्वपक्षयित्वा यजेः पूजावाचित्वाभावेन देवतायाः पूज्यमानकर्मत्वायोगात्तदुद्देशांशस्य वा समाप्तित्वेनाशब्दार्थत्वात्तत्कर्मणो ऽभिभूतत्वेन विवक्षानुपपत्तेरुद्देश्यत्वे ऽपि चानीप्सिततत्वात्प्राधान्यलक्षणकर्मत्वानुपपत्तेः श्रुत्यविनियुक्तानामपि मन्त्राणामुपांशुयाजवद्यागाकाङ्क्षितदेवताकल्पकत्वोपपत्तेर्देवताविधित्वस्य निराकरिष्यमाणत्वाद्देवताविधित्वेनापि गुणविधित्वं न सम्भवतीति द्वितीयं पक्षं निरस्यति * नचायमिति * तस्मादिति सिद्धान्तोपसंहारभाष्यं फलतो यागभेदोपसंहारार्थत्वेन व्याचष्टे * तस्मादिति * अनेन च यस्मात्समिदादिवाक्यैः प्रधानयागानुवादे पुनः पुनर्यागस्याक्रियमाणत्वाद्देवतान्तरान्वयकरणाशक्तेर्विध्यानर्थक्यापत्तिस्तस्माद्यागविधित्वमभ्युपगम्य विहितविध्ययोगात् भिन्ना यागाभेदेन कार्या इत्येवं भाष्यं व्याख्यातम् । ननु यागभेदे ऽपि प्रयाजसमाख्ययैककार्यत्वावगतेर्विकल्पस्य न्याय्यत्वान्नाभ्यासो युक्त इत्याशङ्कानिरासार्थं प्रत्यभ्यासं चेति भाष्यं तद्विवरणार्थं च न च यत्समिद्यागान्वयेन क्रतोरदृष्टमुपकाररूपं क्रियते तदेव तनूनपाद्यागान्वयेन तयोर्यागयोर्भिन्नत्वेन तदनुनिष्पाद्यदृष्टभेदावगतेः समाख्यायाश्च प्रधानप्राग्भावमात्रनिमित्तत्वेन कार्यभेदे ऽप्यविरोधादित्यभिप्राय यागैक्ये ऽप्यनेकदेवतान्वयसम्पादनायानुष्ठानाभ्यासोपपत्तेः पूर्वपक्षप्रयोजनाभावाशङ्कानिरासार्थं च प्रयोजनभाष्यं स्पष्टत्वान्न व्याख्यातम् ।

॥ आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ॥ ३ ॥

## प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ २ ॥

समप्राधान्याङ्गाङ्गिभावचिन्ताया लक्षणासङ्गतिं पौनरुक्त्यं चाशङ्कते * समस्तानीति * एवं समामनन्तीति प्रकारवाचिनैवंशब्देनानूयाजादिसूचनात् * समस्तानित्युक्तम् * आघारसमिद्यजुषांहोमत्वे ऽपि यागेष्वेव समप्राधान्यशङ्कोपपत्तेर्भूम्ना यागशब्दः अवघातादौ गुणप्रधानकर्मत्वचिन्ताया लक्षणार्थत्वाभावे ऽपि यथा प्रासङ्गिकसङ्गतिस्तथापीह नास्तीति केन * नामे त्युक्तम् * विशेषतश्चेयं चतुर्थोपान्त्ये करिष्यमाणत्वात्पुनरुक्तेतीयमित्यनेनोक्तम्।असङ्गतिं तावद्विवृणोति * अभ्यासेति * लक्षणार्थत्वशङ्कामुपन्यासपूर्वं दूषयति * केचिदिति * पौनरुक्त्यं विवृणोति * महतेति * श्लोकार्थमुपसंहरति * तस्मादिति * चिन्ताद्वयं चैकस्मिन्नधिकरणे न युक्तमित्याह * य एवामिति * शब्दान्तरत्वादित्यपि भा-
४५९।३ ष्यमयुक्तमित्याह * अपि चेति * श्लोकं व्याचष्टे * शब्दान्तरत्वादिति * ननु प्रयोगचोदनाभावादर्थैकत्वमविभागादितिवत्तन्त्रेण चिन्ताद्वयं भविष्यतीत्याशङ्क्य * आह न चेति * समप्राधान्याङ्गाङ्गिभावयोः पक्षयोर्हेतू न दृश्येते इत्याशयः।विध्यनुवादचिन्तैवाधिकरणार्थो नाद्येति समाधत्ते * तस्मादिति * द्वयोरेवोदाहरणत्वे वाक्यान्तरानर्थक्यमाशङ्क्याह * तत्रेतरेषामिति * कस्मात्समप्राधान्याङ्गाङ्गिभावो नाधिकरणपक्षावित्याशङ्क्य पौनरुक्त्या सङ्गतिहेत्वभावात्मकयुक्तित्रयपरामर्शायोक्तशब्दः।नन्वेवमपि प्रकृतानां कर्मणामनुवदितारावपूर्वयोर्वा कर्मणोर्विधातारावितिं प्रकृतापूर्वशब्दाभ्यां भेदाभेदयोरपि चिन्त्यत्वप्रतीतेश्चिन्ताद्वयापत्तिरित्याशङ्क्याह * तदिहेति * विध्यनुवादसिद्धौ पूर्वन्यायादेव भेदाभेदयोः सिद्धेः पृथगचिन्त्यत्वात्त्रिकस्य त्रिकस्यैकपक्षतेत्यर्थः । किमर्थं तर्हि त्रयोपन्यास इत्याशङ्क्य * उत्तरफलत्वेनेत्युक्तम् * विधातृत्वे ऽपि कर्मभेदाभावे पुनर्विधानार्थवत्त्वाय फलवाक्यस्थद्विवचनान्तदर्शपूर्णमासशब्दापेक्षितद्वित्वसम्पादनार्थमाग्नेयादिसमुदायद्वयाविधातृत्वापत्तेः सिद्धान्तवत्तेषामेव फलान्वयेनेतरेषामङ्गत्वात्समप्राधान्यासिद्धेरनुवादत्वे ऽपि चाग्नेयाद्यतिरिक्तकर्मानुवादित्वात्तेभ्यो ऽन्यत्वे सत्याग्नेयादिसमुदायद्वयाक्लृप्तेः फलवाक्यस्थदर्शपूर्णमासशब्दस्याग्नेयादिषट्कविषयत्वाप्रसिद्धेर्यजिविशेषकत्वायोगात्समप्राधान्यापत्त्याङ्गाङ्गिभावासिद्धेरुत्तरोत्तरस्य फलत्वज्ञापनार्थं त्रयोपन्यास इत्याशयः । नन्वेवमप्यभ्यासलक्षणभेदातिप्रसङ्गापवादार्थत्वेनाधिकरणस्य सङ्गतिसिद्ध्यर्थं भेदाभेदाभ्यां च विना विध्यनुवादत्वमात्रात्समप्राधान्याङ्गाङ्गिभावासिद्धेः प्रयोजनाभावेनाधिकरणानारभ्यत्व-

प्रसङ्गाद्भेदाभेदावेवोपन्यसनीयावित्याशङ्क्याह * त्रितयस्य चेति * भेदाभेदयोः प्राधान्येन विचार्यत्वे ऽप्युपायभूतविध्यनुवादद्वारा फलभूतसमप्राधान्याङ्गाङ्गिभावद्वारा चेष्टभेदाभेदसिद्धिं मत्वा न श्रुत्योपन्यास इत्याशयः। पश्चात्तर्हि प्रकृतापूर्वशब्दाभ्यां तयोः श्रुत्योपन्यासः किमर्थमित्याशङ्क्याह*तत्र चेति * नन्वादौ भेदाभेदावुपन्यस्य तत्सिद्ध्यर्थत्वेन विध्यनुवादचिन्ताकस्मान्न कृतेत्याशङ्कते * किमर्थं पुनरिति * फलद्वारोपन्यासो भाष्यकृत्प्रक्रियेति केषांचित्परिहारमाह * एषा हीति * स्वमतेन लिङ्गदर्शनानुसारेणैवं कृतिमिति परिहरति * अथ वेति*नन्वेवमपि तत्रेति सन्देहभाष्यावयवो ऽनर्थक इत्याशङ्क्याह * तत्रेति * आग्नेयादिवाक्यानां कर्मविधायकत्वे सत्येव विद्वद्वाक्ययोस्तद्व्यतिरिक्तकर्मविधायित्वादेकः पूर्वपक्ष इत्युक्तशब्दान्तरत्वादिति भाष्यान्नेदृक् पूर्वपक्षः प्रतीयत इत्याशङ्क्य * समप्राधान्यद्वारेणेत्युक्तम् * द्वितीयपूर्वपक्षाभिप्रायसूत्रेति भाष्यावयव इत्याशयः। अनेन च विद्वत्संयुक्तावप्याख्यातप्रत्ययौ विधातारावित्यपिशब्दाध्याहारेणाद्यपूर्वपक्षवचनव्यक्तौ तावेवेत्येवशब्दाध्याहारेण चावृत्त्या द्वितीयपूर्वपक्षवचनव्यक्तावथ वेति भाष्यावयवं व्याख्याय विद्वद्वाक्याभ्यामेव कर्मविधावाग्नेयादि वाक्यानर्थक्याशङ्कानिरासार्थत्वेन तत्रेति भाष्यावयवो व्याख्यातो भवति * किं तावदिति * पूर्वपक्षभाष्यं व्याचष्टे * प्रथमं तावदिति * व्यतिरेकशब्देनाद्यपूर्वपक्षार्थतोक्ता भेदे च दृष्टसामर्थ्याविन्यनेनोक्तमाक्षेपं परिहरति * यद्यपि चेति * अभ्यासलक्षणभेदातिप्रसक्तापवादार्थत्वे ऽप्यधिकरणस्य समप्राधान्ये सत्यङ्गाभावात्किमपेक्ष्य प्रधानतेत्याशङ्क्यायागानामाघारादीनां राजसूयवदङ्गत्वसूचनार्थं शब्दान्तरेणायागेभ्यो भेदः पूर्वपक्षितः। ननु विद्वद्वाक्ययोरनुवादत्वेन विधातृत्वाभावान्न पूर्वन्यायद्वयविषयतेत्याशङ्क्याह * न चेति * प्रकृतयागानुवादे च प्रयाजादेरपि प्रकृतत्वाविशेषेणानुवादापत्तेः सञ्ज्ञायाश्चाप्रसिद्धत्वेनाविशेषकत्वात्फलवाक्यस्य द्विवचनापेक्षिताग्नेयादिसमुदायद्वयसम्पादनमपि प्रयोजनं न सम्भवतीत्याशयेनाह * न चैषेति * न च लिङाद्यभावेनाविधातृतेत्याह * वर्त्तमानेति * यावदुक्थो नोपाप्नोति तावदुपाप्नोतीत्यर्थवादात् पौर्णमासीवाक्यस्य यावदतिरात्रेणोपाप्नोति तावदुपाप्नोतीत्यर्थवादाच्चामावास्यावाक्यस्य विधित्वनिश्चयः यच्छब्दोपबन्धो ऽपि न विधिशक्तिं व्याहन्तीत्याह * सत्यपि चेति * विधायकत्वे च सत्यभ्यासाद्भेदसिद्धिरित्याह * न चेति * नन्वर्थवादता-

नयोः कस्मान्न कल्पितेत्याशङ्क्याह * न चेति * नन्वरूपत्वात्कर्मविधिर्न सम्भवतीत्याशङ्कते * किं पुनरिति * परिहरति * तदिति * हेत्वर्थतया साधारणशब्दं व्याचष्टे * सर्वस्मै वा इति * ननु विहिताज्यद्रव्यकेष्वेवानेन ध्रौवत्वमात्रविधिरित्याशङ्क्योपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतत्वाद्यथा कामी प्रतीयेतेति सूत्रेण दशमे हविर्विशेषाश्रवणेनोपांशुयाजे द्रव्यानियमं पूर्वपक्षयित्वा ध्रौवाद्वा सर्वसंयोगादित्यनेनाविहितद्रव्यकेषु ध्रौवविधिर्वक्ष्यमाणो दृष्टान्तितः। यच्च तत्र भाष्यकृता आज्यस्यैव नावित्यनेनाज्यविधिमाशङ्क्यैवमप्यनियमो यत्किं चिदाज्यमिति वक्ष्यते तदभ्युपेत्यवादमात्रमित्याशयः । ननु तृतीये मिथश्चानर्थसम्बन्ध इत्यत्राज्यभागक्रमाम्नानेन वार्त्रघ्नीवृधन्वत्याख्यमन्त्राणां तदङ्गत्वस्य वक्ष्यमाणत्वात्कथमनयोः कर्मणोस्तद्वशाद्देवताप्राप्तिरित्याशङ्क्यां निरस्यन्मात्रवर्णिकं व्याचष्टे * तथेति * आग्नेयादेर्निर्ज्ञातदेवतात्वनार्थान्तरवाचिमन्त्रान्वयायोगात्तादर्थ्येन वाक्यविनियोगानुपपत्तावपि विद्धवाक्यविहितयोः कर्मणोरनिर्ज्ञातदेवतात्वेनैतन्मन्त्रान्वयाविरोधात् वाक्येन क्रमं बाधित्वैतदङ्गतया विनियोगोपपत्तिरनयोरित्यनेन सूचिता । नन्वनुवाक्याविधिस्थयोः पौर्णमास्यमावास्याशब्दयोः कालवाचित्वात्कथं वाक्येन कर्माङ्गतेत्याशङ्क्याह * न हीति * ननु कर्मणिलक्षणापत्तेः श्रुत्या कालार्थितैवोचितेत्याशङ्कते * नन्विति * कालस्याननुष्ठेयत्वेन मन्त्रानाकाङ्क्षत्वात्तदङ्गत्वे मन्त्रस्यानर्थक्यापत्तेरर्थवत्त्वाय लक्षणाप्युचितेति परिहरति * किं हीति * ननु कर्मणो ऽधिकरणत्वायोगात्तद्वाचित्वे सप्तमी न युज्येतेत्याशङ्क्याह * दृष्टश्चेति * अधिकरणस्याधेयसंस्कार्यत्वेनागारे गावो वास्यन्तामित्यादौ प्राधान्यदर्शनाल्लक्षणयाधिकरणवाचिन्याः सप्तम्याः प्राधान्यार्थता युक्तेत्याशयः । नन्वेकस्मिन्कर्मण्यनुवाक्याद्वयानर्थक्यं याज्यानुपलब्धेश्च यागानुष्ठानासिद्धिरित्याशङ्क्याद्वयं चतुर्द्धा परिहरति * तेनेति * अनुवाक्याद्वयस्यैकयागार्थत्वाद्विकल्पो याज्यापि चाश्रुता देवतलक्षणयाज्यानुवाक्या इत्यसमाम्नातयाज्यानुवाक्याविषये यागाङ्गदेवतावाचियाज्यानुवाक्याकल्पनस्मृतेराग्नेय्यनुवाक्यापक्षे याज्याप्याग्नेयी सौमीपक्षे सौमीकल्पेत्येकः परिहारः इतरेतरयोर्विहितद्वन्द्वापवादत्वेनैकशेषस्यापीतरेतरयोगावाचित्वादनुवाक्याद्वयस्य समुच्चयप्रतीतेस्तद्वशेनाग्नीषोमयोर्देवतात्वकल्पनाद्वयोरर्थवत्त्वं याज्या च तदानुरूप्येणैवाग्नेयी सौम्यी चान्या कल्पेति द्वितीयः । कर्मद्वयाभिप्राया

वीप्सा कल्पनालाघवे ऽप्येकैव द्विदेवत्या याज्येति तृतीयः । एकस्मिन्कर्मण्यनुवाक्याद्वयानर्थक्याद्याज्यानुवाक्यात्वे ऽपि चेतरेतेतरयोगोपपत्तौ अनुशब्दस्य च याज्यायामपि प्रैषपश्चाद्भावेनाविरोधात्समुच्चितयोश्चाङ्गत्वेनाग्नीषोमदेवत्यकर्माध्यवसानान्मनोतान्यायेनैकदेशद्वारा तत्प्रकाशनेनोभयोः सम्वादोपपत्तेरश्रुतकल्पनापरिहाराच्च श्रुतयोरेवं मध्ये ऽनुवाक्यैका याज्यैकेति चतुर्थः। आज्यभागयोस्त्वद्यनुवाक्याकल्पदेवतानुपपत्तेः साकाङ्क्षत्वं स्यादित्याशङ्क्याह * आज्यभागयोस्त्विति * तौ होचतुरग्नीषोमौ किमावयोस्ततः स्यादित्यग्नीषोमयोः प्रक्रान्तयोः नाविति द्वितीयया यजिकर्मत्वानिर्देशाद्विष्णुं यजतीत्यादिवद्देवतात्वावधारणेत्याशयः । जुषाणो ऽग्निराज्यस्य वेतु जुषाणः सोम आज्यस्य वेत्विति याज्यायास्तु केन चित्साकाङ्क्षतानाशङ्क्येत्याह * याज्येति * नन्वनुवाक्ययोर्बाधितत्वात्तत्साकाङ्क्षत्वं स्यादित्याशङ्क्याह * अनुवाक्येति * रूपवन्तावित्युत्तरार्द्धं व्याचष्टे*तस्मादिति * पूर्वपक्षभाष्यार्थं व्याख्यातमुपसंहरति * अतश्चेति * ननु भेदे ऽपि चतुर्थोपान्त्यन्यायेन दर्शपूर्णमासाख्यानामेव यागानां प्राधान्यान्नेतरेषामङ्गत्वात्समप्राधान्यसिद्धिरित्याशङ्कते * भेद इति * तमेव न्यायं प्रश्नपूर्वकमाह *कुत इति* पृथक्त्वेनाभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं तत्सन्निधावसंयुक्तं तदङ्गं स्याद्भागित्वात्कारणस्याश्रुतान्यसम्बन्ध इति सिद्धान्तसूत्रावयवं केषु चिदेवेत्यध्याहारेण व्याख्यातुं पूर्वार्द्धं दर्शपूर्णमासाभ्यामिति द्विवचनश्रुतेर्दर्श इत्यभिधानस्य पूर्णमासशब्दवाच्यात्पूर्णमास इत्यस्य च दर्शशब्दवाच्यात्पृथक्त्वेन निवेशः प्रतीयते स च प्रकृतयागमात्रवाचित्वे पृथक्त्वायोगात्केषु चिदेव यागेषु युक्तो न सर्वेष्वित्यर्थः।दर्शशब्दस्याप्रसिद्धार्थत्वात्पूर्णमासशब्दवच्च केन चिद्यागनाम्ना सारूप्याभावात्कथं यागविशेषे निवेश इत्याशङ्क्यारम्भणीयाख्यशेषे दर्शो वा एतयोः पूर्वः पूर्णमास उत्तरो ऽथ यत्पूर्णमासं पूर्वमारभते तदू यथापूर्वं क्रियते तस्मात्पूर्णमासमारभमाणः सरस्वत्यै चरुं निर्वपेत्सरस्वते द्वादशकपालममावास्या वै सरस्वती पूर्णमासः सरस्वाँनुभावेतौ यथा पूर्वं कल्पयित्वा ऽऽरभतइत्यमावास्याख्ययागविशेषस्य दर्शव्यपदेशाच्चन्द्रदर्शनाद्वामावास्यायां तिथौ दर्शव्यपदेशात्प्रतिपद्दर्शषष्ठीषु न कुर्याद्दन्तधावनमित्यादौ चामावास्यायां दर्शव्यपदेशात्प्रसिद्धार्थतोक्ता अतो यागविशेषाणां फलवत्त्वात्फलवत्त्वस्यैव च प्राधान्यापरपर्यायमुख्यलक्षणत्वात्सन्निहितस्य फलासंयुक्तस्यासंयुक्तं प्रकरणादिति कर्त्तव्यतार्थित्वादिति तृतीयाधिकरणन्या-

थेनाङ्गत्वकारणभागित्वादश्रुतान्यफलान्वयकल्पने च गौरवापत्तेरङ्गतैव युक्तेति सूत्रार्थः सङ्क्षेपेणोत्तरार्द्धेनोक्तः। श्लोकं व्याचष्टे * दर्शेति * विद्वद्वाक्याभ्यां समुदायद्वयाकरणे दर्शपूर्णमासनाम्नो प्रसिद्धार्थत्वेन यज्यर्थाविशेषत्वान्न चतुर्थान्त्यन्यायमुदाहरति * यथेति * जोतींषि वा एतानि य एते स्तोमा इत्यर्थवादे त्रिवृदादिस्तोमेषु ज्योतिष्ट्वव्यपदेशात् ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति च विधौ सोमयागस्य त्रिवृदादिस्तोमयोगावगमात्प्रसिद्धार्थेन नाम्ना यज्यर्थो विशेष्यतइत्यर्थः। यजिना नामार्थविशेषणे चतुर्थस्यैव चतुर्थपादाद्यन्यायमुदाहरति*तथेति * राजसूयेन स्वाराज्यकामो यजेतेति फलविधिपरे वाक्ये यजेः प्रकृतेष्टिपशुसोमयागमात्रानुवादित्वावधारणात्प्रसिद्धार्थेन यजिना नाम विशेष्यतइत्यर्थः। उत्तरार्द्धं व्याचष्टे * तदिहेति * ननु प्रकृतयागमात्रविषयत्वे दर्शपूर्णमासशब्दस्य तदवयवभूतयोर्दर्शपूर्णमासशब्दयोर्द्विवचनस्य च को ऽर्थ इत्याशङ्क्याह * ततश्चेति * अवयवार्थो समासार्थश्च द्वित्वं चाविवक्षितानि यस्मिन्पद इति विग्रहः समासार्थेतरेतरयोगविवक्षायामवयवार्थाविवक्षानुपपत्तेस्तदविवक्षाभिधानम्।अर्थान्तरविवक्षायामपि करणत्वविवक्षया यजिसामानाधिकरण्याद्राजसूयनामवद्यागनामतेत्युक्ते ऽवयवार्थाविवक्षायां प्रवृत्तिनिमित्ताभावात्कथं यागनामतेत्याशङ्क्य वर्णपङ्क्तिमात्ररूपत्वेन रूढितोक्ता।ननु-रूढिर्योगमपहरतीति न्यायेनावयवार्थाविवक्षायामपि द्वित्वचनार्थाविवक्षा न युक्तेत्याशङ्क्याह * सुपामिति * नन्वमावास्यापौर्णमासीकालवाचिनोर्दर्शपूर्णमासशब्दयोस्तद्योगिष्वाग्नेयादियागेषु द्विवचनस्य च द्वित्वयोगिष्वाज्यभागादिषु लक्षणया प्रसिद्धिसम्भवान्नाप्रसिद्धार्थतेत्याशङ्कते * कथं पुनरिति * नन्वेवमपि प्रकृतिप्रत्ययसमुदायात्मकस्य पदस्याप्रसिद्धार्थत्वाद्यज्यनुरोधवृत्तित्वमपरिहार्यमित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * तन्नामेति * लब्धार्थप्रतिपादकानुरोधेनैवाविभक्तिव्याख्याविभक्त्यनुरोधेन वा प्रातिपदिकव्याख्या भविष्यतीत्याशयः। स्वार्थासमाप्तस्य वाक्यस्य वाक्यान्तरानन्वयवत्पदस्यापि स्वार्थासमाप्तस्य पदान्तरानन्वयान्नैकैकांशप्रसिद्धिमात्रेण यजिविशेषकता युक्तेति परिहरति * तदिति * श्लोकं व्याचष्टे * यद्यपीति * नन्वाग्नेयवाक्येनासम्भवत्समुच्चयपौर्णमास्यमावास्याकालद्वयगुणककर्मविधानाद् गुणानुरोधेन च प्रधानावर्त्ययोगाच्चशब्दयोगाच्च कालविकल्पानुपपत्तेरेककर्मासम्भविगुणद्वययोगेनाग्नेययागद्वित्वावगतेस्तयोश्चैकवाक्यविहितत्वावा-

न्तरसामान्यावच्छेदेनामावास्यापौर्णमासीकालयोगिषु यागान्तरेषु सत्स्वपि द्वित्वसंख्यावृत्त्युपपत्तेर्द्वयोरपि प्रकृतिप्रत्ययार्थयोस्तत्र सद्भावाद्दर्शपूर्णमासशब्दस्याग्नेययागद्वयवाचित्वेन प्रसिद्धत्वाद्यजिविशेषकत्वं भविष्यतीत्याशङ्क्याह * न चेति * विद्वद्वाक्ययोः प्रकृतयागानुवादित्वाभावे पौर्णमास्यमावास्याशब्दयोस्तद्वाच्यकालयोगिप्रकृतयागनामत्वानवगतेस्तयोर्वा लक्षणया प्रकृतयागप्रवृत्तावपि दर्शपूर्णमासशब्दयोस्तात्पर्यावधारणहेतुसामानाधिकरण्याभावात्पूर्णमासशब्दस्य किं चिद्वर्णसाम्याद्वाचकपौर्णमासीशब्दोपस्थापनेनाख्याभूतपौर्णमासीशब्दविकारमात्रत्वाद्वा ततोऽनन्यत्वेन दर्शशब्दस्य जघन्यवृत्तिसाम्याद् गौणत्वशब्दोक्त्या विरुद्धलक्षणयामावास्याशब्दैकार्थ्यकल्पनाद्दर्शपूर्णमासशब्दस्य प्रकृतपौर्णमास्यमावास्याकालयोगियागविषयत्वाध्यवसानं न भवतीत्यर्थः। ननु ज्योतींषि वा एतानि य एते स्तोमा इतिवद्वाचकशब्दसामानाधिकरण्याभावेऽप्ययैते मोदमाना इवेत्यत्र धान्यशब्दस्य दीर्घशूकविषयत्वमाग्नेय्याग्नीमित्यत्र चाग्नेयीशब्दस्य प्रकृताग्नेयीविषयतावसीयतइत्याशङ्क्य*अर्थेत्युक्तम् * शब्दान्तरवदर्थप्रकरणाभ्यामपि सामानाधिकरण्याध्यवसानं न भविष्यतीत्याशयः । नन्वाग्नेययागयोः पौर्णमास्यमावास्यानामत्वानवगतेर्दर्शपूर्णमासशब्दस्य तद्विषयत्वाध्यवसानाभावेऽपि विद्वद्वाक्यस्थयोः पौर्णमास्यमावास्याशब्दयोरर्थाक्षिप्तसाध्यांशसामानाधिकरण्येनापूर्वयागनामत्वावगतेर्दर्शपूर्णमासशब्दस्य तद्विषयत्वाध्यवसानात्प्रसिद्धार्थत्वेन यजिविशेषकत्वोपपत्तेर्विद्वद्वाक्यविहितयोरेव यागयोः फलवत्त्वेन प्राधान्यादितरेषामङ्गत्वं भविष्यतीत्याशङ्कते * कस्मात्पुनरिति * एतदेव सिद्धान्तन्यायतुल्यत्वापादनेनोपपादयति * तथा हीति * शङ्कोत्तरत्वेन श्लोकं व्याचष्टे * यदीति * पौर्णमास्यामावास्याशब्दयोर्यागनामत्वेऽपि दर्शपूर्णमासशब्दस्य यागनामत्वानवधारणात्कालयोगेन च वृत्तेराग्नेयादिष्वपि तुल्यत्वेन विद्वद्वाक्यविहितयोर्यागयोराग्नेयवदेकवाक्यविधानाभावे भावान्तरसामान्यावच्छेदाभावाद्द्वित्वसंख्यापरिच्छेद्यत्वानुपपत्तेर्नाष्टानां मध्ये तयोर्निष्कर्षः सम्भवतीति परिहरति नैतदिति श्लोकं व्याचष्टे * न हीति * ननु निष्कर्षायोगेऽपि ययोः कयोश्चिद्द्वयोः फलान्वयो भविष्यतीत्याशङ्कते * स्यादिति * नित्यं वाष्टानां मध्ये ययोः कयोश्चिद्द्वयोः फलवत्त्वाय दर्शपूर्णमासशब्देन ग्रहणं विकल्पेन वेति विकल्पाद्यपक्षे निर्द्धारणहेत्वभावात्प्रमाणाभावो द्वितीये चैकस्याङ्गप्रधानत्वविरोधापत्तिरिति परिह-

ति * तदिति * श्लोकं व्याचष्टे * विनेति*अतिदेशो सन्देहापत्तिश्च द्वितीये पक्षे स्यादित्याह*उभयात्मनां चेति * अभ्युपेत्यवादेन चैतदुक्तं वस्तुतस्त्ववान्तरसामान्यावच्छेदं विना द्वित्वानवधारणान्नैको ऽपि पक्षः सम्भवतीत्याह * सर्वेति * ननु सिद्धान्ते ऽपि षण्णां कथं द्वित्वापत्तिरित्याशङ्क्याह * सिद्धान्ते त्विति*नन्वेवं द्विवचनोपपत्तावपि प्रातिपदिकयोरप्रसिद्धार्थत्वाद्याजिविशेषकता न युक्तेत्याशङ्क्याह * तद्दर्शेन चेति * पूर्वपक्षे समुदायत्वानापादनाद्वैषम्यमाह * नन्विति*ननु समुदायगताद्वित्वाभावे ऽपि कालगतद्वित्वापेक्षं द्विवचनं भविष्यतीत्याशङ्कते * अथेति * विधिवाक्याभ्यां फलवाक्यस्थदर्शपूर्णमासशब्दगतद्वित्वसम्पत्त्यर्थं समुदायद्वयानापादने दर्शपूर्णमासशब्देन तात्पर्यप्रमाणाभावादाग्नेयादिविषयतयानवधारितेनाख्यातं न विशेष्टुं शक्यमिति परिहरति * नेदृशेनेति * कालगतायाः संख्याया यागान्वयकल्पना न शक्येत्याह * न चेति * समुदायगतसंख्यान्वयस्तु समुदायिनां युक्त इत्याह * समुदायेति * पूर्वपक्षप्रयोजनमुपपादितमुपसंहरति * तस्मादिति * सूत्रं द्वेधा योजयन् तत्सिद्धान्तमाह * तथेति * पौर्णमासीशब्देनोदाहरणीभूतविधिवाक्ययोरुपलक्षणं प्रकरणशब्दस्य कर्मव्युत्पत्तावालम्बनपदाध्याहारो भावव्युत्पत्तौ सहकारिपदाध्याहार इत्यर्थः । द्वितीयव्याख्याने ऽपि प्रकृतानामिति भाष्यानुसारं वक्तुम् * ततश्चेत्युक्तम् * रूपावचनस्य प्रकृतानुवादहेतुत्वोपपादनार्थं य एवं विद्वानित्यादिभाष्येण सञ्ज्ञया कर्मविशेषाभिधानाद्रूपं च विनाविशेषाप्रतिपत्तेर्विध्यसम्भवो ऽभिहित आघाराग्निहोत्रादिकरणे सञ्ज्ञोपबन्धादित्यस्मिन्सूत्रे व्याख्यास्यमानत्वादुपेक्ष्य स्वयं विधिस्वभावमेव तावत्प्रश्नपूर्वमुपपादकमाह * कुत इति * भाष्योक्तामप्युपपत्तिमनुसन्दधानः श्लोकं व्याचष्टे * न हीति * विध्यनुरोधो ऽननुष्ठेयसामान्यवाचित्वनिरासायानेनेति विशेषणेनोक्तः अव्यक्तासु तु सोमस्येत्यनेन न्यायेनातिदेशाद्रूपलाभमाशङ्क्याव्यक्तचोदितत्वेन सोमधर्मातिदेशस्य वक्ष्यमाणत्वादिह च श्रुतस्याख्यातस्य यच्छब्दोपबन्धेनाविधायकत्वाद्विध्यध्याहारस्यैव विधानयोग्यरूपवत्कर्मावगतिसापेक्षत्वादातिदेशिकरूपालाभाद्विध्यध्याहारे विध्यध्याहाराच्च विधेयत्वेनातिदेशिकरूपलाभे ऽन्योन्याश्रयापत्तेर्नातिदेशाद्रूपलाभः सम्भवतीति सूचनार्थो ऽपूर्वशब्दः । नन्वनुवादो ऽप्यज्ञातरूपस्य न सम्भवतीत्याशङ्क्यानुवादस्य बुद्धिविपरिवृत्तिनिमित्तत्वेन प्रकृतविषयत्वात्प्रकृतानां च ज्ञातरूपत्वेनानुवादसम्भवाभिधा-

नार्थम् अथ त्विति भाष्यं व्याचष्टे * प्रकृतेति * पूर्वपक्षोक्तं द्रव्यदेवतमनुभाष्येण पूर्वं निरस्यति * नन्विति * सत्यमित्युपहासः सूचितः । यागमात्रसाधारणत्वेन स्थितस्य ध्रौवस्य सञ्ज्ञाविशेषावच्छिन्नयागविशेषानवच्छेदकत्वात्सत्यपि लाभेनावच्छेदकत्वाख्यारूपतास्तीत्याशयः । यथाकथं चिदित्यनेन ध्रुवावाक्यस्यार्थवादसरूपस्याप्यन्यथानुपपत्त्या क्लेशेन ध्रौवत्वविशिष्टाज्यप्रापकत्वात्प्राप्तिक्लेशः सूचितः । मान्त्रवर्णिकदेवताप्राप्तिमाशङ्कितां निरस्यति * न हीति * न केवलं विरोधापत्तेः कर्मवाचित्वं न युक्तं किं तु लाक्षणिकत्वादपीत्याह * किं चेति * ननु लक्षणापि शब्दवृत्तिप्रकार एवेत्याशङ्क्याह * यदि हीति * सप्तमीनिर्देशादपि कालवाचितैव युक्तेत्याह * अपि चेति * कालस्य मन्त्रान्वयायोगात्तद्वाचित्वानुपपत्तिर्योक्ता तामप्यनुभाष्य निरस्यति * यत्त्विति * नन्वाज्यभागयोः कालयोगाश्रवणात्प्रधानद्वारा कालयोगाश्रयणे वा पौर्णमासीत्यप्रधानाङ्गभूतयोरिति च युगपच्छ्रुतिलक्षणाविरोधापत्तेः कालतश्च व्यवस्थाश्रयणे विकृतिषु य इष्ट्येति वाक्येन कालविकल्पविधानात् पौर्णमासीकालोपांशुयाजाग्नीषोमीयविकारो यदामावास्यायां क्रियते ऽमावास्याकालसान्नाय्यविकारो वा पौर्णमास्यां तदा पौर्णमासकालप्रधानाङ्गभूतयोराज्यभागयोर्वृधन्वतीप्राप्तेरमावास्याकालप्रधानाङ्गभूतयोश्च वार्त्रघ्नीप्राप्तेः प्रकृतिवद्भावबाधप्रसङ्गात्प्रधानसाद्गुण्यार्थत्वाच्चाङ्गगुणानुष्ठानस्य तद्बाधे प्रधाने वैगुण्यापत्तेः कर्मवाचित्वेना ऽपि च पौर्णमास्यमावास्याशब्दयोः पौर्णमास्याख्यकर्माङ्गभूतयोराज्यभागयोर्वार्त्रघ्न्यौ अमावाख्यस्याकर्माङ्गभूतयोर्वृधन्वत्यौ इति कर्मकृतव्यवस्थार्थत्वेन वाक्यस्याविरोधोपपत्तेस्तत्र जयानिति यच्चाज्यभागव्यतिरेकजनितप्राधान्यार्थतैव युक्ता नापूर्वयोः कर्मणोः मन्त्रविधानार्थतेति स्वमतेन मान्त्रवर्णिकदेवताकल्पनानुपपत्तिप्रकारमाह * किं चेति * श्लोकं व्याचष्टे * सर्वत्रैवेति * यत्वनुवाक्याद्वयानर्थक्यपरिहारायाश्रुतयाज्याकल्पनपरिहाराय च श्रुतयोरेव वार्त्रघ्नयोर्वृधन्वत्योश्च मध्ये ऽनुवाक्यैका याज्या चैकेत्युक्तं तदनुभाष्य दूषयति * यच्चैति * अज्ञातदेवतात्वादेवापूर्वयोः कर्मणोः प्रकाश्येन देवतारूपेण प्रकाशकतया मन्त्रस्यानपेक्षितत्वात्प्रकाशनाख्ये याज्यानुवाक्याकार्ये वार्त्रघ्नयोर्वृधन्वत्योर्वा विनियोगाद्याज्यात्ववदनुवाक्यात्वमपि न स्यादित्याशयेनाह * अपि चेति * मन्त्रार्थस्य कर्मसमवाये सिद्धे मन्त्रस्यालिङ्गविनियोज्यत्वापत्तेस्तदभावाभिधानेन मन्त्रार्थस्य कर्मसमवायासिद्धिः प्रकाशकानपेक्षत्वायोक्ता वाक्यी-

यविनियोगान्यथानुपपत्त्या मन्त्रार्थस्य कर्मसमवायकल्पनामाशङ्क्य * वाक्ये चेत्युक्तम् * कर्मसमवेतार्थप्रकाशकत्वं विना मन्त्रस्य करणात्वायोगात्करणत्वश्रवणे तदन्यथानुपपत्त्या मन्त्रार्थस्य कर्मसमवायकल्पना नान्यथेतित्याशयः । अनुपूर्ववच्चियोगेनानुवाक्यात्वमाशङ्क्याज्ञातदेवते कर्मणि विहितायां वैष्णव्यां व्यभिचारो ऽभिहितः । ननु सन्निपत्योपकारित्वसिद्धये ऽनुवाक्यात्वं कल्पयिष्यतइत्याशङ्क्याह * मान्त्रवर्णिकेति * समवेतार्थत्वसम्भवे सन्निपत्योपकारित्वेनारादुपकारित्वं बाध्यते नान्यथेत्याशयः । यच्चापूर्वकर्मविषयत्वे ऽनुवाक्याद्वयानर्थक्यं लिङ्गाविनियोज्यत्वाच्चादृष्टार्थत्वमुक्तं तदुभयमप्याज्यभागविषयत्वेन प्राप्नोतीत्याह * आज्यभागयोः पुनरिति * यागद्वित्वाद्देवताद्वित्वाच्चानुवाक्याद्वयस्यार्थवत्त्वं लिङ्गविनियुक्तत्वाच्च दृष्टार्थतेति दृष्टार्थशब्देनार्थवत्त्वस्यापि सूचनादित्यर्थः । यश्चानेकार्थविधिप्रसङ्गो ऽपूर्वकर्मविषयत्वे ऽस्तीत्याह * तत्र चेति * अपेक्षितविधानं त्वादावेवोक्तम् । नन्वाज्यभागाङ्गत्वस्य लिङ्गक्रमाभ्यामेव प्राप्तेस्तदर्थशास्त्रानर्थक्यमित्याशङ्क्याह * न चेति * लिङ्गस्य व्यवस्थापकत्वाशङ्कानुपपत्तेः क्रममात्रस्य निरासः मान्त्रवर्णिकदेवताप्राप्तचभावमुप-
४६८।१ संहरति * तस्मादिति * सूत्रार्थमुपसंहरति * अतश्चेति * आनर्थक्यापत्त्यानुवादत्वानुपपत्तिमाशङ्कते * किं पुनरिति * आनर्थक्यमेवोपपादयति * पश्येति * दध्ना जुहोतीतिकरणत्वेन दधिविधानात्पदार्थचोदना दण्डी प्रैषानन्वाहेति दण्डप्रातिपदिकार्थविधानात्तद्भागार्थचोदना सोमेन यजेतेति विशिष्टविधानाद्वाक्यार्थचोदनेति यथाग्नेयादिवाक्येष्वनेन कर्तृसमीहितं कुर्यादित्यवगमे ऽपि कर्तृविशेषानुपादानात्सामान्यस्य चाकर्तृत्वात्कर्तृसमीहितसाधनत्वलक्षणधर्मबोधाशक्तत्वे ऽपि स्वर्गकामवाक्यस्य कर्मकर्तृविशेषोपादानेन धर्मबोधोपयोगित्वात्तच्छेषत्वेनाग्नेयादिवाक्यानां धर्मप्रमोपयोगस्तथा विद्वद्वाक्ययोरपि प्रयोगवचनाङ्गत्वाद्धर्मप्रमोपयोगो भविष्यतीति परिहरति * उच्यत इति * कथमनयोः प्रयोगवचनाङ्गतेत्याशङ्क्य द्वित्वासिद्ध्या * प्रयोजनभूतयेत्युक्तम् * द्वित्वसम्पादकत्वे ऽप्यनयोः कः प्रयोगवचनस्योपकार इत्यपेक्षिते प्रयोगवचने द्वित्वस्योपादानादित्युक्तम् । श्लोकतात्पर्यं व्याचष्टे *वाक्येति* अविधायकत्वेनानयोराग्नेयादिवाक्यवैषम्यमाशङ्क्याह * न हीति * ननु समुदायद्वयावचने ऽपि पौर्णमास्यमावास्याख्यकालद्वययोगेनाग्नेयादीनां द्वित्वासिद्धेर्नानयोर्द्वित्वसिद्धिप्रयोजनतेत्याशङ्क्याह * न

च्चात्रेति * कालकर्मणोरत्यन्तभेदात्कालगतसंख्यायोगः कर्मणो न सम्भवतीत्याशयः। विद्वद्वाक्याभ्यां विनाग्नेयादीनां द्वित्वासिद्धिं भाष्यकाराभिप्रेतत्वेन द्रढयति * एतदेव चेति * आग्नेयादीनि पयोन्तानि प्रधानानि आघारादीन्यारादुपकाराकाण्यङ्गानीत्यनुवादपक्षे प्रयोजनस्याङ्गप्रधानत्वस्यादावुपन्यासात्तत्सिद्ध्यर्थद्वित्वसिद्ध्यर्थतानुवादस्यावसीयतइत्याशयः । नन्वङ्गप्रधानत्वस्य प्रयोजनोपन्यासे ऽधिकरणान्ते कार्यता स्यादित्याशङ्क्याह * इतरथा हीति * प्रयोजनमप्यनुवादत्वनिर्वाहायादावुपन्यस्तमित्याशयः । अनुवादानर्थक्यपरिहारमुपसंहरति * तस्मादिति * कथं पुनरित्यादिभाष्येणैकवचनान्तयोः पौर्णमास्यमावास्याशब्दयोरनेकाग्नेयादिवाचित्वानुपपत्तिमाशङ्क्य समुदायशब्दतयैकवचनावक्लृप्तिमुक्त्वा कथं भिन्नवाक्यविहितानामाग्नेयादीनां साहित्यात्मकः समुदाय इत्याशङ्क्य रूपवन्तो हीत्यनेन प्रपञ्चेनानेकस्यैकधर्मान्वयेन शिष्टः कृतः समुदायो ऽस्तीत्युक्तं तद्व्याख्यातुमाशङ्कते * कथं पुनरिति * अभेदे समुदायायोगाद्भिन्नवाक्यविधानाभिप्रायो भिन्नशब्दः। प्रकृतत्वाविशेषाद्यजेः सर्वप्रकृतयागविषयत्वप्रतीतेः सर्वेषां वैककालयोगाभावात्तन्निमित्तो ऽपि समुदायो न सम्भवतीति सूचनायात्यन्तशब्दः व्याचष्टे * शक्यमिति * कालयोगनिमित्तनामधेयावच्छेदेन यजेः कालयोगियागविषयत्वावसायाद्भिन्नवाक्यविहितानामप्येककालान्वयात्समुदायः सम्भवतीत्याशयः। श्लोकं व्याचष्टे * यथैव हीति * ननु सत्यपि समुदाये पौर्णमास्यमावास्यानामधेययोः सामानाधिकरण्येन यागविषयत्वात्तेषां च बहुत्वान्नैकवचनोपपत्तिरित्याशङ्कानिरासार्थं भवति हीति भाष्यं व्याचष्टे * तद्गतेति * समुदायगतस्यैकत्वस्य समुदायसमुदायिनोरत्यन्तभेदाभावेन लक्षणया वा समुदाय्यन्वयावधारणादित्यर्थः । यदाग्नेयादीनां समुदायवचनावेताविति समुदायानुवादप्रयोजनाङ्गाङ्गिभावाभिधानार्थादुत्तरभाष्यात्पौर्णमास्यमावास्याशब्दयोः समुदायवाचित्वशङ्कां निराकर्त्तुमाह * समुदायीति * तच्छब्देन स-
मुदायिनः परामृष्टाः एतदेवोपपादयति * तथा हीति * नञ् पूर्वेण ४६९॥१
सम्बद्ध्य किं त्वित्यद्ध्याहारेणोत्तरावयवो योज्यः। श्लोकं व्याचष्टे * पौर्णमासीमिति * समुदायस्य च कालयोगाभावात्तन्निमित्तयोर्नाम्नोः समुदायवाचिता न युक्तेत्याह * न चेति * पौर्णमास्यां पौर्णमास्या यजेतेत्यत्र समुदायस्य कालयोगमाशङ्क्यानयोर्नाम्नोस्तद्वाक्यविहितकालयोगनिमित्तत्वेन नामप्रवृत्तौ सत्यां तन्नामकानां

यागानां कालविधिः कालविधौ च सति नामप्रवृत्तिरितीतरेतराश्रयापत्तेरुत्पत्तिवाक्यविहितकालयोगनिमित्तस्यापि समुदायनामत्वात्फले विधानापत्ते (रितियुक्तेति सूचनायोत्पत्तिशब्दः समुदायनामत्वे ऽवयवानामसाधनत्वापत्तेः प्रत्येकमपूर्वककल्पनप्रमाणाभावाद्द्रव्याभेदेन भावनाभेदाभावे सत्यनेकधात्वर्थानुरक्तत्वे चानर्थादर्शपूर्णमासशब्दैर्नैतएवाभिधीयन्त इति भाष्यं विरुध्येतेत्याह*यदि चेति*समुदाययोश्च फलसाध्यैकैकभावनापत्तेः[1]) कर्मभेदवाचोयुक्तेरभिधेयाभावाद्धिगतार्थत्वं स्यादित्याह * अत इति*तेषामर्थाधिकरणवक्ष्यमाणा च धर्मव्यवस्थापूर्वैक्ये भज्येतेत्याह*सर्वेति*एकादशगता तन्त्रावृत्तिचिन्तादिशब्दोक्ता च द्वादशगता प्रसङ्गचिन्ता ऽपूर्वैक्ये भज्येतेत्याह*न चेति*समस्तान्वये चेतिकर्तव्यतायाः प्रत्येकाविकारे सौर्यादावतिदेशायोगादैकार्थ्याद्वा नियम्येन पूर्ववद्वा विकारो हीत्यष्टमाधिकरणसिद्धान्तो भज्येतेत्याह * नन्विति* दशमान्त्ये च प्राक्सोमादेकपुरोडाशा पौर्णमासी सान्नाय्यरहितामावास्येति व्यवहारः पौर्णमास्यमावास्याशब्दयोः समुदायवाचित्वे न युज्येतेत्याह * सहत्वेति * नवमे च त्सरा वा एषा यज्ञस्य तस्माद्यत्किं चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति उदाहृत्य यज्ञभागधर्मो वैतदुपांशुत्वं पदार्थधर्मो वेति सन्दिग्धे यज्ञस्य फलवत्त्वेन धर्मप्रयुक्तसामर्थ्याद्यज्ञस्य यत्प्राचीनेति व्यवहितेनापि यज्ञशब्देन प्राचीनशब्दस्यान्वयप्रतीतेः श्रुत्या च प्राग्देशवाचिनः प्राचीनशब्दस्य लक्षणया तद्देशपदार्थपरत्वायोगाद्यज्ञभागधर्मत्वं पूर्वपक्षयित्वा प्राचीनशब्दस्य वीप्सा किं चित्किं चिच्छब्दसमभिव्याहृतयच्छब्दान्वयाद्वीप्सायाश्च बहुविषयत्वेनैकस्मिन्देशे ऽनुपपत्तेर्लक्षणयाग्नीषोमीयप्राग्देशपदार्थपरत्वस्यैव न्याय्यत्वात्पदार्थधर्मतेति सिद्धान्तयितुं तद्देशानां वा सङ्घातस्याचोदितत्वादिति सूत्रे ऽङ्गप्रधानसङ्घातस्य यज्ञशब्दवाच्यत्वाभावात्साङ्गप्रधानसङ्घातापेक्षया च प्राग्भाविनो ऽङ्गजातस्य यज्ञावयवत्वायोगेन प्राचीनयज्ञशब्दान्वये ऽप्यवयवव्यतिरेकजनितषष्ठ्यनुपपत्तेः । तत्सम्बन्धितयोपांशुत्वस्याचोदितत्वान्न यज्ञभागधर्मतेति वक्ष्यमाणत्वात्सप्तमान्त्ये च गवामयनिकेषु ज्योतिरादिष्वहस्सु नाम्नैकाहरूपज्योतिरादिधर्मेषु चोदकाच्च द्वादशाहधर्मेषु प्राप्तेषु चोदकबलीयस्त्वाद्द्वादशाहधर्माः कार्या नामबलीयस्त्वादेकाहधर्मा इति सन्दिग्धे प्रत्येकं फलसाधनत्वाभावेन नामावगतप्राप्त्यात्मिकधर्मानाकाङ्क्षत्वादविरुद्धाधिकधर्मातिदेशकत्वे च ना-

---

१ अयं पा० ढ० °र्माचन: प्रतिभाति ।

मोपपत्तेर्द्वादशाहिकद्वादशोपसत्त्वैकादशिनीविहारदर्शनाभ्यां च लिङ्गाभ्यां चोदकानुग्रहेण द्वादशाहिकधर्मातिदेशे प्राप्ते फलवाक्यसाधनभूतानामह्नां साहित्यावगमे ऽप्युत्पत्तिवाक्येषु प्रत्येकमेव साधनत्वावगमाद्धर्माकाङ्क्षोपपत्तेर्नाम्नां च प्रत्यक्षत्वेनानुमानिकाद्यागत्वाव्यक्तचोदितत्वाहर्गणत्वाद्यनेकलिङ्गापेक्षाच्चचोदकाद् बलीयस्त्वात् ज्योतिरादिनाम्नां च यागवाचित्वेनाधिकधर्मातिदेशकृत्वायोगादेकाहरूपज्योतिरादिधर्मातिदेशं सिद्धान्तयित्वा लिङ्गं सङ्घातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवदिति सूत्रेणाहःसङ्घातात्मकस्य गवामयनस्याहःसङ्घातात्मकद्वादशाहकार्यापन्नत्वेन नीवारादौ व्रीहिधर्मवत्तदीयद्वादशोपसत्त्वैकादशिनीविहारप्राप्तेर्लिङ्गद्वयोपपत्तिं परमतेनोक्तां निराकर्त्तुं न वार्थधर्मत्वात्सङ्घातस्य गुणत्वादित्यत्र द्वादशशब्देन संख्यावाचितार्थादुक्तस्यापि सङ्घातस्य फलसाधनीभूताहःशब्दोक्तयागविशेषणत्वेन गुणभूतत्वात्साधनत्वाभावेन धर्माग्राहकत्वान्न सङ्घातकार्यापत्त्या धर्मप्राप्तिर्युक्तेति वक्ष्यमाणत्वात्सूत्रकृतो ऽपि समुदायवाचित्वाभावाभिप्रायो ऽवगत इत्याह * सङ्घातस्येति * यद्यप्यङ्गप्रधानसङ्घातसम्बन्धितयोपांशुत्वस्याचोदितत्वमनेनोक्तं तथापि यथाङ्गप्रधानानां समुदितानां फलसिद्धिहेतुत्वे ऽपि समुदायस्य शब्दवाच्यत्वाभावात्तत्सम्बन्धित्वेनोपांशुत्वस्याचोदनात्तथा प्रधानानां समुदितानामपि फलसाधनत्वे तत्समुदायस्य शब्दवाच्यत्वाभावेनाचोदनेति प्रकृतोपयोगसिद्धेरुदाहृतम् । कथं तर्हि समुदायवचनावेताविति भाष्यमित्याशङ्क्याह * तस्मादिति * सकृदुच्चरिते चास्मिन्विवक्षैकैव दृश्यतइत्यनेन न्यायेनानेकार्थस्यापि शब्दस्य सकृदुच्चारणेनैकार्थपरत्वायोगात्पौर्णमास्यमावास्याशब्दयोरनेकयागनामत्वायोगशङ्कानिरासार्थं सकृदुच्चरितस्याप्यन्योन्यसापेक्षानेकार्थपरत्वोपपत्त्यै समुदायस्योपलक्षणाख्योपसर्जनत्वोक्त्यर्थत्वेन समुदायो वचनमाग्नेयाद्युक्तावुपलक्षणीकृतो निमित्तमेतयोरिति कृत्यल्युटो बहुलमिति निमित्ते ल्युटं व्युत्पाद्य समुदायवचनशब्दो व्याख्येय इत्याशयः । समुदायशब्दतयैति भाष्यस्य का गतिरित्याशङ्क्याह * तेषां त्विति * समुदायिवाचिनोरपि पौर्णमास्यमावास्याशब्दयोर्वाच्यसमुदायी लक्षितसमुदायगतसंख्याद्वारैकवचनयोगाभिधानार्थं समुदायशब्दतोक्तेत्यर्थः॥ कथं समुदायशब्दत्वोक्त्यायमर्थो लभ्यतइत्याशङ्क्य समुदायापेक्षः शब्दः समुदायशब्द इति शाकपार्थिववन्मध्यमपादलोपिसमासत्वं भाष्यकृतोक्तमिति सूचयितुमाह * तथा चेति * नन्व-

नयोः समुदायवाचित्वाभावे समुदायवाचियूथादिशब्दद्दष्टान्तोपा-
४७०।२ दानमयुक्तमित्याशङ्क्याह * यूथेति * कुलपर्षच्छब्दयोराकृतिवादे ऽनुदाहृतत्वादस्त्येव सङ्गतिश्चात्र वृक्षा हि बहवो वनमित्यादिना समुदायोपलक्षितमुदायिवाचिता यूथादिशब्दानां तत्रोक्तेति सूचनार्थं द्विवचनं तन्त्राविरोधात्तु तेषां समुदायवाचित्वे ऽपि समुदायनिमित्तैकवचनलाभमात्रसाम्याद्दृष्टान्तत्वोपपत्तिर्यदा त्वित्यनेनोक्ता दर्शपूर्णमासशब्देन तएवाभिधीयन्तइति भाष्यावयवपर्यालोचनयापि समुदायवचनशब्दस्य समुदायिवाचित्वेन तत्पर्यायतया दर्शपूर्णमासशब्दयोसमुदायिभिधानत्वार्थत्वं गम्यतइति सूचयितुं वेदेति भाष्यमर्थतो व्याचष्टे * एतेनेति * पौर्णमास्यामावास्याशब्दयोः समुदायिवाचित्वे त्वव्याख्योपपत्तेः समुदायिवाचितैव समुदायवचनशब्देनोक्तेत्याशयः । तत इति भाष्यं समुदायानुवादप्रयोजनाभिधानार्थत्वेन व्याख्यातुं पूर्वोक्तमेव समुदायानुवादप्रयोजनं स्मारयति * तस्मादिति * इदमेकमिदं चैकमित्येकत्वद्वयविषयं प्रत्ययमपेक्ष्य द्वित्वोत्पत्तेर्द्वित्वस्य निमित्तकारणं यो द्वित्वे ऽनपेक्ष्यमाणत्वादपेक्षाख्य एकत्वद्वयप्रत्ययस्तस्य सिद्धिरित्यर्थः । एतदेव चतुर्थोपान्त्यन्यायाभिधानेनोपपादयितुं तदीयसिद्धान्तसूत्रावयवं तावत्पठति * यथेति * न्यायमभिधत्ते * तद्वद्द्वित्वेति * पौर्णमास्यमावास्याशब्दोक्तिसमुदायद्वित्वानुसारित्वाद्दर्शपूर्णमासशब्दयोः समुदायविषयत्वे ऽभिहिते ननु द्विवचनान्तत्वमात्रेण प्रपौर्णमास्यमावास्याशब्दविलक्षणयोर्दर्शपूर्णमासशब्दयोस्तत्सम्पादितसमुदायद्वित्वानुसारित्वानवसायात्कथं तद्विषयत्वावगतिरित्याशङ्क्याह * अस्ति चेत्याद्युक्तं * दर्शशब्दस्य विरुद्धलक्षलणया दर्शनविपर्ययादर्शनगमकत्वात्स्पष्टामावास्याविषयत्वप्रतिपत्तिरित्यर्थः । शक्यते चेति तत्रत्यं भाष्यं पठितं दर्शो वा एतयोः पूर्व इत्युपक्रम्यामावास्या वै सरस्वतीत्युपसंहाराद्दर्शामावास्ययोः सामानाधिकरण्यावगतिः । भाष्यं व्याचष्टे * तेनेति * पौनरुक्त्यं शङ्कते * ननु चेति * विद्वद्वाक्ययोः समुदायानुवादत्वे स्थिते ऽपि दर्शपूर्णमासशब्दयोरप्रसिद्धार्थत्वाद्यागमात्रं ग्रहणशङ्कानिरासायैतदधिकरणस्य प्रयोजनाधिकरणं तदिति पौनरुक्त्यं परिहरति * नैष दोष * इति हिशब्दो ऽपिशब्दार्थे पौर्णमास्यधिकरणं विनेज्याधिकरणपूर्वपक्ष एव स्याद्द्वितीज्याधिकरणस्य पौर्णमास्यधिकरणाधीनत्वात्पौर्णमास्यधिकरणप्रयोजनत्वेनारम्भ इत्यर्थः । भाष्योक्तं फलवाक्यस्थद्वित्वसिद्धिप्रयोजनत्वमुपपाद्य स्वयं कालवा-

क्यस्थयोस्तृतीयान्तयोः पौर्णमास्यमावास्याशब्दयोराग्नेयादित्रिकद्व-
यनामत्वसिद्धिप्रयोजनताप्यस्तीत्याह * इदमिति * विद्वद्वाक्या-
भ्यामनयोः शब्दयोस्त्रिकद्वयनामत्वाकरणे का पौर्णमासी कामावा-
स्येत्यज्ञानान्नैतद्वाक्यविहितस्त्रिकस्य त्रिकस्य कालयोगः सिद्ध्यतीत्या-
शयः। वाक्यान्तरैरेवाग्नेयादीनाङ्कालविधानेनैतस्य कालवाक्यस्यानर्थ-
क्यान्नैतद्वाक्यापेक्षितनामनामिसम्बन्धसिद्धिप्रयोजनत्वं विद्वद्वाक्य-
योः सम्भवतीत्याशङ्कते * तत्रेति * एतद्वाक्यविहितस्त्रिकस्य त्रि-
कस्य परस्परसहितस्य साङ्गस्य कालयोगो न वाक्यान्तरैः सि-
द्ध्यतीति परिहरति * उच्यतइति * श्लोकं व्याचष्टे * उत्पत्ती- ४७१।१
ति * परस्परसहितश्चेत्यनेनैकदेशकालकर्तृत्वं मुख्यानामेकशब्दो-
पदेशात्स्यादित्येकादशाधिकरणवक्ष्यमाणा प्रधानकालतन्त्रतोक्ता
साङ्गशब्देनाङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मादेकदेश-
त्वमिति तदन्तरा गर्भिणीन्यायवक्ष्यमाणाङ्गाङ्गानां प्रधानकालतोक्ता
यस्मिन्नित्यनेन तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्र-
हणादित्येकादशाधिकरणवक्ष्यमाणस्याङ्गानुष्ठानतन्त्रत्वस्य प्रधान-
प्रयोगतन्त्रत्वमन्तरेणासिद्धेरर्थाक्षिप्ता प्रधानप्रयोगतन्त्रतोक्ता काल-
योगान्यथात्वप्रयोगान्यथात्वापादकतोत्पत्तिकेत्यनेनोक्ता नन्वितरेत-
रयुक्तानां साङ्गानां च करणत्वावगमात्तादृशानां कालसंयोगे
सति समुदायद्वयस्यापीतरेतरसाहित्यापत्तिः कालद्वये प्रयोगः
स्यादित्यनिष्टापत्तिं शङ्कते * ननु चेति * पौर्णमासीकाले ऽमावा-
स्याख्यसमुदायप्रयोगो ऽमावास्याकाले वा पौर्णमास्याख्यसमुदाय-
प्रयोगो ऽन्यसाहित्यलभ्यत्वेनौपाधिकत्वादौपाधिकस्य त्वाकाङ्क्षां विना
विधानायोगात्कालद्वयप्रयोगे चोत्पत्तिवाक्यविहितैककालयविरोधा-
पत्तेर्नास्माद्वाक्यात्प्रयुज्यतइति परिहरति *अत्रेति* श्लोकं व्याचष्टे
* अमावास्या हीति * कालद्वयप्रयोगे व्यवस्थितकालत्वानिमित्त-
द्विवचनान्तदर्शपूर्णमासशब्दवाच्यत्वायोगाद्यजिविशेषकत्वं न स्या-
दित्यदर्शत्वामित्यनेन सूचितम्। ननु फलं भवतु भावयेदनेनेत्थमिति
प्रयोगविधिनाङ्गप्रधानयोर्युगपदनुष्ठानविधानात्प्रयोगविधिवशेनैवा-
ङ्गानां प्रधानकालत्वसिद्धेरेतद्वाक्यमनर्थकमित्याशयेनाशङ्कते * आ-
हेति * फलभवनकालस्याप्रत्यक्षत्वेनाङ्गप्रधानकालपरिच्छेद्यत्वात्प्र- ४७२।१
धानानां चोत्पत्तिवाक्यालोचनेन प्रत्येकं कालयोगात् षट्सु पौर्णमा-
स्यमावास्यासु प्रयोगावगमात्तावत्कालाबहिर्भावमात्रेणाङ्गानां प्रयो-
गवाक्यावगतप्रधानकालत्वोपपत्तेरेकस्यां पौर्णमास्याममावास्यायां
वा साङ्गप्रधानप्रयोगो नैतद्वाक्यं विना लभ्यतइति वक्ष्यमाणाशयेन प

रिहरति*उच्यतइति*मान्त्रवर्णिकमित्युपहासः कालस्य प्रयोगाङ्ग-
त्वात्प्रयोगस्य च साङ्गप्रधानाविषयत्वादुत्पत्तिवाक्यावगतकालयोगे-
नैवाङ्गप्रधानयोरेककालत्वावगतेरित्यन्तैककालत्वायोगाच्च सन्निकृष्ट-
कालत्वप्रतीतेर्दूरस्थानामङ्गानामनुपकारित्वावसायादेकस्यां पौर्णमा-
स्याममावास्यायां वा साङ्गप्रधानप्रयोगो ऽस्माद्विनैव लभ्यतइत्या-
शयेनाशङ्कते * नन्विति * उत्पत्तिवाक्यस्थस्य कालस्य प्रयोगा-
ङ्गत्वात्साङ्गप्रधानाविषयत्वानवगतेः सन्निकृष्टैरुपकर्त्तव्यमिति विधि-
तो ऽनवगमान्न दूरस्थानामनुपकारित्वे किं चित्प्रमाणमस्तीत्याशयेन
परिहरति * सन्निकृष्टैरिति * ननु य इष्ट्या पशुना सोमेन वा
यजेत सो ऽमावास्यायां पौर्णमास्यां वेत्यनेनैव पश्वादेः सद्यस्काल-
त्वायाग्नेयादीनां प्रकृतौ पूर्वेद्युरन्वाधानाद्यङ्गविचारितद्व्यहकाल्या-
द्विकृतिष्वपि तत्प्राप्तेः सद्यस्कालत्वायेष्टिशब्दार्थवानित्याशयेन पर-
स्परसाहित्याङ्गसाहित्ययोः सिद्धेरेतद्वाक्यमनर्थकमित्याशङ्कते *न-
नु चेति * षण्णामप्यनेन साहित्यं स्यान्न त्रिकस्येति परिहरति
* सत्यमिति * श्लोकंव्याचष्टे * न तावत्त्रिकस्येति * रूढित्वप्र-
दर्शनाय सोमाङ्गेषु दीक्षणीयादिषु दार्शिकपौर्णमासिकाविकृचन्त-
प्रवृत्तेः सोमे ऽपीष्टेर्दर्शपूर्णमास्याख्याया विध्यन्तस्य प्रवृत्तिरिति
पूर्वपक्षाभिधानार्थं सूत्रं पठितम्।नन्वेवं सति पौर्णमास्यमावास्यावा-
४७३।२ क्याभ्यामेवेष्टप्रयोगासिद्धेरिष्टचेत्यनर्थकं स्यादित्याशङ्क्य * प्रकृता-
वित्युक्तम् । नन्विष्टिवाक्येनेष्टप्रयोगासिद्धावपि देशवाक्ये त्रिकद्व-
यस्योत्पत्तिवाक्यावगतकालयोगनिमित्तभिन्नशब्दोपादानेनेतरेतरयो-
गावगतसाहित्याविवक्षया स्वसमुदायिस्वाङ्गसाहित्यमात्रसिद्धेरि-
ष्टप्रयोगः सेत्स्यतीत्याशङ्कते * नन्विति * देशान्वयनिमित्तेन सा-
हित्येन कालान्वयसाहित्यानवगतेर्नैकैकस्य त्रिकस्य साङ्गस्यैककाल-
त्वं सिद्ध्यतीति परिहरति * तत्रेति * श्लोकं व्याचष्टे * भेदेनापि
हीति * भेदेनापि प्रयुज्यमानानां देशं प्रतिसाहित्योपपत्तेरितरेतर-
योगानुरोधात्कालतन्त्रत्वाभ्युपगमे च षण्णामेवैककाल्यापत्तेरुत्पत्ति-
वाक्यानुरोधात्त्वितरेतरयोगाविवक्षायामन्योन्यानपेक्षाणां निरङ्गानां
च कालयोगापत्तेर्न देशवाक्येनाप्यभिप्रेतप्रयोगासिद्धिरित्यर्थः ।
षट्स्वित्यनेन पूर्वं दृष्टान्तव्याजेनाग्नेयादेः प्रत्येकानुष्ठानापत्तिमङ्गानां
च षट्पक्षान्तराले सकृदनुष्ठानापत्तिमुक्तामत्रापि योजयित्वा प्र-
योगभेदाविधानाभावादिहापि वा कर्मपृथक्त्वात्तेषां तन्त्रविधाना-
त्साङ्गानामुपदेशः स्यादित्येकादशवक्ष्यमाणप्रतिप्रधानावृत्तिन्याया-
भावे ऽप्यभ्युपेत्यवादेनाथ वेत्युक्तोत्पत्तिवाक्यावगतस्य पौर्णमा-

सीकालत्वस्यामावास्याकालत्वस्य चैकस्यामपि पौर्णमास्याममावा-
स्यायां वा प्रयोगे विरोधाभावाद्विरुद्धसमुदाययौगपद्यबाधे ऽप्य-
नुपादेयसमदेशान्वयावगतस्वसमुदायियौगपद्यबाधायोगमथ त्वि-
त्यनेनाशङ्क्य तत इत्यनेनैवमप्यावृत्त्योभयसमीपे ऽङ्गप्रयोगस्येष्टस्या-
सिद्धिरित्युक्ते करणविभक्तिवशेनोभयोरपि समुदाययोरङ्गसामी-
प्यावगतेस्तत्सम्पत्त्यर्थमावृत्तिम् *आशङ्क्याथ वेत्युक्तम् * सकृदष्टा-
भ्यां नवम्यां वाङ्गप्रयोगे समुदायद्वयस्य तुल्याङ्गसामीप्यसंप-
त्तेरत्यंन्तसामीप्यस्य चैकस्मिन्नप्यशक्यत्वान्नावृत्तिसिद्धिरित्याश-
यः। ननु फलवाक्येन साध्यसाधनेतिकर्त्तव्यताविशिष्टभावनावि-
धायिनाङ्गप्रधानयोर्युगपत्प्रयोगविधानाद्यावता विलम्बेन विनानुष्ठा-
नाशक्तिस्ततो ऽधिकस्य विलम्बस्य निवारणात्प्रधानकालएवाङ्गानु-
ष्ठानप्रतीतेरौत्पत्तिककालाविरोधाच्च समुदायद्वययौगपद्यानुपपत्तेः
कालवाक्याभ्यां विनापीष्टप्रयोगासिद्धिरित्याशङ्क्याह * अनेनैवेति*
फलवाक्यस्य स्वरूपेण फलविधिमात्रार्थत्वाभ्युपगमादुत्पत्तिविनि-
योगवाक्यैकवाक्यतया च प्रयोगविधानार्थत्वाभ्युपगमात्फलवि-
धित्वरूपेणेष्टप्रयोगसाधकत्वं प्रयोगविधित्वरूपेण वेति विकल्प्य
आद्यपक्षे ऽयमतिदेशः एतदेव विवृणोति * फलस्यापी-
ति * सिद्धे ऽपीत्यपिशब्दस्योत्कर्षो ऽन्यस्य वाध्याहारः प्र-
योगपरत्वं विना प्रयोगतन्त्रासाधकत्वात्कालतन्त्रासाधकतेत्या-
शयः। द्वितीयपक्षाश्रयणेनाशङ्कते * अथेति * प्रयोगविधिमात्रा- ४७४।१
लोचने षण्णामपि युगपदुपादानादिति पूर्वोक्तमेव न्यायेन समुदाय-
द्वययौगपद्यापत्तेस्तस्याश्चौत्पत्तिवाक्यविरोधेन दोषत्वात्तदनुरोधे तु
प्रत्येकं कालयुक्तानामित्यादिपूर्वोक्तेनैव न्यायेन प्रत्येकं प्रधानप्र-
योगो ऽङ्गानां च षट्पक्षान्तराले क्व चिदहनि प्रयोगः साङ्गस्य वै-
कैकस्य प्रधानस्य प्रयोगास्त्रिकयोर्वा कालभेदेन प्रयुज्यमानयोरेकस्य
कस्य चित्समीपे ऽङ्गप्रयोगः पक्षान्तराले वा क्व चिदहनीत्यत्रापि यो-
जनापत्तेः प्रयोगविधिरूपेणापि नेष्टप्रयोगसिद्धिरित्याशयेन परिहर-
ति * तत्रापीति * ननु फलभवनकाले ऽङ्गप्रधानयोर्युगपदनुष्ठानाव-
गतेस्त्रिकद्वयस्यौत्पत्तिककालाविरोधार्थं कालभेदेनानुष्ठाने त्रिक-
द्वयस्याप्यङ्गयौगपद्याङ्गावृत्तेर्न्याय्यत्वादिष्टप्रयोगसिद्धिरित्याशङ्क्याह
*न चेति*फलभवनकालेनाङ्गप्रधानकालपरिच्छेदे फलस्वरूपोत्पत्त्या
कालान्तरभाविन्यैककाल्यायोगात्फलापूर्वोत्पत्तिकालेन परिच्छेद्य-
त्वापत्तेस्तस्य च क्षणिकत्वेनाङ्गप्रधानयोरेकक्षणे ऽनुष्ठेयतापद्येताङ्गप्र-
धानकालेनैव तु फलापूर्वोत्पत्तिकालस्य परिच्छेद्यत्वात्तस्य चाद्यप-

दार्थारम्भात् प्रभृत्यासमाप्तेरेकत्वादुत्पत्तिवाक्यावगतपौर्णमास्यमावास्याकालालोचनया यावन्तं षट्पक्षपरिमितं पक्षपरिमितं वा कालं प्रधानानि व्याप्नुवन्ति तावतः फलभवनकालत्वात्तावत्कालत्वात्तावत्कालमध्ये ऽङ्गेष्वनुष्ठितेष्वङ्गप्रधानाविषययौगपद्यासिद्धेरङ्गावृत्त्यनाक्षेपान्नेष्टप्रयोगसिद्धिरित्यभिधानायाङ्गप्रधानानीत्यङ्गशब्दे प्रयुक्ते निरङ्गानां प्रधानानामुत्पत्तिवाक्ये कालविधानात्कथमङ्गानां प्रधानकालतेत्याशङ्क्य * प्रयोगेत्युक्तम् * प्रयोगविधिविहितस्य साङ्गप्रधानप्रयोगस्यापि कालान्तराश्रवणादौत्पत्तिक एव कालो ऽवसीयतइत्याशयः । प्रत्येकं प्रयोगादियोजनां विवृण्वन्नुपसंहरतीतीति उत्पत्तिवाक्यमालानुरोधे तिसृषु पौर्णमासीषु त्रयाणां तिसृष्वमावास्यासु त्रयाणां प्रधानानां प्रतिप्रधानमङ्गावृत्तिपक्षे साङ्गानामन्यथा यत्र क चनान्तराले चशब्देनाङ्गप्रयोगसूचनाच्छुद्धानामपवर्गः प्रयोगोत्पत्तिद्वयालोचने द्वयोः पौर्णमास्यमावास्ययोस्त्रिकद्वयप्रयोगो ऽङ्गप्रयोगश्चैकसमीपे पक्षान्तराले वेति योज्यम्। कालवाक्यानर्थक्यपरिहारमुपसंहरति * तस्मादिति * कालवाक्याभ्यामेव तर्हीष्टप्रयोगसिद्धेरुत्पत्तौ कालविध्यानर्थक्यमिति शङ्कते * नन्विति * पौर्णमास्यमावास्याशब्दविषयज्ञानं प्रयोजनमित्याशयेन परिहरति * कथमिति * एतदेव विवृणोति * पश्येति * श्लोकं व्याचष्टे * पौर्णमासीति * उपसंहरति * तस्मादिति * भाष्य-
४७५।१ कृतो ऽप्येतदेव प्रयोजनमभिमतमिति सूचयितुमाह * अत एवेति*

विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥४॥

यदि चेति भाष्येण समप्राधान्यनिरासार्थत्वेनैतत्सूत्रं पूर्वेषां प्राकृतानां प्रयाजादीनां विकृतौ कृष्णलहोमादिविशेषदर्शनाच्च सर्वेषां समप्रधान्यमित्येवं व्याख्यातं तच्च शब्दात् पूर्वसूत्रोक्ते ऽनुवादत्वे हेत्वन्तरसमुच्चयार्थत्वप्रतीतेरयुक्तमाशङ्क्योपपादयति * यदि चेति * पूर्वपक्षप्रयोजनसमप्राधान्यनिरासद्वारा पूर्वपक्षनिरासेनार्थात्सिद्धान्तसिद्धेश्च शब्दोपपत्तिरित्याशयः। समप्राधान्ये कथं विकृतौ प्रयाजादिदर्शनानुपपत्तिरित्याशङ्क्याह * ततश्चेति * कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वादित्यष्टमाधिकरणे फलस्य स्वर्गस्य नियमस्य यावज्जीवतायाः कर्त्तुः स्वर्गकामस्य समुदाययोराग्नेयादित्रयसाहित्यात्मकयोर्विकृत्यनन्वये कर्मणः करणभूतस्य विकृतावप्रवृत्तेर्हेतुतया वक्ष्यमाणत्वात्प्रयाजादेरपि करणत्वे सत्यप्रवृत्तिः स्यादित्याशयः । अत इत्युपसं-

द्वारभाष्यं सिद्धान्तप्रयोजनोपसंहारार्थत्वेन व्याचष्टे * तस्मादिति *

## गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥

नैतदिति भाष्येण सिद्धान्तनिरासार्थतया तु शब्दो व्याख्यातस्तत्स्पष्टत्वादव्याख्याय श्रुतिसंयोगव्याख्यानार्थं तथेति भाष्यं व्याचष्टे * पौर्णमासीति * स्वयं श्रुतिसंयोगं व्याचष्टे * प्रत्यक्षेति * अस्मिन्व्याख्याने श्रुतिसंयोगशब्देन सिद्धान्ते कल्पनागौरवाभिधानात्पूर्वपक्षपक्षे तदभावमाह * सो ऽपि चेति * नानुमातव्यो भविष्यतीत्यनुषङ्गः। अनेकमित्यत्र नानुमातव्यमिति विपरिणतानुषङ्गः गुणशब्दं स्वयं तावद्विधित्वे ऽधिको गुणो ऽस्तीत्येवं व्याचष्टे * समुदायेति * नन्विति भाष्येणारूपत्वेनापूर्वयोः कर्मणोर्विध्यसम्भवं पूर्वसूत्रोक्तमनुभाष्य वाक्यान्तरेणेत्यादिना गुणो रूपं वाक्यान्तरस्थपौर्णमास्यमावास्याश्रुतिसंयोगादवगम्यतइत्येवमावृत्तश्रुतिसंयोगशब्दसहितो गुणशब्दो रूपत्वपरिहारार्थत्वेन व्याख्यातस्तद्व्याचक्षाणो ऽस्मिन्नपि पक्षे विद्वद्वाक्ययोर्दर्शपूर्णमासशब्दतात्पर्यावधारणार्थत्वाभावात्तात्पर्यावधारणं च विना लाक्षणिकशब्दप्रवृत्त्ययोगादर्शपूर्णमासशब्दयोराग्नेयवाक्यविहितकर्मद्वयनामत्ववद्विद्वद्वाक्यविहितकर्मद्वयनामत्वस्याप्रसिद्धेर्यजिविशेषकत्वायोगात् विशेषतश्चास्मिन्पक्षे ऽष्टाकपालादिवाक्यैः कालाविधानात्पौर्णमास्यां पौर्णमास्येति वाक्यद्वयविहितकालयोगेन दर्शपूर्णमासशब्दप्रवृत्त्यभ्युपगमापत्तेस्तत्र च तृतीयानिर्देशात्करणकृतयोः पौर्णमास्यमावास्ययोः कालान्वयप्रतीतेः करणत्वस्य च फलवाक्याधीनत्वात्फलवाक्यस्थाभ्यां दर्शपूर्णमासशब्दाभ्यां विद्वद्वाक्यविहितयोः कर्मणोः फलान्वयावगमे करणत्वात्कालान्वयः। कालान्वये सति फलान्वयात्करणत्वावगतिरितीतरेतराश्रयापत्तेर्दर्शपूर्णमासशब्दयोरप्रसिद्धार्थत्वेन यजिविशेषकत्वायोगात्प्रकृतयागमात्रस्य फलान्वयात्समप्राधान्यापत्तेर्विकृतौ प्रयाजादिदर्शनानुपपत्तिरित्याशङ्कां निरस्यति * प्रयाजादीति * सप्तमोपान्त्ये सौर्यादौ लौकिकी पार्वणस्थालीपाकेतिकर्त्तव्यताग्रयणस्थालीपाकादौ दृष्टप्रवृत्तित्वेनातिदेष्टव्येति पूर्वपक्षिते बार्हस्पत्ये ऽर्द्धं बर्हिषो लुनातीति बर्हिषो लवनदर्शनं पितृयज्ञे च न होतारं वृणीतइति होतृवरणनिषेधदर्शनं सौर्ये च प्रयाजे प्रयाजे कृष्णलं जुहोतीति प्रयाजदर्शनं वैदिकेतिकर्त्तव्यतानतिदेशेन युज्येतेत्याशङ्क्यापि वा न्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युरिति सूत्रेण यत्र बर्हिर्लवनं प्रत्यक्षविहितं तत्रार्द्धविधिर्होतृवरणनिषेधो नित्यानु-

वाद: प्रयाजवाक्यं कृष्णलविशिष्टप्रयाजविधानार्थमिति पूर्वपक्षी परिहरिष्यति सम्भवमात्रेण त्वत्र प्रकृतिस्थप्रयाजगुणविधिपक्षाभिधानम् । यद्वावगतार्थविषयत्वाद्वीप्सायाः प्राप्ताभावे ऽनुपपत्तेरस्य वचनोदाहरणत्वं भाष्योक्तं दूषयित्वा स्वयं प्रकृतिस्थप्रयाजानुवादत्वस्य लक्ष्यमाणत्वात्स्वाभिप्रायेणैतदुक्तम् । आद्यात्पूर्वपक्षात् भेदाभिधानायैतावेवेत्येवकारः । नन्वष्टाकपालादिवाक्येषु पौर्णमास्यमावास्याशब्दयोः कालवाचित्वेन विद्वद्वाक्यविहितकर्मानुवादिशब्दाभावान्न तैरत्र गुणविधिः सम्भवतीत्याशङ्कानिरासार्थं यदिति भाष्यं व्याचष्टे * अष्टाकपालादीति *

४७६।२ चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥

चोदनाशब्दव्याख्यानार्थं कर्मचोदनाशब्दं गुणविधित्वनिरासार्थंतया व्याचष्टे * नैत इति * सूत्रशेषव्याख्यानार्थं कुत इति भाष्यं तात्पर्यतो व्याचष्टे * कुत इति * अप्राप्ते कर्मणि दृष्टस्यानेकगुणविधिप्रकारस्य प्राप्ते कर्मण्यसम्भवाभिधानायोत्तरार्द्धं तावद्व्याख्यातुं पीठिकां करोति * कर्मोत्पत्तीति * फलाद्यनुपादेयपरे वाक्ये कर्मविधावप्यनेकगुणविध्यसम्भवसूचनायोत्पत्तिशब्दः । ननु कारकैर्विना भावनाविध्यपर्यवसाने ऽग्निहोत्रादिवाक्ये कारकाश्रवणान्न विधिः स्यादित्याशङ्क्याह * तत्रेति * आत्मनो निष्पादकत्वेनांशभूततयावगतानि यानि कारकसामान्यानि, तदन्यथानुपपत्त्या, कारकविशेषाक्षेपात्स्ववाक्ये कारकाश्रवणे ऽपि विधिपर्यवसानं सम्भवतीत्याशयः । अर्थापत्त्या कारकविशेषाक्षेपे तद्वाचिपदानर्थक्यमाशङ्क्य * कारकविभक्त्यन्तेत्युक्तम् * तत् ईदृशं होकं वाक्यं श्रुतानुमितैकदेशे निष्पन्नमग्नीषोमीयेण पशुना यजेतेति पशुसोमाधिकरणवार्त्तिकवक्ष्यमाणन्यायेनाग्नेयेनाष्टाकपालेन यजेतेत्यादिप्रकारवचनव्यक्त्याश्रयणात्सर्वत्र कारकविभक्त्यन्तताभिप्रेता यः कश्चिद्विशेषो ऽतीत्यनिर्द्धारितविशेषाक्षेपे ऽपि विशेषनिर्द्धारणार्थानि पदान्तराणीत्याशयः । वाक्यादेवेत्यनेन स्ववाक्योच्चारणस्योत्पत्तिशिष्टबलीयस्त्वं प्रयोजनं सूचितम् । विशेष्यते भावनेत्यन्वयः । नन्वेवं सत्यमूर्त्तत्वेन जात्यादेः कारकत्वायोगाद्भावनान्वयो न स्यादित्याशङ्क्याह * प्रतिपदं चेति * द्रव्याश्रितत्वेनामूर्त्तस्यापि द्रव्यद्वारा कारकत्वोपपत्तिरुक्ता । ननु पशुत्वादिजातेरादिशब्दोक्तस्य चारुणा-

दिगुणस्याभिक्रमणादिक्रियायाश्च श्रुतिलक्षणद्वारैकशब्दोपादानलक्षणया श्रुत्या लिङ्गसंख्ययोश्चैकपदोपादानलक्षणया श्रुत्या द्रव्यान्वयात्तादर्थ्यप्रतीतेः कथं भावनार्थतेत्याशङ्क्य * एकेत्युक्तम् * जात्यादेर्द्रव्येण सह विशेषणविशेष्यभावे ऽपि जातिगुणयोः प्रातिपदिकार्थत्वात्प्रातिपदिकार्थकारकत्ववाचिन्या विभक्त्या संख्यायाश्च प्रत्ययार्थत्वेनैकाभिधानलक्षणया श्रुत्या लिङ्गस्यापि टाबादिप्रत्ययार्थत्वात्प्रातिपदिकार्थत्वाद्वा यथासम्भवं कारकत्ववाचिन्या श्रुत्या कारकत्वेन भावनार्थत्वप्रतीतेरभिक्रमणादेश्च धातुसम्बन्धाधिकारविहितणमुल्श्रुत्या धात्वर्थान्तरान्वयाभिधानात्तत्र वीप्सोक्ता। वृत्त्यन्यथानुपपत्त्यवगतसन्निपत्योपकारित्वेन कारकत्वावगत्या भावनार्थत्वप्रतीतेर्न द्रव्यशेषतास्तीत्याशयः। यथा द्रव्यस्य कारकत्वेन भावनार्थत्वान्न जात्यादिशेषता तथा जात्यादेरपि न द्रव्यशेषतेति परस्परशब्देनोक्तम्। नन्वेवमपि सन्निकृष्टपदान्वयमात्रेण भावनावैशिष्ट्यसिद्धेर्विप्रकृष्टपदानर्थक्यमित्याशङ्क्याह * एवमिति * कारकात्मना भावनार्थतैवैवंशब्देनोक्तां व्याचष्टे * स चेति * ननु विशिष्टविधौ विशेषणानामपि विधेयत्वात्कथं नानेकशक्तिकल्पनापत्तिरित्याशङ्क्याह * तथा हीति * श्लोकं व्याचष्टे * विशिष्टायामिति * ४७७।१
ननु विशिष्टविधेः स्वार्थान्यथानुपपत्त्या विशेषणविधिकल्पकत्वे विशेषणे विहिते विशिष्टविधिर्विशिष्टे च विहिते विशेषणविधिरितीतरेतराश्रयः स्यादित्याशङ्क्याह *विशेषणेति * पश्चात्कल्पस्यापि विशेषणविधेः प्राक्प्रवृत्तत्वेनैव कल्प्यत्वान्नेतरेतराश्रयापत्तिरित्याशयः। श्लोकं व्याचष्टे * विशिष्टेति * एकस्यानेकशक्तिकल्पनापत्तिपरिहारमुपसंहरति * तेनेति * विशेषणविशेष्यविधेरन्योन्यनैरपेक्षणापर्यवसानाद्युगपद्व्यापारो गम्यते विशेष्यानुवादेन विशेषणविधिना क्रमेण अप्राप्ते त्वित्युत्तरार्द्धं व्याख्यातमुपसंहरति * इतीति * प्राप्ते कर्मणीति * पूर्वार्द्धं व्याख्यातुमुपक्रमते * नेति * एतदेव प्रश्नपूर्वं दृष्टान्तेनोपपादयति * कथमिति * श्लोकं व्याख्यास्यन् दार्ष्टान्तिके ऽङ्गाकर्षणन्यायं योजयति * यदा हीति * प्रतिघ्नतस्य नित्यमपादानापेक्षत्वात्तस्या इति पञ्चम्यन्तसापेक्षत्वे ऽपि समासाविघातः प्रधाननयनन्यायस्तत्र नास्तीत्याह * विशिष्टेति * ननु प्राप्ते कर्मण्यनेकगुणविधानाशक्तावजया क्रीणातीत्यादिष्वनेकजात्यादिविधिः प्राप्ते सोमक्रयादौ न स्यादित्याशङ्क्याह * तत्रेति * यथानेककारकविशिष्टभावनाविधिना विशेषणभूतानेककारकविध्याक्षेपस्तथानेकजात्यादिविशिष्टकारकविधिना विशे- ४७८।१

षणाभूतानेकजात्यादिविध्याक्षेप इत्यर्थः । नन्वेवं सत्यनेकस्यापि द्रव्यदेवतारूपस्य कारकस्यैवाग्नेयपदोपादानात्पदान्तरोपात्तस्यापि चाष्टाकपालस्य द्रव्यरूपैककारकत्वात्प्राप्ते कर्मणि विध्युपपत्तिरित्याशङ्क्याह * यदा त्विति * एकपदोपात्तस्याप्यनेकस्य कारकस्य परस्परान्वयाभावेनैकविशिष्टेतरविध्ययोगान्नैकयत्नेन विधिः सम्भवतीत्याशयः । एकस्यापि तु कारकस्यानेकपदोपात्तस्यैकयत्नेन विध्यसम्भवे ऽनेकपदसम्बद्धमित्यात्राधाराग्निहोत्राधिकरणवार्त्तिके साधयिष्यते । दार्ष्टान्तिके ऽङ्कर्षणन्यायं योजितमुपसंहरति * एवं चेति * अत्रैव सूत्रावयवं योजयति * तदिति * भाष्यकृतां सूत्रानुक्तविशेषणोक्तौ प्रयोजनमाह * परस्परेति * दृष्टान्ते श्लोकं व्याचष्टे * लोके ऽपि चेति * अमात्येन गन्तव्यमिति सकृदुच्चारणव्यापारे सेनान्यादिगमनहेतुप्रयत्नान्तरोपादानाशक्तेरुच्चारणावृत्तिः स्यादिति दृष्टान्तपर्यवसानं श्रुतिशब्दः श्रुतिहेतूच्चारणलक्षणार्थः । यदि तावदित्यादेः स एवाग्निरष्टाकपालस्य नान्यस्येत्यन्तस्य प्राप्ते कर्मण्यनेकगुणविधावुच्चारणावृत्तेर्लक्षणवाक्यभेदाभिधानपरत्वं तावदाह * एतमिति * एतदेवावयवशो व्याचिख्यासुर्यदि तावदित्यादिभाष्यं व्याचष्टे * यदीति * कर्मान्वयितया ऽष्टाकपालविधौ अष्टाकपालस्वरूपकर्त्तव्यत्वस्यापि क्लेशलभ्यत्वादाग्नेयान्वयरूपार्थान्तरविधाने दूरोत्सादितमित्यर्थः । अर्थान्तरविध्यशक्तौ तदानीमिति भाष्यावयवं योजयति * तदाहेति * अथाग्नेयइति भाष्यं न तदाग्नेयः सत्तया सम्बध्यतइत्यर्थो लभ्यतइत्यनुक्त्वान्यून्यूनमाशङ्क्याह

४७९।१ * अथेति * अथ पौर्णमास्यामित्यथ तस्यामिति च भाष्यद्वयमेकहेलया व्याचष्टे * एवमिति * केन अष्टाकपालो विहित इत्यनूद्यमानाष्टाकपालोत्पत्तिर्निरस्ता केन तस्याविहितइति चावृत्त्या तस्य पौर्णमास्यन्वयो निरस्तः । विधीयमानाग्नेयोत्पत्तिनिरासस्तु प्राग्वात्सिद्ध इतरथाप्यनूद्यमानाग्नेयोत्पत्तिपौर्णमास्यन्वयविधीयमानाष्टाकपालोत्पत्तिनिरासः । स एवोत्पत्तिदेशे ऽनेनोक्तः । एवं सत्यपि क्लेशेन तद्विधौनभ्युपगम्याग्नेयस्याष्टाकपालस्य वाष्टाकपालेनाग्नेयेन वान्वयविधावतिगौरवं स्यादित्यर्थः । अथ पौर्णमासीति भाष्यं व्याचष्टे * पौर्णमासीपदेति * द्रव्यदेवतोभयस्वरूपकर्त्तव्यता पूर्वोक्तात्रापि योजिता । ननु पौर्णमास्याख्यक्रियान्वयद्वारः परस्परान्वयो भविष्यतीत्याशङ्क्याह * न चेति * द्रव्यदेवताविशिष्टपौर्णमासीविधौ सत्युभयविशेषणवशीकारं विनोभय-

विशिष्टत्वायोगादेकक्रियावशीकारात्परस्परनियमः सिद्ध्येत्तस्य त्वनिष्टत्वेन दुष्टत्वाद्या पौर्णमासीत्यनूद्य तस्यामाग्नेय इत्युक्ते ऽष्टाकपालानुरागाप्रतीतेस्तस्यामष्टाकपाल इत्युक्ते चाग्नेयानुरागाप्रतीतेर्न क्रियाद्वारा द्रव्यदेवतयोः परस्परान्वयः सम्भवतीत्यर्थः। अथ द्रव्यदेवते इति भाष्यव्याख्यानपूर्वमथ केन चिदित्याशङ्काभाष्यमवतारयति * एतदिति * परस्परासम्बन्धपरिहारार्थं प्रागेव द्रव्यदेवतायाः परस्परसम्बन्धं कुर्वन्नन्यतः सिद्धं द्रव्यस्य देवतासम्बन्धमनूद्येत्युक्तम्। ननु द्रव्यदेवतान्वयविधिपूर्वककर्मान्वयविध्यभ्युपगमे ऽपि द्रव्यदेवतान्वयसिद्धेरनुवादाभिधानं किमर्थमित्याशङ्क्यान्यतरसम्बन्धितया ऽन्यतरविधिर्द्वयोर्वा युगपदिति विकल्पद्रव्यसम्बन्धितया देवताविधौ देवतासम्बन्धितया द्रव्यविधौ उभयोर्द्रव्यदेवतयोः स्वरूपविधिः सम्बन्धविधिश्चेति क्लेशे युगपत्त्वितरेतरनैरपेक्ष्येणोभयविधौ परस्परसम्बन्धक्लेशमनुभूय पौर्णमासीसम्बन्धक्लेशो यस्तत्परिहारार्थमित्युक्तमिति तच्छब्दाक्षिप्तयच्छब्दाध्याहारेणैकग्रन्थतया योज्यम्। अवतारितभाष्यस्य परव्याख्यामुपन्यासपूर्वकं दूषयति * तत्रेति * परस्वहरणमेव तावन्निषिद्धत्वादयुक्तं विशेषतो हविषः सुतरामनपवृक्तकर्मण इत्यर्थः। केन चिदाग्नेयमष्टाकपालं निर्वपेद्रुक्काम इत्यादिवाक्येन विधानात्सङ्कल्पविषयीकारित इत्येवं स्वमतेन व्याचष्टे * तस्मादिति * रुक्कामेष्ट्यां विहितस्य पुरोडाशस्य तत्र त्यक्तस्यान्यत्रात्याज्यत्वेन साधारण्यायोगादाच्छिद्य विधौ च रुक्कामेष्ट्यसिद्ध्यापत्तेः पौर्णमास्यां विध्ययोगे ऽपि पुरोडाशान्तरस्य चाग्निनोपलक्षणीयोगे ऽपि यो ऽष्टाकपालो ऽन्यत्राग्नेयतया विहितः स पौर्णमास्यां भवतीत्यष्टाकपालत्वसाम्यात्पुरोडाशान्तरस्याग्न्युपलक्षितस्य पौर्णमास्यां विधिरित्याशयः। तथापीति परिहारभाष्यमाग्नेयपदान्वयेनैवाग्निदेवत्यत्वसिद्धेरयुक्तमाशङ्क्योपपादयति * तत्राहेति * अष्टाकपालस्य पौर्णमासीसम्बन्धविध्यर्थमुपलक्षणायाग्नेय इति शब्दो वाचको ऽस्येति व्युत्पत्त्याग्नेयशब्दोक्तस्याग्नेयत्वस्यानूद्यमानात्वात्पौर्णमासीगतस्याष्टाकपालस्य आग्निदेवत्यत्वसिद्धिरित्यर्थः। सिद्ध्यर्थमिति पाठेतूपलक्षणभूताग्निसम्बन्धसिद्ध्यर्थमिति व्याख्येयम्। अथेति भाष्येणोपलक्षणार्थत्ववद्विधानार्थतामप्याग्नेयशब्दस्याशङ्क्य स वक्तव्य इत्यनेन वैश्वदेवशब्दवत्त्वात्सकृदुच्चरितस्याग्नेयादिशब्दस्य विध्यनुवादत्वासम्भवेन परिहृतं तद्व्याचष्टे * युगपदिति * कल्पयिष्याम इति भाष्येणाष्टाकपालस्य पौर्णमासीयागान्वये विहिते देवतां विना द्रव्य-

स्य यागान्वयायोगाद्देवताकाङ्क्षायामुपलक्षणत्वेन बुद्धिस्थस्याग्नेर्देवतात्वकल्पनमाशङ्क्य नासतीत्यनेन यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते सा देवता भवतीति विधिशब्दाधिकरणवक्ष्यमाणलक्षणेन त्यज्यमानद्रव्यसम्बन्धापेक्षप्रवृत्तित्वात्मकसम्बन्धिशब्दत्वाद्देवताशब्दस्य गुर्वादिशब्दस्याध्यापनादिक्रियाजन्याध्याप्याद्यवच्छिन्नाध्यापयित्रादिगतातिशयवाचित्वावगतिवत्त्यागोद्देशक्रियाजन्यद्रव्यावच्छिन्नाग्न्यादिगतातिशयवाचित्वावगतेर्विधानं च विनाग्न्यादेर्द्रव्यत्यागोद्देश्यत्वप्रमाणाभावेनोद्देशक्रियाजन्यातिशयभाक्त्वायोगान्नाग्न्युद्देशेन द्रव्यत्यागविधिं विनाग्नेर्देवतात्वासिद्धिरित्युक्तम्।

तदर्थो यादृशो यत्र देवतात्वेन चोदितः।
मनागपि ततो ऽन्यत्वे देवतेति न गम्यते॥

इतिस्तुतशस्त्राधिकरणवार्त्तिके व्याख्यातमितीतिकरणेन सूचितम्। एवं तर्हि यो ऽष्टाकपालस्तयान्यत्राग्नेयो विहितः स पौर्णमास्यां भवतीत्यन्यतः सिद्धं देवताया द्रव्यान्वयमनूद्य कर्मान्वयमात्रविधानादवाक्यभेदो भविष्यतीत्याशङ्क्य कर्मविधिं विना न कथंचिद्वाक्यभेदपरिहारः सम्भवतीति दर्शयितुमाह * अनेनैवेति *

नियोगेन विकल्पेन द्वे वा सह समुच्चिते।
सम्बन्धः समुदायो वा विशिष्टावेकयेतरे॥

इत्यनेन न्यायेन बहुप्रकारावचनव्यक्तीराशङ्क्य देवतानुपलक्षितद्रव्यमात्रविधौ द्रव्यानुपलक्षितदेवतामात्रविधौ वान्यतरपदानर्थक्यापत्तेर्यथा देवतोपलक्षितद्रव्यस्यैव चिद्वाक्यविहितकर्मान्वयविधौ विधिं विना देवतानवगतेरुपलक्षणार्थत्वेनोपचरितस्याग्नेयशब्दस्याविधित्वकल्पने सकृदुच्चरितविध्यनुवादत्वायोगेनोच्चारणावृत्तिलक्षणो वाक्यभेदस्तथा द्रव्योपलक्षिताया देवताया एव विधौ द्रव्यस्यापि विधिं विना कर्मान्वयासिद्धेरुपलक्षणार्थस्याष्टाकपालशब्दस्य विधित्वकल्पने ऽपि द्रव्यं वा देवता वा विधीयतइत्यस्मिन्पक्षे विकल्पेनान्यतरस्योपलक्षणार्थस्य विधित्वकल्पनवाक्यभेदः। द्रव्यं देवता चेति समुच्चयपक्षे स्पष्टो वाक्यभेदः द्रव्यदेवतासम्बन्धसमुदाययोर्विधौ सम्बन्धो हि विधीयमानः सम्बन्धिनं तावदाक्षिपेद्वात्वर्थे पुनः स विधातव्य एवं सम्बन्धी अन्यथासम्बन्धस्यैवं सम्बन्धी शेषः स्यान्न क्रियाया इत्याद्याराग्निहोत्राधिकरणवक्ष्यमाणन्यायेन द्रव्यदेवतयोरपि विध्यापत्तेर्वाक्यभेदः अन्यतरविशिष्टान्यतरविधावपि द्रव्यदेवतयोर्भिन्नकार-

कत्वात्कारकयोश्चान्योन्यविशेषणविशेष्यभावाभावेनैककारकविशिष्टकारकान्तरविध्ययोगादेकस्वरूपविशिष्टान्तरस्वरूपविध्यभ्युपगमे चान्योन्यविशेषणत्वप्रसङ्गाद्धात्वर्थे पुनः स विधातव्य सम्बन्धीत्यनेन न्यायेन क्रियाङ्गत्वासिद्ध्यर्थं विशेषणस्यापि विध्यापत्तेर्वाक्यभेदः प्रपञ्चयितव्य इत्यर्थः।एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परमिति न्यायेन वचनव्यक्त्यानन्त्याद्वाक्यभेदानन्त्याभिधानं पौर्णमासीग्रहणस्योपलक्षणार्थत्वेनामावास्याया अनुवादेनापि द्रव्यदेवताविधानस्य निरस्तत्वात्किं तद्वाग्नेयादिवाक्ये विधीयतइत्याशङ्कायां तस्मादित्यन्तभाष्यं व्याचष्टे * तेनेति * विद्वद्वाक्यविहितएव कर्मणि द्रव्यदेवतासम्बन्धो विधीयतामित्याशङ्कानिरासार्थं स एष इति भाष्यं व्याचष्टे * न चेति * यजतिस्तु द्रव्यफलभोक्तृसंयोगादिनेव न्यायेन योगं विना द्रव्यदेवतान्वयायोगाद्यागापेक्षायां वाक्यान्तरप्राप्ते यागे द्रव्यदेवतान्वयविधौ सम्बन्धो विधीयमान इत्याघाराग्निहोत्राधिकरणवार्त्तिकोक्तन्यायेन द्रव्यदेवतयोरपि विध्यापत्तेर्वाक्यभेदप्रसङ्गादस्मिन्नेव वाक्ये द्रव्यदेवताविशिष्टयागविधानात्स एव यागो भवतीत्यपरोक्षवाचिनैषशब्देन वाक्यान्तरविहितात्परोक्षाद्यागाद्भेदः सूचित इत्याशयः।एवं तर्ह्याग्नेयादिवाक्यविहितं यागान्तरमेव विद्वद्वाक्याविहितयोर्यागयोः पौर्णमास्यमावास्याशब्दोक्तयोरङ्गत्वेन विधीयमानं रूपं भविष्यतीत्याशङ्कानिरासार्थं तेनेत्यादिभाष्यं व्याचष्टे * कर्मान्तरत्वे चेति* आग्नेयादिवाक्यस्थयोः पौ- ४८०।
र्णमास्यमावास्याशब्दयोः श्रुत्या कालार्थत्वप्रतीतेर्लक्षणाहेत्वभावाद्ययुक्तमप्याग्नेयादिवाक्यविहितानां यागानां विद्वद्वाक्यविहितयागाङ्गत्वं प्रौढ्याभ्युपेत्य यागस्य यागान्तरव्यवच्छिन्नरूपयागप्रत्यायकत्वायोगात् रूपत्वाभावो भाष्यकृतोक्त इत्यवयवव्याख्यया सूचितं श्रुत इति सिद्धान्तोपसंहारभाष्यं व्याचष्टे * इतीति * पूर्वपक्षसूत्रस्थश्रुतिसंयोगशब्दव्याख्यानार्थं तथा न लक्षणाशब्दो भविष्यतीति भाष्येणार्थादुक्तं विद्वद्वाक्यस्थयोः । पौर्णमास्यमावास्याशब्दयोराग्नेयादियागसमुदायपरत्वे लाक्षणिकं दोषं यत्त्वितिभाष्येणानुभाष्य तत्परिहारार्थं नैष इति भाष्यं व्याचष्टे * अष्टश्चेति * एकवचनान्वयाय समुदायलक्षणा श्रुत्यर्थान्वयायोगादगत्याश्रयणीयेत्यर्थः । कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागलक्षणा त्वत्पक्षे ऽपि तुल्येति सूचनायादिशब्दः। यत्तु स्वयं श्रुतिशब्दव्याख्यार्थं प्रत्यक्षश्रुतश्च यजिनं द्रव्यदेवतासम्बन्धाक्लेशेनानुमातव्यो भविष्यतीत्युक्तम् तत्परिहरति*किं चेति*भावनैकविषय-

त्वाद्विधेर्द्रव्यदेवतान्वयं विदधताग्नेयादिवाक्ये तत्तद्वच्छिन्नाया भावनाया एव विधेयत्वादव्यापारस्य च व्यापारान्वयं विना भावनावच्छेदकत्वायोगादपुंव्यापारत्वेन च भवत्युक्तस्य व्यापारस्य पुम्प्रयत्नापरपर्यायभावनावच्छेदकत्वायोगाद्भवत्युक्तक्रियातो ऽन्यक्रियायोगाभावे वाक्यासमाप्तेरसमाप्तस्य चार्थाभावेनार्थद्वारवाक्यान्तरान्वयायोगाच्च वाक्यान्तरे प्रत्यक्षश्रुतो ऽपि च यजिराग्नेयादिवाक्ये ऽन्वीयत इत्यर्थः। श्लोकं व्याचष्टे*अष्टाकपाल इति*यत्तु स्वयं पूर्वपक्षसूत्रस्थगुणशब्दव्याख्यानार्थं समुदायानुवादत्वाच्चाविधित्वं गुणवत्तरमित्युक्तं तत्परिहर्त्तुमाह * अनुमिते चेति * प्रकृतप्रत्यभिज्ञानाद्यच्छब्दोपबन्धेन वानुवादसरूपत्वादनुवादतैवेह गुणवत्तरेत्याशयः । ननु सत्यपि यच्छब्दोपबन्धे यदाग्नेयो ऽष्टाकपाल इत्यादिवद्विधिशक्त्याशङ्क्याह * क्रियेति * न वलोप इत्यत्र यच्छब्दस्य विधिशक्तिप्रतिबन्धकनिरासात्कथं विद्वद्वाक्ययोरनुवादसरूपता यादृशी क्रिया तां कुर्यादिति क्रियारूपानुवादे ऽपि कर्त्तव्यत्वाननुवादत्वेन क्रियासमानाधिकरणस्य यच्छब्दस्य विधिशक्त्यप्रतिबन्धकत्वे ऽपि कर्तृसमानाधिकरणं कर्त्तव्यत्वानुवादित्वाद्विधिशक्तिं प्रतिबध्नातीत्याशयः । वृद्धवाक्येनैतदेव द्रढयति * तथा चेति * रुजेर्नाशापरपर्यायभङ्गवाचित्वान्नाशयेदित्यर्थः ।

व्यपदेशश्च तद्वत् ॥ ७ ॥

भाष्यकारीयव्यपदेशशब्दस्य पौर्वापर्यविषयतया व्याख्यानं द्वितीयपूर्वपक्षनिरासार्थं सम्भवविषयत्वोपलक्षणार्थं चेत्याह *एकस्मिन्निति * यद्येको यागो ऽमावास्यायामिति विग्रहेण द्वितीयपूर्वपक्षनिरासार्थतोक्ता संहृत्य युगपद्भावो धारणं निष्पादनं पौर्वापर्यं चेति द्वन्द्वैकवद्भावः। यागैक्ये ऽपि हविर्भेदादुभयोपपत्तिमाशङ्क्य * सान्नाय्येत्युक्तम्* यागैक्ये सत्याग्नेयस्यैन्द्रस्य सान्नाय्यस्य दध्नः पयसो वा विकल्पः स्यादित्यर्थः। व्यतिरेकमुखेन श्लोकं व्याचष्टे *कर्मेति* आद्यपूर्वपक्षे पौर्वापर्यविवक्षायां देवतान्वयाविवक्षयेन्द्रत्वविशेषणाविवक्षां मत्वा व्याख्याविभवार्थं स्वयमुत्तरइति द्विवचनविषयत्वेन व्यपदेशशब्दं व्याचष्टे*प्रथमेति*पूर्वपक्षद्वये ऽपि सर्वेषां समप्राधान्येनाग्नेयादेः प्राधान्यलक्षणसाधकतमत्वरूपतैक्ष्ण्यशब्दवाच्योग्रत्वाभावादुग्रत्वविषयतयापि व्यपदेशव्याख्यानं च शब्दात्सूचितम्।

४८१।२ लिङ्गदर्शनाच्च ॥ ८ ॥

पूर्वपक्षद्वये ऽपि श्रुत्यर्थाभ्यां लिङ्गानुपपत्तिमाह * कर्मान्तरेति * पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृत्त्रयो ऽनुयाजा इत्याहवनीये यजिचोदिताङ्गाहुतीनामेकादशसंख्यत्वाद्विद्वद्वाक्ययोः कर्मान्तरविधित्वपक्षे पौर्णमास्यां प्रधानाहुतिचतुष्ट्वात्पञ्चदशसंख्यापत्तेरमावास्यायां या च प्रधानाहुतित्रित्वाच्चतुर्दशसंख्यापत्तेराधिक्यात्तयोरेव कर्मविधित्वपक्षे प्रधानाहुत्यैक्येनोभयत्र द्वादशसंख्यापत्तेन्यूनत्वाच्छ्रुतसंख्यानुपपत्तिरित्यर्थः कर्मैक्यपक्षे न्यायेनाग्नेयादिवाक्यविहितानां प्रधानाहुतीनां विकल्पापत्तावपि दशभिः क्रीणातीतिवच्चतुर्दशत्रयोदशवचनपर्यालोचनया समुच्चयावगमाद्याज्यानुवाक्याक्रमाच्चाहुतिपौर्वापर्योपपत्तेर्लिङ्गव्यपदेशोपपत्तिमाशङ्क्य सिद्धान्तपक्षेणानुवादतयाऽभ्युपपन्नस्य चतुर्दशत्रयोदशवचनस्य विधित्वकल्पनायोगाद्विधित्वे च प्राधान्याहुतीनामेवैतत्संख्यत्वापत्तेरभ्यासलक्षणापत्तेश्च नैतत्समर्थनं युक्तमिति अनुवादशब्देन सूचितम्। ननु सिद्धान्ते ऽप्यसोमयाजिनः पौर्णमास्याम् अग्नीषोमीयाभावादमावास्यायां च सान्नाय्याभावाल्लिङ्गानुपपत्तिरित्याशयेन पृष्टोत्तरमाह * कुत इति * सोमयाजिविषयत्वात्पौर्णमास्याममावास्यायां तु सोमयाजिनः सान्नाय्यद्वयस्य सम्प्रतिपन्नदेवतात्वेनैकाहुतित्वादसोमयाजिनो ऽप्यैन्द्राग्नस्य पुरोडाशस्य सान्नाय्यद्वयस्थाने विधानेनैककर्म्यादेवैकाहुतित्वावगतेः सदा प्रधानाहुतिद्वित्वाल्लिङ्गोपपत्तिरित्याशयः। अधिकरणार्थमुपसंहरति * तस्मादिति * सुखग्रहणार्थं वृद्धानामधिकरणार्थसंग्रहश्लोकं पठति * आहेति *

उपांशुयाजापूर्वताधिकरणम् ॥ ४ ॥

## पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥

ननु सापवादाभ्यासचिन्तायाः समाप्तत्वात्संख्यादिनिमित्ते कर्मभेदे चिन्त्ये मध्ये चितान्तराण्यसङ्गतानीत्याशङ्क्य साधारणीं सङ्गतिमाह * इदानीमिति * उपांशुयाजाघाराग्निहोत्रपशुसोमवाक्यानां वाक्यान्तरविहितसमुदायानुवादत्वे सत्युपांशुयाजादिकर्मभेदो विधित्वे त्वभेद इति भेदाभेदफलत्वाल्लक्षणसङ्गतिः सूचिता अधिकरणत्रयमध्ये ऽप्यस्य प्राथम्यसिद्ध्यै वैशेषिकसङ्गतिसूचनपूर्वकं सूत्रं व्याचक्षाणः पूर्वपक्षमाह * तत्रेति * विष्णवादिवाक्यैर्यागविधावुपांशुयाजत्रयापत्त्या पौर्णमास्यां षोडशाहुत्यापत्तेर्लिङ्गदर्शनाक्षेपेण पूर्वपक्षोत्थानादुपांशुयाजचिन्ताया

वैशेषिकथनन्तरसङ्गतिस्तावच्छब्देन सूचिता विष्णवादिवाक्येषु वि॰धेयत्वयोग्यस्वप्रधानभूतयागाश्रुतेः प्रकृतयागाभावात्पौर्णमासीवद्भा-वायोगं कुत इति भाष्येणाशङ्क्य नामसम्बन्धादित्यादिना तद्भ-द्भावोपपादनं कृतं तत्रोपांशुयाजशब्दस्य नामधेयतायाः स्वानभिमत-त्वात्संज्ञावच्छेदनिमित्तमुपेक्ष्यारूपत्वप्रकृतयागसद्भावनिमित्तं तद्भ-द्भावं व्याचष्टे *कुत इति* श्लोकं व्याचष्टे *एतेषु तावदिति* त-व्यस्य विधिवाचित्वादुपसर्जनत्वेनापि निर्दिष्टस्य यागस्यार्थान्नि-ष्कृष्य विधेयत्वोपपत्तिसूचनार्थं तव्येत्युक्तम्।यजतीत्यस्य वर्त्तमाना-पदेशत्वान्नैकान्तिकविधितेति तावच्छब्देन सूचितम्। विष्णवादिवा-क्यानां विधित्वाभावे ऽप्यन्तरालवाक्ये रूपाज्ञानसाम्यात्ततो न केवलं रूपाज्ञानं किं त्वदृष्टान्तरकल्पनं च प्राप्तमिति योज्यम्। तै-त्तरीयकशाखायामुपांशुयाजमन्तरा यजत्यजामित्वायेत्यन्तरालवा-क्ये ऽप्यजामिकरणार्थवाददर्शनाद्भाष्यकृतोपेक्षितमपि हेत्वन्तर-मुदाहृते वाक्ये तादृगर्थवादादर्शनात्स्वयमाह *किं चेति*विष्णवा-दिवाक्येषु प्रत्येकमजामिकरणावगतेस्तदेकविषयत्वेन जामिदोषो-क्तेरपि विष्णवादिवाक्यविषयस्तुत्यर्थत्वावगमात्तस्याश्चोपक्रमस्थ-त्वात्तदनुरोधेनोपसंहारस्थास्यापांशुत्वविशिष्टयागविधेरपि विष्णवा-दिवाक्यप्रतिपाद्यतावसीयत इत्याशयः । जामिदोषोपक्रममुपन्यस-नमित्यर्थः। सहार्थतृतीययोक्तः श्लोकं व्याचष्टे * यथोपक्रममिम-ति * जाम्युपन्यासाजामित्वयोरेकविषयत्वेनाजामित्वस्य विष्णवा-दिवाक्योक्तयागविषयत्वाज्जामित्वस्याप्युपक्रमस्थस्य सन्दिग्धेषु वाक्यशेषादित्यनेन न्यायेन तद्विषयत्वावगतेरुपसंहारस्थस्य विधे-रुपक्रमानुसारित्वस्य न्याय्यत्वादिति विष्णवादियुक्ता एव विधय इत्यर्थः। जामिदोषेण सहोपन्यसनमिति योजनसूचनायोपन्यासश-ब्दः। समुदायानुवादव्यवहितस्यापि जामित्वस्यानुवादेन स्तुतेरन-पेक्षितत्वेनासम्बन्धाद् ।

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तेन सः।
अर्थतो ह्यसमर्थानामानर्थक्यमकारणम् ॥

इत्यनेन न्यायेनापेक्षावशाद्विधिवाक्यान्वयो ऽनेकैरपि चैकस्य तन्त्रेणान्वयो न विरुद्ध इत्याशयः। यागत्रयस्योपांशुत्वाद्येकधर्मयो-
४८२।१ गात्समुदायाकरणे शक्ये ऽप्यनुवादानर्थक्यमाशङ्क्याह * समुदा-यति * अन्यथा कालवाक्ये ऽग्नीषोमकीर्त्तनात्तद्देवत्यस्योपांशुयाजस्य कालान्वये सति विद्वद्वाक्यस्थेन पौर्णमासीशब्देनानुवादात्फलवा-क्यस्थेन पूर्णमासशब्देन फलान्वयात्प्राधान्यावगतेर्वैष्णवप्राजापत्य-

थोरङ्गत्वं स्यादित्याशयः । नन्वित्याशङ्काभाष्यमाक्षिपति * नन्विति *
समाधत्ते * नैष इति * नैवं जातीयक इति परिहारभाष्यमवतार-
यन् व्याचष्टे * अत इति * नाम्नो ऽप्युपांशुत्वगुणकयागत्वानिमि-
त्तत्वादकृतकत्वस्य तदवाचकत्वापत्तेः पक्षद्वयसाम्येनादोषत्वशङ्का-
निरासार्थमव्युत्पन्नास्त्विति भाष्यं व्याचष्टे * व्युत्पन्नेति * नन्वि-
त्याशङ्काभाष्याशयं व्याचष्टे * नन्विति * माभूदिति परिहारभा-
ष्याशयमवतारणपूर्वं व्याचष्टे * तदिति *

## चोदना वा प्रकृतत्वात् ॥ १० ॥

सूत्रं व्याचष्टे * कर्मेति * विष्णवादिसंयुक्तानां भिन्नवा-
क्यत्वाभावे ऽप्यवान्तरपदसङ्घविषयो वाक्यशब्दः विष्णवादिवा-
क्यानामविधायकत्वं न हीत्यादि भिद्येत वाक्यमित्यन्तभाष्योक्तया
युक्त्योपपादयति * यथेति * तथात्रापि न पृथग्विधित्वप्रतिप-
त्तिरित्यध्याहारेण नानेकादृष्टकल्पनानुबन्धिविध्यभ्युपगमो युक्त
इति व्यवहितान्वयेन वा पूरणीयम् । ननु वैश्वानरं द्वादशकपालं
निर्वपेदित्युपक्रान्ताया वैश्वानरेष्टेर्यस्मिञ्जातएतामिष्टिं निर्वपतीत्यु-
पसंहारेणैकवाक्यत्वावगमाद् दृष्टत्वादियुक्तानां शब्दानां पृथग्विधि-
त्वायोगो ऽप्यत्र जामित्वोपक्रमादजामित्वोपसंहाराच्चैकवाक्य-
त्वानवगतेर्न तत्तुल्यतेत्याशङ्क्यैकं हीदं वाक्यमिति भाष्योपपादित-
मेकवाक्यत्वं प्रपञ्चयितुम् * जामि वा इत्युक्तम् * सोदर्यवाचि-
जामिशब्दलक्षितस्य सादृश्यस्य नैरन्तर्यानुष्ठाने सत्यालस्यापादकत्वे-
न दोषत्वात्तत्कीर्त्तनस्य च निषेधाश्रुतेर्निन्दापर्यवसायित्वायोगादा-
काङ्क्षावशेनाजामित्वकरकर्मस्तुत्यर्थत्वावगमाज्जामित्वोपन्यासयो-
रेकवाक्यतावसीयतइत्याशयः । ननु जामित्वाजामित्वोपन्यास-
योरेकवाक्यत्वावसाये ऽप्यजामित्वस्य विष्णवादिवाक्योक्तयागविष-
यत्वात्तदेकवाक्यतया जामित्वस्यापि तद्विषयत्वावगतेस्तस्य चोपक्र-
मस्थत्वात्तदनुसारेणोपसंहारस्थस्य विधेरपि तद्विषयतावसीयतइ-
त्याशङ्क्य कः पुनरित्यादिभाष्योक्तार्थवादस्यान्तरालवाक्योक्तयाग-
विषयत्वाद्विधेरपि तद्विषयत्वमुपपादयितुम् *जामिता चेत्युक्तम् * ४८३।१
पञ्चम्यन्तवैश्वानरवाक्यवदत्रापि वाक्ये विध्यैक्यावसायान्न पृथक्
विधितेत्यध्याहारेण नानेकेति व्यवहितान्वयेन वा पूरणीयम् । नन्वेव-
मपि विष्णवादिवाक्येषु तव्यप्रत्ययेनैकान्तिकविधित्वावगमात्पृथ-
क्विधित्वापत्तिरित्याशङ्क्य तस्मिन्क्रियमाणइति भाष्योक्तं विधि-
त्वानादरमुपपादयितुम् * विष्णवादीत्युक्तम् * न हीत्यनेन विधि-

त्वानपेक्षोपपादिता विष्णवादियुक्तगतस्याजामित्वस्य जामितयान्वये सति विष्णवादियुक्तविधेस्तथान्वयः स्यान्न त्वजामित्वस्य विष्ण्वादियुक्तगतत्वं सम्भवति विष्णवादियुक्तानामन्तरालसंयोगाभावेन स्तुत्यनर्हत्वादित्याशयः । नन्वन्तरालयुक्तस्याप्यजामित्वान्वयाश्रनेन विधानार्हतास्तीत्याशङ्क्य तत्र व्यवधानादिति भाष्योक्तमन्तरालसंयोगेनैवाजामित्वान्वयावगमाज्ञाम्युपक्रमेण वाक्येन विधानार्हत्वं विवरीतुम् * अन्तरालेत्युक्तम् * विष्णवादिवाक्यानां यागाविधायकत्वमेवापि चेति भाष्योक्तेन युक्त्यन्तरेणोपपादयति * किं चेति * विष्णवादिवाक्यैर्यागविधौ सति विष्णवादिदेवताया यागान्वये श्रुतेन विधिना कृते यागो ऽर्थाद्देवतां प्रत्युपसर्जनभूतो विधेयः स्यात्तच्चान्तरालवाक्येन श्रुते चकारात्स्वप्रधानभूते यागे विधेये सम्भवत्ययुक्तमित्यर्थः। अनेन चार्थाक्षेपाधीनत्वेनोपसर्जनभूतस्य देवतासंस्कारकत्वापत्तेरविनियुक्तायाश्च देवतायाः संस्कार्यत्वायोगाद्देवताविधिसापेक्षत्वेन यागविधेर्विप्रकृष्टत्वमभिप्रेत्य भाष्ये वाक्यशब्दः प्रयुक्त इति सूचितम्। श्लोकं व्याचष्टे *कर्मोत्पन्नइति* याग उपसर्जनं विष्णवादिः प्रधानं यस्मिन्निति बहुव्रीहिं विगृह्य यागोपसर्जनश्चासौ विष्णवादिप्रधानश्चेति कर्मधारयो विग्राह्यः प्रत्यक्षस्य प्रधानस्य च यागस्य कर्त्तव्यत्वोपदेशोपपत्तेरित्यर्थः। एवं सत्यपि विधित्वे देवताविध्यापत्तेर्यागविधित्वं नास्तीत्याह * तत्रेति * देवताविधितैव तर्ह्यस्तु इत्याशङ्क्याह * न चेति * देवतान्वयानभिधायित्वात्तव्यप्रत्ययानां देवताविधायित्वासम्भवे ऽभिहिते चतुर्थ्या देवतात्वानभिधायित्वे ऽपि यथादेवताविधायित्वं तथा तव्यस्यापि भविष्यतीत्याशङ्क्य * सम्प्रदानमित्युक्तम् * त्यज्यमानद्रव्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायात्मकसम्प्रदानत्ववाचिनी चतुर्थी लक्षणया वाच्यैकदेशत्यज्यमानद्रव्योद्देश्यत्वात्मकं देवतात्वं वदतीत्याशयः। ननु कर्मत्ववाचिन्यापि द्वितीयया विष्णुं यजतीत्यादौ देवताविधिदर्शनात्तद्वाचिनस्तव्यप्रत्ययस्यापि देवताविधायित्वं कस्मान्न स्यादित्याशङ्क्याह*तत्रेति*तव्यस्य द्वितीयावत्प्रधानभूतकर्मानभिधायित्वात्तत्तुल्यार्थतैव तावत् क्लेशलभ्या न च तल्लाभमात्राद्देवतासिद्धिः देवतायाः कर्मत्वाभावादित्याशयः। कथं तर्हि देवतायास्तव्यद्वितीयाभ्यां निर्देश इत्याशङ्क्य निर्देशालम्बनमाह * त्यागार्थत्वाद्धीति * देवतोद्देशद्रव्यत्यागसमुदायवाचित्वाद्यजेस्ताद्दशस्य च कर्माभावाद् द्रव्यस्यापि पारमार्थिककर्मत्वाभावे ऽपि देवताधच्छब्दमात्रोपकारित्वशङ्कानिवृत्तये ऽर्थरूपोपकारित्वप्रदर्शनार्थः ।

परमार्थशब्दः । उद्देशविशिष्टत्यागवाचिनो ऽपि यजेर्विशेषणांशानादरेण विशेष्यांशविवक्षया त्यागार्थत्वमभिप्रेत्य कर्म भवतीति ल्यब्लोपे पञ्चमी । नन्वेवं सति देवतायाः कथं कर्मतेत्याशङ्क्य देवतोद्देशेन द्रव्यत्यागोत्तरकालं देवतामुद्दिश्य त्यज्यमानेन द्रव्येण देवतायाः प्रतिग्रहीतृत्वाभावे ऽपि प्रतिश्रवणेनेवाप्रतिगृह्णतो ऽपि ब्राह्मणस्य स्वाम्यापादनेनाप्यमानत्वात्तत्र पयसि दध्यानयतीत्यत्रानयतिकर्मणा दध्नेव व्याप्यमानस्य पयसो * द्वितीयकर्मत्वं भवतीत्युक्तम् * ननु देवताया द्रव्येणाप्यमानत्वस्य दध्नेव पयसः संस्कार्यत्वमात्रविवक्षायां द्विकर्मकलक्षणो धातुः प्रसज्येत गवेव तु ब्राह्मणस्य स्वाम्यविवक्षायां सम्प्रदानत्वापत्तेश्चतुर्थी स्यादित्याशङ्क्य * तत्रेत्युक्तम् * प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्त- ४८४।१
त्वादित्यत्र षष्ठाधिकरणसूत्रे प्रक्रान्तं कर्म वीतायामपि फलेच्छायां प्राप्ते वा फले ऽवश्यं समापनीयमित्येतदुपपादनार्थं भाष्यकृतोपक्रमादारभ्य समाप्तिपर्यन्तस्य व्यापारसमूहस्याख्यातेन विधित्सितत्वात् श्रुत्या चारम्भसमाप्त्योर्विधौ गौरवापत्तेरारम्भमात्रविधौ च नियोगतः समाप्त्यसिद्धेर्यागादि समापयेदिति शास्त्रार्थ इति नायमारम्भसमाप्तिशब्दार्थः । किं तर्हि समाप्तिरेव समाप्त्या व्यर्थप्राप्तत्वादारम्भस्य तस्मात्परिसमाप्तिः शब्दार्थ इति भाष्येण वक्ष्यमाणत्वाद्देवतास्वाम्यापत्तेश्च देवतोद्देशविशिष्टद्रव्यत्यागोत्तरकालत्वेन समाप्तित्वात्तत्कर्ममात्रविभावेनैककर्मत्वावधारणात् द्विकर्मकधातुत्वप्रसक्तेर्देवतायाश्च प्रतिग्रहीतृत्वाभावेन सम्प्रदानत्वाभावाच्चतुर्थ्यप्रसक्तेस्तव्यद्वितीयोपपत्तिरित्यर्थः । न तु त्यज्यमानद्रव्याप्यमानस्य तव्यद्वितीयावाच्यत्वे तल्लक्षणत्वाद्देवतात्वमेव वाच्यं स्यादित्याशङ्क्याह * नत्विति * त्यज्यमानद्रव्योद्देशकर्मत्वं देवतात्वं तच्चोद्देशांशस्य विशेषणत्वेन द्वितीयानन्वयान्न द्वितीययोच्यते देवतात्वस्त्वाहवनीयप्राप्तेर्जुहोत्यर्थत्ववत् यज्यर्थत्वाभावान्नान्तरीयकसिद्धावपि अशास्त्रीयत्वेन तत्कर्मत्वलक्षणमाप्यमानत्वं न देवतात्वमित्याशयः । कथं तर्हि द्वितीयानिर्देशो देवतात्वसिद्धिरित्याशङ्क्याह * किं तर्हीति * देवतामुद्दिश्य त्यज्यमानेन द्रव्येणाप्यमानत्वलक्षणस्य कर्मत्वस्य त्यज्यमानद्रव्योद्देश्यत्वलक्षणाद्देवतात्वाद्भिन्नानुपपत्तेस्तन्निमित्तया लक्षणया गम्यमानत्वाद्द्वितीयानिर्देशो देवतात्वनिश्चय इत्यर्थः । यजदेवपूजासङ्गतिकरणदानेष्विति स्मृतिबलेन पूजाकर्मत्वलक्षणं देवतात्वं द्वितीयावाच्यमित्याशङ्कते * नन्विति* व्याकरणस्यार्थान्वाख्यानार्थत्वाभावेनार्थवत्त्वे प्रामाण्याभावात्पुरा-

णादौ च यज्ञानधिकारिणो भीष्मादेर्यष्टृत्वकीर्त्तनालम्बनानि पूजाप्रतिष्ठादानानि दर्शयितुमौपचारिकार्थान्व्याख्यानोपपत्तेर्यजेः पूजावाचित्वाभावान्न तत्कर्मत्वं देवतात्वमित्याशयेन परिहरति * नैष इति * एतदेव प्रश्नपूर्वकमुपपादयति*कुत इति*श्लोकं व्याचष्टे* न हीति*अपि वा शब्दपूर्वत्वाद्यज्ञकर्मप्रधानं स्याद् गुणत्वे देवताश्रुतिरित्यत्र नवमाधिकरणसूत्रे विग्रहाद्यभावेन रूपासमवायाद्देवतायाः पूज्यत्वं निरस्यातिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिविधानत्वादिति दृष्टान्तवैषम्याभिधानार्थे सूत्रे विग्रहादिसद्भावे ऽपि यजेः पूजावाचित्वाभावाद्यागकर्मणि देवताप्राधान्याभाव इति मध्यमावयवेन देवताप्राधान्यस्य निषेत्स्यमानत्वं न चातिथिवदिति चकारसूचितम्। न च यजिरित्यनेन व्याख्यातं किं च पूजयतोःप्रीत्युत्पादनवाचित्वादुत्पादनस्य च करोत्यर्थत्वेन नित्यं सकर्मकत्वात्पूज्यस्य तत्कर्मत्वे सत्यपि स्वास्थ्यकामः शयीतेत्यादौ प्रत्ययार्थकर्मणि स्वास्थ्यादावदर्शनेन द्वितीयाया धात्वर्थकर्मविषयत्वावसायाद्दानादिना च पूज्यस्य धात्वर्थकर्मत्वदर्शनाद्यागेन देवतायाः पूज्यत्वे ऽपि यागकर्मत्वाभावान्न द्वितीयावाच्यतास्तीत्याशयेनाह *दानम् चेति * नन्वेवं सत्युपाध्यायवद्देवतायाः पूज्यत्वेन यज्यर्थत्यागकर्मणा त्याज्येन द्रव्येणाभिप्रेयमाणत्वात्सम्प्रदानत्वमेव देवतात्वं स्यादित्याशयेनाशङ्कते * एवं तर्हीति * मुख्यं वा संप्रदानत्वमापद्यते गौणं वा तत्र मुख्यं तावन्न सम्भवतीत्याह * नेति * तादृशशब्देनोपाध्यायवन्मुख्यतोक्ता । नन्वप्रतिग्रहीतृत्वान्मुख्यसम्प्रदानत्वाभावेन सम्प्रदानत्वनिर्देशाभावे सति मुख्यकर्मत्वाभावे सति मुख्यकर्मत्वाभावे कर्मत्वनिर्देशस्याप्यभावापत्तेर्विष्णुं यजतीत्यादिकर्मत्वनिर्देशान्मुख्यकर्मतैव देवतायाः प्रतीयतइत्याशङ्क्य मुख्यसम्प्रदानत्वाभावे ऽपि सम्प्रदानत्वनिर्देशवन्मुख्यकर्मत्वाभावे ऽपि कर्मत्वनिर्देशोपपत्तिप्रदर्शनार्थं गौणसम्प्रदात्वनिर्देशमुदाहरति * अपि चेति * क्वचित्शब्देन गौणत्वं सूचितम् । एवमौपचारिकपूज्यत्वाभ्युपगमेन गौणे कर्मत्वे सम्प्रदानत्वे वा सत्यपि देवतात्वं नास्तीत्युक्तंदानीं देवतायाः पूज्यत्वाभावात्तन्निमित्तं कर्मत्वं सम्प्रदानत्वं वा गौणमपि नास्तीत्याह * सर्वथेति * न मुख्यवृत्त्या नापि गौणवृत्त्येति सर्वथाशब्देन सूचितम्। कथं तर्हि विष्णुं यजति सोमाय यजतइत्यादौ द्वितीयाचतुर्थीनिर्देशः इत्याशङ्क्यैनदालम्बनं वक्तुम् * आहासाधारणेन त्विति * पूजायाः प्रीत्युत्पादनात्मकत्वेन करोत्यर्थत्वाद्यजिपरप्रत्ययार्थत्वे सत्योदनस्येव पाके देवतायाः पूजाख्ये प्रत्यया-

र्थं मुख्येप्सिततमत्वलक्षणकर्मत्वोपपत्तेर्विषयस्यैव वा भक्षणे गौणानीप्सितत्वलक्षणकर्मत्वोपपत्तेरप्रतिग्रहीतृत्वे ऽपि च यद्वान्यस्मै प्रतिश्रुतमित्यत्राप्रतिग्रहीतुरिव पूजाकर्मत्वाद्यागे गौणसम्प्रदानत्वोपपत्तेस्तद्व्यावृत्त्यर्थः केवलशब्दः। यजिपरस्य प्रत्ययस्य ददातिपरप्रत्ययवत्पूज्यवाचित्वाभावाद्यागमात्रविषयं देवतायाः कर्मत्वं सम्प्रदानत्वं वा स्यात्तच्च कर्मान्तरसम्प्रदानान्तरव्यावृत्तेनैव रूपेण भवतीत्याशयः। देवतायाः कर्मान्तरसम्प्रदानान्तरविलक्षणकर्मत्वं सम्प्रदानत्वाभ्युपगमे हेतुमाह * तच्चेति * तत्कर्मत्वं सम्प्रदानत्वं वा यदेवं भूतमन्येभ्यो विलक्षणं कल्प्यते तद्देवतायाः कारकत्वावगमात्कर्तृकरणापादानाधिकरणकर्मसम्प्रदानातिरिक्तस्य कारकस्याभावाद्देवतायाश्च कर्मसम्प्रदानातिरिक्तकारकत्वस्य कथं चिदप्ययोगात्पारिशेष्यात्कर्मत्वस्य सम्प्रदानत्वस्य वावगतेः कर्मान्तरसम्प्रदानान्तरतुल्यस्य च तस्यायोगादित्यर्थः । कथं देवताया कारकत्वावगतिरित्याशङ्क्याह * न हीति * कारकत्वं विना क्रियान्वयायोगात्प्रातिपदिकवाच्येनाकारकरूपेण यागान्वयं न प्रतिपद्यते देवतेति । सर्वथेयं देवतेति देवताशब्दानुषङ्गेण योज्यम्। देवतावाच्यग्न्यादिप्रातिपदिकपरो ऽत्रत्यो देवताशब्दो देवताशब्दवाच्येनापि रूपेण देवतायागान्वयं न प्रतिपद्यते किमुताग्न्यादिशब्दवाच्येनेत्यतिशयद्योतनार्थः। देवतातद्धितविषयो वा देवताशब्दः तद्धितनिर्देशे ऽपि देवताया द्रव्यमात्रान्वयप्रतीतेर्यागान्वयार्थमग्निमनेन यजेताग्नये यजेतेति वा वचनव्यक्तिः कल्प्येत्याशयः। कीदृक् विलक्षणं रूपं कर्मसम्प्रदानयोरित्यपेक्षिते सम्प्रदानस्य तावत् त्याज्यद्रव्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायात्मकस्य तदेकदेशोद्देश्यत्वमात्रेण त्यज्यमानद्रव्यस्यान्यत्राविनियोज्यत्वलक्षणदेवतास्वत्वापत्तेः देवतायाः प्रतिग्रहीतृत्वाभावे ऽपि तत्फललाभात्त्यज्यमानद्रव्योद्देश्यत्वमात्रे सकलसम्प्रदानरूपकल्पनात्मकं वैलक्षण्यमाह * तेनेति * येन कारणेनान्यसम्प्रदानतुल्यं देवतायाः सम्प्रदानत्वं नास्ति तेन कारणेन देवतोद्देशद्रव्यत्यागात्मकस्य यागस्य त्यागांशप्राधान्यविवक्षायां प्रतिग्रहाद्विनापि तत्फललाभात्सकलसम्प्रदानत्वकल्पनेन चतुर्थीनिर्देश इत्यर्थः। उद्देश्यांशप्राधान्यविवक्षायां तद्विशेषणभूते त्यागांशे आप्यमानत्वाध्यायेन सकलं यागं प्रति कर्मत्वरूपं कर्मणो वैलक्षण्यमाह * यद्वेति * वचनव्यक्ति-
भेदेनैतदेव स्पष्टयति * तेनेति * देवतोद्देशेन द्रव्यत्यागाद्देवता- ४८५।२
स्वाम्यापत्तावपि, तदापादनस्याविहितत्वद्योतनायेवशब्दः परस्व-

त्वापादनत्यागयोः प्राधान्याविवक्षायामपि पश्चाद्भावद्योतनार्थौ तु-मुनौ। ननु देवताया रूपासमवायेन तदुद्देशस्याप्राधान्यान्न द्वितीयोक्तकर्मान्वयः सम्भवतीत्याशङ्क्य होत्रादेर्द्रव्यस्यास्वाम्याभावात्त्यक्तृत्वायोगेन त्यागशून्ये देवतोद्देशमात्रे होतर्यजेत्यादेर्यजिप्रयोगात्प्राधान्यमुपपादयितुमाह * तथा चेति * नन्वेवं रूपयोरपि कर्मसम्प्रदानयोर्विभक्तिवाच्यत्वात्तद्रूपस्य देवतात्वस्य विभक्तिवाच्यता न विरुद्धेत्याशङ्क्याह * तदेतदिति * अनेकवाच्यशक्तिकल्पनापत्तेर्नानयोर्देवतामात्रविषययोर्वाच्यत्वकल्पना युक्तेत्याशयः। नन्वेवमपि लाक्षणिकत्वाविशेषात्सम्प्रदाननिर्देशवत्कर्मनिर्देशे ऽपि देवतात्वं कस्मान्नेष्यतइत्याशङ्क्याह * तत्रापीति * प्रतिग्रहीतृत्वाभावेनासमस्तात्मकत्वाद् दूषितमपि सम्प्रदानत्वमुद्देशत्यागाव्यभिचारित्वात्तत्सम्बन्धिनो देवतात्वस्य प्रत्यासन्नं कर्मत्वं तूद्देशत्यागव्यतिरिक्तेषु क्रियान्तरेष्वपि सम्भवेन सव्यभिचारित्वाद्विप्रकृष्टं ततश्च कर्मत्वेन देवतात्वलक्षणा ऽत्यन्तक्लिष्टेत्याशयः। ननु कर्मत्ववद्देवतात्वस्यापि सप्तदेवताः शंसतीत्यादौ क्रियान्तरेषु भावात्तु तन्मात्रेण कर्मत्वस्य देवतात्वाद्विप्रकर्षः स्यादित्याशङ्क्याह * न हीति * तत्प्रकृतं हविर्भाक्त्वलक्षणं देवतात्वं सकलं यथायजिमेव प्रति ननु क्रियान्तरमपि प्रति न तथा सकलं कर्म यजिमेव प्रतिक्रियान्तरेष्वपि कस्य चित्कर्मणः सद्भावादित्यर्थः। स्तुतिभाक्त्वलक्षणं त्वितरद्देवतात्वं न हविर्भाक्त्वलक्षणमित्याशयः। ननु कर्मत्वसम्प्रदानत्वयोर्देवतात्वाभावाद्द्वितीयाचतुर्थ्योर्देवतानभिधायित्वे को ऽन्यस्तद्वाची शब्दः स्यादित्याशङ्क्याह * परमार्थतः पुनरिति * स्मृतितिबलेनैतदेवोपपादयति * तथा चेति * क्रीतादितद्धितविधौ यथा तृतीयया कारकविभक्त्या वदनं कृतं न तथा देवतातद्धितविधाविदमग्नये ऽनेनाग्निमिति वा कारकविभक्त्या वदनं कृतमित्यर्थः। भावे ऽनिष्टा श्लोकं व्याचष्टे * ये हीति * अनन्यशब्दवाच्यत्वोपपादनस्य तव्यप्रत्ययवाच्यत्वोपयोगमाह * ततश्चेति * देवतायास्तव्वाच्यत्वोपपादनस्य प्रकृतयागविधायित्वाभावोपयोगमाह * तत्रेति * न त्विति भाष्येणान्तरालवाक्ये ऽपि यागान्तरालान्वयविधिप्रतीतेर्यागस्य स्वरूपविधिक्लेशसाम्यमाशङ्क्य बाढमित्यनेनांपांशुत्वान्तरालान्वयस्यैव विधेयत्वाभिधानेनाशङ्काशयानातिक्रमाद्विधित्वाभिधानाच्चायुक्तत्वमाशङ्क्यैकग्रन्थेनाशङ्कापरिहाभाष्यद्वयं तात्पर्यतो व्याचष्टे *अन्तरेति * विशिष्टार्थप्रतीतौ सम्बन्धस्य नान्तरीयकत्वात्सम्बन्धशब्देन लक्षणया वैशिष्ट्याभिधानाद्विधित्वं च

विनानर्थक्यापत्तेरनन्यगतित्वस्य हेतुत्वेन विवक्षितत्वाच्छङ्कापरिहार इत्याशयः। केन भाष्येणानन्यगतित्वं हेतुत्वेन विवक्षितमित्याशङ्क्य नन्वन्तरालसम्बन्धस्यान्यत्प्रयोजनमिति भाष्येणेति सूचयितुमाह * न हीति * उपांशु पौर्णमास्यां यजन्नित्यत्रैकीकृतानां कालसम्बन्धे सति सर्वेषां प्राधान्यं स्यादित्यत्र समुदायानुवादार्थवत्तोक्तेत्याशङ्कते*ननु चेति * शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीय इत्यन्यार्थदर्शनस्य प्राधान्यद्योतकत्वेन व्याख्यायां पूर्वपक्षे ऽग्नीषोमीयोपांशुयाजव्यतिरिक्तयोर्वैष्णवप्राजापत्योपांशुयाजयोरप्राधान्यापत्त्यभिधानेन समुदायानुवादानर्थक्यस्य वक्ष्यमाणत्वान्न सर्वोपांशुयाजप्राधान्यज्ञापनेनार्थवत्तेति परिहरति*तथेति*एवं तु व्याख्यायमाने यदीमे ऽपि विधीयेरन् भिद्यते वाक्यमित्यस्यानन्तरमेकं हीदमित्यादेर्विष्णवादिसम्बन्धो ऽनूद्यतइत्यन्तस्य भाष्यस्यान्वयापत्तेरुपांशुत्वादिसम्बन्धइत्यस्यानन्तरं च न त्वन्तरालसम्बन्धस्येत्यस्यान्वयापत्तेर्व्यवहितान्वयदोषभयान्नन्वित्यनेन विष्णवादिवाक्यविहितेषु यागेष्वन्तरालगुणविधानायान्तरालवाक्यमित्याशङ्क्योपांशुत्वस्यादिशब्दोपात्तस्य चान्तरालस्य प्राप्ते कर्मण्येकेन वाक्येन विधानाशक्तेश्चोदना वा गुणानां युगपद् शास्त्रादित्यनेन न्यायेन विष्णवादिवाक्यैर्यागविधावप्यन्तरालवाक्येन कर्मान्तरविधानापत्तौ वाढमित्यनेनार्हतीत्यन्तेनोक्तायां विष्णवादिवाक्यप्राप्तानामुपांशुत्वस्यान्तरालवाक्ये ऽनुवादात्कथमनेकगुणविधानात्कर्मान्तरापत्तिरित्याशयेन कथमिति पृष्टे जामि वेत्यादिनानूद्यत इत्यन्तेन विष्णवादिवाक्यानां विधायकत्वायोगान्न तत्प्राप्तोपांशुत्वानुवादः सम्भवतीत्युक्ते ऽनुपादेयान्तरालकालान्वयात्प्रकरणान्तरन्यायेनापि कर्मविधित्वाभिधानार्थं नन्वन्तरालसम्बन्धस्येति भाष्यमिति यथान्यासमेव भाष्यव्याख्यां सूचयितुमाह * किं चेति * नन्व- ४८६।१
नुपादेयान्वये ऽपि विष्णवादिवाक्यविहितयागविपरिवृत्तेः प्रकरणान्तरन्यायो नास्तीत्याशङ्क्याह * तादृगिति * एतदेव व्याचष्टे * यादृशी हीति * अस्मिंश्च व्याख्याने विष्णवादिवाक्यानां कर्मविधित्वे ऽप्यन्तरालवाक्यस्य गुणात्प्रकरणान्तराद्वा कर्मान्तरविधित्वाभिधानाद्भाष्यस्थः कर्मान्तरशब्दः समञ्जस एवेत्याह * तत्रेति * ननूद्देश्यत्वेन देवताया अपि कालवदनुपादेयत्वात्तदन्वये ऽपि कर्मान्तरापत्तेस्तस्मिन्नेवान्तरालविहिते यागे देवतां विदध्युरिति वार्त्तिकमयुक्तं स्यादित्याशङ्क्याह * देवतायाः पुनरिति * अस्या इदमिति द्रव्यत्यागसङ्कल्पविषयत्वलक्षणोद्देश्यत्वे ऽपि देवतायाः

कर्मकाले शब्दप्रतिपाद्यत्वेनापाद्यत्वलक्षणोपादेयत्वाच्च तदन्वयः कर्मान्तरत्वापादक इत्याशयः । ननु कर्मान्तरशब्दस्य विष्णवादिवाक्यानां कर्मविधित्वाभ्युपगमविषयत्वे प्रकृतानां यागानामभावादिति भाष्यमयुक्तं स्यादित्याशङ्क्याह * कर्मेति * आद्यव्याख्याने त्वाग्नेयाद्यपेक्षया कर्मान्तरशब्द इत्याह * अथ वेति * परमार्थतस्तु द्वितीये व्याख्याने विष्णवादिवाक्यानां विधित्वमनिष्टमेवेति दर्शयन्नुपसंहरति * तस्मादिति * प्रकरणान्तरन्यायाभावेऽप्यनुपादेयान्वयस्याकर्मविधित्वापादकत्वं दर्शयितुमाह * धात्वर्थे चेति * अनुपादेयाङ्गविधितोऽपि तदुद्देशेन कर्मैव विधेयमित्याशयः ननु कुत्वप्रसक्त्योपांशुयाजशब्दस्य गुणविधित्वायोगेनोपांशुत्वस्याविधेयत्वान्नानेकगुणविधानेन कर्मविधित्वसिद्धिरित्याशङ्कां निराकर्तुं प्रसक्तिं तावत्करोति * स त्विति * गुणविधित्वपक्षे कुत्वप्रसक्तिं नैवं जातीयक इति पूर्वपक्षभाष्योक्तां परिहर्तुमनुभाषते * यत्त्विति * पक्षद्वयसाम्येन परिहर्तुम् । उपपत्तिसाम्यं तावदाह * तत्रेति * एतदेव प्रश्नपूर्वमुपपादति * कुत इति * श्लोकं व्याचष्टे * वाच्येति * यस्त्वव्युत्पन्नस्त्विति पूर्वपक्षभाष्येण पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति पात्नीवतशब्दस्य त्वाष्ट्रपात्नीवतावाचकस्यापि किं चिद्वर्णसारूप्यावगमात्तदनुवादकत्वदर्शनेनोपांशुयाजशब्दस्यानुवादकत्वे वाचकत्वानपेक्षेति परिहार उक्तस्तन्निरा-
७।२ सार्थमनुभाषते * स्यादिति * निराकरोति * तदिति * नन्वेवमपि नामत्वानिरासेन गुणविधिनिश्चयः कथमित्याशङ्क्याह * न चेति * श्लोकं व्याचष्टे * न तावदिति * उपांशुयाजनामकत्वाच्चास्य कर्मण इदमवगम्यते नूनमस्योपांशुत्वं धर्म इति दशमोपान्त्याधिकरणभाष्यं त्वाग्नेयाग्नीषोमीयशब्दवद्धृदयमुपांशुयाज इत्यादिवाक्यान्तरस्थगुणनिमित्तोपांशुयाजशब्दव्यवहारविषयमित्याशयः । अतोऽन्तरालवाक्यस्थेनैवोपांशुयाजशब्देनोपांशुत्वविधिरित्युपसंहरति * तस्मादिति * सूत्रकृतोऽपि गुणविधित्वेष्टेत्याह * तथा चेति * कथं तेनेति भाष्येण जामित्वापनयनप्रकारं पृष्ट्वा तस्मिन्नित्यनेन देवतावैलक्षण्यं प्रकारत्वेनोक्तं तत्पुरोडाशनैरन्तर्येणोक्तस्य जामित्वस्य द्रव्यवैलक्षण्यं विनानपनयनादयुक्तमाशङ्क्य देवतावैलक्षण्यस्योपलक्षणार्थत्वं दर्शयितुमाह * जामित्वेति * सर्वस्मै वा तद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यमित्यनेनानिर्दिष्टद्रव्यकेषु यागेष्वाज्यविधानाद् द्रव्यवैलक्षण्यमाग्नेयाग्नीषोमीययोर्मध्यमस्वरत्वात्स्वरवैलक्षण्यं विष्णुप्रजापतिपक्षे देवतावैलक्षण्यं युगपत्पुनरिति भाष्येण विष्णवा-

द्विवाक्यानामर्थवादत्वद्देवताविधित्वाभावाद्विष्ण्वादेरप्राप्तत्वेनानुवादानुपपत्तिमाशङ्क्य यष्टव्यानित्यनेनायष्टव्यत्वे ऽप्युपांशुयाजस्तुत्यर्थं यष्टव्यत्वकीर्त्तनमित्युक्तं तस्य ज्ञायत एवेति भाष्येण विरोधमाशङ्क्य परिहर्त्तुमाह * ज्ञायत एवेति * देवतावैलक्षण्येनाग्नेयाग्नीषोमीयाभ्यामुपांशुयाजस्य वैचित्र्यप्रदर्शनार्थं कीर्त्तिता न विष्ण्वादिवाक्यविहितत्वप्रदर्शनार्थं तेन कारणेन विष्ण्वादेरवश्ययष्टव्यत्वाभावे ऽपि स्तुत्यर्थत्वेनोपादानाभिधानं न पूर्वभाष्यविरुद्धमित्याशयः । अयष्टव्ये यष्टव्यत्वोपपादनालम्बनम * गुणवादेनेत्यनेनोक्तम् * कीदृशो गुणवाद इत्यपेक्षिते * प्राधान्येत्युक्तम् * अग्निर्वै देवानामवमो विष्णुः परम इति श्रुतेर्विष्णोः सर्वदेवानां मध्ये प्राधान्यप्रसिद्धिः एत इति वै प्रजापतिर्देवानसृजतेति श्रुतेः प्रजापतेः प्राधान्यप्रसिद्धिरग्नीषोमीययोस्तु तावब्रूतामग्नीषोमावित्यत्र कीर्त्तनादुपांशुयाजे प्राधान्यप्रसिद्धिः । ननु विष्ण्वादेः प्राधान्यमात्रेण यष्टव्यत्वाभिधाने यागान्तरेष्वपि यष्टव्यत्वापत्तेर्वैलक्षण्यं न स्यादित्याशङ्क्य * यागइत्युक्तम्* विधिं विना देवतात्वाभावात्प्राप्तावनियमप्रसक्त्ययोगे ऽपि या काचिदिह देवता स्यादित्यपेक्षायामनियमप्रसक्तिरुक्ता निर्दिष्टदेवताकत्वाद्यागान्तरेष्वप्रसक्तिरित्याशयः । ननु विष्णुरुपांशु यष्टव्य इत्येवमादीनां विधित्वाभावे विष्ण्वादेर्विधायकाभावाद्विध्येकगम्यत्वेन च देवताया यागाक्षेपमात्रेणालाभाद्देवताराहित्येनोपांशुयाजविधिरवसीदेदित्याशङ्क्य तत्रेति भाष्येण शाखान्तरविधानेन विहितत्वमुक्त्वा यद्यपीत्यनेन प्रत्यक्षविध्यभावे उपांशुधर्मकत्वेन विष्णु प्रजापत्योः कल्पविधिविहितत्वं विष्णोश्च मन्त्रवर्णकल्पेनापि विधिना विहितत्वमग्नीषोमयोस्तु पुराकल्पसरूपार्थवादकल्पविधाविहितत्वमुक्तं तत्सर्वमाक्षेप्तुं शाखान्तरइति तावदाक्षिपति * शाखान्तर इति * अनुदाहृत्यैव शाखान्तरे ऽस्तीत्याभिधाने यस्मै यद्रोचते तत्सर्वं सिद्ध्येदित्याशयः । शाखान्तरे च देवताविधौ सत्युपांशुयाजे पूर्वाधिकरणपूर्वपक्षे द्रव्यानियमवत्किं देवतायामप्यनियमः शास्त्रैकप्रमाणत्वाद्वा देवतायास्तेन विना कल्पनायोगादाग्नेयमुपांशुयाजमन्तरा यजत्यैन्द्रमुपांशुयाजमन्तरा यजतीत्यादिप्राकरणिकवाक्यान्तरस्थाग्नेयादिपदानुषङ्गेण वैकल्पिकप्रकृताग्न्यादिदेवताविधिकल्पनया प्रकृतानामेव मध्ये या का चित्प्रजापतिधर्मोपांशुत्वदर्शनाद्वा प्रजापतिविधिकल्पनया स एव प्रजापतिर्मनसा यजेतेति वा प्रजापतेस्तूष्णीं भावधर्मकत्वविधानेनोपांशुत्वधर्मकत्वाभावात्प्रजा-

पतिविधिकल्पनानुपपत्तेर्नियमसम्भवे चानियमायोगान्मुख्यत्वेना-ग्नेयपदमात्रानुषङ्गेणाग्निविशिष्टोपांशुयाजविधिकल्पनयाग्निनियम इति विचारपूर्वकं विष्णुर्वा स्याद्धौत्रादमावास्या हविश्च स्याद्धौत्रस्य तत्र दर्शनादिति सूत्रेण मान्त्रवर्णिकदेवताश्रयणं न युज्येतेत्याह * न चेति * अत्रत्यश्च यद्यपीति भाष्यावयवः प्रत्यक्षदेवताविधि-सद्भावे न युज्येतेत्याह * यद्यपीति * प्रजापतिं मनसा यजेतेति प्रजापतितूष्णीम्भावधर्मकत्वश्रुतेस्तुष्णीं वै श्रेयस आकाङ्क्षत इत्यर्थ-वादाच्च श्रेयोऽभ्यर्थनतूष्णीङ्कार्यत्वावगतेस्तस्मादाहुर्विष्णुर्देवानां श्रेष्ठ इति च विष्णोः श्रेयस्त्वश्रुतेस्तूष्णीम्भावधर्मकत्वावगमाद्यत्किं चि-त्प्राजापत्यमिति च वर्त्तमानापदेशस्य स्पष्टविधिविहिततुष्णीम्भाव-विरुद्धोपांशुत्वविध्यशक्तेर्देवताधर्मोपांशुत्वस्य यागे दर्शनेन विष्णुप्र-जापतिदेवत्यत्वकल्पनायोगाद्यदुपांशु तत्प्राजापत्यमिति विपरीतवच-नव्यक्त्याश्रयणेन तथापीत्यूक्तमित्यापाद्याक्षिपति * यदप्युक्तमिति * उपांशुयाजस्योपांशुधर्मत्वात् विष्णुप्रजापती प्राप्ताविति वदतोपांशुत्व-स्य प्राजापत्यत्ववैष्णवत्वनिमित्तस्योपांशुयाजेऽपि समानत्वात्प्रजा-पतिर्देवता विष्णुश्च प्राजापत्यवाक्यादेवमादिसङ्कीर्त्तनादित्यादि-शब्दसूचिताच्च तत्सदृशाद्वैष्णवाक्याद्विष्णुप्रजापत्योरुपांशुधर्म-कयागान्वयावगमादिति देवताया यागाभेदोपचारेणोपांशुधर्मश-ब्दप्रयोगमभ्युपगम्य भाष्यार्थः सूचितः। स्तुत्यर्थत्वेनापि प्राजापत्य-वाक्यार्थोपपत्तेर्वचनव्यक्तिविपर्यासो न युक्त इत्याक्षेपाशयः ॥ अ-ग्नीषोमीययोस्त्विति भाष्यमाक्षिपति * यदपीति * ननु ताविति
४८८।१ चतुर्थ्यादेशाद्देवताविधिर्भविष्यतीत्याशङ्क्याह * यदि हीति * वि-ध्यधीनत्वात्प्रवृत्तेरग्नीषोमाभ्यामावाभ्यां यजेरन्नित्युक्तेऽप्यस्माकं किमग्नीषोमोक्तार्थानुष्ठानेनेति जानन्तो विधिना वयं प्रवर्तिता इ-ति नावधारयेयुरित्यर्थः। अनेकार्थविधौ वाक्यभेदापत्तेर्नास्य देवता-विधायितेत्याह * कालेति * देवतामात्रं तर्हि विधीयतामि-त्याशङ्क्याह * देवतेति * ननु पुरोडाशद्वयान्तराले विधाना-द्दमावास्यायां च पुरोडाशैक्येनान्तरालयोगादुत्पत्तिवाक्यादेव पौ-र्णमासीकालत्वावगतेर्द्विवद्वाक्यस्थेन पौर्णमासीशब्देनानुवादात्फ-लवाक्यस्थेन पूर्णमासशब्देन ग्रहणोपपत्तेः प्राधान्यं सेत्स्यतीत्याश-ङ्क्याह * सूत्रेति * अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगा-त्मन्त्रो यथा प्रधानं स्यादिति सूत्रेण प्रधानस्योपांशुयाजस्योपां-शु पौर्णमास्यां यजन्निति शब्देन पौर्णमासीकालं संयोगात्पौ-र्णमास्यामेवोपांशुयाजः कार्यः मन्त्रस्तु वैष्णवयाज्यानुवा-

क्यारूपे ऽमावास्याक्रमाम्नातो ऽपि प्रधानानुसारात्पौर्णमास्यामेव स्यादिति वदतास्यैव कालविधानार्थत्वेनोपन्यासान्नोत्पत्तिवाक्ये कालविधिरित्याशयः। पौर्णमासीशब्देनानपायश्च कालस्य लक्षणं हि पुरोडाशावित्यनेन न्यायेनैकपुरोडाशायां पौर्णमास्यामिवामावास्यायामप्युपांशुयाजोपपत्तिः पौर्णमासी विध्यभावे सूचिता शाखान्तरइतिभाष्यं तावत्समाधातुमारभते * अत्रेति * शाखाभेदेनोपांशुयाजक्रमे वैष्णवादियाज्यानुवाक्यायुगलाम्नानात् श्रुत्याविनियुक्तस्यापि मन्त्रस्य प्रधानाकाङ्क्षितदेवताप्रकाशनलक्षणोपकारकत्वसम्भवेनाकाङ्क्षितादृष्टोपकारकल्पनायोगाद्देवताकल्पकत्वोपपत्तेर्मन्त्रवर्णकल्पो देवताविधिर्विष्णुर्वा स्याद्धौत्राम्नानादिति दशमोपान्त्यधिकरणगतसूत्रवक्ष्यमाणन्यायेन स्थित इत्यर्थः। सूत्रे विष्णुग्रहणमन्तरेण एकशाखायाममावास्यायां विष्णु याज्यानुवाक्याम्नानादमावास्यायामेवोपांशुयाजहविः कार्यमिति प्रदर्शनार्थं पूर्वपक्षस्थेन कृतं न देवतान्तरनिवृत्त्यर्थमित्याशयः। ननु नाना शाखाधीतानामपि याज्यानुवाक्यायुगलानां देवताकल्पनात्प्राक् दृष्टार्थत्वेनानवसायाद्वसन्तमृतूनां प्रीणामीत्यादीनामेको ममेत्यादीनां च प्रयाजानुमन्त्रणानामिव समुच्चयापत्तेस्तत्कल्पानां देवतानामपि समुच्चयः प्रसज्येतेत्याशङ्क्याह * तैश्चेति * देवताकल्पनात्प्रागपि याज्यानुवाक्यासामान्यतो यागाङ्गदेवताप्रकाशनलक्षणैककार्यत्वावगतेर्न समुच्चयो युक्त इत्याशयः। ननु याज्यानुवाक्यानां हौत्रप्रवचनाख्यवेदाम्नानेनाध्वर्यवप्रवचनाख्ययजुर्वेदविहितोपांशुयाजापेक्षया वेदान्तरीयत्वाच्छाखान्तरीयत्वाभिधानं न प्रयुज्येतेत्याशङ्क्याह * तदेव चेति * वेदान्तरस्य शाखान्तरताप्यस्तीत्याशयः। वेदैक्यएव शाखान्तरव्यपदेशाङ्गस्येनापरितोषात्परिहारान्तरमाह * आध्वर्यवे ऽपि त्विति * नन्वेवं सत्यध्वर्युप्रयोज्यतैव स्यादित्याशङ्क्य होतर्यजेति प्रैषसामर्थ्याद्धोतृ * प्रयोज्यत्वरूपेणेत्युक्तम् * यथाश्रुतवचनव्यक्त्याश्रयणेनैव विष्णुप्रजापत्योरुपांशुधर्मकत्वावगतेर्यागस्य विष्णुप्रजापत्योश्चोपांशुत्वसाम्याद्विष्णुप्रजापतिदेवत्यत्वप्रापकलिङ्गोपन्यास इत्येवं तथापीति भाष्यं समाधत्ते * उपांश्विति * उपांशुधर्माणावित्यनेन यद्विष्णुप्रजापत्योरुपांशुत्वधर्मत्वमुक्तं तदुपांशुयाजस्य मन्त्रवर्णप्राप्तविष्णुप्रजापतिदेवत्यत्वद्योतनार्थमित्यर्थः। शाखान्तरभाष्योक्तस्य मान्त्रवर्णिकत्वस्य विष्णुर्वा स्यादिति सूत्रवक्ष्यमाणत्वद्योतनार्थं मन्त्राम्नानाच्चेति भाष्यमिति सूचनार्थश्चकारः कथं विष्णुप्रजापत्योरुपांशुधर्मत्वेनोपांशु-

याजस्य तद्देवत्यत्वद्योतनेत्यपेक्षायामाह * अन्या हीति * ननु प्रत्यक्षमानसत्वाविधिविरोधान्न लिङ्गेनोपांशुत्वप्राप्तिरित्याशङ्क्याह * घिष्णवति * यथान्यो न शृणोति तथोच्चारणस्योपांशुत्वादन्याश्रवणसादृश्येन मानसत्वपवोपांशुशब्दोऽनुक्तदेवताकेषु विष्णुप्रजापतिदेवत्यत्वद्योतनार्थं प्रयुक्त इत्याशयः। अग्नीषोमयोस्त्विवति भाष्यं कालविधायिनि वाक्येऽग्नीषोमयोः प्राप्तिरुदाह्रियतइत्येवं व्याचक्षाणः समाधत्ते * तथेति * तावन्नूतामित्यस्मिन्कालस्य विधायके वाक्येऽग्नीषोमीययोरनुवादेन मान्त्रवर्णिकी प्राप्तिमग्नीषोमयोस्त्वति भाष्यमुपोद्बलयतीत्युक्ते ननु पुराकल्पसदृशस्यापि विधायकत्वाभ्युपगमे देवताविधायकतापि कस्मान्नेष्टेत्याशङ्क्य कालस्य विधायके वाक्यभेदापत्तेर्देवता * विध्यसम्भवादित्युक्तम् * देवतैव तर्हि विधीयतां न काल इत्याशङ्क्य यथेत्यनेन देवताज्योपांशुत्वकालानामिह वाक्ये कीर्तितानां मध्येऽन्यतः प्राप्तिसम्भवासम्भवावालोच्य विधेयतयानुवाद्यतया च ग्रहणस्य न्याय्यत्वात्कालव्यतिरिक्तानां चान्यतःप्राप्तिसम्भवात्कालस्यै *वैतद्विधायकमित्युक्तम् *

गुणोपबन्धात् ॥ ११ ॥

यदुच्यत इति भाष्येणोपांशुत्वगुणोपबन्धान्नारूपत्वेन पौर्णमासी लभ्यते इति पूर्वपक्षोक्तारूपत्वपरिहारार्थत्वेनैतत्सूत्रं व्याख्यातुमुपांश्ववित्विति वाक्यमुदाहृतं तद्देवतावदुपांशुत्वस्याप्यविधायकत्वाद्विध्यर्थत्वे चोपांशुशब्दस्य यागविशेषोपलक्षणार्थत्वायोगान्निष्वपि पौर्णमासीयोगेषुपांशुत्वोपपत्तेर्नोदाहार्यमित्याशङ्क्योत्पत्तिवाक्यस्थस्योपांशुयाजशब्दस्योपांशुत्वविधानार्थत्वोपोद्बलनायैतदुदाहृतमिति सूचयन् व्याचष्टे * यस्येति * यथाश्रुतार्थत्यागं हेतुमाह * नन्विति * नन्वार्थवादकल्पविधित्वमात्रेणैकस्य वाक्यस्यानेकार्थपरत्वे वाक्यभेदः शक्यपरिहारः ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदित्यादावनेकार्थविधौ चोदिते हि ते हि तदर्थत्वात्तस्य तस्योपदिश्येतेत्यनेन वाक्यभेदाभिधानाद्रात्रिसत्रेऽप्यर्थवादकल्पस्य विधेः फलमात्रपरत्वान्नानेकार्थपरतास्तीत्याशयः। उपांशुत्वादिवन्नाज्यस्याप्यनेनैव विधानःपत्तेर्हविर्लिङ्गाश्रुतित्वादिति दशमोपान्त्याधिकरणसूत्रविरोधः। किमर्थं तर्ह्येतदुदाहृतमित्यपेक्षायां पूर्वसूचितमेव प्राप्त्युपोद्बलनार्थत्वं प्रकटयति * अत इति *

४८९।१ प्राये वचनाच्च ॥ १२ ॥

प्रधानेति भाष्येणोपांशुयाजस्य प्रधानप्राये वचनात् प्राधान्यावगतेर्विष्णवादिवाक्यैश्च विधावुपांशुयाजभेदे सत्यग्नीषोमीयस्यैवोपांशुयाजस्य कालविधिप्रसङ्गाद्विद्वद्वाक्यानूदितत्वात्फलवाक्यग्रहेण प्राधान्याद्वैष्णवप्राजापत्ययोरुपांशुयाजयोर्गुणत्वापत्तेरुपांशुयाजमात्रप्राधान्यावगतिबाधप्रसङ्गान्नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत्समुदायानुवाद इत्येवं सूत्रं व्याख्यातं तत्र किं प्राये वचनमित्यपेक्षायामुदाहरति * हृदयमिति * यज्ञस्यामूर्त्तत्वेन शिरोहृदयपादायोगमाशङ्क्य स्तुत्यर्थं पुरुषत्वोपचारः। ननूपांशुयाजभेदे ऽपि विध्युद्देशान्तर्गतत्वात्सन्निहितत्वाच्चोपांशुत्वस्यैवार्थवादस्थव्यवहितदेवतानपेक्षस्य यागोपलक्षकत्वात्सर्वेषामुपांशुयाजानां कालविध्यवगतेर्विशेषतश्च समुदायेनैकीकृतानां कालयोगावगते. पक्षद्वये ऽप्यविशिष्टं प्राधान्यमित्याशङ्कते * कथं पुनरिति * यागोपलक्षणत्वं विना देवताकीर्त्तनानर्थक्यापत्तेरर्थवादस्थयोर्व्यवहितयोरपि वाग्नीषोमयोरुपांशुत्ववदुपलक्षणत्वावगमात्कालोद्देशेन चोपादीयमानानां यागानामनेकोपलक्षणान्वये ऽपि वाक्यभेदानापत्तेः समुदायीकृतानामपि च कालान्वये समुदायशब्दाभावेनाग्नीषोमदेवत्यस्यैवोपांशुयाजस्य कालविधिप्रतीतेः प्राधान्यापत्तिरिति परिहरति * उच्यतइति * अवधारिते ऽपीत्यपिशब्दो ऽध्याहार्यः अग्नीषोमीय एवेत्यनेनाग्नीषोमयोरुपलक्षणत्वावश्यं भावः सूचितः। श्लोकं व्याचष्टे * ताविति * नन्वेवं सत्युपांशुयाजैक्ये ऽप्यग्नीषोमपक्ष एव कालविधानापत्तेर्नित्यवत्प्राधान्यकीर्त्तनं न युज्येतेत्याशङ्कते *नन्विति* अष्टदोषदुष्टदेवताविकल्पापत्तेरप्युपांशुयाजैक्यपक्षो न युक्तइति सूचनार्थो दोषशब्दः। कर्मैक्ये सत्युपलक्षणापाये ऽप्युपलक्ष्यानपायाद्देवतान्तरपक्षे ऽप्यविशिष्टः कालविधिरिति परिहरति * नैष इति * श्लोकं व्याचष्टे * यदि हीति * सर्वत्रेत्युक्ते क्वेत्युदाहरणापेक्षायामसोमयाजिनो ऽग्नीषोमीयपुरोडाशाभावादन्तरालकालोपलक्षणीभूतपुरोडाशद्वयाभावे ऽपि तदुपलक्षिताग्नेयपश्चाद्भावलक्षककालानपायादुपांशुयाजानिवृत्त्यभिधानार्थं दशमान्त्याधिकरणसूत्रमुदाहृतम्। एवं च सत्यग्नीषोमग्रहणस्योपलक्षणार्थत्वे ऽपि देवतान्तरपक्षे कालयोगनिवृत्तिप्रयोजनत्वानवगमात्फलवाक्ये वैरूप्यापत्तेश्च कादाचित्कप्राधान्यप्रयोजनत्वायोगादानर्थक्यपरिहारायाज्यग्रहणवत्स्तुत्यर्थतैव न्याय्येति सूचयितुमाह*नचेति* भेदे तूपलक्षणार्थतया विध्युद्देशान्तर्गतत्वेन प्रयोजनवत्तरत्वसम्भवे मन्दप्रयोजनस्य स्तुत्यर्थत्वस्यान्याय्यत्वादुपलक्षणार्थतैवोचितेति

सूचयितुमाह * नानात्वे त्विति * तस्मादित्युपसंहारभाष्यं प्रायवचनहेतुसाध्याभिधानार्थत्वेन व्याचष्टे * तस्मादिति * अधिकरणसिद्धान्तप्रयोजनाभिधानार्थम् * चैककर्मत्वायेत्युक्तम् *

॥ आघाराद्यपूर्वताधिकरणम् ॥ ५ ॥

४९.०।१ आघाराग्निहोत्रमरूपत्वात् ॥ १२ ॥

नापूर्वविधी इति भाष्येण पूर्वाधिकरणपूर्वपक्षसूत्रस्थपौर्णमासीवत्पदानुषङ्गेणाघाराग्निहोत्रं पौर्णमासीवत् समुदायानुवाद इत्येवमेतत्सूत्रं व्याख्यातं तत्रोपांशुयाजवत्प्रकृतकर्माभावेनेहापि समुदायानुवादत्वनिरासससिद्धेः प्रत्यवस्थानानुपपत्तिमाशङ्कोपांशुयाजवैधर्म्यमाहोर्ध्वमिति वैधर्म्योक्त्यानन्तरसङ्गतिरपि सूचिता। ननूर्ध्वादिवाक्यानां कर्मविधितैव नास्तीत्याशङ्क्याह * किं चेति * एकोपक्रमसंहाराभावेनैकवाक्यत्वावगतेः । कथं चिच्चैकवाक्यत्वप्रतीतावपि ऊर्ध्वत्वादेः कथं चित्प्राप्त्यभावेन स्तुत्यर्थत्वायोगाद्विधित्वावगतेः कर्मनिरपेक्षगुणविध्ययोगाद् गुणविशिष्टकर्मविधितैव न्याय्येत्याशय।श्लोकं व्याचष्टे*नेति* कर्मनिरपेक्षगुणविधिसम्भवासम्भवसन्देहो ऽत्र मूलसन्देहे हेतुरिति सूचयितुं सन्देहपूर्वं गुणवत्कर्मगोचरपदव्याख्या एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * श्लोकं व्याचष्टे * न तावदिति * विधौ स्मृताया लिङो यासुडागमविधानात् यादित्येतावतः प्रयोगाननुगतमपि विध्यभिधायित्वमभ्युपेत्य * न हीत्युक्तम् * भावनाभिधायित्वं तु शुद्धस्य न प्रयोजनात्स्मृतेर्वावगम्यतइत्याशयः। कुर्याच्छब्दमात्रान्वये ऽपि धात्वर्थाद्व्यतिरेकः स्यान्न भावनातः। वस्तुतस्तु करोत्यर्थस्यापि धात्वर्थानवच्छिन्नस्याप्रतीतेर्न तद्व्यतिरेकेणापि विधित्वस्य दध्याद्यन्वयः सम्भवतीति किं * तर्हीत्यनेनोक्तम् * ननु भावनाया धात्वर्थानपेक्षगुणविध्ययोगे ऽपि तद्वारैव गुणविधिर्भविष्यतीत्याशङ्क्याह * तस्मादिति * अशक्तिमेवोक्तवचनव्यक्तिद्वयातिरिक्तवचनव्यक्त्यसम्भवेनोपपादयति * देवहीति * दध्युदूर्ध्वादिवाक्यानां गुणवत्कर्मगोचरत्वमुपपादितमुपपादयति * तस्मादिति * ननु तस्मादेव तावपि समुदायानुवादाविति पूर्वपक्षोपसंहारभाष्यात्समुदायानुवादत्वं पूर्वपक्ष्यभिमतं गम्यते न च दध्युदूर्ध्वादिवाक्यविहितानां कर्मणां समुदायो ऽस्त्येकधर्मयोगाभावादित्याशङ्क्याह * ततश्चेति * हवनाधारणरूपैकजातीयैकदेशे पठितत्वलक्षणैकधर्मयोगाख्येन प्रचयेनापादितः समुदायो ऽस्तीत्यर्थः । धात्वर्थसमुदाय-

स्येव धातुना भावनासमुदायस्यापि प्रत्ययेनानुवाद इति वक्तुम् * तासामित्युक्तम् * रूपवतीनामित्यनेनाघाराग्निहोत्रयोः स्ववाक्ये विहितरूपाभावाद्वाक्यान्तरविहितरूपापेक्षणे च विहिते कर्मणि वाक्यान्तरैस्तदनुवादेन रूपविधिर्वाक्यान्तरविहिते च रूपे सति कर्मविधिरितीतरेतराश्रयापत्तेः कर्मविध्ययोगं सूचयता न हीत्यरूपत्वव्याख्यानार्थं भाष्यं व्याख्यातम् । अनुवादप्रयोजनापेक्षायामग्निहोत्रवाक्ये तावद्यावज्जीवमग्निहोत्रं जुहुयादिति निमित्तचोदनायामग्निहोत्रं जुहुयादिति फलचोदनायां चैकत्वसिद्धिं प्रयोजनमाह * निमित्तेति* पूर्वपक्षे निष्प्रयोजनत्वदोषं परिहृत्य प्रत्युतान्याय्यविकल्पपरिहारो गुण एव स्यादित्याह * एवं चेति * नन्वाघारकर्मणो द्रव्यदेवतान्वयेन यागरूपतायास्तत्प्रख्याधिकरणे ऽभिहितत्वाद्यागरूपस्य च द्रव्यदेवतस्याघारवाक्यवदूर्ध्वादिवाक्ये ऽप्यश्रुतेररूपता तुल्येत्याशङ्क्याह * तथेति * आघारवाक्येष्वनुवादप्रयोजनमाह * तस्यापीति * ४८।१।१

## संज्ञोपबन्धात् ॥ १४ ॥

संज्ञोपबन्धश्चेति सूत्रव्याख्यानार्थं भाष्यं व्याचष्टे * अपि चेति* असौ संज्ञाप्रतिपाद्यो विशेषो ऽस्य जुहोत्याघारयति वाक्यस्य कर्मणः क इति रूपं विना न निर्धार्यतइत्यर्थः । नन्विति भाष्येणाघाराग्निहोत्रसंज्ञाया यौगिकत्वेनोद्भिदादिवत्संज्ञयैव कर्मविशेषो विज्ञायतइत्याशङ्क्य यदीत्यनेनोद्भित्संज्ञया पश्वनुत्पादककर्मव्यावृत्तेरातिदेशिकद्रव्यदेवतलाभाच्च पशूत्पादकचित्रादिव्यावृत्तेर्विशेष ज्ञानसम्भवे ऽप्यत्र व्यवस्थितप्रकृत्यलाभेनातिदेशायोगादूर्ध्वादिवाक्येषु च शुद्धगुणविध्ययोगेनोपदेशतो ऽपि द्रव्यदेवता ऽलाभात्संज्ञया नाघारयागाहवनरूपकर्मव्यावृत्तावप्याघारणहवनरूपकर्मान्तराव्यावृत्तेर्विशेषज्ञानासम्भवेनाघारणहवनसामान्ययोरेव संज्ञित्वापत्तेस्तयोश्च दध्यादिवाक्यविहितविशेषान्तर्गतत्वेन ज्ञातपूर्वत्वादनुवादतैव स्यादिति परिहृतं तद्व्याचष्टे * सामान्यमिति * आघाराग्निहोत्रसंज्ञयोर्यौगिकत्वे ऽप्याघारणहवनसामान्यं प्रतिपाद्यं स्यादिदं चान्यत एव ज्ञातत्वान्न क्रियान्तरवद्विधानार्हमिति वत्यर्थकल्पनया योज्यम् । अथेति भाष्येण विधिस्वभावादेव विधेयान्तरव्यावृत्तकर्मविशेषप्रतिपत्तेरायौगिक्यामपि संज्ञायां विशेषज्ञानं सेत्स्यतीत्याशङ्क्य तथापीत्यनेन विधिस्वभावाद्विधेयान्तरव्यावृत्तिप्रतीतावपि नक्योगशून्यायाः संज्ञाया व्यावृत्तिवाचित्वाभावात्तिष्ठतेरपि गतिनि-

वृत्तिवाचित्वे सत्युपवेशनादावपि प्रयोगापत्तेरुर्ध्वत्वोपलक्षणार्थत्वेन गतिनिवृत्त्यर्थत्वस्मृतेर्व्याख्येयत्वाच्छुद्धयोश्चाघारणहवनयोः सामान्यरूपत्वेनाविधेयतया विधानार्थं वाच्यत्वानर्हत्वाद्विधेयत्वेन च वाच्यत्वार्हस्य विशेषस्य रूपं विनानवगतत्वेनापूर्वविशेषविधिर्युज्यतेति परिहृतं तद्व्याचष्टे * तदज्ञेयतयेति * तस्य विधानार्हस्यापूर्वस्य क्रियान्तरस्यान्यत्र दध्यादिवाक्येषु विधिर्युज्यते न त्वाघाराग्निहोत्रवाक्ययोस्तत्र रूपाभावेनाज्ञेयत्वादित्यध्याहारेण योजना नाज्ञेति तु पाठः सुगम एव द्वितीयान्तसत्संज्ञोपबन्धादित्येवमन्यथा सूत्रव्याख्यानार्थमपि चेति भाष्यं व्याचष्टे * क्रियाश्चेति * कारकवाचित्वेन साधनशब्दव्याख्यानाया * कारकत्वेनेत्युक्तम् * उत्तरार्द्धेनानुवादेति भाष्यं व्याख्यातं श्लोकं व्याचष्टे * आघारमिति * समुदायस्य समुदायिभ्यो ऽत्यन्तभेदाभावे ऽपि साध्यत्वोपपत्तिर्दृष्टान्तेनोक्ता ननु सामान्यशब्दोक्ताया भावनातो विशेषशब्दोक्तस्य धात्वर्थस्य व्यापाररूपत्वेनाभेदवद्भाव्याभाव्यनिष्ठत्वेन भेदस्यापि भावाद्युक्तं कर्मत्वं समुदायस्य तु समुदायिभ्यः कथं चिदपि भेदाभावात्कथं कर्मतेत्याशङ्कते * ननु चेति * समुदायिभ्यः समुदायस्य भेदाभावे ऽपि समुदायिनामेव प्रत्येकरूपासामस्त्यरूपस्य भेदात्तस्यैव च समुदायशब्दवाच्यत्वादेकधर्मान्वयाख्यप्रचयद्वारा च प्रत्येकरूपैः साध्यत्वात्कर्मत्वोपपत्तिरिति क्रियाणामिति 'भाष्यसूचितं
४९.२।। परिहारमाह * नेति * समुदायस्यावयवभूतानां क्रियाणां प्रचयेन साध्यत्वान्नायुक्ता कर्मतेत्यर्थः एतदेव विवृणोति * समस्ताभ्यो हीति * नन्वाघाराग्निहोत्रशब्दयोः पौर्णमास्यमावास्याशब्दन्यायेन प्रत्येकरूपवाचित्वावधारणात्प्रत्येकरूपस्यैव कर्मत्वं वाच्यम् । तच्च विरुद्धमित्याशङ्कते * ननु चेति * अवाच्यस्यापि सामस्त्यरूपस्य लक्षणयावगतेः । कर्मत्वं भविष्यतीति परिहरति * नैष इति * ननु विधावप्योदनपाकं पचतीतिवद्भावनाधात्वर्थलक्षणसामान्यविशेषभेदेनापि क्रियाकर्मत्वोपपत्तेर्न कर्मत्वानिर्देशो ऽनुवादत्वहेतुरित्याशङ्क्याह * न चेति * जुहोत्याघारयतिसामानाधिकरण्यं विनाग्निहोत्राघारशब्दयोर्धात्वर्थवाचित्वानवगतेर्जुहोत्याघारयत्योश्च पाकमितिवद्भावनाख्यसामान्यशब्दादाख्यातप्रत्ययाद्भेदेनानुपादानाद्धात्वर्थस्य कर्मत्वं यद्भवतो ऽभिमतं तन्न सम्भवतीत्यर्थः । ननु तत्प्रख्याधिकरणे सामाधिकरण्यं च साध्यांशेनेह कर्मण इति वार्त्तिके जुहोत्याघारयत्यर्थयोः शब्दभेदानुपादाने ऽपि साध्यत्वस्योक्तत्वात् द्वितीया-

न्तसञ्ज्ञोपबन्धस्य पूर्वपक्षहेतुमात्रत्वप्रतीतेः किमाम्नातिनिर्बन्धेने-त्याशङ्क्याह * एतादिति * पौर्णमासीसिद्धान्तौपयिकत्वान्निर्बन्ध इत्याशयः। भाष्यकृता तु धात्वर्थस्य भाव्यनिष्ठत्वाभावेन करोत्यर्थक्रियात्वाभावादकारकत्वे च क्रियारूपया भावनयानन्वयापत्तेर्विधिसामर्थ्याच्च करणत्वावगमे ऽपि कर्तृव्यापारव्याप्यत्वं विना करणत्वायोगेनार्थाद्व्याप्यरूपकर्मत्वप्रतीतेर्विधिपक्षे ऽपि द्वितीयान्तसञ्ज्ञोपबन्धोपपत्तेरेतद्व्याख्यानादरेणाद्यैव व्याख्या य एवं विद्वान्पौर्णमासीसञ्ज्ञकं यागं यजतइत्यादिना पौर्णमासी सिद्धान्ते योजिता द्विविधमपि सूत्रार्थमुपसंहरति * तस्मादिति *

## अप्रकृतत्वाच्च ॥ १५ ॥

न च प्रकृतमपीति भाष्येणैतत्सूत्रमाघारे प्राकरणिकाङ्क्षाकयान्तरादपि रूपानवगतेररूपत्वोपपादनार्थतया व्याख्यातमित्याभाति तत्प्रख्याधिकरणे वाक्यान्तरतो द्रव्यदेवतालाभस्योक्तत्वादलाभे वोर्ध्वादिवाक्यैरप्याघार्यद्रव्यं विनाघारणविध्ययोगापत्तेरयुक्तं मत्वा स्वयमाघाराग्निहोत्रवाक्ययोररूपत्वे ऽपि वाक्यान्तरेभ्यो रूपावगतेर्विधेयत्वोपपत्तिशङ्कानिराकर्तुमेतत्सूत्रमिति वक्तुमाशङ्कां तावदाह * अथेति * तत्र वाक्यान्तरविहिते रूपे सति कर्मविधिः कर्मणि च विहिते सति तत्र रूपविधिरितीतरेतराश्रयं शब्दार्थस्य प्रयोगभूतत्वादिति सिद्धान्तसूत्रावयवेन परिहरिष्यमाणत्वाद्नुपन्यस्य दृष्टान्तवैषम्येण परिहारमाह * नेति * न चोर्ध्वादिवाक्येष्वाघारशब्दो ऽस्तीत्यपि वाक्यसम्बन्धद्रव्यविधावाघारशब्दादप्यनुवाद्यविशेषाप्रतीतेर्वक्ष्यमाणत्वान्नोक्तम्। अनेन च तण्डुलादिवाक्येन प्रकृताग्निहोत्रशब्दाभावादित्येवं सूत्रं योजितम्। ननु यथा व्रीहिभिर्यजेतेत्यादौ दर्शपूर्णमासशब्दाभावे ऽपि प्रकरणाद्यजेस्तद्विषयत्वावधारणं तथेह जुहोतेरग्निहोत्रविषयत्वावधारणं भविष्यतीत्याशङ्कते * ननु चेति * प्रकृतिशब्दाभावे व्युत्पाद्यावुत्पत्तिवाक्ये प्रकरणाभावादित्येवमेतच्छङ्कानिरासे ऽप्येतत्सूत्रमवतारणपूर्वं योजयति * अत इति * उत्पत्तिवाक्ये ऽपि सामान्यफलकरणत्वप्रतीतेरितिकर्तव्यताकाङ्क्षात्मकप्रकरणसद्भावे ऽप्यज्ञातरूपस्य विध्ययोगात्फलकरणत्वप्रतीत्यभावाभिप्रायेणैतदुक्तं प्रयोगवाक्यारूढस्यैव तर्हि जुहोत्यर्थस्य फलकरणत्वात्प्रकरणेन द्रव्यदेवतान्वयो ऽस्तीत्यज्ञाताशयः शङ्कते * तत्रेति * स्वाशयं प्रकटयन्परिहरति * तादिति * तण्डुलादिवाक्यविहितानां तु कर्मणां प्रज्ञातरूपत्वा-

४९.३।१ त्फलान्वये सति प्रकरणोपपत्तेः प्रकरणेन ग्रहणं युक्तमित्याह *अत इति * नन्वाघारशब्दस्य मन्त्रद्रव्यविध्योर्भावादाघाररूपं ज्ञास्यत-इत्याशङ्कते * नन्विति * विधौ सकलमन्त्रपाठे ऽपि लाघवार्थं वार्त्तिके प्रतीकमात्रग्रहणं धात्वर्थानधिकार्थत्वान्नाघारशब्दो धात्वर्थं विशेष्टुं शक्नोतीति परिहरति * नेति * एतदेवोपपादयति * तत्रेति * आघारे ऽप्याशङ्कोपन्यासपूर्वकं तन्निरासे ऽपि सूत्रं योजयति * नन्विति * एतदेव विवृणोति *दर्शेति * दर्शपूर्णमासप्रकरणपठितानामपि प्रयाजानामवान्तरप्रकरणस्यातिक्रमाधिकरणे व्युत्पादयिष्यमाणत्वादेतदप्यज्ञातरूपाघारविध्ययोगाशयं भाष्यमप्यस्मिन्नर्थे योज्यम्।कथं भावात्मकप्रकरणाभावे ऽप्यधिकारलक्षणसान्निध्यात्मकात्प्रकरणाद्विशेषावगतिरित्याशङ्कोपन्यासपूर्वं तन्निरासे ऽपि नास्ति प्रकृतमस्येति विग्रहस्थषष्ठ्युक्तस्य सम्बन्धस्य नञा वयं प्रकृतमेवेति च प्रकृतशब्दो ऽवधारणमभिप्रेत्यैतत्सूत्रं योजयति * सन्निधेरिति * स्रौवाघारस्याप्याघारयतिनानुवादोपपत्तेरित्याशयः । तण्डुलादेरपि वाक्यबलीयस्त्वेनाप्रकृतहोमान्वयसूचनार्थं बहुवचनम् । नन्वेवं सति पूर्वपक्षे ऽप्युदूर्ध्वत्वतण्डुलादेः स्रौवाघारजयाहोमादिभिरप्यन्वयः स्यादित्याशङ्क्याह * तदिति * ज्ञातरूपायां फलान्वयेन कथम्भावात्मकप्रकरणोपपत्तेस्तस्य चापूर्वसाधनत्वलक्षणार्थं वाक्येनापेक्षितत्वेनाविरोधाद्बाधः सिद्धान्ते त्वज्ञातरूपयोराघाराग्निहोत्रवाक्योत्पादितयोः कर्मणोः फले विधानाशक्तेः कथं भावात्मकप्रकरणायोगादधिकारात्मकस्य च प्रकरणस्य वाक्येनानपेक्षणाद्विरोध इत्याशयः । तत्राधिकारात्मकस्य प्रकरणस्य वाक्यविरोधे सत्येवं वक्ष्यमाणप्रकारेणाविरोध इति तत्र शब्दार्थे तच्छब्दो योज्यः । नन्वेवमपि द्रव्यविशिष्टकर्मवाक्ये देवताभावाद्देवताविशिष्टकर्मवाक्ये च द्रव्याभावादूर्ध्वादिवाक्ये वोभयाभावात्कर्मान्तरगुणस्य च कर्मान्तरे ऽनन्वयादेकेन च होमानिष्पत्तेर्द्रव्यं च विनोदूर्ध्वत्वादिमात्रेणाघारानिष्पत्तेर्न विधिर्निवहतीत्याशङ्क्याह * यत्र चेति * अन्येनापि रूपेण कर्मान्तराद्व्यावृत्तेः कर्मणि विहिते येन विना कर्मानिष्पत्तिस्तत्कर्मान्तरगतमन्यथानुपपत्त्या कल्प्यतइत्यर्थः । कश्चिदित्यनेनाद्रव्यं देवतस्याप्यूर्द्धत्वादेः कर्मरूपत्वे द्रव्यदेवतादविशेष उक्तः । एवं च यद्यूदूर्ध्वत्वादिवाक्येष्वपि न किंचित्रूपं स्याततो विशेषाग्रहणेनेतरयोरपि विधित्वं स्यान्न त्वेतदस्तीत्याह * सर्वेषु चेति * तस्मादिति पूर्वपक्षोपसंहारभाष्यम् * तस्मादिति *

चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गु-
णार्थेन पुनः श्रुतिः ॥ १६ ॥

दध्युर्द्ध्वादिवाक्यानां कर्मविधित्वानभ्युपगमाद्भाष्यस्थकर्मा-
न्तरोक्त्यनुपपत्तिमाशङ्क्याभ्युपेत्यवादेन स्रौवाघारचतुर्होतृहोमाद्य-
पेक्षया वा समाधत्ते * कर्मेति * कुत इत्यादिना रूपवन्तौ विधी- ४९४।१
येते इत्यन्तेन भाष्येण वाक्यान्तराविहितरूपापेक्षणे ऽन्योन्याश्र-
यापत्तेः स्ववाक्याज्ञातरूपकर्मविध्ययोगस्यारूपत्वादित्यनेनोक्तस्या-
प्रवृत्तप्रवर्त्तनात्मकविधिस्वभावादेव विध्यन्तराविषयभूतकर्मान्तर-
व्यावृत्तविधानार्हकर्मप्रतीतेर्वाक्यान्तरावगतरूपवत्तया चानुष्ठाना-
र्हत्वाद्विधिनिर्वाहोपपत्तेः। स्ववाक्याज्ञातरूपस्यापि कर्मणो वि-
धिसम्भवाद्विधिनिर्वाहार्थं वाक्यान्तरविहितरूपापेक्षणे ऽपि विधि-
प्रवृत्तावनपेक्षणान्नेतराश्रयमित्येवं परिहारार्थतया विधिशब्दार्थस्य
प्रयोगे ऽनुष्ठाने भूतत्वाद्वर्त्तमानत्वाद्क्रियमाणत्वादनुष्ठापकरू-
पत्वादन्यतः प्राप्ते चानुष्ठाने ऽनुष्ठापनानर्थक्याद्रूपं विना-
पि कर्मान्तरं विधेयं प्रतीयते तच्च वाक्यान्तरतो रूपावगत्या
निर्वहतीत्येवं सूत्रावयवो व्याख्यातः तदन्तर्गतेन चाघा-
रेत्यनेनाविज्ञातार्थावित्यन्तेन हवनाघारणयोर्विधिविषयसमानयो-
स्तदेकीभूतयोः विधिविषयभूतयोरेव संज्ञाविषयत्वात्संज्ञोपबन्धो-
पपादनार्थतया ऽघाराग्निहोत्रशब्दार्थस्य प्रयोज्यात्मभूतत्वादित्येवं
व्याख्यातस्तत्र द्वितीयव्याख्यानार्थं भाष्यं जुहोत्याघारयति * लक्ष-
तेति * वार्त्तिकेन व्याख्यास्यमानत्वादुपेक्ष्य शेषं सङ्क्षेपतो व्याच-
ष्टे * आघारयतीति * यदुक्तमिति भाष्येण पूर्वेभ्यो होमाघारेभ्य
इति पूर्वपक्षभाष्यावयवसूचितमर्थमनुभाष्य नैतदित्यादिना वा-
क्यार्थो यस्तं विधातुमित्यन्तेन तन्निरासार्थतया तत्सान्निधेर्गुणार्थेन
पुनःश्रुतिरिति सूत्रावयवो व्याख्यातस्तत्र तस्मान्नानुवादाविति भाष्यं
तावत्तात्पर्यतो व्याचष्टे * न चेति * नन्विति भाष्येणोपपदश्रव-
णाद्दध्यादिवाक्यानां शुद्धहोमाघारविध्यशक्तावपि होमाघारसम्ब-
न्धितया दध्यूर्ध्वादिविध्यभ्युपगमात्सम्बन्धस्य च सम्बन्धिद्वयनि-
ष्ठत्वात्प्रतिसम्बन्धिभ्यां होमाघाराभ्यां विनानुपपत्तेरर्थापत्त्या तयो-
रपि प्राप्तिराघाराग्निहोत्रवाक्ययोरनुवादत्वं भविष्यतीत्याशङ्क्य नै-
तदेवमित्यनेन ब्रूम इत्यनेन निरस्तं तत्तात्पर्यतस्तावद्व्याचष्टे * न
चेदिति * भाष्यस्थस्य सम्बन्धशब्दस्य विशिष्टवाचित्वं शङ्कायाश्च

विशिष्टविधानाशयत्वं तन्निरासार्थत्वं चोत्तरस्यानेनोक्तम् अत्रैवावतारणापूर्वमस्मि हीति भाष्यावयवमध्याहारेण द्वेधा योजयति * तदिति * अस्मिन्नाघाराग्निहोत्रवाक्यस्थे प्रत्यक्षे कर्मविधाने सति न सम्बन्धो ऽर्थादापादक इत्याद्या योजना अस्मिन्सम्बन्धे विध्यर्थाक्षेप्ये होमाघाराख्यसम्बन्धिविधौ प्रत्यक्षे सति सम्बन्धाख्यगुणविधानेन सम्बन्धमात्रं विधीयतइति द्वितीयासम्बन्धशब्देनास्मिन् पक्षे सम्बन्ध एवोक्त इति गुणशब्देनोक्तं तस्मादित्याशङ्कानिरासोपसंहारभाष्यं व्याचष्टे * तस्मादिति * नन्वाघारयतीति भाष्येण श्रुत्या धात्वर्थावच्छिन्नभावनाविधिप्रतीतेर्न वाक्यविसम्बन्धविधिर्युक्त इत्याशङ्क्य सत्यमित्यनेन सम्बन्धस्य पदान्तरान्वयलभ्यत्वेनाश्रौतत्वे ऽपि तच्छब्दपरामृष्टस्य धात्वर्थावच्छिन्नभावनाख्यस्य कर्मणः सन्निहिताघाराग्निहोत्रविधिप्राप्तत्वेनोदूर्ध्वादिवाक्यैरविधेयत्वाद्वाक्यीयगुणविध्यर्थं कर्मश्रवणं न कर्मविध्यर्थमिति तन्निरासार्थत्वेन सूत्रावयवो व्याख्यातस्तद्द्वयमेतच्छङ्कापरिहाराशयप्रपञ्चार्थैरुत्तरभाष्यैरेव व्याख्यास्यमानत्वान्न व्याख्यातम्।ननु पदान्तरेत्याशङ्काशयविवरणार्थं भाष्यं व्याचष्टे * भावनेति * सत्यमेवमिति परिहाराशयविवरणार्थं भाष्यं व्याचष्टे * सत्यमिति * भावनामध्यशब्देन तं व्यापारशब्दोक्तभावनाविशेषणभूतं स्वपदार्थं धात्वर्थं गुणशब्दो विशेष्यतीति गुणस्य भावनाद्वारधात्वर्थविशेषणत्वाभिधानेन भावनाविशेषणतैवोक्तेति सूचितम्।ननु गुणविधावपि भावनातो विध्यनुत्तारणे कर्मानुवादेन गुणविध्युद्घोषो विरुध्येतेत्याशङ्क्याह * तेनेति * येन कारणेनोदूर्ध्वादिवाक्येष्वपि स्वपदार्थं धात्वर्थगतव्यापारं भावनां वक्ष्यतीत्युक्तं तेन कारणेन सर्वत्रैवैतद्वक्ष्यमाणमुपादिष्टं भवतीत्यर्थः । शास्त्राभिव्यक्तिरितीतिकरणाध्याहारेणोत्तरग्रन्थान्वयः विशिष्टविधेः सार्वत्रिकत्वे ऽपि तात्पर्याभिप्रायः । कर्मानुवादेन गुणविध्युद्घोष इत्याशयः। नन्वेवमपि व्याख्यातृणामष्टप्रकारश्रुत्युद्घोषो विरुध्येतेत्याशङ्क्य भ्रान्तिमूलत्वं तदुद्घोषस्याह *तत्रेति* आत्मना यथा भ्रान्तिरुत्पन्ना तथान्येषामप्युत्पादयितुमित्युपहासः किलेति भ्रान्तित्वं सूचितम्। भ्रान्तित्वोपपादनायाष्टावपि प्रकारान्परदौर्बल्यनियमं च दूषयन् शुद्धधात्वर्थविधिरूपं प्रथमं प्रकारं तावत्सोदाहरणानु-
४९५।१ भाषणपूर्वं दूषयति * तत्र तावदिति * कस्मादयुक्तमित्यपेक्षायामेकाभिधानश्रुत्या भावनान्वयस्य प्रागवगमादिति हेतुमाह * न हीति * भावनानिरपेक्षस्य धात्वर्थस्य पुम्प्रवृत्त्यविषयत्वादप्यविधेय-

तेत्याह * न चेति * एतदेवोपपादयति * सा हीति * देहाश्रितस्यापि विष्णुक्रमादेरात्माश्रितस्यापि च यागादेः प्रयत्नरूपभावनां विना प्रवृत्त्यविषयतापिशब्देन सूचिता किं च भावनावद्धात्वर्थस्यानुष्ठेयनिष्पाद्यापरपर्यायसाध्यत्वेन विधानस्य अन्यदेव हि यागादौ सामान्यं करणात्मकम्। अन्यच्च भावनानाम साध्यत्वेन व्यवस्थितमिति वार्त्तिके निरस्तत्वाद्ध्यादितत्करणत्वेनैव विधानावगतेः करणत्वस्य च क्रियारूपभावनान्वयनिबन्धनत्वान्न तां विनां विधेयत्वोपपत्तिरित्याशयेनाह * इदं चेति * ननूत्पत्तिवाक्ये साध्यत्वेनापि हि विहितस्य किमर्थमपुरुषार्थरूपो धात्वर्थः साध्य इत्यपेक्षायां फलवाक्ये करणत्वेन विधानात्फलवत्त्वोपपत्तेर्नोत्पत्तिवाक्ये करणत्वेन विधिरित्याशङ्क्याह * न हीति * धात्वर्थस्य साध्यत्वेन विधौ पुरुषस्य किमर्थमित्यपेक्षायामपि विधेयस्य करणत्वानवगतेः साध्यानपेक्षत्वात्पदार्थापेक्षां च विना पदार्थान्तरान्वयायोगात्फलवाक्ये ऽपि करणत्वेन विधिर्न सम्भवतीत्युक्ते ननु भावनावत्करणत्वाभावे ऽपि साध्यापेक्षा भविष्यतीत्याशङ्क्य*असावित्युक्तम्। भावनायाः करोत्यर्थरूपत्वेन नित्यं कर्मापरपर्यायसाध्यापेक्षत्वे ऽपि धात्वर्थस्य करोत्यर्थत्वान्न करणत्वं विना साध्यापेक्षत्याशयः। विशिष्टधात्वर्थविधिरूपं द्वितीयं प्रकारं दूषयति * सोमेनेति * तद्भूतानां क्रियार्थेन समाम्नाय इत्यनेन न्यायेन धात्वर्थस्य कारकाणां च परस्परान्वयमपेक्ष्य भावनयान्वितानां पश्चाद्धात्वर्थस्यानिष्पन्नस्य करणत्वायोगात्कारकैश्च विना तदनिष्पत्तेः कारकापेक्षायां कारकाणां च सिद्धरूपत्वेन व्यापाररूपधात्वर्थनिष्पादनं विना साक्षाद्भावनान्वयायोगाद्धात्वर्थापेक्षायामरुणैकहायनीन्यायेनान्योन्यनियमान्न भावनाविधिनिरपेक्षो गुणविशिष्टधात्वर्थविधिर्युक्त इत्याशयः। सप्तमनवमाद्ययोश्च यजेतेत्यर्थमितीति कर्त्तव्यतायां धात्वर्थान्वयनिरासेनेत्थं कुर्यादिति भावनान्वयस्य भाष्यकृता वक्ष्यमाणत्वाद् गुणानां धात्वर्थविशेषणत्वानुपपत्तेर्न तद्विशिष्टधात्वर्थविधिरित्याह * तथा चेति * गुणान्वये च धात्वर्थस्य वैरूप्यं स्यादित्याह * भावनां चेति * धात्वर्थस्यान्यत्र विधिरूपं तृतीयं प्रकारं दूषयति * तथेति * भावनायां तु धात्वर्थस्य कारकाणां वा विधेः सर्वत्राविशेषात्तदभिप्रायान्यशब्दव्याख्यान युक्तेत्याह * यदि त्विति * अन्योद्देशेन च शुद्धधात्वर्थविधानस्य तन्निरपेक्षशुद्धधात्वर्थविधानात्पदान्तरापेक्षानिमित्तविप्रकर्षेण दौर्बल्ये ऽपि अन्योद्देशनिरपेक्षविशिष्टधात्वर्थविधाने ऽपि

विप्रकर्षसाम्यात्ततो दौर्बल्यानुपपत्तेः प्रस्तुताश्रुतविशेषणाविधिकल्पनाभावेन ततो बलीयस्त्वाद् द्वितीयस्थाननिवेशापत्तेस्तृतीयस्थाननिवेशो न युक्त इत्याह * न चेति * अन्योद्देशेन विशिष्टधात्वर्थविधिरूपं चतुर्थं प्रकारं द्वितीयतृतीयपक्षोक्तदोषापादनेन दूषयति * पक्षेति * धात्वर्थे ऽन्यविधिरूपं पञ्चमप्रकारं दूषयति * दध्नेति * तृतीयानिर्दिष्टस्यापि दध्नो विधेयत्वेनानुष्ठानविषयत्वाद्विधेर्दध्यनुष्ठेयमित्यभिप्रेत्यानुष्ठानार्थकरोतिप्रयोगोपपत्तेस्तत्र जयान् जुहुयादितिवच्च प्राधान्यविवक्षयापि सप्तमीप्रयोगोपपत्तेर्होमाधिकरणाद्दध्यधिकर्त्तव्यत्वस्य परानभिप्रेतत्वे ऽपि दधिहोमे करोतीति परोक्ताया वचनव्यक्तेरञ्जसैषो ऽर्थः प्रतिभातीत्यारोप्याच्छलेनेदं दूषणद्वयमुक्तं सप्तम्यश्रुतेर्न शब्दाद्धोमस्याधिकरणत्वं स्थालीवच्च पतनप्रतिबन्धकत्वाभावान्नार्थरूपेण दध्नश्च तृतीयाश्रुतेर्भूतभव्यसमुच्चारणन्यायेन करणत्वावगमात्कर्मत्वरूपा कर्त्तव्यता न युक्तेत्यर्थः । यथा चान्यत्र शुद्धधात्वर्थविधिश्रुतिर्विशिष्टविधानाद् बलीयसी तथा धात्व-
४९६।२ र्थे ऽन्यविधिश्रुतिरपीति पञ्चमस्थाननिवेशो ऽस्या न युक्त इत्याह * इयमपि चेति * अन्यत्र शुद्धधात्वर्थविधेरपि द्विविधविशिष्टविध्यपेक्षया बलीयस्त्वसूचनार्थश्चकारः हेतुमाह * पदेति * नन्वियं पदान्तरार्थविधिविषयत्वेन विप्रकृष्टार्थत्वात् दुर्बलेत्याशङ्क्याह * उभयेति * विशिष्टविधावपि विशेषणभूतपदार्थान्तरविधिरित्याशयः । दध्ना जुहोतीत्यत्र च सन्निकृष्टार्थविध्यसम्भवकृतत्वाद्विप्रकृष्टार्थग्रहणं न दोषायेत्याह * सन्निकृष्टेति * प्रकृतश्रुतिविधेयदधिपरामर्शार्थो ऽस्य शब्दः तत्र तु विशिष्टविधावुभयोर्विशेषणाविशेष्ययोर्विध्याश्रयणात्सन्निकृष्टविध्यर्थे तत्सम्भवो विप्रकृष्टविध्यर्थे चासम्भवो ऽभ्युपगन्तव्य इति युगपद्विरुद्धसम्भवासम्भवापत्तिरित्याह * तत्रेति * सन्निकृष्टासम्भवकृतत्वाद्विप्रकृष्टग्रहणस्योभयाश्रयणे सम्भवासम्भवविरोधापत्तिरित्येकग्रन्थतया वा विशिष्टविधिदौर्बल्याभिधानार्थतयैतद्योज्यम्।नन्वेवं सति न क्वचिद्विशिष्टविधिराश्रीयेतेत्याशङ्क्याह * अगत्यैवेति * विशिष्टविधिरित्यध्याहारः।यद्यपि च श्रौतेन विधिना सन्निकृष्टविधानात्कालैक्येन च विप्रकृष्टार्थविधानात्कालभेदेन विप्रतिषेधपरिहारोपपत्तेरन्योद्देशानिरपेक्षविशिष्टविधेरियं विप्रकृष्टार्थविषयत्वात् गुर्वी तथाप्यन्यत्र विशिष्टविधानात्पदान्तरापेक्षानिमित्तविप्रकर्षस्योभयत्र सद्भावेनाविशेषाद् गुर्वी न भवत्येवेत्याह * अन्यत्रेति * तदेव त्वतिगुर्वीति सूचनार्थो ऽतिशब्दः प्रकृतमुपसंहरतीति क तर्हि निवेशयितव्येत्यपेक्षा-

र्थामाह * काममिति * श्रुतिलिङ्गादिवदासां पूर्वपूर्वानपेक्षत्वान्न क्रमोपन्यासेन प्रयोजनं यदि त्ववश्यं क्रमेणोपन्यस्तव्या स्तता वरमेवं क्रम इति * काममित्यनेनोक्तम * धात्वर्थे ऽन्यसम्बन्धाविधिरूपं षष्ठं प्रकारं दूषयति* यत्त्विति*किं यद्ददातीति दानमात्रमनूद्य तत्र प्राकाशावध्वर्यवे इत्यानन्तर्यावगतः प्रदीपाध्वर्युसम्बन्धो विधीयते उताध्वर्यवे यद्ददातीति क्रियाकारकान्वये क्रियाप्राधान्यविवक्षया-ध्वर्युविशिष्टं दानमनूद्य तस्य प्रदीपसम्बन्धे विधीयमाने ऽपीमाश्चा-दिष्टदक्षिणा इति स्मृतेः।प्राकाशशब्दवाच्ययोः प्रदीपयोर्दानसम्बन्ध-स्य प्रदानत्वादानर्थक्यतदङ्गन्यायेन विशेषणे ऽवताराद्विशेषणभूत-स्याध्वर्योः प्रदीपसम्बन्धविधिर्विधेयसम्बन्धित्वेन वाध्वर्योरेव प्रा-धान्यविवक्षायां दानविशिष्टमध्वर्युमनूद्य तस्य प्रदीपसम्बन्धविधिर्द-दात्यविवक्षया वा शुद्धाध्वर्य्वनुवादेन प्रदीपसम्बन्धाविधिरिति वच-नव्यक्तीनां मध्ये कया धात्वर्थे ऽन्यसम्बन्धाविधिरित्यशक्यं विवेक्तुमि-त्यर्थः। एतदेवोत्तरेण प्रपञ्चेन विवृणोति * सर्वत्र हीति * सम-स्ताया ज्योतिष्टोमिक्या दक्षिणाया अश्वमेधेति देशप्राप्तायाः प्राकाश-दशमाधिकरणे ऽध्वर्युभागमात्रविकारत्वाभिधानेन निवेश्यमानः प्र-सज्येतेत्यर्थः।द्विष्ठत्वाच्च सम्बन्धस्याध्वर्य्वाख्यसम्बन्धिप्राप्तावपि प्रा-काशाख्यसम्बन्ध्यप्राप्तौ विधातुमशक्यत्वात्प्राकाशयोरपि विध्या-पत्तेर्वाक्यभेदः स्यादित्याह * प्रत्ययस्य चेति * ननु सम्बन्धवि-धिनैवार्थाक्षेपान्न वाक्यभेदापत्तिरित्याशङ्क्याह * सम्बन्धो हीति* एवमप्यर्थाक्षेपगौरवं तावदेको दोषः धात्वर्थाङ्गत्वेन चार्थाक्षेपल-भ्यस्यापि सम्बन्धिनो विधेयत्वात्प्रत्ययावृत्तिस्तदवस्थेत्याशयः। ननु सम्बन्धिविशिष्टस्यैव सम्बन्धस्य धात्वर्थाङ्गत्वात् विशेषणस्य चाङ्गत्वं विना विशिष्टस्याङ्गत्वासिद्धेः सम्बन्धिनो ऽपि धात्वर्थाङ्ग-तार्थादेव लप्स्यते अतः सम्बन्धिनो धात्वर्थानङ्गत्वं वदता सम्बन्धस्यापि वाच्यं न च तद्वक्तुं शक्यम्। धात्वर्थानुरक्तेन प्रत्य-येन सम्बन्धस्य विधानाद्धात्वर्थाङ्गत्वावगतेरित्याशङ्क्ते * तत्रेति* धात्वर्थानुरक्तेन प्रत्ययेन विधानाद्धात्वर्थाङ्गत्वे च दध्ना जुहोतीत्य-स्याः सम्बन्धविधित्वाभावाद्भेदोपादानार्थवत्त्वे ऽपि वायव्येन्द्रिय-श्रुत्योः प्राकाशश्रुतिवत्सम्बन्धविधित्वाभ्युपगमाद्भेदोपादानानर्थक्यं दोषमाह * एवं तर्हीति * ननु वायव्यश्रुताविव धात्वर्थस्य प्रकृति-द्योतनार्थे विधायकप्रत्ययानुरञ्जकत्वं युक्तमिन्द्रियश्रुतौ त्वविवक्षि-तत्वान्न प्रत्ययानुरञ्जकतेत्याशङ्क्याह * न हीति * प्रकृतिप्रत्यययोः पौर्वापर्यनियमाच्छुद्धप्रत्ययार्थानुपलब्धेर्धात्वर्थस्यानुरञ्जकता सर्वत्रा-

विशिष्टेत्याशयः । वायव्यश्रुत्युपन्यासो दृष्टान्तार्थः । नन्विन्द्रिय-
श्रुतौ बलादापतितस्याप्यनुरञ्जकत्वस्यानुपकारित्वेन त्यागान्नानुरञ्ज-
कतेत्याशङ्क्य वायव्यवाक्ये ऽपि तर्हि धात्वर्थानपेक्षाद्धातुमा-
त्रादालभतिचोदिताग्नीषोमीयपशुयागप्रकृतिद्योतनासङ्केद्दात्यर्थस्य
चाध्वर्युप्राकाशसम्बन्धापादकत्ववदालभत्यर्थस्य द्रव्यदेवतासम्ब-
न्धानापादकत्वेन विधायकप्रत्ययोपकारित्वाभावान्नानुरञ्जकत्वं स्या-
दित्याह * प्रकृतीति * लिङ्गशब्दो भावव्युत्पत्त्या द्योतनाख्यलिङ्गन-
वाची उपकारिणो ऽपि धातोरनुरञ्जकत्वानपेक्षणाद्धात्वर्थस्यानुर-
ञ्जकता दूरोत्सारितेति सूचनायात्मशब्दः । ननु क्रियागर्भत्वात्स-
म्बन्धस्य धात्वर्थं विना द्रव्यदेवतसम्बन्धानिष्पत्तेर्धात्वर्था-
न्तरवाचिशब्दाश्रवणाच्च विधेयसम्बन्धापादनेनात्मना विधायक-
स्योपकरिष्यतीत्याशङ्क्याह * न चेति * यदि च श्वेतवा-
य्वोः सम्बन्धः कार्यः सचालम्भाति द्वारेति विधीयेत न ततो वाक्य-
भेदः स्याद्विधेयापादकाविधावपि त्ववाक्यभेदे गुणफलसम्बन्धापा-
दकाश्रयाश्रयिसम्बन्धाविधावप्यवाक्यभेदापत्तेरिन्द्रियवाक्ये ऽपि
धात्वर्थत्यागोक्तिरयुक्ता स्यादित्याह * यदि चेति * विनापि त्वा-
श्रयाश्रयिसम्बन्धे गुणफलसम्बन्धोपपत्तौ प्रकरणलभ्याश्रयिसम्ब-
४९.७।१ न्धाभ्युपगमो विरुध्येतेत्याह * किमिति चेति * सप्तमाष्टमश्रुतिप्र-
कारावप्यनेन प्रसङ्गाद् दूषितौ भवतः अतो न धात्वर्थानुरक्तेन प्रत्यये-
नान्यसम्बन्धस्य विधानाद्धात्वर्थाङ्गत्वसिद्धिरित्युत्तरश्रुतिप्रकारद्व-
यदूषणस्य प्रस्तुताशङ्कानिरासार्थत्वं दर्शयितुमाह * तस्मादिति *
पञ्चमश्रुतिप्रकारवत्तु धात्वर्थाङ्गत्वसिद्ध्यर्थं दाने प्रकाशाध्वर्युसम्ब-
न्धं करोतीतिवचनव्यक्त्यभ्युपगमे पूर्ववद्धात्वर्थाधिकरणत्वसम्ब-
न्धकर्त्तव्यत्वे आपाद्य निराकार्ये इत्याह * पूर्ववच्चेति * ननु धा-
त्वर्थाङ्गतयेह सम्बन्धस्य विधिरिष्टो न तु धात्वर्थस्याधिकरण-
तासम्बन्धस्य वा कर्मतेत्याशङ्क्याह * न चेति * दध्नो
ऽपि भावनान्वयात्प्राक् धात्वर्थे विधिर्न सम्भवतीत्यपिश-
ब्दार्थः कस्मादित्यपेक्षायामाह * इतीति * यथा भावनान्वया-
त्प्राक्कस्य चिद्धात्वर्थान्वयो न सम्भवति तथा तद्भूताधिकरणो-
क्तेन मार्गेणेत्यादिवार्त्तिकेनोक्तमित्यर्थः । यद्ददाति तत्राध्वर्यु-
प्राकाशयोः सम्बन्ध इति वचनव्यक्तिनिरासमुपसंहरति * एवं
तावदिति * आध्वर्यवे यद्ददाति तस्य प्राकाशसम्बन्ध इत्यस्या-
मपि वचनव्यक्तौ दानस्याध्वर्युविशिष्टत्वे ऽध्वर्योर्वा दानविशिष्टत्वे
वाक्यभेदः स्यादित्याह * अथेति * यो ऽध्वर्युस्तस्मै प्राकाशा-

वित्यस्यां तु वचनव्यक्तौ क्रियागर्भत्वात्सम्बन्धस्य ददातिं विना सम्प्रदानसम्प्रदेयसम्बन्धायोगात्कल्पिते ददातौ सम्बन्धः सम्बन्धाच्च ददातिकल्पनेतीतरेतराश्रयापत्तेर्न धात्वर्थे ऽन्ययोः सम्बन्ध इति वचनस्य श्रुतेर्व्यक्तिः प्रकारः सम्भवतीत्याह * शुद्धेति * ननु सम्प्रदानश्रुत्याक्षिप्ताद्धात्वर्थादेवाध्वर्युप्रकाशयोः सम्बन्धसिद्धेर्धातुकल्पनाभावान्नेतरेतराश्रयापत्तिरित्याशङ्क्य * यद्यपीत्युक्तम् * धात्वर्थस्याशाब्दत्वे ऽन्वयायोगादन्वयसिद्धये ऽवश्यङ्कल्प्यो धातुरित्याशयः। यथा च सोमेन यजेतेति श्रुतियजिसद्भावान्नेन्द्रवायवादिवाक्येष्वन्ययजिकल्पना युक्ता तथेहापि श्रुतददात्यविवक्षयान्यददातिकल्पनायोगान्न शुद्धाध्वर्य्वनुवादोपपत्तिरिति सूचनार्थो दृष्टान्तः दानाध्वर्य्वनुवादेन च तत्सम्बन्धितया प्राकाशविधानेनार्थात्सम्बन्धविधिसिद्धावपि तात्पर्याभावाच्छ्रुतिप्रकारत्वानुपपत्तिरित्याह * अवश्यं चेति * अन्यतराप्राप्तौ सम्बन्धस्याश्रौतत्वे भाष्यकृत्संमतिमाह * वक्ष्यति चेति * यत्र च सम्बन्धो विधीयते तत्रान्यतरस्यान्यत्र विधानं सम्बन्धो नान्तरीयको यद्वा सम्बन्धस्य विधानानान्तरीयकौ सम्बन्धिनाविति तृतीयाधिकरणभाष्ये सम्बन्धविधिर्द्वैविध्यमुक्त्वा यत्रोभौ लक्षणत्वेन तत्र स्वशब्देन सम्बन्धो विधीयते यत्र त्वन्यतरो लक्षणत्वेन तत्रैकं लक्षयित्वान्यतरो विधीयत इति विषयोदाहरणभाष्ये प्राग्वक्ष्यमाणमपि प्रकृत्य परिधीन् हारीयोजनं जुहोतीत्यादावुभयप्राप्तौ सम्बन्धस्य श्रौतत्वं जाघन्या पत्नीः संयाजयन्तीत्यनभिमतत्वाद्व्यतिरेकप्रदर्शनमाम्नायेति सूचनार्थम् * पश्चादुक्तम् * विधेयान्तराभावेनार्थाक्षेपायोगात् श्रौतत्वसिद्ध्यर्थः केवलशब्दः उभयाप्राप्तौ सम्बन्धिनोः सम्बन्धविधिनान्तरीयकत्वायोगादनुदाहरिष्यमाणाप्युभयाप्राप्तिर्वायव्यं श्वेतमित्यादौ विशिष्टविधिरूपसम्बन्धविधिनान्तरीयकत्वविषयतयानुभयप्राप्तौ वेत्यनेनोदाहृता आख्यातेन च पदार्थान्तरान्वयविधौ बुद्धिविक्षेपस्य श्रुतित्रये ऽपि साम्यान्न बलाबले विशेष इत्याह * तिसृणामिति * ननु सन्निकर्षविप्रकर्षाविशेषे ऽपि धात्वर्थे ऽन्यान्वयविधौ धात्वर्थस्याविषयत्वे ऽपि विधेयविषयतया ग्रहणेनानुग्रहाद्धात्वर्थानुरक्ते ननुप्रत्ययेनान्यान्वयविधौ धात्वर्थस्याविधेयत्वे ऽपि विधेयविषयतयाप्यग्रहणात्ततो दौर्बल्यं प्रत्ययारनुरञ्जकत्वेन तु ग्रहणेनात्यन्तत्यागाभावाद्धात्वर्थत्यागेनान्यान्वयविधितो बलीयस्त्वमित्याशङ्क्याह * नापीति * विधेयविषयत्वप्रत्ययानुरञ्जकत्वत्यागानामेकैधात्वर्थविषयत्वाभावेनाविरोधान्न बलाबलज्ञानो-

पयोग इत्याशयः। अतः परदौर्बल्याभावक्रमेणोपन्यासः सप्तमाष्टम-श्रुत्योश्च षष्ठश्रुत्यन्तर्भावादष्टत्वगणनोपन्यासो ऽनर्थक इत्याह * इतीति * प्रकरणार्थमुपसंहरति * तस्मादिति* पुनःश्रुतिरिति सूत्रावयवेन विहिताया अपि भावनायाः पुनर्विधानाभिधानात्स्वपदार्थगतं वक्ष्यतीति च भाष्यावयवेन स्वपदार्थधात्वर्थगतं भावनाख्यं व्यापारं विधिश्रुतिर्विधास्यतीत्यभिधानात्सर्वत्र विशिष्टभावनाविधिप्रतीतिरधिकरणगतसूत्रभाष्यावयवविवक्षया लाक्षणिको ऽधिकरणशब्दः प्रस्तुतदध्यूर्ध्वादिवाक्यरूपविषयवाची वा। ननु सर्वत्र भावनाविधौ न क्व चिद्विप्रकृष्टार्थविध्यभिधानं युज्येतेत्याशङ्क्याह * यच्चेति * सन्निकृष्टं धात्वर्थस्य भावनाविशेषणत्वं विप्रकृष्टं गुणस्येत्याशयः। स एव इति भाष्यं स्वस्वपदार्थभूतो धात्वर्थ एव भावनाख्यव्यापारविशेषणीभूतः सन् गुणविशिष्टो विधिश्रुत्या प्रत्येष्यते विधास्यत इत्येवं व्याख्यातुमाशङ्कते * कथं पुनरिति * शङ्कानिरा-
५९८। साथत्वेन भाष्यं व्याचष्टे * विशिष्टेति * ततश्च गुणविधिव्यपदेशो ऽपि फलाभिप्रायेणोपपत्स्यत इत्याह*फलतश्चेति * ननु प्राप्तत्वे ऽपि कर्मणां विशिष्टविधौ सत्यनेकार्थविधिनिमित्तप्रत्ययावृत्त्यभिधानं विरुध्येतेत्याशङ्कते * नन्विति * श्रुतिवृत्त्या विधेः सर्वत्र भावनाविषयत्वे ऽपि प्राप्तायां तस्यामप्राप्तप्रापणविषयस्वभावत्वाद्विधेस्तात्पर्यवृत्त्या विशेषणत्वात्सकृदुच्चरितस्य चानेकतात्पर्यायोगादपरिहार्या वृत्तिरिति परिहरति* नैष इति * कृदन्तविधिशब्दोत्पन्नेन भावप्रत्ययेन सम्बन्धाभिधानात्तद्विधेर्भावनया सह विषयविषयिलक्षणस्य सम्बन्धस्य श्रुतिवृत्त्या सार्वत्रिकत्वे ऽपि तादर्थ्यस्य तात्पर्यापरपर्यायस्य तत्प्रयोजनत्वस्य तत्फलत्वस्याप्राप्तविषयतयाविभक्तत्वाद्व्यवस्थितत्वाद्विशेषणफले विधित्वे ऽनेकविशेषणपरं सत्यपरिहार्यो वाक्यभेद इत्यर्थः। श्लोकं व्याचष्टे * यदा हीति * अर्थाद्विशेषणविधानवाक्यभेदस्यैक्ये उक्तयवसितानां तु नार्थाक्षेपो विरुध्यते इति पौर्णमास्यधिकरणवार्त्तिकोक्तत्वे ऽपि भाष्यकृता निर्वृत्तवारवन्तीयको यागो विधीयते ननु वारवन्तीयनिर्वृत्तिरर्थात्तु रेवतीषु वारवन्तीयमभिनिर्वर्त्स्यतीत्यनेन वारवन्तीयाधिकरणे वक्ष्यमाणत्वाद्वक्ष्याम इत्युक्तम् * प्रपूर्वस्य वसेः स्वस्थानात्प्रस्थितस्यान्यत्र वासे प्रयोगाद्भावनातः प्रस्थायापरत्रार्पितत्वादित्यर्थः। स्पर्शादेरज्ञानमित्यध्याहारः । ननु योग्यतालक्षणसम्बन्धेन चक्षुषो ग्राहकत्वाच्चक्षुर्ग्राह्यरूपसमानदेशस्यापि स्पर्शादेर्योग्यत्वेनाग्रहणं युक्तं विधेस्तु विशेषणे ऽप्यवतारस्य भावनान्वयमात्रापेक्षत्वाद्भावनाया-

तेर्वाक्यभेदपरिहारो भविष्यतीत्याशयः । भवेदित्याशङ्काभाष्यं तं तु स्वपदार्थमित्यनेन गुणस्य भावनाविशेषणीभूतधात्वर्थविशेषणत्वोक्त्या भावनाविशेषणत्वस्योक्तत्वादयुक्तमाशङ्क्य यद्यपि तस्य भावनाख्यव्यापारस्य सम्बन्धिनं धात्वर्थाख्यं पदार्थं गुणशब्दो विशिंषन् व्यापारं विशिंष्यात्तथापि विनानेन प्रकारेण गुणावच्छिन्नरूपेण व्यापारो विधेयः प्रतीयेतेत्येवं विधेयत्वनिरासार्थत्वेन व्याचष्टे *भवेदिति* गुणस्यःसाक्षाद्विधेयत्वयोग्यतायां गुणविधानार्थं तदवच्छिन्नरूपविधेयत्वं स्यात्तस्य त्वयोग्यत्वाद् गुणविशिष्टायां भावनायामेव विधेस्तात्पर्यावसायान्न गुणविधानार्थत्वोपपत्तिरिति साक्षाच्छब्देन सूचितं भावनापरे ऽपि विधावर्थाक्षेपाद्धि विशेषणभूतगुणानुष्ठानसिद्धेर्नेयमाशङ्का युक्तेत्याशङ्काक्षेपार्थं तत्रेति भाष्यमनुष्ठानस्य विध्यधीनत्वाद्विधिं विनानुपपत्तेरयुक्तमाशङ्क्य वाक्यावगतविधेयभावनाविशेषणत्वानुपपत्तिकल्पितगुणविध्याशयत्वेन व्याचष्टे * तत्रेति * अथाप्रियमाणे ऽपीति भाष्यं व्यधिकरणे सप्तम्यामङ्गीकृत्य विधेयाया भावनाया धात्वर्थाधीननिरूपणत्वाद् गुणाधीननिरूपणत्वाभावाद् गुणे पुंस्त्वव्याप्रियमाणे विधौ वा तस्मिन्नव्याप्रियमाणे ऽपि गुणानपेक्षधात्वर्थावच्छिन्नभावनाविधानेन विधिशब्दार्थोपपत्तेर्नानुष्ठानं सेत्स्यतीत्याशङ्काशयविवरणार्थत्वेन व्याचष्टे * अव्याप्रियमाणे ऽपीति * तत्रेत्यादिनैकग्रन्थेन वा स एवाशङ्कितान्येनापृष्ट एवानुष्ठानं निरूपयत्यन्यथा व्याचष्टे *स एवेति* स्वयं शब्देन प्रश्नानपेक्षोक्ता भावनाया गुणाधीननिरूपणत्वाभावाद् गुणानपेक्षविधेयत्वापत्तावपि स्ववाक्योपात्तगुणश्रुत्यानर्थक्यपरिहारार्थङ्गुणविधिः कल्प्य इति पुनराशङ्काक्षेपार्थङ्गुणेति भाष्यम्भावनाविधिना गुणस्य विधातुमशक्यत्वाद्भावनानिरपेक्षस्य च विधेः कल्पनायोगादगत्यानर्थक्यमेव ज्याय इत्याशङ्काशयविवरणार्थं वानर्थकश्चेति भाष्यमेकहेलया व्याचष्टे * तेनैवेति * विधिकल्पनाशयः प्रश्नः कल्पनानुपपत्त्याशयं चोत्तरमित्यर्थः । सर्वस्य वेदस्याध्यनविधिनार्थवत्त्वावधारणे आनर्थक्यायोगादवश्यकल्प्यो गुणविधिरित्याशङ्काक्षेपाशयविवरणार्थं कथं पुनरिति भाष्यं व्याचष्टे *तथेति* यथा तत्र किं भविष्यतीति प्रश्नः कल्पविध्याशयस्तथायमपि प्रश्नः कल्पविध्याशय इत्युक्तेः पौनरुक्त्यं नहीत्याशङ्क्याशयाधिक्यं वेत्यनेनोक्तं पूर्वपक्षे भावनानुष्ठानार्थत्वाद्विधेः कारकश्रुन्यायाश्चानुष्ठानाशक्तेर्विशिष्टविधिना विशेषभूतकारकानुष्ठानाक्षेपार्थं गुणवचनेन सान्निध्यार्थवत्त्वोपपत्तेर्नानर्थक्यं सिद्धान्ते तु दध्यादिवाक्ये विधेर्भा-

वनारूढत्वे ऽपि तदनुष्ठानार्थत्वाभावात्कारकानुष्ठानाक्षेपाशक्तेः सान्निध्याम्नातस्यापि गुणस्यानुष्ठानानवगमादानर्थक्यमित्युत्तरार्थं भाष्यं सिद्धान्ते ऽपि गुणानुष्ठानार्थत्वाभ्युपगमादयुक्तमाशङ्क्य मध्यप्रतीकेनावतार्यानर्थक्यापादनार्थत्वेन व्याचष्टे*असति त्वर्थ इति* भवेदित्यादि किमन्यदुच्येतेत्यन्तभाष्योक्ता कापरिहारार्थमेवन्तर्हीति भाष्यं वाक्यशब्दे श्रवणादेकाभिधानलक्षणश्रुत्युपात्तभावनानपेक्षगुणविधानार्थं तया भासमानं भावनार्थविधायकेनापि विधिना विधिप्रयोजनभूतगुणसमर्पणार्थवाक्यापेक्षणाभिधानार्थत्वेन व्याचष्टे * एवं तर्हीति * वाक्याद्भविष्यतीति वाक्ये किं भविष्यतीत्यपेक्षायामतिक्रान्तावेक्षणेन गुणगतस्य व्यापारस्य विधेयत्वप्रतीतिरित्यवगमात् * विधिरित्युक्तम् * ननु गुणमतो व्यापारो भविष्यतीति भाष्यार्थकल्पनयानेन विधिशब्देन भाष्यगता व्यापारशब्दा विधिवाचित्वेन व्याख्याता इति भ्रमितव्यम् नन्विदानीमेव वाक्याद् गुणव्यापार* उपगम्यतइत्युक्तम् *सत्यमेतदविधीयमानस्तु कुतो ऽवगम्यतइति वक्ष्यमाणभाष्ये व्यापारस्याविधीयमानत्वोक्त्यनुपपत्तिप्रसङ्गाद्विधिवाचित्वे च व्यापारशब्दानां भावनावाचिशब्दान्तरस्येहाभावात्प्रस्तुताधिकरणन्यायेन सर्वत्र लिङ्गशिष्टभावनाविधिरेव तत्वमिति वार्त्तिकं निरालम्बनमेव स्यात् श्रुतिबलीयस्त्वेन पूर्वपाक्षिप्रत्यवस्थानार्थं श्रुत्यर्थे सतीति भाष्यं श्रुत्युपात्तायां भावनायां विधेस्तात्पर्यायोगेन श्रुतिविरोधाभावादयुक्तमाशङ्क्य भावनाविधिद्वारत्वाद् गुणविधेर्भावनानिरपेक्षे गुणे तात्पर्यायोगादापाद्योक्त्यर्थत्वेन व्याचष्टे * परस्त्विति * भावनाद्वारापि प्रवर्त्तमानस्य विधेरप्राप्तप्रापणस्वभावत्वेनान्यतः प्राप्तायां तात्पर्यायोगादानर्थक्यतदङ्गन्यायेन गुणे तात्पर्यावतारो युक्त इति परिहारार्थं सत्यमित्यादिविहितत्वादित्यन्तं भाष्यं व्याचष्टे * सत्यमिति * तत्सन्निधेरिति सूत्रावयवव्याख्यानार्थं स्वपदार्थस्येति भाष्यावयवं कर्मान्तरविधानोपपत्तेरयुक्तमाशङ्क्य कथं चित्प्राप्तिसम्भवे विशिष्टविधिगौरवान्याय्यत्वाभिधानार्थस्तद्गुणाधिकरणाधिकरणसूत्रावयवः पठितः । नन्वेवं सति तेनैव न्यायेन श्रुत्यर्थाविवक्षासिद्धेः प्रश्नो न युक्त इत्याशङ्क्य * कथमित्युक्तम् * श्रुत्यर्थाविवक्षायां द्वेषातिशयेनोक्तन्यायापरामर्शात्प्रश्नः श्रुत्यर्थाविवक्षावादिन एव वा हेत्ववतारार्थं प्रश्नोक्तिरित्यर्थः । तत्सन्निधेरिति सूत्रावयवव्याख्योपसंहारार्थं तस्मादिति भाष्यं तस्मात् शब्दपरामृष्टतत्सन्निधिं त्रेधा व्याचष्टे * तस्मादिति * पौर्णमास्यधिकरणादिस्थानां चोदनाशब्दानां शब्दान्तरे कर्म-

भेद इति कर्मशब्दालोचनेन कर्मचोदनाविषयतया व्याख्यानात्तस्मिन्कर्मणि गुणत्वस्य सशब्दोक्तेनैकैकीभावेन विधानात्कारकद्रव्यावस्थाविशेषत्वेन क्रियायाः क्रियाकारकयोरत्यन्तभेदाभावात्क्रियाद्वारा गुणस्य विधेयत्वोपपत्तिरित्याद्ये व्याख्याने तत्सन्निधिशब्दार्थस्तस्य गुणस्य सन्निधौ पठितस्याविधाने प्रमादपाठापत्तिरिति द्वितीये तस्याः कर्मचोदनाया वाक्यान्तरस्थायाः प्रत्यभिज्ञानाच्च दध्यादिवाक्ये कर्माणि विधेयतेति तृतीये सत्यं न श्रूयतइत्यादिभाष्येण गुणविधिव्युत्पादनार्थत्वेन तत्सन्निधेरित्यादिसूत्रावयवं व्याख्यायाख्यातपदार्थविधावाख्यातपदानर्थक्यशङ्कानिरासार्थत्वेन तस्य कर्मणो ऽग्निहोत्राधारवाक्यचोदितस्य दध्यादिवाक्ये सन्निधानाद् गुणान्वयार्था पुनः श्रुतिरित्येवं व्याख्यातुं जुहोतेरिति भाष्यं स्पष्टत्वादव्याख्याय यदीत्याशङ्काभाष्यं विधायकप्रत्ययानुवादत्वानभिधानादयुक्तमाशङ्क्य धातोरनुवादत्वे प्रत्ययस्यापि केवलाप्रयोज्यत्वेनानुवादत्वापादनाशयत्वेन व्याचष्टे * जुहोतेरिति * नन्वेवमपि दध्यादिशब्दस्य विधायकत्वानिरासात्प्रश्नो न युक्त इत्याशङ्क्याह * दधिशब्देनेति * यथा वाजपेयाधिकरणे यदि यजतेत्यनुवादः केनेदानीं गुणो विधीयतइति प्रश्नोपपादनार्थं वाजपेयशब्देनेति मा वोचत न ह्याख्यातं वा कृत्यं वान्तरेण * नाम पदस्य विधिशक्तिरस्तीत्युक्तम् * तथात्रापि वाच्यमित्यर्थः। छायाशब्दः प्रक्रियार्थः वाक्यावगतस्य गुणान्वयस्याप्राप्तत्वाद्विधेयत्वप्रतीतेस्तदन्यथानुपपत्तिकल्पितेनाख्यातेन विधिसम्भवाच्छङ्काक्षेपार्थं नन्विति भाष्यं श्रुताख्यातत्यागेनाश्रुतकल्पनायोगेनाशङ्कासमाधानार्थं च सत्यमिति भाष्यं स्पष्टत्वादव्याख्यायैवं तर्हीत्युत्तरभाष्यं व्याचष्टे * प्रत्यय इति * प्रत्ययस्य विधित्वे तद्वाच्याया भावनाया विधेयत्वापत्तेर्धात्वर्थानवच्छिन्नायाश्च तस्या विध्ययोगाद्धात्वर्थस्यापि विधेयत्वापत्तिरिति कस्येति भाष्येणाशङ्क्याहाविधीयमानस्याप्यन्यतो ऽवच्छेदकत्वेन प्राप्तेरनुवादोपपत्त्यभिधानार्थं धात्वर्थस्येति भाष्यं व्याचष्टे * धात्वर्थ इति*धातुप्रत्यययोः सहप्रयोगनियमे ऽप्यर्थभेदाद्विध्यनुवादविभागोपपत्तिसूचनार्थो विवेकशब्दः। ननु स्वपदोपात्तस्यापि धात्वर्थस्यान्यतः प्राप्तत्वेनानुवादाभ्युपगमे भावनाया अपि प्राप्त्यविशेषेणानुवादापत्तेर्व्यापारशब्देन भावनाविधानाभिधानं न युक्तमित्याशङ्कार्थं यदीति भाष्यं व्याचष्टे * यदीति * भावनानिरपेक्षगुणविधानाशक्तेर्गुणविधानार्थं प्राप्ताया अपि भावनाया गुणविशिष्टरूपेण गुणविधानोपपत्त्यभिधानार्थं वाक्यार्थ इति भाष्यं

पराभिमतधात्वर्थोद्देशेनान्यविधिनिरासेन विशिष्टभावनाविध्यभिप्रायत्वेन व्याचष्टे * वाक्यार्थ इति*यथैवं तर्हि वाक्याद्भविष्यतीति भाष्य विशिष्टभावनाशयं तथैतदपीत्यर्थः।तस्मादिति सिद्धान्तोपसंहारभाष्यमुपक्रमभाष्यव्याख्यया व्याख्यातमप्यनन्तरोक्तवाक्यार्थविध्यालोचनेन भ्रान्त्यापादकत्वाद्व्याचष्टे * तस्मादिति * केवलगुणविध्यसम्भवाद्वाक्यान्तरतो ऽप्याघारणहवनरूपकर्मान्तरव्यावृत्तरूपाप्रतीतेः संज्ञोपबन्धासम्भवस्योक्तस्य केवलगुणविधिव्युत्पादनात्परिहारसिद्धेर्भाष्यकृतोपेक्षितं परिहारं स्वयमाह * जुहोतीति*ननु सजातीयकर्मान्तरव्यावृत्तिर्न जुहोत्याघारयतिभ्यां सेत्स्यतीत्याशङ्क्याह * इहेति * विधिस्वभावात्सर्वतो व्यावृत्तेः संज्ञोपबन्धोपपत्तिरित्यर्थः । अप्रकृतत्वाच्चेति सूत्रोक्तं प्राकरणिकवाक्यान्तरतो ऽपि रूपालाभं परिहरति * प्रकरणाच्चेति * यत्त्वज्ञातरूपस्य कर्मणो विध्यसम्भवात्फलकरणत्वानवगतेरुत्पत्तिवाक्ये कथंभावात्मकं प्रकरणं नास्तीत्युक्तम्। तद्वाक्यान्तरतो रूपलाभसम्भवे स्वभावात् ज्ञातरूपस्यापि कर्मणो विधिसम्भवादेव कर्मान्तरव्यावृत्तिसिद्धेर्विधिसम्भवादुत्पत्तिवाक्ये ऽपि सामान्यतः फलकारणत्वावगतेः प्रकरणं सम्भवतीत्येवं परिहरति * न चेति * ननु प्रकारविशेषाकाङ्क्षात्मकत्वात्कथम्भावस्य फलविशेषान्वयोत्तरकालत्वाच्च प्रकारविशेषाकाङ्क्षाया नोत्पत्तिवाक्ये कथम्भावोपपत्तिरित्याशङ्क्याह * फलेति * निर्विशेषसामान्याभावादुत्पत्तिवाक्ये ऽप्यनिर्द्धारितफलादिविशेषप्रतीतेरनिर्द्धारितफलविशेषान्वयोत्तरकालं कथम्भावोपपत्तिरित्याशङ्क्याह * फलेति * निर्विशेषसामान्याभावादुत्पत्तिवाक्ये ऽप्यनिर्द्धारितफलादिविशेषप्रतीतेरनिर्द्धारितफविशेषान्वयोत्तरकालं कथम्भावोपपत्तिरित्याशयः।या चानभिज्ञातरूपस्य फले विधातुमशक्यतोक्ता साप्ययुक्तेत्याह * न चेति * होममात्ररूपेण फले विहितस्य कर्मणो द्रव्यादिग्रहणे विरोधाभावादित्यर्थः । विशेषतो ऽत्र द्रव्यादेर्वाक्यग्राह्यत्वेन प्रकरणानपेक्षणात्सन्निधिमात्रेण च कर्मानुवादोपपत्तेः कथम्भावाभावे ऽप्यविरोध इत्याह * इष्यते चेति * वाक्यान्तरप्राप्तं च कर्मानूद्य वाक्यान्तरेण रूपग्रहणसम्भवे स्ववाक्याज्ञातरूपस्यापि कर्मणो वाक्यान्तरतो रूपलाभाद्विधिनिर्वाहोपपत्तेर्विध्ययोगाभिप्रायेणाघारप्रकरणनिरासायोगात्परप्रकरणपाठमात्रेण तन्निरासो वाच्यः। स चाभिक्रमाधिकरणे निराकरिष्यमाणत्वादयुक्त इत्याशयेनाह * न चेति * एतदेवोपसंहरति * तेनेति * यदुक्तमित्यादिभाष्यमप्याघारप्र-

करणसद्भावाभिधानार्थमित्यनेन सूचितम् । तण्डुलोदूर्ध्वादिवाक्यानां कर्मविधित्वे कर्मबहुत्वात्तदनुनिष्पाद्यपूर्वबहुत्वकल्पनापद्येतेत्याह * बहूनि चेति * अथानेकादृष्टकल्पनापत्तावपि रूपवत्त्वेनैषां विधित्वमिष्यते तदपि नास्तीत्याह * न चेति * तण्डुलादियुक्तानां होमानां देवता नास्ति ऊर्ध्वादियुक्तानां चाघाराणां यथा देवता नास्त्येवं द्रव्यमपीत्युभयाभावाभिधानं यदग्नये चेति देवतायुक्ते होमे द्रव्याभावस्तस्याघारामिन्द्र ऊर्ध्वो ऽध्वर इति वाक्यविहिते चाघारे ऽन्यतराभावश्चकारेण सूचितः । कर्मान्तरविधेश्च कर्मान्तरे गुणसमर्पकत्वायोगान्न वाक्यान्तराद्देवतादिलाभ इत्याह * सर्वे चेति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तत इति * ननु वाक्यान्तराद्रूपलाभसम्भवाभिधानेनाद्यसङ्गोपबन्धव्याख्यायां परिहारसिद्धावपि द्वितीयव्याख्यायां परिहारानभिधानान्नोपसंहारो युक्त इत्याशङ्क्यानुभाषणपूर्वं परिहरति * यस्त्विति * प्रयत्नरूपभावनासाध्यत्वे ऽपि होमादिधात्वर्थस्य करणभूतधात्वर्थानवच्छिन्नाया भावनायाः कर्मान्वयायोगात्तदवच्छेदकत्वेन सङ्कल्पादिधात्वर्थोपन्यासो ऽनुष्ठेयहोमादिस्वरूपानुसन्धानं द्रव्यादिकारकसमवायाभिधानं वादिशब्दोपात्तं क्रियात्वे ऽपि धात्वर्थस्य जन्यत्वात्कर्मत्वोपपत्तिः । वस्तुतस्तु धात्वर्थस्य करोत्यर्थरूपक्रियात्वमेव नास्तीत्यपिशब्दार्थः । ननु सङ्कल्पादेरनुपादानान्न तदपेक्षया कर्मत्वनिर्देशोपपत्तिरित्याशङ्क्याह * तेनेति * अनिष्पन्नस्य होमादेः फलकरणत्वायोगात्सङ्कल्पादिनिष्पादितेन होमेन फलं भावयेदिति शास्त्रार्थो ऽवसीयतइत्याशयः । ननु दध्यादिवाक्यानां कर्मविधित्वाभावे ऽप्यग्निसूर्यवाक्ययोरनेकगुणविधानात्कर्मविधित्वावगतेरग्निहोत्रवाक्यस्य तद्वाक्यविहितसायम्प्रातर्होमद्वयसमुदायानुवादत्वं भविष्यतीत्याशङ्कते * ननु चेति * कर्मविधानं यदनेनोक्तं तदापद्यतइत्यर्थः । अत्र कैश्चिद्भाष्यमनादृत्यैतत्सूत्रं पूर्वपक्षं कृत्वाद्यसूत्रत्रयेण समुदायानुवादत्वसिद्धान्तमुपवर्ण्याग्निहोत्रे देवतायाः प्रकरणादप्यप्राप्तेर्विधित्वासम्भवस्य प्रकृतत्वाच्चेति सिद्धान्तसूत्रोक्तस्याग्निसूर्यवाक्याभ्यां देवताप्राप्तेरनुपपत्तिमाशङ्क्याग्निसूर्यवाक्ययोः कर्मविधित्वं चोदना वा शब्दार्थस्य प्रयोगभूतत्वादिति सूत्रावयवेनानेकगुणविधानान्यथानुपपत्त्योक्ताग्निसूर्यवाक्ययोरपि द्रव्याभावात्कर्मविधित्वानुपपत्तिमाशङ्क्य दध्यादिवाक्यैर्द्रव्यप्राप्तिरुत्तरावयवेनोक्तेत्युक्तं तेषां मतं दूषयितुमुपन्यस्यति * तथा नामेति * अत्रैव परोक्तामुपपत्तिमाह * एवं चेति * आह-

ती इति द्वित्वसंख्यायाः पृथक्त्वानिवेशाद्भेदव्यवहारः व्यपदेशभेदः स्पष्टः धर्मभेदो ऽपि भेदापादकत्वाद्भेदं व्यवहारयतीत्यादिशब्देनोक्तः । नन्वभ्यासविषयाभेदे व्यवहारा भविष्यन्तीत्याशङ्क्याह * न चात्रेति * एकस्मिन्नभ्यासे सकलो ज्योतिष्टोम इति प्रतीत्यभावाद्युक्तं ज्योतिष्टोमावयवत्वमिह त्वेकैकस्मिन्सकलमग्निहोत्रमिति प्रतीतेर्नाग्निहोत्रावयवतेत्यर्थः । उभयत्र च समस्तेतिकर्त्तव्यतावृत्तिर्भेदापादिकेत्याह * एवञ्चेति * ननु कर्मैक्ये ऽपि कालभेदादितिकर्त्तव्यतावृत्तिर्युक्तेत्याशङ्क्याह * अन्यथात्विति * एकादशे दर्शपूर्णमासाख्ययोः समुदाययोः राजसूयाख्यानामिष्टिपशुसोमयागानां चातुर्मास्याख्यानां च वैश्वदेवादिपर्वणां कालभेदादङ्गावृत्तौ सिद्धान्तितायां सवनीयपशौ च या पशुपुरोडाशाङ्गप्रचाराणां कालभेदे ऽप्यङ्गानावृत्तिवदिहाप्यनावृत्तिरित्याशङ्क्यैकस्य कर्मणः प्रक्रमात्प्रभृत्यासमाप्तेरेककालत्वात्सवनीयपशोश्चैककर्म्यात्प्रयोगाख्यस्य तन्त्रस्य विप्रकृष्टकालत्वे ऽप्यङ्गानावृत्तियुक्तेति वैषम्यं वक्ष्यमाणं दृष्टान्तितम् । दध्यादिवाक्यानां च कर्मविधित्वे दध्यादीनां भिन्नकर्मविषयत्वात्समुच्चये सति सम्प्रतिपन्नदेवतात्वात्सहप्रदानापत्तेर्विकल्पसिद्ध्यर्थं कर्मैक्यायाग्निहोत्रवाक्यस्य विधायकत्वं सिद्धान्तयितव्यं सूर्याग्निवाक्ययोस्तु कर्मविधित्वे पक्षद्वये ऽपि दध्यादिविकल्पसिद्धेर्विचारो ऽनर्थकः स्यादित्याशयेनाह * न चेति * परमतमुपसंहरति * तस्मादिति * सूर्याग्निवाक्ययोः कर्मविधित्वे सत्येककर्मासम्भविदेवताद्वयरूपगुणभेदितस्यैकैकवाक्यविहितस्य कर्मद्वयस्यैक्यमुपचर्यापराग्निकहोमानां चाग्निहोत्रवाक्यात्पश्चाद्विहितत्वेनानुवादायोगमभिप्रेत्य सायम्प्रातराहवनीयहोमविवक्षयाहुत्योरित्युक्तं परमतमुपन्यस्तं दूषयन्समुदायानुवादमेव तावन्निष्प्रयोजनत्वेन दूषयति * उच्यतइति * दर्शपूर्णमासाभ्यामिति द्विवचनस्य समुदायानुवादाव्यतिरेकणासिद्धेर्विद्धद्वाक्ययोः समुदायानुवादो ऽर्थवान् अग्निहोत्रमिति वैकवचनस्य राजसूयेनेत्येकवचनवत् समुदायानुवादं विना ऽप्यसमुदायीकृतानामेव प्रकृतानां कर्मणामेकफलान्वयात्समुदायसिद्धौ सत्यां तद्गतैकत्वद्वारा सिद्धेः समुदायानुवादो ऽनर्थक इत्याशयः । नन्वग्निहोत्रशब्दविशेषितेन धातुना फलान्वयावगमात्ततः प्रागेव समुदायत्वसिद्ध्यर्थं समुदायानुवादो ऽर्थवानित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे यथैव हीति* अनवगतफलानामपि कर्मणामेकप्रकरणविधानलक्षणैकधर्मान्वयाख्यात्प्रचयात्साहित्याख्यः समुदायः सेत्स्यतीत्याशङ्का-

निरासाशयः । प्राक्फलान्वयात्समुदायासिद्धावप्राप्तत्वान्नानुवादो ऽपि सिद्ध्येदिति सूचनार्थो दृष्टान्तः । समुदायासिद्ध्यैवैकत्वञ्च नालम्ब-नैकत्वासिद्धिर्न तत्सिद्ध्यर्थो ऽप्यनुवादो युक्त इति सूचनार्थैकत्वश-ब्दः । एवमग्निहोत्रं जुहुयात्स्वर्गकाम इति प्रयोगवाक्यगतमग्निहो-त्रपदमपि प्रचयशिष्टसमुदायैकत्वद्वारेण भविष्यतीत्यध्याहारेण योज्यं यथा चेति श्लोकव्याख्या नन्वग्निहोत्रशब्दस्यैकप्रकरणविधा-नलक्षणप्रचयकृतसमुदायनिमित्तत्वे सति गार्हपत्यान्वाहार्यपचन-होमानामपि प्रकृतत्वाविशेषात् ग्रहणेन फलान्वयापत्तेर्दर्शपूर्णमा-सादौ च सर्वत्र गार्हपत्यान्वाहार्यपचनयोः प्रधानकर्माधिकरणत्वा-भावव्याप्तेरग्निहोत्रद्रव्यस्य च चतुरुन्नयनविधानाच्चतुरुन्नयनसं-स्कृतस्यैव प्रधानहोमार्थत्वावगमात्तस्य चाहवनीयहोममात्रार्थत्वा-दाहवनीयाधिकरणहोमविधायकाग्निसूर्यवाक्यानन्तर्याच्चाग्निहोत्रं जुहोतीति समुदायानुवादस्थस्याग्निहोत्रशब्दस्याहवनीयाहोममात्र-विषयत्वेन तन्मात्रस्य फलान्वयावगतेर्नैकप्रकरणविधानापादितस-मुदायनिमित्तताग्निहोत्रशब्दस्य सम्भवतीत्यतद्वाक्याभावे ऽग्निसू-र्यवाक्यविहितहोममात्रसमुदायासिद्धेस्तत्सिद्ध्यर्थः समुदायानु-
६०१।२ वादो ऽर्थवानित्याशयेनाशङ्कते * नन्विति * प्रकृतत्वाविशेषेण जुहोतेः सर्वहोमग्राहित्वावसायाद्धेदिके चार्थे ऽनुमानाप्रवृत्तेः पि-ण्डपितृयज्ञादेश्चातिप्रणीताग्नौ विहितस्याहवनीयानधिकरणत्वे ऽपि प्राधान्यदर्शनात्संस्कारव्यवस्थामात्रेण च प्राधान्यव्यवस्थानुपपत्ते-रानन्तर्यस्य च पञ्चमक्रमात्मकप्रमाणत्वेन प्रकरणेन बाधाद्राजसू-यशब्दवत्प्रकृतमात्रग्राहिजुहोतिसामानाधिकरण्येनाग्निहोत्रशब्दस्य सूर्यप्रकृतहोमविषयत्वावसायान्नाहवनीयहोममात्रसिद्ध्यर्थत्वं समु-दायानुवादस्य सम्भवतीत्याशयेन परिहरति * समुदायेति * ननु बहुव्रीहिः सर्वनामार्थवृत्तित्वात्सन्निहिताहवनीयहोमविषयत्वावगमे-नापराग्निकेभ्यो व्यवच्छेदो भविष्यतीत्याशयेन शङ्कते * नन्विति * पाश्चात्ये ऽप्यथैव ज्योतिरित्यादौ सर्वनामप्रयोगदर्शनेन प्राक्भाव-मनादृत्य सन्निधिमात्रापेक्षणादापराग्निकहोमानामपि चैकप्रकरण-गतत्वेन सन्निध्यविशेषादत्यन्तसन्निधेश्च द्वयोरप्यसम्भवात्सन्नि-हितार्थवृत्तित्वेन विशेषणत्वानुपपत्तेरग्निदेवत्यहोमाभिधायित्वेन वि-शेषणत्वं वाच्यं तच्चापराग्निकनामप्यग्निदेवत्यत्वान्न सम्भवती-त्यापाद्योक्त्या परिहरति * नेति * अग्निदेवत्यत्वे च विशेषणे सति प्रातर्होमस्यापि प्राधान्यं न स्यादित्याह * अपि चेति * अतः समुदा-यानुवादाभाववत्समुदायानुवादे ऽपि सर्वेषां प्राधान्यात्समुदायानु-

वादो ऽनर्थक इत्युपसंहरति * तस्मादिति * नन्वग्निहोत्रवाक्यस्य विधित्वे सर्वाग्निष्वभ्यस्तस्य कर्मणो भेदाभावात्प्राधान्याविशेषे ऽप्यग्निसूर्यादिवाक्यानां कर्मविधित्वे ऽग्निहोत्रवाक्यास्यानन्यप्रयोजनत्वात्समुदायानुवादार्थत्वावगतेः प्रकृतमात्रग्रहणे च समुदायानुवादानर्थक्यापत्तेः प्राग्विहिताहवनीयहोममात्रानुवादावसायादापराग्निकानामङ्गत्वं भविष्यतीत्याशङ्क्याह * तथेति * सूर्याग्न्यादिवाक्यानां कर्मविधित्वाभावे ऽपि गुणार्थतयार्थवत्त्वोपपत्तेर्न तेषां कर्मविधित्वाभ्युपगमेनाग्निहोत्रवाक्यस्य समुदायानुवादताभ्युपगन्तुं युक्तेत्याशयः। शाखान्तरे च द्वे आहवनीये चतस्रो गार्हपत्ये चतस्रो ऽन्वाहार्यपचने दश सम्पद्यते दशाक्षरा विराट् य एवं विद्वान् विराट् सम्पन्नमग्निहोत्रं जुहोतीति सर्वहोमविषयत्वेताग्निहोत्रशब्दप्रयोगात्सर्वविषतयैवाग्निहोत्रशब्दस्य निश्चीयत इत्याह * तथा चेति * विराट्शब्दस्य दशकाख्यत्वादापराग्निकहोमाग्रहणे च दशकासम्पत्तेः सर्वविषयत्वलिङ्गेन विराट्सम्पत्त्युपन्यासः अतः समुदायानुवादानर्थक्याद् गुणविधित्वस्य च तत्प्रख्याधिकरणे निरस्तत्वात्कर्मविधितैवाग्निहोत्रवाक्यस्य युक्तेत्याह * तस्मादिति * नन्वेवमपि गार्हपत्यादिवाक्येषु संख्याधिकरणारूपानेकगुणविधानात्कर्मविधिप्रतीतेः कर्मभेदे सति कर्मैक्यं न सिध्यतीत्याशङ्क्याह * ततश्चेति * यदाहवनीये जुहोतीत्यनारभ्यवादेन सर्वहोमानामाहवनीयाधिकरणत्वप्राप्तेराहवनीये द्वे इत्यस्याहुत्यन्तरपरिसंख्यार्थत्वादष्टानामाहुतीनामधिकरणापेक्षायां गार्हपत्यान्वाहार्यपचनाधिकरणत्वविधौ समं स्यादश्रुतित्वादित्यनेन न्यायेनैकैकत्र चतुष्ट्वस्य प्राप्तस्यानुवादाद् गार्हपत्ये जुहोत्यन्वाहार्यपचने जुहोतीति वाक्यान्तराभ्यां वा गार्हपत्यान्वाहार्यपचनप्राप्तेश्चतुरावृत्तिलक्षणगुणमात्रविधानार्थत्वात्तत्संयोगस्याहवनीयसंयोगस्य च द्विरावृत्तिलक्षणगुणमात्रविधानार्थत्वान्न वाक्यभेदापत्तिरित्याशयः। ननु कर्मैक्ये सत्यग्नीनां विकल्पापत्तेस्तत्संयोगेन विहितानामावृत्तीनामपि विकल्पप्रसङ्गाद्विराट्सम्पत्त्यनुवादो न युज्येतेत्याशयेनाशङ्कते * कस्मात्पुनरिति * केषांचित्परिहारं दूषयितुमुपन्यस्यति * केचिदिति * प्रक्षेप्यस्य द्रव्यस्य क्वचित्प्रतिष्ठां विनाप्याधारासिद्धयोजनमात्रेण प्रक्षेपसिद्धेरग्निसंयोगस्यादृष्टार्थत्वेनैक्यार्थ्ये प्रमाणाभावान्न विकल्प इत्यर्थः।अदृष्टार्थत्वे सति वैकल्पिकबाधायोगादविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यादिति दशमाधिकरणविरोधः स्यादिति दूषण-

माह * एवं त्विति * तत्राङ्गानुरोधेनाश्रुतावृत्त्ययोगाद् बाधसम्भवे ऽपीहावृत्तिश्रवणाद्विकल्पानुपपत्तिरित्याशयेनाशङ्कते * अर्थेति * द्विरावृत्त्यादिश्रवणे ऽपि दशकृत्वा आवृत्त्यश्रवणाद्विरादृश्रुतेश्चानुवादसरूपत्वात्सामर्थ्यमित्याशयेन परिहरति * इहापीति * स्वमतेनानुवादसरूपत्वमन्यतः प्राप्त्यभावाद्विधित्वे सति द्वादशाधिकरणन्यायेन समुच्चयसिद्धिरिति परिहरति * तस्मादिति * विराट्सम्पत्त्यविधाने त्वदृष्टार्थत्वे ऽप्याहवनीयादिसंयोगस्य प्रत्येकमाहुतीनां स्थानविशेषनियमात्स्थानान्तरपाते च प्रायश्चित्ताम्नानात्कर्ममध्ये चानुगते ऽग्नौ लौकिकाग्निब्राह्मणपाण्यादौ होमविधिदर्शनात्सप्तमीश्रुतेश्चाधारणत्वद्वारैवादृष्टार्थत्वावसायान्न देवताग्निशब्दोऽक्रियमित्यत्र वाग्निप्रतिनिधिनिरासस्य प्रत्यक्षदृश्याग्निरूपस्य दृष्टार्थत्वे ऽप्याहवनीयादिरूपस्यादृष्टार्थत्वेनान्यत्र तदवयवानुवृत्तौ प्रमाणाभावादुपपत्तेरन्योन्यनिरपेक्षस्य च विभक्तिश्रुत्याधारत्व-
५०२।२ प्रतीतेर्विकल्प एव स्यादित्याह * अन्यथा हीति * श्लोकं व्याचष्टे * सत्यपीति * ननु विद्वद्वाक्यस्य विधित्वाभ्युपगमे द्विचतुर्दशकृत्व आवृत्तिलक्षणानेकगुणविधानात्कर्मोत्पादकत्वापत्तेरुत्पत्तिस्थया संख्यया कर्मभेदः स्यादित्याशयेनाशङ्कते * कस्मात्पुनरिति * अग्निहोत्रवाक्यस्यानन्यप्रयोजनत्वेन कर्मोत्पादकत्वावसायाद्विरावृत्त्यादिवाक्यानां च विभागेनैकैकगुणविधायकत्वोपपत्तेरनुत्पत्तिस्थत्वान्नेयं संख्या भेदिकेत्याशयेन परिहरति * नेति * नन्वनुत्पत्तिस्थापि संख्या कस्मान्न भेदिकेत्याशङ्क्याह * उत्पत्तिस्था हीति * उत्पत्तिवाक्यावधारितसंख्ये कर्मणि संख्यान्तरानिवेशादावृत्त्यापि च संख्यान्तरसम्पादनोपपत्तेर्नास्वरूपभेदकत्वं सम्भवतीत्याशयः । अग्निहोत्रवाक्यस्य कर्मविधित्वे कर्मैक्यसिद्धिमुपपादितामुपसंहरति * तेनेति * परोक्तं समुदायानुवादत्वं निष्प्रयोजनत्वेन दूषयित्वाग्निसूर्यवाक्ययोर्गुणविधित्वे वाक्यभेदापत्तेः । कर्मविधित्वमाशङ्कितमनुभाषणपूर्वकं दूषयति * यत्विति * चशब्दात्समुच्चितस्य देवताद्वयस्य सकृच्छ्रुतेन प्रत्ययेन विधानोत्पत्तेः कालदेवतारूपाणामेकार्थविधानाद्वाक्यभेदो वाच्यः स चात्र कालानुवादान्नास्तीत्याशयः । नन्वनेकार्थविधिलक्षणवाक्यभेदाभावे ऽपि विशिष्टानुवादलक्षणो वाक्यभेदः स्यादित्याशङ्कते * नन्विति * कालमात्रानुवादात्परिहरति * नेति * जुहोतेस्तर्हि का गतिरित्याशङ्क्य प्रकरणलभ्यकर्मानुवादतोक्ता ननु कालस्य देवतान्वयो न सम्भवतीत्याशङ्क्य द्वेधा परिहरति * स त्विति * प्राकरणिकाद्या-

क्यान्तरात्कालस्य कर्मान्वयावगतेस्तद्द्वारा देवतान्वय इत्येकः परिहारः। विधीयमानया सम्प्रदानभूतया देवतयाकाङ्क्षितत्वात्प्राकरणिकवाक्यान्तरेण च होमस्य कालान्वयितयावगतेस्तल्लक्षणार्थः कालनिर्देश इति द्वितीयः । ननु प्रत्यक्षश्रुतत्वाद्धोमस्य कालेन लक्षणा न युक्तेत्याशङ्क्याह * न चेति * वाक्यभेदापत्तेः श्रुतस्य होमस्य कालेन विशेष्टुमशक्यात्प्रत्ययानुग्राहकत्वेन च धात्वर्थानर्थक्यपरिहारोपपत्तेर्लक्षणयैव लाभो ऽभ्युपगन्तव्य इत्याशयः । ननु कालेन होमलक्षणायामनया यो हि कालस्येत्यनेन न्यायेनैककाललक्षितहोमस्य कालान्तरे ऽप्यनपायादग्नीषोमलक्षितोपांशुयाजे विधीयमानस्य पौर्णमासीकालस्य देवतान्तरयुक्ते ऽपि प्राप्तिवदेककाललक्षिते होमे विधीयमानाया देवतायाः कालान्तरयुक्ते ऽपि प्राप्तेर्व्यवस्थापरत्वोक्तिर्न युज्येतेत्याशङ्क्याह * न चेति * कर्मस्वरूपमात्रलक्षणे सत्येकैकेनैव तत्सिद्धेः कालद्वयोपादानानर्थक्यप्रसङ्गात्स्वानुरक्तकर्मलक्षणे कालान्तरयुक्ते कर्मण्यप्राप्तेर्नोपांशुयाजतुल्यतेत्याशयः । अतो ऽग्निसूर्यवाक्ययोर्व्यवस्थापरता युक्तेत्याह * तेनेति * व्यवस्थायाः सूर्याग्निमात्रविषयत्वे ऽपीतरेतरयुक्तदेवताद्वयविधेः प्रत्येकव्यापाराभावे वाच्यभेदसूचनार्थौ द्वन्द्वनिर्देशौ द्वन्द्वानिर्देशसूचितमपि वाक्यभेदपरिहारमजानतां वाक्यभेदोक्त्याशयमाशङ्कते * नन्विति * चशब्दाद्देवताद्वयसमुच्चयस्य सकृच्छ्रुतेन प्रत्ययेन विधानावगतेर्वाक्यभेदाभावे ऽपि वाक्यभेदमाशङ्कमानेनाग्नेयपदोपात्तद्रव्यदेवतरूपानेककारकवदग्निप्रजापत्योरनेककारकत्वं वाच्यं तच्च नास्तीत्यनेककारकत्वं परानभिमतमप्यापाद्यान्येषां परिहारं दूषयितुमुपन्यस्यति *नेति* ५०३।१
प्रतिपदं च यावत्किं चित् द्रव्याश्रितं जातिलिङ्गसंख्यादीत्यादिपौर्णमास्यधिकरणवार्त्तिकोक्तं परामृष्टं पृथक्चतुर्थीनिर्देशादग्नीषोमवत् समुच्चितयोः कारकत्वाप्रतीतेः कारकयोस्तु समुच्चये कारकभेदापत्तेरग्नये दात्रइत्यादिवद्विशेषणविशेष्यभावात्त्वेककारकत्वे च शब्दानुपपत्तिप्रसङ्गात्सत्यपि वा विशेषणविशेष्यभावेनैककारकत्वे भिन्नकारकविभक्त्युपात्तयोररुणयैकहायन्यादिवत्क्रियान्वयं विना परस्परविशेषणविशेष्यभावायोगाद्यज्जुहोति तदग्नये तच्च प्रजापतित्वगुणविशिष्टाय जुहोतीति प्रत्येकविधिव्यापारापत्तेरपरिहार्यो वाक्यभेद इत्याशयेन दूषयति*अत्रेति * अग्नये दात्रइति वद्विशेषणविशेष्यत्वाङ्गीकरणेन प्रजापतित्वगुणविशिष्टस्याग्नेः कारकत्वाद्यद्यप्येकं कारकं तथाप्यनेककारकपदोपात्तयोः कारक-

विभक्तिश्रुत्या क्रियान्वयावगतेः क्रियान्वयात्प्राग्विशेषणविशेष्यत्वाप्रतीतेः प्रत्येकं विधिव्यापाराद्विधायकप्रत्ययावृत्तिः स्याद्वस्तुतस्तु प्रजापतेः स्वतन्त्रदेवतात्वप्राप्तिर्विशेषणत्वाभावेन कारकैक्यं नास्तीति यद्यपि शब्दार्थः श्लोकं व्याचष्टे * विभक्त्या हीति * समासस्यैकपद्यात्मकृच्छ्रुतप्रत्ययान्वयो युक्तः अग्नये च प्रजापतये चेत्यत्र समासाभावेनेतरेतरयुक्तस्याग्नीषोमवत्कारकत्वाभावाद्विशेषणत्वविशेष्यत्वाप्रतीतेश्च विशिष्टस्य कारकत्वाभावात्परमार्थतस्तावन्नैकं कारकं यद्यप्येकं तथाप्यनेकपदोपादानात्प्रत्ययावृत्त्याप्त्तिरित्यपि शब्दार्थः । ननु सम्प्रदानत्वमात्ररूपेण कारकैक्योक्तिः सम्भवति सामान्यस्याविधेयत्वाद्विभक्तिभेदे च कारकविभक्त्यैक्यायोगादावृत्त्युपपादनार्थं प्रत्ययस्य क्रियैकविषयत्वेन क्रियान्वयं विना चार्थस्य विषयीकरणरूपालोचनायोगात्कारकत्वं च विना क्रियान्वयायोगाद्विभक्तिप्रयुक्तस्य प्रत्ययस्य नामार्थालोचनतोक्ता भिन्नयोरपि कारकयोश्चशब्देनेतरेतरयुक्तयोर्विषयत्वावगमात्प्रत्येकं विधिव्यापाराभावाद्भिन्नयोरपि विधेयत्वे विषयाभेदाद्वाक्यभेदपरिहारसम्भवे ऽपि यद्यवश्यमेकार्थविधिरेव वाक्यभेदपरिहाराय वाच्य इत्याग्रहस्ततो देवताद्वयविधौ कारकैक्यसम्भवात्सामान्यरूपेणैक्यसम्भवे ऽप्यनेकपदोपात्तयोरितरेतरयोगाविवक्षायामनेकविधेयत्वापत्तेस्त्वदुक्तपरिहारायोगाद्वरमेकदेवताविधानाभ्युपगमेन वाक्यभेदः परिहर्त्तव्य इत्याह * तस्मादिति * प्रजापतिमात्रविधौ व्यवस्थानुपपत्तेः सायम्प्रातःशब्दयोरविवक्षितार्थत्वादेकेनैव वाक्येन कालद्वये ऽपि कर्मैक्यात्प्रजापतिप्राप्तेर्वाक्यान्तरानर्थक्यप्रसङ्गाद्विधेयस्य प्रजापत्तेर्देवतान्तरसाहित्येन स्तुत्यर्थं पुनः प्रजापतिसङ्कीर्त्तनमित्यभ्युपगमे विध्यर्थवादयोरेकवाक्यत्वाद्वाक्यद्वयव्यवस्थानुपपत्तेर्यथाग्नाई पत्नीवाञ्चिति मन्त्रवर्णाद्देवताभूताग्निप्राप्तेस्तद्विशेषणमात्रं पात्नीवतं गृह्णातीति तद्धितेन विधीयते तथात्राप्यग्निसूर्ययोः प्रजापतित्वविशेषणं सायमग्नेः प्रजापतित्वं विशेषणं प्रातः सूर्यस्येत्येवं व्यवस्थया विधीयत इत्येवं व्याख्येयं नाग्नेः सूर्यस्य वा शुद्धस्य देवतात्वं किं तु प्रजापतित्वविशेषणमपि देवतात्वान्तर्गतमित्यभिधानार्थत्वाभ्युपगमेन च शब्दानर्थक्यं परिहार्य्यमित्याशयः । विशेष्ययोर्देवताभूतयोरग्निसूर्ययोः कुतः प्राप्तिरित्याशङ्क्याह * अग्नीति * अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिः ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोतीति वाक्यान्तरविहितमन्त्रवर्णाद्विशेष्यप्राप्तिरित्य-

र्थः। प्रजापतेः स्वतन्त्रदेवतात्वे गुणवृत्त्यैन्द्रीवन्मन्त्रयोः प्रजापतिप्रकाशकत्वोपपत्तेर्देवताकल्पकत्वायोगान्न मूर्द्धाग्निसूर्यप्राप्त्यर्थो ऽयं ग्रन्थः। नन्वग्निसूर्ययोरन्यतः प्राप्तत्वे प्रजापतिविधौ कीर्त्तनं किमर्थमित्याशङ्क्याह * ताभ्यामेव चेति * स्तुतिशब्दस्य गुणवत्त्वाभिधानवाचित्वाद्विधीयमानप्रजापतित्वलक्षणगुणापेक्षितगुणिसमर्पणायोपादानमित्यर्थः। ननु प्रजापतिशब्दस्य देवताविशेषे रूढत्वात्प्रजापालनगुणवाचिता न युक्तेत्याशङ्क्यागत्या गुणवाचित्वाङ्गीकरणौचित्याभिधानाय * औचित्येनेत्युक्तम् * नन्वेवं सति तत्प्रख्याधिकरणे * यदग्नये चेत्यत्र * नाग्निप्राप्त्यभिधानं न युज्येतेत्याशङ्क्याह * यदपि चेति * मन्त्रतो प्राप्तस्याग्नेर्विशेष्यत्वेनानुवादायोगान्मन्त्रस्याग्निप्रापकत्वालिङ्गतयेदं तत्रोदाहृतमित्यर्थः। नन्वग्निप्रजापत्योर्विशेषणविशेष्यभावे ऽग्नेः पूर्वाहुतिः प्रजापतेरुत्तरेत्यादिविरोधेनापि पक्षस्यानभिमतत्वात्केन विशेषणोपन्यास इत्याशङ्क्य * आहैवं चेति * ब्राह्मणेनाग्निसूर्ययोरविधाने लिङ्गात्तद्देवत्यमन्त्राप्राप्तेर्मन्त्रविषययोर्विध्योर्नानर्थक्यापत्तिरित्यर्थः। ननु लिङ्गात्केवलदेवत्यमन्त्रप्राप्तावप्यग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्जुहोतीति मिश्रदेवत्यमन्त्रविधानात्पर्युदस्तयोः प्रतिप्रसवार्थत्वेनानर्थक्यं परिहर्त्तुं शक्यमित्याशङ्क्याह * अन्यथेति * परिह्रियते अनेनेति करणे परिहारशब्दं व्युत्पाद्य परिहारश्च तत्प्रयोजनं चेति कर्मधारयो विग्राह्यः तदर्थशास्त्रत्वलक्षणस्य दोषस्य परिहारकं यत्प्रयोजनं मन्त्राधिकरणे गुणविधिरूपं परिसंख्यारूपमर्थवादरूपं चोक्तं तत्तावन्न सम्भवति यत्त्वादिशब्दोक्तं पर्युदस्तमन्त्रप्रतिप्रसवरूपमिहाभिमतं प्रयोजनं तस्मिन्कल्प्यमाने ऽति क्लेशः स्यादिति कल्प्यमानपदाध्याहारेण व्याख्येयम्। नन्वतिक्लेशापत्तावप्यग्नेः पूर्वाहुतिः प्रजापतिरुत्तरेत्यादिश्रुतिविरुद्धविशेषणविशेष्यत्वकल्पना न युक्तेत्याशङ्क्याह * तस्मादिति * एकार्थविधिं विना वाक्यभेदपरिहारासम्भवाभिमानिनं प्रत्येकार्थविध्युपपादनार्थं मन्त्रवर्णप्राप्तयोरग्निसूर्ययोः प्रजापतित्वलक्षणविशेषणरूपैकार्थविधिरनभिमतो ऽप्युक्तो न पारमार्थिक इत्याशयः। कस्तर्हि पारमार्थिको वाक्यभेदपरिहार इत्याशङ्क्याह * एतीति * येन कारणेन पारमार्थिको वाक्यभेदपरिहारो भवति तत्प्रागेवाग्निप्रजापती सूर्यप्रजापती इति चेतरेतरसाहित्यवाचिद्वन्द्वनिर्देशात्सूचितमित्यर्थः * अयमाशयः * यथा गावश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च

माषाश्च तस्य द्वादशशतं दक्षिणेति वाक्ये चशब्देनेतरेतरसहितस्य गवादिशब्दस्य दक्षिणाशब्दान्वयावगमात्समुदितानां गवादीनामेक-दक्षिणात्वावगतेर्द्धेनुर्दक्षिणेति विकृतौ विहिताया धेनोः समस्तद-क्षिणाविकारत्वं दशमे वक्ष्यते तथेहापि यज्जुहोति तदग्नये च प्र जापतये चेति चशब्दात्समुच्चितयोरेवाग्निप्रजापतिशब्दयोर्विधेय-कान्वयप्रतीतेः प्रतिपदं विधेरपर्यवसानेन विधिव्यापारभेदाभावा-त्पृथक् चतुर्थीनिर्देशात्कारकभेदप्रतीतेर्भिन्नयोरपि विधेयत्वे प्रत्य-यावृत्त्यप्रसक्तेः समुदितरूपस्य च विधेयत्वेन विधेयभेदाभावादने-कार्थत्वाप्रसक्तेर्देवताद्वयविधावपि न वाक्यभेदापत्तिरिति प्रपञ्चितं चैतत्तन्त्रसारे वाजपेयाधिकरणे ऽत्रापि तत्प्रख्याधिकरणे ऽस्माभि-रुपपादितमिति ग्रन्थगौरवभयान्न बहुप्रपञ्च्यते । यत्तु ग्रहाभ्यासेषु ज्योतिष्टोमावयवबुद्धिवत्सायम्प्रातर्होमयोरग्निहोत्रावयवबुद्ध्या भा-वेन तद्भेदव्यवहारस्यावयवविषयत्वायोगाद्भेदोपपादकत्वमुक्तं त-दप्यनुभाषणपूर्वं दूषयति * यस्त्विति * यथा दर्शपूर्ण-मासावृत्त्यात्मके दाक्षायणयज्ञे सकलयोर्दर्शपूर्णमासयोर्द्वि-रावृत्तेर्नावृत्तावयवबुद्धिस्तथाग्निहोत्रस्यापि सकलस्य वि-राड्वाक्याद्दशकृत्वो ऽभ्यस्तस्य द्वे आहवनीये द्वे गार्हपत्ये द्वे अन्वा-हार्यपचनइति वाक्यात्षड्कृत्वो ऽभ्यस्तस्य तस्य वा पुनस्याग्निहोत्र-स्य स च शतानि विंशतिश्च संवत्सरे सायमाहुतयः सप्त वा एव शतानि विंशतिश्च संवत्सरे प्रातराहुतय इति वाक्यान्तरालोचनया वा द्विरभ्यस्तस्य सायम्प्रातःकालयोरावृत्तेर्नावृत्तावयवबुद्धिरित्य-र्थः । नन्वेकस्मिन्काले ऽग्निहोत्रसाकल्ये सति दाक्षायणयज्ञवदा-वृत्त्यविधानात्प्रयोगसमाप्तेः कालद्वयेऽनुष्ठानप्रमाणाभावादाचारवि-रोधः स्यात्सूर्याग्निवाक्यविहितयोस्तु कर्मणोरग्निहोत्रवाक्येन समु-दायानुवादे प्रयोगवाक्यस्थेनाग्निहोत्रशब्देन कर्मद्वयग्रहणात्कालद्व-ये ऽनुष्ठानोपपत्तिरित्याशयेन स एव पूर्वपक्षी प्रत्यवतिष्ठते * न-न्विति * एकैकस्मिन्काले प्रयोगसमाप्तावपि सायं जुहोति प्रातर्जु-होतीति वाक्यान्तरप्राप्तयोः कालयोः प्रयोगापेक्षितत्वेन तच्छेषत्वा-वगतेर्यावज्जीवं सायम्प्रातर्जुहुयादिति प्रयोगशास्त्रार्थावधारणादङ्ग-त्वे ऽपि कालस्यानुपादेयत्वसाम्येनार्थान्निमित्तभूतजीवनविशेषण-त्वावगतेः कालावच्छिन्नस्य जीवनस्य निमित्तत्वात्प्रतिनिमित्तं च नैमित्तिकानुष्ठानस्य षष्ठे वक्ष्यमाणत्वान्नैमित्तिकहोमकरणं तावदेक-स्मिन्काले प्रयोगसमाप्तावपि यावज्जीवचोदनया भविष्यतीत्यनु-ष्ठानाविरोध इत्याशयेनैकदेशिनः परिहारं दूषयितुमुपन्यस्यति *

नेति * उभयत्रानुष्ठानस्यानेन प्रकारेण सिद्धावपि सायं होमे कृते ५०४।२
यजमानापद्यप्यृत्विग्द्वारा प्रातर्होमो ऽवश्यकार्यत्वाचारविरोधः प्रयोगभेदपक्षे दुष्परिहर इति दूषणमाह * सत्यमिति * अस्याचारस्यैकप्रयोगपक्षे न्यायमूलत्वप्रदर्शनार्थम् * प्रक्रान्तेत्युक्तम् * काम्यप्रयोगे वोभयत्रानुष्ठानविरोधो ऽपि दुष्परिहर इत्याह * किं चेति * नन्वेकस्मिन्काले ऽनुष्ठानात्फलसिद्धावपि कालान्तरे नैमित्तिकानुष्ठानोपपत्तेर्नाचारविरोध इत्याशङ्क्य * सर्वाङ्गसंयुक्तः फलार्थिना चेत्युक्तम् * कालद्वये सर्वाङ्गादरः फलप्रार्थनं च विरुध्येतेत्याशयः । प्रयोगैक्ये ऽत्वविरोध इत्याह * अभ्यस्तेति * एकदेशिपरिहारं दूषयित्वा स्वमतेन प्रश्नपूर्वं परिहरति*कथं पुनरिति * तिस्र एव साह्नस्योपसद इत्यादिवाक्यपर्यालोचनया पूर्वाह्णपराह्णोपसत्प्रयोगैक्यावसायात्पुरस्तादुपसदां प्रवर्ग्येण चरन्तीत्युपसत्पूर्वं प्रयोज्यत्वविधानेन प्रवर्ग्यस्यापि पूर्वाह्णापराह्णान्तस्यैकप्रयोगगतत्वावगतेस्तदुपमानेनाग्निहोत्रस्य कालद्वये ऽभ्यस्तस्यैकप्रयोगत्वं द्रढयितुं प्रवर्ग्ये ऽपि माप्रक्रमोपन्यासः । ननु सायम्प्रातर्होमयोर्भिन्नकर्मत्वे ऽग्निहोत्रवाक्ये समुदायानुवादस्यार्थवत्त्वाय समुदितयोः फलसाधनत्वावगमात्तत्समुच्चयसिद्धेर्नास्य वै शब्दयोगादनुवादसरूपस्य वचनत्वकल्पनापद्यते कर्मैक्ये तु वचनं विना कालद्वयसमुच्चयासिद्धेर्वचनत्वक्लेशापत्तिरित्याशङ्क्याह * भेदेति * विराड्वाक्याद्यालोचनेन दशकृत्वः षट्कृत्वो द्विर्द्विर्वैकस्मिन्काले ऽभ्यस्तस्याग्निहोत्रशब्दवाच्यत्वावगतेः कालद्वयाभ्यस्तकर्मसमुदायानुवादायोगाद्भेदपक्षे ऽपि वचनं विना समुच्चयो न सिद्ध्यतीत्याशयश्चशब्दादेव समुच्चयो न वाक्यादित्यर्थः । नन्वेवमपि कालयोगिनश्चशब्दात्कालसाहित्यावगतेः परस्परसहिते कालद्वये सकृदनुष्ठानापत्तेर्नाभ्याससिद्धिरित्याशङ्क्याह * न चेति* अनुपादेयत्वेन कालसाहित्यस्याशक्यसम्पादत्वाभ्यासेनैव कालद्वयान्वयः सम्पाद्य इत्यर्थः । ननु कालयोः कर्मण्युद्देश्यत्वात्समुच्चयस्य चोपादेयत्वात्समुच्चयविशिष्टकालविध्यनुपपत्तेः । स्वातन्त्र्येण कालसमुच्चयरूपानेकार्थविशिष्टविधौ वाक्यभेदः स्यादित्याशङ्क्याह*प्राप्तयोश्चेति * अतः सायम्प्रातरभ्यस्तमेकं कर्मेत्युपसंहरति * तस्मादिति * कर्मैक्ये ऽङ्गावृत्त्ययोगमाशङ्कितमनुभाषणपूर्वं परिहरति * यदिवेति * प्रयोगवेलायां कालापेक्षत्वादनुत्पत्तिवाक्यस्थत्वाच्चोपांशुयाजाङ्गभूतकालवदुत्पत्तिशेषत्वानवगतेः कालस्य प्रयोगाङ्गत्वेन विध्यवधारणात्प्रयोगस्य च साङ्गप्रधानविषयत्वात्प्रयोगावि-

धौ प्रधानस्याङ्गसाहित्येन विशेषणस्तस्य चोपादेयविशेषणत्वेन विवक्षितत्वात्कालद्वयान्वयेन साङ्गस्य द्विः प्रयोगो ऽवसीयते सवनीयपशौ तु प्रयोगैकदेशभूतानां वपाप्रचारादीनामनेककालान्वये ऽपि प्रयोगावच्छेदककालभेदाभावान्नेतिकर्त्तव्यतापत्तिरित्याशयः । प्रधानैक्ये ऽपि प्रयोगावयवभूतयोरभ्यासयोः सायम्प्रातः कालान्वयात्सायन्तनस्य प्रातस्तनस्येति व्यपदेशो यदप्याग्निसूर्यवाक्ययोः कर्मविधायित्वं निराकृत्य कर्मैक्यसिद्धये ऽग्निहोत्रवाक्यस्य कर्मविधायित्वं सिद्धान्तितम् * निष्प्रयोजनमित्युक्तम् * तदप्यनुभाषणपूर्वं परिहरति * यत्त्विति * दध्यादीनां विकल्पाविशेषे ऽपि अग्निसूर्यवाक्ययोः कर्मविधित्वे कर्मभेदाद्विकृतावेककर्मणि विकल्पो विभागो हि चोदनैकत्वादित्यष्टमाधिकरणन्यायेन सायम्प्रातर्होमाङ्गयोर्विकल्पेन प्राप्तेः । कौण्डपायिनां होमः सायम्प्रातर्वा कालाध्वनोरत्यन्तसंयोगइत्यत्यन्तसंयोगे द्वितीयास्मृतेरहरहर्वा चोदितत्वादिति सङ्कर्षे वक्ष्यमाणन्यायेन प्रत्यहं सकृत्कार्यः । सिद्धान्ते तु कर्मैक्यात्सायं प्रातः प्राकृतः प्रकृतिवदभ्यसितव्य इत्यभ्यासप्रयोजनवान् सिद्धान्त इत्यर्थः । दध्यादिवाक्यानां तु कर्मविधित्वपूर्वपक्षे दध्यादिद्रव्यकेषु दशसु कर्मसु यदग्नये चेत्यादिवाक्यैर्देवताविधानात्सम्प्रतिपन्नदेवतात्वेन दध्यादिद्रव्याणां साान्नाय्यद्वयवत्सहप्रदानं सिद्धान्ते तु विकल्प इति स्पष्टं प्रयोजनम् आघारे तु कर्मैक्ये ऽप्यूर्ध्वत्वादीनां भिन्नार्थत्वात्समुच्चयाविशेषे ऽपि कर्मभेदे ऽपि च समुदायीकरणार्थवत्त्वाय प्रयोगतन्त्रत्वाविशेषे ऽपि कर्मभेदे सत्यूर्ध्वत्वादीनां मध्ये यस्यान्तरायस्तद्युक्तं कर्मावर्त्तनीयं कर्मैक्ये तु गुणलोपे प्रायश्चित्तं नावृत्तिरिति प्रयोजनमद्रव्यसंयोगाच्चोदनापशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणो ऽर्थेन नन्वाघाराग्निहोत्रयोरङ्गाङ्गिसम्बन्धाभावेनाभ्यर्हितं पूर्वं निपततीत्यस्याविषयत्वादल्पाच्तरत्वेनाघारशब्दस्य पूर्वनिपातो युक्तः । इह तु पशुशब्दस्य घ्यन्तत्वे ऽपि लक्षणहेत्वोः क्रियाया इत्यादौ घ्यन्तस्य पूर्वनिपातव्यभिचारात्सोमस्य प्राधान्येनाभ्यर्हितत्वात्पशोः पूर्वतराभिधानमयुक्तमित्याशङ्क्याह * पशोरिति * न्यायनिष्ठे शास्त्रे न्यायव्युत्पादनादरविषयस्याभ्यर्हितत्वात्पशोश्च पूर्वपक्षस्य क्लिष्टत्वेन न्यायव्युत्पादनादरविषयत्वात् पूर्वनिपातो युक्त इत्याशयः । सूत्रे च पशुमात्रग्रहणे ऽपि दैक्षस्य चेतरेष्विति दैक्षस्य सर्वपशुप्रकृतित्वेन वक्ष्यमाणत्वादग्नीषोमीयस्यैव वरुणपाशाभ्यां वा एषो ऽभिधीयते यो दीक्षित इति दीक्षोपक्रमविधानेन दैक्षशब्दवाच्यत्वात्स

प्रवोदाहर्त्तव्य इति सूचयितुं भाष्ये ऽर्थवादावयवोदाहरणं हृदया-दींस्तु पशुशब्देनानुवदति * सोमशब्देन च रसमिति * पूर्वपक्ष-भाष्ये पशुसोमशब्दयोरप्यनुवादत्वाभिधानाच्छब्दद्वयस्य सन्देहवि-षयत्वमाह * द्वौ चेति * पशावपि यज्यनुवादेन पूर्वपक्षवचनव्य-क्तिं परमतेन दर्शयितुं तस्मिन्पक्षे हृदयादिवाक्येष्वेव यज्यनुमा-नात्पशुवाक्ये यजेरभावान्न शङ्का युक्तेत्याशङ्क्य देवतान्वयान्यथानुप-पत्त्या यत्पशुना यजेत तदग्नीषोमीयेणेति प्राप्तेष्वपि यागेषु * यज्यनुमानं युक्तमित्युक्तम् * सन्देहस्वरूपमाह * तत्रेति * कथं तर्हि भाष्यकृताधातुमात्रानुवादतावद्यतिगृह्णात्यभिहितकर्मविषयता-चोक्तेत्याशङ्क्याह * किमवद्यतीति * गृह्णात्यवद्यत्योर्यागानभिधाय-कत्वाद्यजतिचोदनादुपायिचोदनादित्यादावभिधानार्थत्वेन दृष्टस्या-पि चोदयतेरिहाभिधानार्थत्वानुपपत्तेराक्षेपापरपर्यायकल्पनावा-चित्वमङ्गीकृत्यावद्यतेर्यागीयद्रव्यसंस्कारार्थावदानवाचित्वेन याग-कल्पत्वविवक्षयावद्यतिसम्बन्धानुमितानामित्येवं व्याख्याते गृह्णा-तावेतद्व्याख्यानासम्भवेनापरितोषाद्विधिवाचित्वमङ्गीकृत्यावद्यति-गृह्णातिशब्दयोः प्रत्ययलक्षणार्थत्वाभ्युपगमेन व्याख्यान्तरं कृतं हृद-यादिरससमुदायवाचिनौ पशुसोमशब्दावित्यप्यनेन भाष्येणोपल-क्षितमिति प्रदर्शनशब्देनोक्तम्। ननूभयत्र यजेरनुवादकतायामालभ-तिशब्दो न युज्येतेत्याशङ्क्याह * आलभतिरपि चेति * अस्यां पूर्व-पक्षवचनव्यक्तौ भाष्यानार्जवापत्तेरवद्यतिगृह्णात्याक्षिप्तानां स्पर्श-नयागकर्मणां समुदायस्यालभतियजती वदितारावितिं यथाश्रुतं भाष्यं व्याख्यातुं स्वमतेन पशावालभत्यनुवादपूर्वपक्षवचनव्यक्ति-मङ्गीकृत्य सन्देहस्वरूपमाह * अथ वेति * अवद्यतियुक्तेषु वाक्येषु यागविध्यप्रतीतेः पशुवाक्ये यागानुवादायोगद्योतनाय *अवद्यता-वित्युक्तम् * नन्वेवं सति पूर्वपक्षे ऽपि पशुवाक्ये यागविध्यापत्तेः कः पूर्वोत्तरपक्षयोर्विशेष इत्याशङ्क्य यत्पशुशब्दलक्षितं हृदयाद्याल-भतेस्तदग्नीषोमीयं कुर्यादिति हृदयाद्यालम्भानुवादद्वारेणैकादशाना-मवदानानां प्रत्येकं देवतान्वयादेकादशयागाः पूर्वपक्षे सिद्धान्ते च पशुद्रव्यैक्येन देवतान्वयैक्यादेको याग इति विशेषो ऽभिहितः। लक्षणसङ्गतिश्चानेन भेदाभेदफलत्वात्सूचिता अनन्तरसङ्गतिस्त्वा-घाराग्निहोत्रवाक्यविहितयोः कर्मणोर्दध्यूदूर्ध्वादिवाक्यानां गुणवि-धित्वोपपत्तेकर्मविधित्वाभावात्प्रकृतकर्माभावेन समुदायानुवादे नि-रस्ते हृदयैन्द्रवायवादिवाक्यानां पशुसोमवाक्यविहितयोः कर्मणो-र्गुणविधित्वायोगात्कर्मविधित्वापत्तेः प्रकृतकर्मसद्भावात्पशुसोमवा-

क्ययोः समुदायानुवादत्वं भविष्यतीत्याशङ्कानिरासार्थत्वात्स्पष्टा न-न्वयव्यतिना स्पर्शनाक्षेपे ऽपि गृहृगातिना यागानाक्षेपाच्चेयं व्याख्या युक्तेत्याशङ्क्य यथावघ्रातो स्पर्शनाक्षेपस्तथा सोमे ऽपि यागाक्षेप इत्युक्ते तदुपपादनाय * अयमेवेत्युक्तम् * ग्रहणस्य यागपर्यन्तत्वं विना देवता-न्वयायोगाद्यागपर्यन्तत्वं सामानाधिकरण्योक्त्या विवक्षितं। यद्वा यथा पशौ पूर्वपक्षे बहवो यागाः सिद्धान्ते त्वेकस्तथा सोमे ऽपीत्युक्ते त-दुपपादनार्थं पूर्वपक्षे ग्रहणवाक्येष्वेव यागकल्पनाभिधानायायमे-वेत्युक्तं भाष्याञ्जस्यादालभत्यनुवादव्याख्यैव युक्ता न यज्यनुवाद-व्याख्येत्याह * तथा सतीति * भाष्यकृद्व्याख्याने ऽपि पूर्वपक्षस्य सौत्रत्वसिद्ध्यर्थमुपांशुयाजाधिकरणपूर्वपक्षसूत्रस्थेन पौर्णमासीव-च्छब्देनेहापि पूर्वपक्षाभिधानं सूचयत्पूर्वपक्षमारभते * तत्रेति * नन्विह रूपश्रवणात्कथं पौर्णमासीतुल्यतेत्याशङ्क्य सोमवाक्ये देव-तानवगतेरैन्द्रवाक्यानां च यागानुमानात्प्रागपर्यवसानेन वाक्या-न्तरानन्वयाद्देवतासमर्पकत्वानुपपत्तेर्यागानां च रूपत्वाभावादरूप-त्वमुपपादयति * तथा हीति * श्लोकं व्याचष्टे * न हीति * ननु दध्यादिवाक्यवदैन्द्रवायवादिवाक्येष्वपि विधिगौरवापत्तेः क-र्मविधित्वाभ्युपगमो न युक्त इत्याशङ्क्याह * यश्चेति * सिद्धान्ते चैन्द्रवायवादिवाक्येष्वपि देवताविशिष्टग्रहणविध्यभ्युपगमादुभ-यत्र गौरवापत्तिरित्याह * अपि चेति * तत्सन्निधेर्गुणार्थेन पुनः श्रुतिरित्यत्र चोपपदश्रुतौ सम्भवदनुवादस्य कर्मणो विधेयत्वनिषे-धाच्च सोमवाक्ये यागविधिरित्याह * किं चेति * सम्भवदनुवा-दत्वं यादृशशब्देनोक्तं पूर्वपक्षे सोमशब्दस्याप्यनुवादत्वात् * भवा-नित्युक्तम् * श्लोकं व्याचष्टे * एकत्रैवेति * सत्याङ्गतावेकत्रैव विधिशक्त्यभ्युपगमस्य न्याय्यत्वात्सम्भवेदनुवादे कर्मणि सति गुणे विधिशक्तिः संक्रामतीत्यग्निहोत्राधिकरणे ऽभिहित-मित्यर्थः। किं तावदित्यादिभाष्येणालभतियजत्योरनुवादत्वे ऽभिहि-ते हृदयादिरसद्रव्यकेषु यागेषु पशुसोमशब्दयोरप्राप्तार्थत्वेनानुवा-दायोगादुत्पत्तिशिष्टगुणाविरोधेन च विध्ययोगादानर्थक्यमाशङ्क्य हृदयादीस्त्वित्यनेन लक्षणया हृदयादिरसानुवादकतोक्ता तत्र पशु-वाक्ये देवताविध्यभ्युपगमाद्वाक्यभेदापत्तेर्द्रव्यविध्ययोगे ऽपि सो-मवाक्ये अथैन्द्रवायवादिवाक्येषु लता विधीयत इति भाष्ये द्रव्यवि-धेराशङ्क्यमाणत्वात्पक्षद्वयमाह * तत्रेति * ननु पशुशब्देन हृ-दयाद्यनुवादो देवतान्वयायार्थवान्सोमशब्देन तु रसानुवादो ऽन-र्थक इत्याशङ्क्य लक्षितलक्षणया नामधेयत्वेनोपयोगमाह * तत्रश्चे-

ति *, द्रव्ये रूढत्वादयागनामत्वेनावभासमानमप्यानर्थक्यपरिहारार्थं नामधेयं भवतीति च्विप्रत्ययार्थः । नामान्तरसद्भावान्नामानर्थक्यमाशङ्क्यते * नन्विति * स एष यज्ञः पञ्चविधो ऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इत्यादौ सोमशब्देनापि व्यवहारान्नानर्थक्यमिति परिहरति * यदीति * नन्वेवं सति समस्तवाक्यानुवादो ऽनर्थकः स्यादित्याशङ्क्याह * समस्तेति * यत्पौर्णमासीवाक्ये प्रयोगवाक्यगतसंख्योपजननं प्रयोजनमुक्तं तदेवात्रापीत्यर्थसोमशब्दस्यानुवादत्वमुक्तमुपसंहरति * तस्मादिति * नन्वैन्द्रवायवादिवाक्येषु द्रव्यदेवतान्वयाद्यागकल्पनोपपत्तेः क्रयादिवाक्येभ्यश्च सोमरसावगतेः सोमवाक्ये पूर्वपक्षसम्भवे ऽपि हृदयादिवाक्येषु देवताविरहाद्यागकल्पनानुपपत्तेर्हृदयादेश्च पशुप्रकृतित्वस्यान्यतो ऽनवगतेः पशुवाक्ये पूर्वपक्षो न सम्भवतीत्याशङ्कते * भवेदिति * पशुशब्देन हृदयाद्यनुवादं तावदुपपादयति * उच्यतइति* षष्ठान्त्यवक्ष्यमाणो दृष्टान्तः उत्तरार्द्धं व्याचष्टे * हृदयादिभिरिति * नन्वेवमपि यागानुवादो न सम्भवतीत्याशङ्क्याह * तत्र त्विति * आलम्भानुवादेनेह पूर्वपक्षो न यागानुवादेनेत्याशयः। यागानुवादमपि प्रौढ्योपपादयति *अथ वेति* पशुसान्नाय्ययोः पशुप्रभवत्वसाम्येन द्रव्यसारूप्यात्पशुयागस्याष्टमे सान्नाय्ययागविकारत्वाभिधानात्तेनैव न्यायेन हृदयाद्यवदानस्य द्रव्यसारूप्यात्सान्नाय्यावदानप्रकृतिकत्वावगतेः सान्नाय्यावदानस्य च यागीयद्रव्यसंस्कारार्थत्वेनास्यापि तथात्वावसायाद् हृदयादीनां संस्कार्यत्वान्यथानुपपत्त्या पूतीकफलचमसवद्यागान्वयप्रतीतेः प्रत्यवदानं यागकल्पनात्पशुवाक्ये यागसमुदायानुवादोपपत्तिरित्यर्थः। परमतत्वद्योतनायोत्प्रेक्ष्यमाणशब्दः। यच्च सोमवाक्ये प्रत्यक्षयजिसद्भावान्नैन्द्रवायवादिवाक्येषु तत्कल्पना युक्तेति दूषणं तदिहोभयत्राप्यानुमानिकत्वाविशेषान्नाशङ्क्यमित्याह * साधारणश्चेति * दश गृह्णातीति ग्रहणसमुच्चयदर्शनात्तस्य च यागार्थत्वाद्यागसमुच्चयप्रतीतेर्दशमो गृह्यते तृतीयो हूतय इति च द्वयोरपि क्रमदर्शनाद्यागैक्ये च दध्यादिवद्देवताविकल्पापत्तेः क्रमसमुच्चयानुपपत्तिप्रसङ्गाद्यागभेदार्थमपि ऐन्द्रवायवादिवाक्यानामेव यागविधिताश्रयणीयेत्यभिधानार्थमपि चेति भाष्यं व्याचष्टे *सोमेति* एतदेव संस्कारस्तु न भिद्येतेति सूत्रे खादिरतादिवैषम्यस्य वक्ष्यमाणत्वात्तद्दृष्टान्तेनोपपादयति * पश्येति * ननु भेदपक्षे ऽपि ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति प्रत्येकं ज्योतिःशब्दवाच्यस्तोमयोगनि-

मित्तज्योतिष्टोमशब्दवाच्यत्वात्प्रत्येकं फलान्वयेन यागविकल्पापत्तेः क्रमसमुच्चयदर्शनानुपपत्तिरित्याशङ्क्य समुदायानुवादबलात्समुदितानां फलान्वयावगत्याभिधानार्थमथ पुनरिति भाष्यं व्याचष्टे * मम त्विति * पशौ क्रमसमुच्चयदर्शनानुपन्यासस्याशयमाह * पशाविति * एतदेव विवृणोति * न हीति * ननु हृदयादिसमुच्चये ऽपि लोहितं निरस्यतीत्यादिवाक्यान्तरवशेन केषां चित्पश्ववयवानामपनयाच्च सर्वेण पशुनेष्टं स्यादित्याशङ्क्याह * यन्मात्रमिति * किं चिदपनयेति बाहुल्यात् सामस्त्यव्यवहारोपपत्तिरित्याशयः । नन्वेवं सत्यनिषिद्धेन हृदयाद्येकादशावदानातिरिक्तेनापि यागापत्तेरेकादशभ्य एव हृदयादिभ्यो ऽवद्येयमिति दशमाधिकरणसिद्धान्तो विरुध्येतेत्याशङ्क्याह * एतीति * न्यायात्सर्वप्राप्तावप्येकादशपशोरवदानानीत्यस्यानन्यप्रयोजनत्वादवयवान्तरपरिसंख्यार्थत्वेन तत्रत्यः सिद्धान्त इत्याशयः । समुच्चयांशेन त्वनुवादकत्वादिह लिङ्गत्वेनोपन्यासः । ननु सोमस्यापि दशमुष्टेस्त्रिपर्वणो बह्वुदकादिषु तस्य प्रादेशमात्रेण पात्रेण समस्तस्य ग्रहीतुमशक्यत्वात्सोमयागैक्ये ऽपि समस्तसोमसाधनकत्वादेव क्रमसमुच्चयदर्शनोपपत्तिरित्याशङ्क्याह *सोमे त्विति* उत्पत्तिवाक्ये सोमस्य समस्तचोदनाभावात्पशुवैषम्यं भाष्यकृतो ऽभिमतमित्याशयः । तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे*तस्मादिति*सूत्रे 'चोदनेत्येकवचनप्रयोगे ऽपि पशुसोमयोरिति सप्तमीद्विवचनेनोदाहरणद्वयपरिग्रहात्कर्मणोश्चोदने इति द्विवचनान्तेन व्याख्याय शुद्धकर्मचोदनाशङ्कानिरासार्थं प्रकारवाचिविधानशब्दप्रयोगेण विशिष्टचोदनात्वमुक्तं तत्स्पष्टत्वादव्याख्यायापूर्वद्रव्यसंयोगादित्येकं द्रव्यसंयोगलक्षणहेतुव्याख्यानार्थस्य कुत इत्यादिभाष्यस्य तात्पर्यं व्याचष्टे * इतीति * श्लोकं व्याचष्टे * यदि हीति * एवं विद्वानित्येवंशब्देन प्रकृताशेषरूपपरामर्शादशेषरूपप्रत्यभिज्ञाने ऽभिहिते विद्वच्छब्दान्वयेनैवंशब्दस्य यज्यनन्वयाद्यागरूपापरामर्शकत्वे तु द्रव्यं संयोगमात्रमनेनैव भाष्येणोक्तमिति सूचयितुम् * यदि वेत्युक्तम् * पशुविकारस्य हृदयादेर्लक्षणया पशुशब्देनाभिधानात्सोमविकारस्य च रसस्य सोमशब्देनाभिधानाच्च पूर्वद्रव्यसंयोगो ऽस्तीत्याशङ्कानिरासार्थत्वेन प्रकरणे ह्यनर्थको द्रव्यसंयोग इति सूत्रावयवस्य पशुसोमाख्यं द्रव्यं यागे संयोजयतीति व्युत्पत्त्या द्रव्यसंयोगशब्दोक्तः । पशुशब्दः सोमशब्दश्च प्रक्रियतइति व्युत्पत्त्या प्रकृते हृदयादौ रसे च मुख्यार्थत्यागापत्तेर्न प्रवर्त्ततइत्येवं व्याख्यानार्थं नन्वित्याशङ्का-

भाष्यं तावद्व्याचष्टे *. तत्रेति * नैतदित्यादिव्याख्याभाष्यं व्याचष्टे * तत्रेति * किं लक्षणाश्रयणे कारणं यदिह नास्तीत्यपेक्षयामाह * विस्पष्टे हीति* मञ्चाः क्रोशन्तीतिवत्परशब्दसामानाधिकरण्याभावे ऽपि गङ्गायां घोष इत्यादौ लक्षणां विना पदान्तरान्वयासम्भवे लक्षणादर्शनाद् *अनन्यथासम्भवे वेत्युक्तम्* ननूत्पत्तिशिष्टरसहृदयाद्यवरुद्धयोर्यागयोर्लताप्राणिविध्ययोगात्पशुशब्दस्य च प्रकृतहृदयाद्यनिवेशे देवताविधिपरे वाक्ये द्रव्यविध्ययोगेनानर्थक्याप्त्तेरस्त्यनन्यथा सम्भव इत्याशङ्क्याह * शक्यं हीति * यागान्तरविध्यभ्युपगमान्नैको ऽपि दोष इत्याशयः। अपूर्वयोः कर्मणोरिति सिद्धान्तोपक्रमस्थमपूर्वशब्दं उपांशुयाजाघाराग्निहोत्राधिकरणसिद्धान्तोपक्रमभाष्यस्थकर्मान्तरशब्दवदभ्युपेत्यवादत्वेन व्याचक्षाणः तस्मादित्युपसंहारभाष्यं तदनुसारितया व्याचष्टे * तेनेति * न ५०९।१ हि तस्य गुणार्थेनेति सूत्रावयवं प्रकृतेषु यागेष्वनर्थको द्रव्यसंयोग इत्येवमर्थानुवृत्तपूर्वावयवसहितमाशङ्कोत्तरत्वेन व्याख्यातुमथेत्याद्याशङ्काभाष्यमुत्पत्तिशिष्टरसावरुद्धे यागे प्रदेयतया लताविध्याशङ्कानुपपत्तेरयुक्तमाशङ्क्य प्रदेयप्रकृतित्वेन लताविध्याशङ्कार्थतया व्याचष्टे * कस्मादिति * भाष्यानारूढपशुग्रहणेन सिद्धान्ते द्वयोरपि प्रदेशप्रकृतित्वेन विधिः सूचितः। न सति भाष्यं मध्यप्रतीकेनोत्तरतयावतारयति * तत्राहेति*प्रदेयप्रकृतित्वेनापि विधौ शङ्किते गृह्णादिवाक्येष्वखण्ड्या धारया गृह्णातीति प्राकरणिकवाक्यान्तरालोचनेन धाराग्रहणायोग्यद्रव्यप्रतीतावपि स्वाभाविकद्रवत्वयुक्तस्योदकादेरपि धाराग्रहणोपपत्तेर्विकारद्रव्यानवगमेन सोममभिषुणोतीत्यादिवाक्यालोचनाद्विकारद्रव्यावगमाभ्युपगमे तु प्रकृतिद्रव्यस्याप्यवगमे प्रकृत्यनपेक्षणात्प्रदेयतयैव विधेयत्वं शङ्कनीयमित्यापाद्य श्रौतरसावरुद्धेषु यागेषु वाक्येन लताविध्यनुपपत्त्यभिधानार्थत्वेन भाष्यं व्याचिख्यासुरवद्यतिवाक्येषु हृदयादिविकारद्रव्यप्रतीतेस्तत्प्रकृतित्वेन पशुविध्याशङ्कापरिहारौ कस्मान्नोपन्यस्ताविस्याशङ्कानिरासपूर्वं व्याचष्टे * पशुस्तावदिति * ननुतद्धितश्रुत्यनुपात्तत्वान्न रसस्य लतातो बलीयस्त्वं प्रत्युत प्रकरणलभ्यत्वाद्दौर्बल्यमित्याशङ्कते * कथं पुनरिति * सास्य देवतेति सन्निहितविशेषवाचिसर्वनामास्य शब्दार्थे तद्धितस्मृतेः श्रौतत्वमाहोच्यत इति नन्वनुपात्तस्य द्रव्यविशेषस्य देवतान्वयो न सम्भवतीत्याशङ्क्याह* अधिकारेणेति* सन्निहितत्वोपलक्षितस्य द्रव्यविशेषस्य तद्धितश्रुत्या देवतान्वये कृते कस्येति निर्द्धारणापेक्षायां प्रकरणान्निर्द्धार्यत इ-

स्यर्थः । एतच्च तद्धितनिर्देशे श्रुत्येति गुणाधिकरणभाष्यव्याख्यावेलायां देवतासङ्गतिः श्रुत्या तद्धितान्तात्प्रतीयतइत्यादिवार्तिकेनोपपादयिष्याम इत्याह * गुणाश्चेति * वैश्वदेवाधिकरणव्युत्पादितान्यत्युत्पन्नशिष्टबलाबलाभिधानार्थं चैतद्भाष्यमिति सूचयितुं युक्त्यन्तरमाह * किं चेति * दुर्बलतरत्वसूचनार्थं प्रवृत्तापेक्षत्वं वाक्यान्तरस्य विशेषणम् । लतायाश्च दौर्बल्याद्रसावरुद्धेषु यागेषु विधातुमशक्यत्वे सति न केवलं प्रकृतप्रत्यभिज्ञानानुवादायोगाद्यागस्य विधेयत्वापत्तेः पुनर्विधानलक्षणादभ्यासाद्भेदः किं तु गुणादपीत्याह * ततश्चेति * व्याख्यातं भाष्यं दूषयितुमारभते * शक्येति * प्रकृतेषु यागेषु रसविरोधात्प्रदेयतया लताविध्ययोगे ऽपि व्रीहिवत्प्रदेयप्रकृतितया विध्युपपत्तेः शक्यपरिहारं भाष्योक्तं दूषणमित्याशयः । नन्वष्टाकपालादिशब्दानां संस्कृततद्धितान्तत्वात्ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यन्नित्याग्नेयवाक्यशेषाच्चाष्टाकपालशब्दस्य पुरोडाशविषयत्वावगमाद्विकारद्रव्यप्रतीतेः प्रकृत्यपेक्षायां युक्तः प्रकृतित्वेन व्रीहिविधिरैन्द्रवायवादिवाक्येषु तु धारावाक्याद्द्रवद्रव्यावगमे ऽपि विकारद्रव्यत्वानवगतेरभिषवादिवाक्यालोचनं तु प्रकृतिद्रव्यस्याप्यवगतेर्न लतायाः प्रकृतित्वेन विधिर्युक्त इत्याशयेन पृच्छति * कुत इति * विकारद्रव्यत्वाभावे ऽपि धानादिवत्कपालसंस्कार्यत्वोपपत्तेर्वाक्यशेषस्य च विष्णुरुपांशु यष्टव्य इत्यादिवदूर्जो ऽवरुध्या इत्यादिवच्च स्तुतिमात्रोपयुक्तस्य विध्युद्देशापेक्षितार्थसमर्पकत्वायोगादश्वशफमात्रः पुरोडाशो भवतीत्यादिविध्यन्तरालोचनाच्च पुरोडाशप्रतीत्या विध्युद्देशपर्यवसानोपपत्तौ स्तुत्युपयुक्तस्य रात्रिसत्रवत्पराधृत्त्यविधित्वकल्पनानुपपत्तेरष्टाकपालादौ प्रकरणानालोचने प्रकृतविकारद्रव्ययोर्द्वयोरप्यप्रतीतेस्तदालोचने च द्वयोरपि प्रतीतेः किं प्रकृतिको ऽसावित्यनपेक्षायामपि किं पुरोडाशप्रकृतिभूता व्रीहयस्तन्निष्पत्तौ व्यापारयितव्याः किं वा नो वासोजाघनीवद्यथा कथं चिन्निष्पन्नं व्रीहिमयपुरोडाशस्वरूपमात्रं व्यापारयितव्यमित्यपेक्षायां निर्वापावघातपेषणसंयवनपिण्डकरणादिनिष्पादकविधिदर्शनेन प्रयोगकाले निष्पादनावगमादसम्भवे ऽपि निष्पादकविध्यनालोचने च पर्णमयी जुहुर्भवतीत्यादिवत्प्रकृतिद्रव्यविधाने ऽपि यथा कथं चिद्विशिष्टद्रव्यलाभेनापि प्रयोगोपपत्तेः प्रयोगकाले निष्पादनाक्षेपापत्तेर्यथा व्रीहीणामविधानेसक्तुवदसंस्कार्यत्वापत्तेर्निर्वापादिविधीनामारादुपकारित्वप्रसङ्गाद्यागाङ्गत्वेनैव विहितेषु व्रीहिषु योग्यतया

पुरोडाशप्रकृतित्वेनाविरोधोपपत्तौ विरोधापादकसाक्षाद्यागसाधनत्वाङ्गीकरणानौचित्यात्प्रकृतितावसीयते तथा सोमे ऽपीत्याशयेनोत्तरमाह * यथैवेति * श्लोकं व्याचष्टे * विधीयमानं हीति * लताविशिष्टयागविधिपक्षे ऽपि चाभिषवेण ·लतास्वरूपनाशात्प्रदेयप्रकृतित्वेनैव यागाङ्गता तुल्येत्याह * अपि चेति * रसलतयोश्च ५।१०।५
विरोधाभ्युपगमे रसस्योत्पत्तिशिष्टत्वपक्षे लताया दौर्बल्यात्तदानुगुण्येन प्रवृत्तेस्तदापेक्षितप्रकृतित्वाङ्गीकरणेन विरोधः शक्यपरिहारः लतायास्तूत्पत्तिशिष्टत्वे दुष्परिहर इत्याह * अपि चेति * श्लोकं व्याचष्टे * रसस्येति * का तर्ह्यैन्द्रवायवादिष्वित्यादेर्भाष्यस्य गतिरित्यपेक्षायामुत्पत्तिशिष्टरसावरोधात्प्रदेयत्वेन लताविध्याशङ्कानुपपत्तेः प्रदेयप्रकृतित्वाशङ्कायाश्च निराकर्त्तुमशक्यत्वादुपेक्षणीयत्वं वक्तुमाह * तस्मादिति * पशुसोमाख्यगुणस्य प्रदेयप्रकृतित्वेन विधिरित्याशङ्का नोद्धाटनीयेति वाच्ये तन्निरामार्थस्य न हीति सूत्रावयवस्याप्युपेक्षणीयत्वसूचनायानुद्धाट्योत्तरं सूत्रं प्रस्ताव्यमिति लपपि प्रयुक्ते ऽवयवदोषेण सकलसूत्रापेक्षां प्रसज्यमानां निराकर्त्तुं समुदायेत्युक्ते गुणविधित्वाशङ्कायामनिरस्तायां कथं कर्मविधित्वासद्धान्तसिद्धिरित्याशङ्क्य पशावित्युक्तं प्राप्ते कर्मण्यनेकगुणविध्ययोगादेव तत्राशङ्का नोत्तिष्ठतीत्याशयः। सोमे कथं सिद्धान्तसिद्धिरित्यपेक्षायामुत्तरसूत्रेण गृह्णातिवाक्यानां कर्मविधित्वानिरासादिति सोमे त्वित्यनेनोक्तमिति योज्यम्। समुदायानुवादत्वमात्रं निराकृत्यमिति सुगमः पाठः। एवं तु सूत्रभाष्यकृतोर्द्वयोरव्यबुद्धिपूर्वकारित्वापत्तेः पूर्वत्रापरितोषेणोत्पत्तिशिष्टरसावरोधाद्यैन्द्रवायवादिवाक्यविहितेषु यागेषु लता विधातुं शक्येति पूर्वसूत्रावयवोक्तामुपपत्तिं चकारेणोत्पत्तिशिष्टरसावरोधे ऽपि तत्प्रकृतित्वेन लताविधिसम्भवरूपनिराकरणहेतुसूचनपूर्वमुत्तरसूत्रेणैन्द्रवायवादिवाक्यानां कर्मविधायित्वाभावान्न रसस्योत्पत्तिशिष्टतेत्येवं निराकृत्यैन्द्रवायवादिवाक्यानां कर्मविधित्वाभावलक्षणयैवोपपत्त्या सोमवाक्यस्य कर्मविधित्वं निर्णेतव्यमिति पक्षान्तरमाह * अथ वेति * निराकार्योपपत्त्युपन्यासस्यापि मन्दप्रयोजनत्वेनेहाप्यपरितोषात्स्वयमन्यथा सूत्रव्याख्यामारभते * पूर्वेति * पशुसोमवाक्योदाहरणे ऽस्य सूत्रस्य पूर्वपक्षोत्त्वशक्तिमाशङ्कते * कथं पुनरिति * गृह्णात्यवद्यातिवाक्योदाहरणाङ्गीकरणेन पूर्वपक्षे सूत्रं योजयितुं सन्देहस्वरूपं तावदाह * उच्यते इति * योजयति * किमिति * पशुसोमवाक्ययोरुत्पत्तिचोदनात्वे सति प्रकरणापेक्षा

गृह्णात्यवद्यतिवाक्येषु रसहृदयादिद्रव्यसंयोगो विधीयमानो न यागाङ्गत्वं प्रतिपद्येतेति मध्यमावयवे व्याख्याते ऽवदानग्रहणयोः पशुसोमसंस्कारार्थत्वेनाविरोधशङ्कानिरासार्थतयाशङ्क्य स्वरूपनाशकत्वात्संस्कारार्थत्वायोगाभिधानार्थत्वेन न हीति सूत्रावयवं व्याख्याय प्रदेयप्रकृतित्वेनाविरोधाशङ्कानिरासार्थतया तस्योत्पत्तिवाक्यैः प्रदेयत्वेन प्रकृतस्य रसहृदयादेः प्रकृतित्वलक्षणगुणार्थेन पशुसोमयोः संस्कारवाक्यैरेव सोमं क्रीणातीत्यादिवार्त्तिकोक्तेन न्यायेन सिद्धतया विध्ययोगात्प्रकृतेरसहृदयादौ प्रकृतित्वेन पशुसोमद्रव्यसंयोगो ऽनर्थक इति व्याख्यान्तरे ऽथ वेत्यनेन कृते मम त्वित्य-
५११।८ नेन पूर्वपक्षे ऽर्थवत्त्वोक्त्या पूर्वपक्षसूत्रार्थमुपसंहरति * तस्मादिति *

## अचोदकाश्च संस्काराः ॥ १८ ॥

पूर्वसूत्रसमर्थनार्थं गृह्णात्यवद्यतिवाक्यानां कर्मविधित्वपूर्वपक्षकरणे ऽप्यधिकरणत्रयस्य समुदायानुवादापवादार्थत्वेन पशुसोमवाक्ययोः समुदायानुवादपूर्वपक्षस्यैव विवक्षितत्वात्तन्निवृत्त्यर्थत्वेन तुशब्दस्थाने वाशब्दं व्याचष्टे * नैवेति * पशुसोमवाक्यस्थयोराख्यातशब्दयोः समुदायानुवादत्वनिराससाध्ये ऽवद्यतिगृह्णातिपराणां प्रत्ययानां यागाचोदकत्वस्य साक्षादहेतुत्वात्पूर्वाधिकरणसिद्धान्तहेतोश्च शब्दार्थस्य प्रयोगभूतत्वादित्यस्य निर्गुणाख्यातश्रुतिविषयत्वेनेहाभावात्तत्पूर्वाधिकरणसिद्धान्तहेतोरप्रकृतत्वादित्यस्य पूर्वाधिकरणे ऽपि प्रकृतकर्मसद्भावे निर्गुणश्रुतावपि पौर्णमासीवत्समुदायानुवादापत्तेरपेक्षितत्वेनानुषक्तस्यात्राप्यनुषङ्गं करोति * चोदना चेति * अप्रकृतत्वोपपादनार्थत्वेन प्रश्नपूर्वं सूत्रं योजयति * कथमिति * संस्कारविधिष्वपि यागकल्पनं पूर्वपक्षोक्तं निराकर्त्तुमारभते * तन्मात्रेति * ऐन्द्रवायवादिवाक्येषु तावत्सोमेन यजेतेति श्रुतयागप्रत्यभिज्ञानात्कल्पनानुपपत्ति * माहैवं हीति * भाष्यमप्यनेन व्याख्यातं भवति यागानुमानात्प्रागाग्नेयादिवाक्यवत्स्वार्थपर्यवसानं पूर्वपक्षोक्तमनुभाषणपूर्वं परिहरति * यदुक्तमिति * अतो ऽत्र नियोगापरपर्यायविधिविषयभूतपुंव्यापारलाभाद्वाक्यस्य सङ्गतार्थत्वं पर्यवसानमस्तीत्यर्थः । तल्लाभे पूर्णत्वात्
५१२।१ वाक्यान्तरसङ्गतिर्युक्तेति वा योऽयम् । श्लोकं व्याचष्टे * आग्नेय इति * समाप्यते शब्देन सङ्गतिशब्दस्य समाप्त्यर्थत्वं व्याख्यातम् । ननु ग्रहणभावनालाभे ऽपि यागं विना देवतान्वयासिद्धेः कथं वाक्यसमा-

प्तिरित्याशङ्क्याह * इदं त्विति * स्वकार्याक्षमत्वनिबन्धनत्वेनासमाप्तेर्विधिविषयलाभमात्राद्विधानाख्ये कार्ये विधिवाक्यस्य क्षमत्वसिद्धेः सापेक्षत्वे ऽपि समाप्त्युपपत्तिरित्याशयः। सापेक्षत्वानिबन्धनया त्वसमाप्त्या वाक्यान्तरानन्वयेन कस्य चिद्वाक्यस्य वाक्यान्तरानन्वयः स्यादिति दर्शयितुमाह * सर्वमेव हीति*समाप्त्यभिधानस्य प्रकृतोपयोगं दर्शयन्वाक्यान्तरान्वयार्थत्वेन सङ्गतिशब्दं व्याचष्टे * तेनेति * न सापेक्षस्यापि वाक्यान्तरान्वये सत्याग्नेयादिवाक्यस्यापि कस्मान्न स्यादित्याशङ्क्य विधिविषयालाभादित्याह*आग्नेय इति * पूर्वपक्षसूत्रस्थचोदनाशब्दसूचितं यागानुमानात् प्रागपर्यवसानं परिहृत्यावदानग्रहणयोः पशुसोमस्वरूपनाशकत्वेनोत्पत्तिशिष्टस्य पशुसोमद्रव्यस्य संस्कारलक्षणगुणार्थेन विध्ययोगात्प्रकरणे विधीयमानो हृदयादिरसः संयुक्तो ऽवदानग्रहणाख्यः पदार्थो ऽनर्थकः स्यादिति प्रकरणे हीत्यादिसूत्रावयवोक्तं सिद्धान्तदूषणमनुभाषणपूर्वं परिहरति * अथेति * सूत्रोक्तस्य दोषस्य सूत्रेणापरिहारे सूत्रकृतः शून्यहृदयत्वापत्तेश्चोदयतेः प्रेरणे स्मरणेन नुदिसमानार्थत्वान्नुदेश्चापनयनाख्ये बाधे प्रयोगाच्चोदकशब्दस्य बाधकवाचित्वमङ्गीकृत्यावदानग्रहणपदार्थाः संस्कारत्वात्पशुसोमयोरबाधका इत्येवमस्मिन्परिहारे सूत्रं योज्यम्।विशसनाभिषवादिना पशुसोमयोर्विनाशात्साधनत्वासम्भवाशङ्का द्वारशब्देन निरस्ता प्रदेयप्रकृतित्वेनैव पशुसोमयोः साधनतेत्याशयः। श्लोकं व्याचष्टे * यदीति * ननु न हि द्रव्यकथम्भावादतिदेशो ऽत्र कल्प्यतइति संख्याधिकरणवार्त्तिके द्रव्यस्येतिकर्त्तव्यताकाङ्क्षाया निराकरिष्यमाणत्वान्न पशुसोमयोरितिकर्त्तव्यतान्वयः सम्भवतीत्याशङ्क्याह * पश्विति * संख्याधिकरणपूर्वपक्षे सप्तदशानां पशूनामेकसाधनत्वेन प्रत्येकं साधनत्वाभावादितिकर्त्तव्यतानाकाङ्क्षत्वे ऽपीह साधनत्वसद्भावाद्युक्तेतिकर्त्तव्यताकाङ्क्षेत्याशयः।संस्कारवाक्येभ्य एव पशुसोमयोः प्रदेयप्रकृतित्वेन प्राप्त्युपपत्तेः प्रकृतित्वलक्षणगुणार्थत्वेन विध्ययोगात्प्रकृते हृदयादौ रसे पशुसोमद्रव्यसंयोगो ऽनर्थकः स्यादित्येवमर्थाङ्गीकरणेन प्रकरणे हीत्यादिसूत्रावयवोक्तं दूषणमनुभाषणपूर्वं परिहरति * यत्त्विति * उत्पत्तिशिष्टविरोधोत्तरस्यापि सौत्रतापिशब्देनोक्ता पशुसोमयोरविनियोगे क्रमोपकरणादिवाक्यानां सक्तुहोमादिवाक्यवदारादुपकारिकर्मविधायित्वापत्त्येन पशुसोमाक्षेपशक्तिरस्तीत्याशयः।या च हृदयादिभिः प्रकृतिद्रव्यापेक्षित्ते छागस्य वपाया मेदसो ऽनुब्रूहीति म-

न्त्रवर्णेन छागलाभात्तदन्तर्गतेनपशुत्वप्राप्तिरुक्ता सास्य मन्त्रस्य सूक्तवाकादिवत्कृत्यविनियुक्तत्वेनात्यन्ताप्राप्तार्थप्रापणाशक्तेर्विनियोजकस्य लिङ्गस्य सामर्थ्यलक्षणत्वात्तस्य च वाक्यशेषवत्सन्दिग्धार्थनिर्णायकत्वेनार्थाद्वा कल्पनैकदेशत्वादित्यत्र स्थितत्वादयुक्तेत्याह * न चेति * कथं तर्हि षष्ठ्यान्त्ये छागप्राप्तचर्माभिधानमित्याशङ्क्याह *पशिवति * अनेनैव यथैव पशुसामान्यइति वार्तिकोक्तस्य पूर्वपक्षस्य निरस्तत्वात्प्रसङ्गेनाथ वा सान्नाय्यं वा तत्प्रभवत्वादित्यनेन न्यायेनेत्यादिवार्तिकोक्तं पूर्वपक्षं निरस्यति * न चेति * तत्तश्च साधारणश्चायं तवाप्यानुमानिकयागाभ्युपगम इति यदुक्तं तदप्ययुक्तमित्याह * द्रव्येति * या च सान्नाय्यावदानप्रकृतित्वेन हृदयाद्यवदानानां यागीयद्रव्यसंस्कारार्थत्वाद्यागानुमापकतोक्ता सापि सान्नाय्यावदानस्य चतुरवत्तहोमविधिनार्थगृहीतत्वेनाविधेयत्वाद्विधेयानि हृदयाद्यवदानानि प्रतिप्रकृतित्वानुपपत्तेः संस्कारार्थत्वस्य चानङ्गत्वेनानतिदेश्यत्वादयुक्तेत्याह * न चेति * नन्वतिदेशाभावेऽप्यवदानत्वेन हेतुना यागीयद्रव्यसंस्कारार्थतानुमास्यतेऽत आह * न चेति * पूतीकानभिषुणुयात्तमस्मै भक्षं प्रयच्छेदित्यनयोस्तु प्रकृताभिषवभक्षप्रत्यभिज्ञानाद्यदि सोमं न विन्देत यदि सोमं बिभक्षयिषेदित्येकवाक्यत्वाच्च यागद्रव्यार्थत्वविज्ञानं युक्तमिति दृष्टान्तवैषम्यमाह * प्रतीकेति * प्रसङ्गाद्यश्चात्र पक्षे विशिष्टविध्याश्रयणे दोष इति वार्त्तिकोक्तं सोमवाक्ये विशिष्टविधितुल्यत्वं निरस्यति * सोम इति * नन्वैन्द्रवायवादिवाक्येषु यागविध्यभावे देवताया ग्रहणानन्वयाद्विशेषणविशेष्यत्वशून्ययोर्देवताग्रहणयोर्विधेयत्वापत्तेर्वाक्यभेदप्रसङ्गादालभतिवत्प्रकृतिवल्लिङ्गद्योतनाय गृह्णातिपरप्रत्ययैनैन्द्रवायवं कुर्यादिति वचनव्यक्त्याश्रयणेन विशिष्टयागविधिरवसीयतइत्याशङ्क्याह * न चेति * सोमरसमिन्द्रवायुदेवत्यं कर्त्तुं पात्रे गृह्णीयादिति विहिते यागमम्पाद्यत्वाद् द्रव्यदेवतान्वयस्य ग्रहणमात्रेणासिद्धावपि प्रकरणलभ्ययागान्वयासिद्ध्युपपत्तेर्न वाक्यभेद इत्याशयेन प्रश्नपूर्वमुपपादयति * कुत* इति देवताग्रहणं चेत्यनेन रूपेण विधेयानेकभावेऽपि प्रकरणलभ्ययागाख्यक्रियान्तरप्रसादेन देवताविशिष्टग्रहणविधिसम्भव इत्यर्थः । श्लोकं व्याचष्टे * शक्यते हीति * ग्रहैर्जुहोतीतिविध्यर्थस्य ग्रहणपात्रेषु ग्रहणमन्तरेणानिष्पत्तेरर्थप्राप्तग्रहणानुवादसम्भवाद्विशिष्टविधिगौरवमपि नास्तीत्यर्थप्राप्त्यभिधानेनोक्तं समासेत्यनेन देवताद्वयनिमित्तवाक्यभेदाशङ्का निरस्ता यागान्वयं विना

ग्रहणस्य देवतान्वयानुपपत्त्या शङ्कानिरासार्थत्वेन क्रियान्तरप्रसादेनेति व्याख्यातुम् * प्रकरणेत्युक्तम् * देवताग्रहणयोर्यागगुणत्वात्परस्परानपेक्षत्वे ऽपि यागद्वारा परस्परान्वयोपपत्तेर्देवताविशिष्टग्रहणविधिसम्भवाभिधानार्थम् * गुणेत्युक्तम् * यादृशं द्रव्यसम्बद्धमित्येतद्वार्त्तिकोक्तं प्रकृतयागसद्भावात्सोमवाक्ये यागविध्यसम्भवं परिहर्त्तुमाह * तस्मादिति * सोमवाक्यस्य यागविधित्वे गुणत्रयमाह * एवं च सतीति * समुदायानुवादाभावे ऽपि राज- ५१४।२
सूयवत्प्रयोगवाक्यस्यैकत्वसिद्धेर्ज्योतिष्टोमशब्दस्य च सोमद्रव्यकयागवाचित्वाद्दीक्षणीयादिव्यावृत्तिसिद्धेरानर्थक्यमित्याशयः । आद्यसूत्रोक्ताया युक्तेः सिद्धान्ते ऽनुपपत्तेः पूर्वपक्षे तद्योजितं पशुसोमवाक्ययोस्तु विधित्वसिद्धान्तो ऽतो युक्त एवेति सूचयन्सिद्धान्तमुपसंहरति * तेनेति *

## तद्भेदात्कर्मणो ऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्यात् भेदो द्रव्यगुणीभावात् ॥ १९ ॥

पशुविषयायाश्चिन्तायाः पर्यवसितत्वं भाष्योक्तमुपपादयति * क्रमेति * क्वाधिकरणे कीदृशी बोद्धव्यतीत्यपेक्षायामाह * पशोरिति * अग्नीषोमीयं पशुमालभेतेति तद्धितेनाष्टाकपालादिवत्समस्तपशोर्दैवतान्वयात्प्रदेयत्वलक्षणहविष्ट्वावगतेः समस्तादवदाने पशोरेकहविष्ट्वं समस्तचोदितत्वादिति सूत्रेण पूर्वपक्षिते प्रत्यङ्गं वा ग्रहणवदङ्गानां पृथक्प्रकल्पनत्वादिति सूत्रेण पशुस्वरूपस्य विशसनेन नाशितत्वात्प्रदेयत्वानुपपत्तेः पृथक्कल्पितेभ्यश्च हृदयादिभ्यो ऽवदानविधानात्तद्धितोक्तस्य देवतान्वयस्य साक्षादसम्भवादगत्या व्यवहितविषयत्वावगतेः प्रत्यङ्गं हविष्ट्वेनावदानस्य सिद्धान्तयिष्यमाणत्वात्प्रत्येकमङ्गानां हविष्ट्वविवक्षयोत प्रत्यङ्गमित्युतशब्दं पूर्वान्निपात्य साङ्गानां हविष्ट्वे सिद्धे तद्विशेषचिन्तासां सर्वाङ्गविवक्षया प्रत्यङ्गमुतैकस्मादित्यावृत्त्या योज्यं हृदयजिह्वावक्षोयकृद्वृक्कौ सव्यन्दोरुभे पार्श्वे दक्षिणाश्रोणिगुदं तृतीयमित्येकादशदैवतान्यवदानानि परिगणितानि।सोम इति परिहारप्रतिज्ञाभाष्यं व्याचष्टे *सोमे त्विति * इन्द्रवायवा इति परिहारभाष्यं व्याचष्टे * वाक्येनेति * ततो विकल्पिष्यन्ते इत्यध्याहारेण यदि शब्दान्वयः वाक्यव्यतिरेकवाचिना तु शब्देन प्रकरणसूचनात्प्रकरणेन तु यागमङ्गत्वात्सर्वासां समुच्चय इति सर्वशब्देन समुच्चये सूचिते प्रकरणेनाप्यन्वये तु द्व्यार्थत्वाद् विकल्पः कस्मान्न भवतीत्याशङ्क्यान्योन्यनैरपेक्ष्येणान्व-

याभावाद्विकल्पानापत्त्यभिधानार्थम् * युगपदित्युक्तम् * वाक्ये-
नान्वये समुच्चयः कस्मान्न भवतीत्याशङ्क्य यत्र दध्ना जुहोतीत्यादौ
वाक्येनान्वयश्चोद्यते तत्र तुल्यार्थत्वादसमुच्चय इत्युक्ते प्रकरणेना-
प्यन्वये तुल्यार्थत्वाविशेषमाशङ्क्यान्योन्यसापेक्षतुल्यार्थत्वाभावात्स-
मुच्चयानापत्त्यभिधानार्थं निरपेक्षेणेत्यनेन पृथक्शब्दोक्तं नैरपेक्ष्यं
व्याख्यातम्। आद्यं श्लोकं व्याचष्टे *यदीति * य इमाः पुनरित्यादि-
युगपदेव सम्बन्ध्यन्तइत्यनेन सर्वास्त्विति श्लोकावयवो व्याख्यातः
देवतानामक्रियात्मकत्वात् प्रकरणग्रहणानुपपत्तिमाशङ्क्य स-
र्वेत्यनेन ग्रहणाख्यक्रियाद्वारा तदुपपादितं द्वितीयं श्लो-
९।१।५।१४ कं व्याचष्टे * तत्र नामेति *एतदेव प्रश्नपूर्वकमुपपादयति * कि-
मिति * नन्विन्द्रवाय्वादीनां देवतात्वेनैव सामर्थ्यात्प्रत्येकं च देव-
तात्वावगतेः प्रत्येकमेव सामर्थ्यमवसीयतइत्याशङ्क्याह * नन्वि-
ति * ननु त्यज्यमानद्रव्योद्देश्यत्वमात्रेण देवताया यागनिष्पादक-
त्वात्प्रत्येकमेव चोद्देश्यत्वप्रतीतेरेकैकया देवतयास्त्वेव यागसिद्धि-
रित्याशङ्क्याह * सत्यपि चेति * यागरूपनिष्पत्तावपि यागाभ्यासा-
त्मकज्योतिष्टोमरूपनिष्पादनसामर्थ्यस्य शब्दैकसमधिगम्यत्वाद्देव-
ताविनियोजकशब्दकल्पनायाश्च प्रकरणाधीनत्वात्तस्य चापर्यायप्र-
वृत्तित्वान्न प्रत्येकं सामर्थ्यं प्रमाणमस्तीत्याशयः । नन्वेकार्थास्तु वि-
कल्परन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्येति द्वादशाधिकरणे तुल्या-
र्थत्वमात्रेण विकल्पस्य वक्ष्यमाणत्वात् प्रत्येकत्वविशेषणमयुक्तमा-
शङ्क्याह * प्रत्येकमिति * दधिमधुपयोघृतं धाना उदकं तण्डुलास्त-
त्संसृष्टं प्राजापत्यमिति चित्रेष्टिद्रव्याणां तुल्यार्थत्वे ऽप्यन्योन्यसा-
पेक्षत्वेन विकल्पाभावाद्विशेषणार्थवत्तेत्याशयः । दृष्टान्ते ऽन्योन्यनै
रपेक्ष्यमुपपादयति * वाक्येति * ननु ग्रहणद्वारा देवतानां यागा-
न्वयात्तत्र च वाक्येन प्रत्येकमेव विनियोगात्प्रत्येकं तुल्यार्थताव-
सीयत इत्याशङ्कानिरासार्थं भाष्यकारस्यादृष्टसंस्काराभिधानमिति-
सूचयितुमाशङ्कां तावदाह * नन्विति * ग्रहणासंस्कारस्यादृष्टार्थ-
त्वेन प्रमाणान्तरतो भेदाभेदानवधारणान्न तादर्थ्येन विहितानां भि-
न्नानां देवतानामैकार्थ्ये प्रमाणमस्तीत्याशङ्कानिरानिरासार्थमथ पुन
रित्याद्येवमपरेष्वपि ग्रहणेष्वित्यन्तं भाष्यं ग्रहपात्रे सामग्रहणं
विना ग्रहैर्जुहोतीतिविध्यर्थानिष्पत्तेर्ग्रहणस्य दृष्टार्थत्वादयुक्तमाश-
ङ्क्योद्देश्यत्वेन देवताया ग्रहणसाधनत्वाद्यागवच्च ग्रहणस्य देवतो-
द्देशाधीननिष्पत्तित्वाभावेन ग्रहणं देवतोद्देशस्यादृष्टार्थत्वात्तद्विशिष्ट-
रूपेण ग्रहणस्यादृष्टार्थताभिप्रेतेति सूचयन्परिहरति * सत्यमिति *

ग्रहणे देवतान्वयस्यादृष्टार्थत्वान्नैकार्थ्यमिति वदता ग्रहणसंस्कारार्थत्वेन देवताविधानात्तत्र देवतोद्देशस्य दृष्टार्थत्वायोगात् ग्रहणेनादृष्टः संस्कारो जन्यतइति भाष्यार्थः * सूचितः * ननु निर्वापादिष्विव देवतोद्देशस्य यक्ष्यमाणदेवतास्मृत्यर्थत्वान्नादृष्टार्थतेत्याशङ्कते * कथमिति * ग्रहणान्वयात्प्राग्देवताया यागेऽन्वये सति देवतास्मृत्या प्रधानोपकारासिद्धेर्ग्रहणे देवतोद्देशः स्मृत्यर्थः स्यान्न त्विह तथास्तीति परिहरति * उच्यतइति * नन्वन्यत्राविनियोगेऽपि यागवद्ग्रहणे देवतोद्देशस्यादृष्टार्थत्वं भविष्यतीत्याशङ्क्य विनेत्युक्तं देवतोद्देश्ययागावयवत्वात्तेन विना यागासिद्धेर्यागसिद्ध्यर्थमेव तत्रोद्देशः ग्रहणावयवत्वाभावात्तु नोद्देशेन विना ग्रहणसंस्कारासिद्धिरित्याशयः। श्लोकं व्याचष्टे * यदि हीति * ततः शब्देन तदित्यव्ययं व्याख्यातं श्रवणशब्देन कर्मव्युत्पत्त्या देवतावाचिशब्दाभिधानाद्देवतोद्देशो ऽदृष्टार्थमिति नपुंसकलिङ्गसिद्ध्यर्थं विवक्षितः ननु प्राग्यागान्वयानवगमे ऽपि ग्रहणान्वयद्वारा यागान्वयज्ञानात्तत्स्मृत्यर्थत्वाविरोध इत्याशङ्कते * ननु चेति * विधीयमानस्य ५१६।२
देवतोद्देशस्य प्रयोजनापेक्षावेलायां देवतास्मृतेः प्रधानोपकारित्वानवगमेन प्रयोजनत्वयोग्यत्वानवधारणात्प्रयोजनत्वकल्पना न युक्तेत्याशयेन प्रतिज्ञाहेतु प्रश्नपूर्वं परिहरति * नैतदिति * ननु विधीयमानाया एव देवतायाः प्रकरणात्प्रधानार्थत्वावगतेस्तत्स्मृतेः प्रयोजनत्वयोग्यतावधारयिष्यतइत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * ऐन्द्रवायवमिति * देवतानां वाक्येन ग्रहणसंयोगादसंयुक्तग्राहिणा प्रकरणेनाग्राह्यत्वे ऽभिहिते व्रीहिप्रोक्षणादिवदविरोधात्संयुक्तस्यापि ग्राह्यत्वोपपत्तिमाशङ्क्याक्रियात्मकत्वेन प्रकरणग्रहणायोग्यतोक्ता। ननु पश्चादपि देवतास्मरणस्य प्रयोजनत्वयोग्यतावधारणे दृष्टे सम्भवत्यदृष्टकल्पना न न्याय्येत्याशङ्क्यानुनिष्पादिनो ऽपि शास्त्रेण प्रयोजनतया ऽनङ्गीकृतत्वान्न तेन शास्त्रस्यादृष्टप्रयोजनकल्पने * प्रवृत्तिः प्रतिबध्यतइत्युक्तम् * तस्यापीत्युपसंहारभाष्यं देवतोद्देशसमुच्चयद्वारग्रहणसमुच्चयाभिधानार्थत्वेन व्याचष्टे * तेनेति * नन्वदृष्टार्थत्वाद्देवतोद्देशसमुच्चये ऽपि ग्रहणानां स्वरूपेण दृष्टार्थत्वाद्विकल्पो भविष्यतीत्याशङ्क्य न चेत्यभ्यासाधिकरणभाष्योक्तगुणभेदनिमित्तकर्मभेदन्यायाभिधानं यदि ग्रहणानि न समुच्चीयन्तइति वाच्ये भेदानभ्युपगमे ऽभ्यासेनापि समुच्चयः स्येत्स्यतीति प्रौढिप्रदर्शनार्थम् * नावर्त्ततइत्युक्तम् * अत्रैव सूत्रं योजयति * एष तावदिति * यागाभ्यासविषयतया

वक्ष्यमाणार्थान्तरसूचनार्थस्तावच्छब्दः संस्कारशब्दोक्ते ग्रहणेन विशेषणभूतदेवतासंयोगोपस्थापनात्तच्छब्देन परामर्शोपपत्तिः गृहीतस्य ग्रहणायोगाशङ्कानिरासार्थं द्रव्यपृथक्त्वादिति सूत्रावयवपूरणार्थम् * देवतासंयुक्तेत्युक्तम् * कथं देवतोद्देशभेदस्य ग्रहणाभ्यासे हेतुतेत्याशङ्कानिरासार्थमनर्थकं हीत्यवयवं सकृद् ग्रहणेनैकदेवतोद्देशस्याशक्यत्वेनानुष्ठानायोगात्तच्छब्दानर्थक्याभिधानार्थत्वेन व्याख्यातुम् * संयोगान्तरेत्युक्तम् * अतो भिन्नार्थत्वाद्देवतानां समुच्चयोपपत्तिरित्यभ्यासोक्तिप्रयोजनाभिधानार्थत्वेन भेदशब्दं व्याख्यातुम् * तेनेत्युक्तम् * देवतोद्देशस्य द्रव्यविषयत्वादेकस्मिंश्च द्रव्ये ऽनेकदेवतोद्देशायोगात्प्रकृतिप्रत्ययपौर्वापर्यनियमाच्च धात्वर्थभेदेन भावनाभेदवत्प्रकृत्यर्थदेवताभेदेन प्रत्ययार्थद्रव्यभेदस्य न्याय्यत्वाद्देवतोद्देशभेदेन द्रव्यभेदे ऽप्येकस्मिन् ग्रहणे बन्धने खादिरत्वादिवच्छिकल्पनानेकद्रव्यान्वयसम्भवेनानेकदेवतान्वयोपपत्तेर्न देवतोद्देशभेदाद्ग्रहणाभ्यासकल्पना युक्तेत्याशङ्कानिरासार्थं द्रव्यगुणीभावादित्यवयवं पूरयितुम् * संस्कार्यमित्युक्तम् * खादिरादेस्त्वसंस्कार्यत्वेन बन्धनं प्रति गुणत्वान्न बन्धनभेदोपपादकतेत्याशयः । ननूक्तप्रकारेण ग्रहणे देवतोद्देशस्यादृष्टार्थत्वात्तत्समुच्चयेन ग्रहणाभ्यासप्रतीतेर्दशमो गृह्यते दश गृह्णातीति ग्रहणविषयक्रमसमुच्चयदर्शनोपपत्तावपि विना तेन यदि वासौ न सिद्ध्यतीत्यनेनैव न्यायेन यागे देवतोद्देशस्य दृष्टत्वात्प्रकरणगृहीतानामपि देवतानां विभागमन्त्रादिवच्छिकल्पोपपत्तेर्यागाभ्यासानापादकत्वात्तृतीयो हूयत इति यागविषये क्रमसमुच्चयदर्शने नोपपद्येयातामेवेत्याशयेनाशङ्क्याह * एतद्देवतावन्तीति * देवतासंयोगानामदृष्टार्थत्वादित्यनेनैव देवतासमुच्चयस्योक्तत्वाद्यागे ऽपि देवतानां समुच्चयसिद्धिरिति प्रतिज्ञाते तदुपपादनार्थमिन्द्रवाय्वादिदेवतायुक्तानां ग्रहणानां द्रव्यदेवतान्वयापादकयागापेक्षत्वाद्यागस्य च श्रुत्यादित्रयालभ्यमानदेवतत्वेनाविहितदेवताकतया देवतापेक्षत्वात्प्रकरणस्य चाक्रियात्मकदेवताविनियोगे व्यापाराभावाद् ग्रहणविनियोगद्वारा देवताविनियोजकत्वावगतेर्देवताविशिष्टात्मना च ग्रहणानामदृष्टार्थत्वाद्यागप्रकरणेन समुच्चितानां ग्रहणमुक्तं तद्विनियोजकमिति तच्छब्दो ऽध्याहार्यः । ननु भगो वां विभजत्वित्यादिमन्त्राणां प्रकरणग्राह्यत्वे ऽपि विकल्पदर्शनान्न या-
५१७।५ गे देवतासमुच्चयसिद्धिरित्याशङ्कते * नन्विति * मन्त्राणामप्यक्रियात्मकत्वेन साक्षात्प्रकरणग्राह्यत्वात्पौरोडाशिकसमाख्यया ल-

ध्वसामान्यसम्बन्धेन लिङ्गेन विभागाङ्गत्वज्ञानोत्तरकालं तद्द्वारा प्रकरणेन ग्रहणाल्लिङ्गेन च विभागे विकल्पेन मन्त्रविनियोगाद्वैषम्यमाह * सत्यमिति * ननु समाख्ययैव सामान्यसम्बन्धलाभे प्रकरणानपेक्षेण लिङ्गेन त्रैयम्बकपुरोडाशविभागे ऽपि मन्त्रविनियोगापत्तेः प्रकरणबाधान्न दार्शपौर्णमासिकपुरोडाशविभागमात्रार्थत्वं स्यादित्याशङ्क्य * विभागान्तरेष्वित्युक्तम् * आनर्थक्यपरिहाराया-पूर्वसाधनलक्षणार्थं प्रकरणमप्यनुग्राह्यमित्याशयः। ग्रहणानां भेदे ऽपि सामान्यरूपेणैक्यविवक्षया देवतासमुच्चयाभिधानम्। नन्वेवमपि यागस्य प्रत्येकं देवताग्रहणसमर्थत्वाद्विकल्पो भविष्यतीत्याशङ्क्य * तत्रेत्युक्तम् * ननु द्वारभूतानां ग्रहणानामपि यागीयद्रव्यपृथक्करणार्थत्वेन दृष्टार्थत्वाद्देवतोद्देशस्यापि च यागापेक्षितदेवतासमर्पणेन दृष्टार्थत्वोपपत्तेर्विकल्पस्य न्याय्यत्वात्तद्द्वारा ऽपि प्रविष्टानां देवतानां विकल्प एव युक्त इत्याशङ्कते * नन्विति * एकदेवतासमर्पणेन यागस्य नैराकाङ्क्ष्यसिद्धेरनेकदेवताविशिष्टग्रहणाम्नानानर्थक्यप्रसङ्गाद्देवताविकल्पार्थे चानेकाम्नाने गुणपरत्वेन ग्रहणभेदकत्वायोगाद् ग्रहणस्य भेदाभावेन विकल्पानुपपत्तेस्तद्द्वारा देवताविकल्पायोगादनेकदेवताविशिष्टग्रहणानुष्ठानायैवानेकाम्नानस्याङ्गीकार्यत्वादनेकदेवत्ययागानवगतेश्चानेकदेवताविशिष्टग्रहणानुष्ठानस्य दृष्टार्थत्वायोगाद्विकल्पानुपपत्तिरिति परिहरति * भवेदिति * ग्रहणस्य दृष्टार्थत्वे ऽपि तद्भेदस्यादृष्टार्थतेति भेदशब्देनोक्तम्। ननु पुनः श्रुतेर्देवतान्वयार्थत्वेन भेदकत्वाभावाद् ग्रहणस्य भेदानुपपत्तेस्तत्राप्यैकार्थ्याद्देवतानां विकल्पापत्तेः कथं तद्द्वारा यागे समुच्चयः स्यादित्याशङ्क्याह * अवश्यं चेति * निर्गुणग्रहणाश्रुतेः केन चिद्वाक्येन देवताविशिष्टग्रहणापत्तेरङ्गीकार्यत्वाद्वाक्यान्तरैरुत्पत्तिशिष्टदेवतावरुद्धग्रहणे देवतान्तरविध्यशक्तेः ग्रहणान्तराण्येव विधीयन्तइत्याशयः। वस्त्वशक्तेरपि गुणस्यात्र भेदकतोत्पत्त्यतिशयं वक्तुमारम्भते * न हीति * युगपत्तावत्सर्वोद्देशो ऽशक्य एवेत्याह * यौगपद्यं तावदिति * नन्विन्द्रवायुमित्रावरुणाद्यास्तैः प्रातिपदिकैर्निर्दिश्य सर्वान्ते सकृच्चतुर्थ्युच्चारणेन सर्वा युगपदुद्देष्टुं शक्या इत्याशङ्क्याह * अदेवताभूत एव चेति * सकृच्चतुर्थीनिर्देशे समुदायो देवत्वेनोद्दिष्टः स्यात् न चास्य देवतात्वमस्तीत्यर्थः। क्रमोद्देशासम्भवं प्रतिज्ञाहेतुप्रश्नपूर्वमुपपादयति * न चेति * विशिष्टविधिना विशेषणविशेष्ययोर्देवतोद्देशग्रहणयोरिन्द्रवायूद्देशविशिष्टं ग्रहणं कार्यमिति युगपद्विधानाद्यागाख्यकरणभेदेन च यौगप-

घसम्पादनशक्तेर्विक्षेपः ।ननु ज्ञानाद् गृह्यमाणे द्रव्ये देवतोद्देशः कार्यः न च ग्रहणकाले सर्वदेवतोद्देशः शक्य इत्यर्थः । त्रिचतुरदेवतोद्देशसम्भवे ऽप्यल्पाभिप्रायेण * एकमित्युक्तम् * नचैककाल्यासम्भवे ऽपि प्रागूर्ध्वं वा ग्रहणप्रत्यासन्ने काले क्रमेण सर्वोद्देशः सम्भविष्यतीत्याशङ्क्याह * यदि त्विति * (प्राकृतदेवतोद्देशनाशापत्तेरपि क्रमेणोद्देशो न भवतीत्याह * किं चेति * दास्यामीति
६१८।४ त्यागरूपतेतिकरणेन परामृष्टा । श्लोकं व्याचष्टे *यदिति*[1]) एकदेवतोद्देशेन त्यक्ष्यामीति सङ्कल्पितस्य तदानीमित्युक्तस्याप्यन्यत्राविनियोज्यत्वम् *प्रायशब्देनोक्तम् * इन्द्रवायुभ्यां गृह्णामीति शब्दोच्चारणरूपस्योद्देशस्याध्वर्यवत्वे ऽपि त्यागसङ्कल्परूपोद्देशं विना तस्यापर्यवसानात्तस्य च यजमानादन्येन कर्त्तुमशक्यत्वात् * यजमानइत्युक्तम् * पूर्वपक्षीत्युक्तेरुपलक्षणार्थत्वम् * पूर्वसङ्कल्पेत्यनेनोक्तम् * गुणहेतुकभेदोक्तिमुपसंहरति * तेनेति * एवं ग्रहणस्वरूपस्य दृष्टार्थत्वे ऽपि देवतोद्देशविशिष्टरूपेणादृष्टार्थत्वाभिधानपरतया भाष्यं व्याख्यायेदानीं स्वरूपेणैव दृष्टार्थत्वाभिधानपरतया व्याख्यातुमाह * किं चेति * श्लोकं व्याचष्टे * देवतोद्देशेति* प्रकरणालोचनेन रसस्य प्रदेयत्वावसायात्तत्सिद्धेश्च पाचनाद्यसंस्काराधीनत्वात्पूयमानावस्थेनेत्युक्तम् । उत्पत्तिवाक्यमात्रालोचने तु लतायाः प्रदेयत्वप्रतीतेः क्रयातिरिक्तसंस्काराणामदृष्टार्थत्वं प्रौढ्या वक्तुं क्रयोत्तरकालतोक्ता रसाविधानमेव पुरोगशादिवैषम्याभिधानेन सूचयितुमाह * यत्र त्विति * ननु ग्रहैर्जुहोति चमसैर्जुहोतीति विध्यर्थस्य ग्रहचमसपात्रेषु ग्रहणमन्तरेणासिद्धेस्तत्सिद्ध्यर्थत्वाद् ग्रहणं दृष्टार्थमेवेत्याशङ्क्याह *न चेति* ग्रहचमसविध्योरप्यदृष्टादृष्टार्थत्वात्तद्द्वारा ग्रहणस्यापि प्रधानं प्रति दृष्टोपकारित्वाभावाददृष्टार्थतेत्याशयः । सोमस्य यागसाधनत्वविधिकाले ग्रहचमसस्थत्वविधौ सत्यन्यत्रस्थस्य साधनत्वाभावाद् ग्रहचमसस्थत्वं दृष्टार्थं स्यादुत्तरकालं तु प्रकरणालोचनयागवत्तस्यापि तत्स्थत्वस्य साधनानन्तर्गतेरदृष्टार्थतेति सूचनायोत्पत्तिशब्दः । अतो न केवलं नानादेवतोद्देशजन्यादृष्टभेदनिष्पत्त्यर्थग्रहणानि समुच्चेतव्यानि किं तु स्वजन्यादृष्टभेदनिष्पत्त्यर्थमपीत्यदृष्टार्थत्वोक्तिप्रयोजनमाह * तेनेति * दृष्टार्थत्वे ऽपि ग्रहणस्य ग्राह्यभेदात्समुच्चयाभिधानार्थं ग्रहणं चेति भाष्यं व्याचष्टे * दशेति * कृत्स्नस्य ग्रहणं नावकल्पतइत्याभिधानमनिष्टापादकत्वादयुक्तमाशङ्क्य समुच्चयं विनेत्यध्याहारेण व्या-

१ अयं पा० २ पु० ना० ।

ख्यातुं स कृत्स्नः सोमो न ग्रहणभेदमन्तरेण शक्यते *
ग्रहीतुमित्युक्तम् * दशमुष्टेरभिषवे सति रसस्याल्पत्वादेक- ५।१९।२
स्मिन्पात्रे ग्रहणोपपत्त्याशङ्कानिरासार्थत्वमुदककलशेषु संस्कारा-
भिधानं व्याख्यातुम् * नियतेत्युक्तम् * यानि चैवाभिषूयन्ते पु-
ष्पमूलफलैः शुभैरिति मिश्रीकरणे ऽभिषुणोतिप्रयोगदर्शनात् मि-
श्रीकृतवाच्यभिषुतशब्दः प्रादेशमात्रोक्तिप्रयोजनमल्पशब्देनोक्तम् ।
नन्वयागसाधनभूतसोमावयवग्रहणस्यादृष्टार्थत्वोपपत्तेः कृत्स्नस्यैव
श्रौद्धताया न्याय्यत्वात्कृत्स्नग्रहणसमर्थमहापरिमाणपात्रोत्पादनेनै-
कस्मिन्पात्रे कृत्स्नस्य सोमस्य ग्रहणमुपपत्स्यतइत्याशङ्कानिरासार्थं.
यद्यपि चेत्यादिना ऽवकल्पेतेत्यन्तं भाष्यं श्रुतपरिमाणपात्रकलशं
त्यागेनाश्रुतपात्रान्तरोत्पादनाशङ्कानुपपत्तेर्नित्यवद्विहितानामपि चै-
कार्थ्ये व्रीहियवादिवदगत्या विकल्पाश्रयणोपपत्तेर्देवतासमुच्चयश-
ङ्कानिरासार्थस्य च कृत्स्नस्य ग्रहणे हीतिभाष्यावयवस्यैतस्या इति
सङ्कल्प इत्यादिवार्त्तिकेन व्याख्यातार्थत्वान्न व्याख्यातम्।नन्ववयवशो
ग्रहणेन गृह्यभेदाग्रहणाभ्यासोपपत्तेस्तद्विषयक्रमसमुच्चयदर्शनोप-
पत्तावप्यवयवशो गृहीतस्यापि सोमस्यैकीकरणेन कृत्स्नस्य सकृद्या-
गसाधनत्वोपपत्तेस्तृतीयो हूयते इति यागविषयक्रमसमुच्चयदर्शनानु
पपत्तिरित्याशङ्कानिरासार्थं तस्मादित्यादिभाष्यं तात्पर्यतस्ताव-
द्व्याचष्टे * तथावस्थेन चेति * भेदेन गृहीतस्य सोमस्यैकीकर-
णायोगाद्द्विदावस्थितस्यैव यागनिष्पादकत्वावगतेरनभ्यस्तस्य च या-
गस्य तथावस्थितसर्वसोमविषयसमीहितकार्योपयोगित्वकरणलक्ष-
णसम्भावनयाभ्यसितव्यो याग इत्यर्थः । येन कारणेन यागाभासो
भाष्यकृतोक्तस्तेन कारणेन ग्रहणाभ्यासवद्यागाभ्यासे ऽपि सूत्रं
योज्यमित्याह * तेनेति * योजयति तद्भेदादिति दृष्टार्थत्वे ग्रहणस्य
भेदकप्रमाणाभावेन भेदायोगाद्भाष्यकृतोक्तं तद्भेदमनादृत्य सं-
स्कारेण संस्कार्यद्रव्योपस्थापनात्तच्छब्देन परामर्शः। यागवेलायामे-
कीकरणे प्राक् पृथक्करणमनर्थकमिति भाष्यकृद्व्याख्यानं सूत्रादप्र-
तीतेरनादृत्य यागानभ्यासे द्रव्यपृथक्त्वमनर्थकमित्येवं व्याख्यातु
* मशेषमित्युक्तम्* पश्ववयवानामिव सोमावयवानामप्यसर्वत्या-
गोपपत्तिमाशङ्क्यैकादशपशोरवदानानीति वदिहावयवान्तरपरिसं-
ख्याभावात्पशुवैषम्याभिधानार्थत्वेन पृथक्कृतस्य कृत्स्नस्य द्रव्यस्य
यागं प्रति गुणीभावाद्यागानुष्ठानभेद इत्येवं व्याख्यातुम्* अत इत्यु-
क्तम् * अङ्गैः स्विष्टकृतं यजतीत्यादिना अवयवान्तराणामन्यत्र
विनियोगवत्सोमावयवानामन्यत्राविनियोगेनानर्थक्यपरिहारायोग-

सूचनार्थो ऽतः शब्दः। वाक्यान्तरैः कल्पितभेदावस्था यस्यौत्पत्तिकस्य द्रव्यस्य तस्य यद्यागं प्रति गुणत्वं तदंशेनेत्यर्थः । तात्पर्यतो व्याख्यातं भाष्यमवयवशो व्याचिख्यासुरनर्थकं हि स्यादिति सूत्रावयवव्याख्यानार्थं नानेति भाष्यं कथमशक्यतत्यपेक्षायामुपपादयितुमाह * तद्धीति * सूत्रावयवोक्तोपपत्त्यभिधानात्सूत्रव्याख्यानार्थतैकध्यनिरासभाष्यस्य सूचिता भाष्योक्तामुपपत्तिं व्याचष्टे * न चेति * पुनरेकीकरणादित्यनुषङ्गः भागव्यवस्थानुपपत्त्याशयेन भाष्योक्तामुपपत्तिं व्याख्याय सर्वदेवतोद्देशानुपपत्त्याशयेन व्याचष्टे * न चेति * प्रस्तरप्रहरणोत्तमप्रयाजवत्क्रमेण सर्वा देवता उद्दिश्य सर्वतस्त्यागोपपत्तेः सर्वदेवतोद्देशानुपपत्तिपरिहारसम्भवे ऽपि भागव्यवस्थानुपपत्तिरशक्यपरिहरेत्याह * तथा कृते ऽपि चेति * सर्वदेवतोद्देशेन सकृद्दाने कृते ऽपीत्यर्थः । ननु वायव्यैन्द्रवायववत्सङ्करो ऽपि न दोषायेत्याशङ्क्याह * प्रकल्पिते चेति * सङ्करे भागनानात्वकल्पनानर्थक्यापत्तेरेकपात्रा गृह्यन्त इति वचनेत्सङ्करविध्यभावात्सङ्करो ऽनर्थक इत्याशयः । नन्वैकध्यकरणाशक्तावप्येकेन भागेन विहितयागनिष्पत्तेर्नाश्रुताभ्यासकल्पना युक्तेत्याशङ्कानिरासार्थं न चेति भाष्यमेतद्देवतावन्ति ग्रहणानीत्यादिवार्त्तिकेन व्याख्यातार्थत्वात् ज्योतिष्टोमशब्दस्याभ्यस्तयागरूपवाचित्वेनाभ्यासस्य ज्योतिष्टोमश्रुत्युक्तत्वाभिधानार्थं च तासु चेति भाष्यं न त्विह प्रत्येकं ज्योतिष्टोमनिवर्त्तनसामर्थ्यमित्यादिवार्त्तिकेन सर्वास्वेवेज्यमानासु श्रुतो ज्योतिष्टोमाख्यो यागो निर्वृत्तो भवति नैकस्यां देवतायामिति व्याख्यातार्थत्वान्न देवतान्तरमिति च भाष्यं प्रकृतदेवताविनिर्वृत्यत्वादेव च श्रुतो यागो न देवतान्तरमाकाङ्क्षत्यन्यथा देवताशून्यत्वेनारूपत्वाच्छ्रुतो यागो न निर्वर्तेतेत्येवं स्पष्टार्थत्वात्कृत्स्नेन चेत्यादि च भाष्यं दश मुष्टीर्मिमीतइति चेत्यादिवार्त्तिकेन भाष्यान्तरव्याख्यानार्थेनापि तस्मात्प्रकल्पनभेदादिभाष्यसमुदायतात्पर्यव्याख्यानार्थतयावस्थितेन चेत्यादिवार्त्तिकसहितेनार्थाद्भेदो द्रव्यगुणीभावादिति सूत्रावयवव्याख्यानार्थत्वेन व्याख्यातत्वादव्याख्याय तस्मिंश्चेत्येत्यभ्यासोपपादनप्रयोजनाभिधानाभिप्रायं तस्मादिति परिचोदनापरिहारोपसंहारार्थं च भाष्यं निगमनपूर्वकमेकहेलया व्याचष्टे * तस्मादिति * दशेति ग्रहणसमुच्चयदर्शनं दशम इति क्रमदर्शनं तृतीयमित्येकमेव प्रकृत्यंशेन समुच्चयदर्शनं प्रत्ययांशेन च क्रमदर्शनं यथासङ्कल्पितस्य पृथगवस्थितस्य कृत्स्नस्य सोमस्य प्रदानात्सर्वदेवतासमुच्चयाच्चोपपन्नमित्यर्थः । स-

मुदायानुवादापवादस्य कर्मभेदापवादसिद्ध्यर्थत्वाल्लक्षणसङ्गतिरप्यस्तीति सूचयन्नधिकरणार्थमुपसंहरति * तेनेति * ननु कर्मैक्ये ऽपि तत्तद्देवतोद्देशेन पृथक् द्रव्यत्यागे सत्यनुष्ठाने विशेषाभावात्किं चिन्तायाः प्रयोजनमित्याशङ्क्याह * प्रयोजनमिति * प्रकृतौ विशेषाभावे ऽपि कर्मभेदे सत्यकर्मणि विकल्पो विभागो हि चोदनैकत्वादित्याष्टमाधिकरणन्यायेनैकस्यैन्द्रवायवादिवाक्यविहितस्य यागस्य विकृतौ विकल्पेन विध्यन्तातिदेशाद्विकल्पेनैकस्य धर्माः कार्याः सकृच्च यागः कर्मैक्ये यथा प्रकृताविति विशेष इत्यर्थः । ऐन्द्रवायवादिवाक्यैश्च यागविधावैन्द्रवायवेन यजेतेति वचनव्यक्त्यापत्तेर्ज्योतिष्टोमस्यापि स्वार्थविहितद्रव्यदेवतावत्त्वलक्षणव्यक्तचोदनत्वादेकाहाहीनसत्रेष्वव्यक्तचोदनत्वेन ज्योतिष्टोमसादृश्याभावान्न तदीयविध्यन्तप्रवृत्तिः सोमवाक्ये । ननु विधौ द्रव्यश्रवणे ऽपि स्वार्थविहितदेवताराहित्येन ज्योतिष्टोमस्याप्यव्यक्तचोदनत्वात्तत्सादृश्येनैकाहादिषु ज्योतिष्टोमिकविध्यन्तप्रकृतिरिति प्रयोजनान्तरं त्वव्यक्तासु तु सोमस्येत्यष्टमाधिकरणेन सुज्ञानत्वान्नोक्तम् ।

संख्याकृतकर्मभेदाधिकरणम् ॥७॥

## पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ २१ ॥

संख्यानिमित्तभेदविचारस्याभ्यासनिमित्तभेदविचारेण सकृच्छ्रुतेरभ्यासप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात्समातिं दर्शयितुमाह
* गत इति * प्रासङ्गिकचिन्तायाः सम्बन्धित्वेन प्रसञ्जकचिन्ताबु- ५२०॥१
द्धिस्थकरणसामर्थ्याद्यथा यत्प्रसक्त्या या चिन्ता क्रियते तत्समाप्तौ प्रसञ्जकचिन्ता बुद्धिस्था भवति तथापवादकाचिन्ताया अपि सम्बन्धित्वाविशेषेणापवाद्यचिन्ताबुद्धिस्थीकरणसामर्थ्याद्यदपवादेन चिन्ताया चिन्ता क्रियते तत्समाप्तावपवाद्यचिन्तापि बुद्धिस्था भवतीत्यधिकरणत्रयकृतया समुदायानुवादापवादचिन्तया ऽभ्यासानिमित्तभेदापवादभूतायाः समुदायानुवादचिन्तायाः पौर्णमास्यधिकरणकृताया बुद्धिस्थीकरणात्तद्वारा समुदायानुवादापवाद्याभ्यासचिन्ताया बुद्धिस्थत्वात्तत्सङ्गत्याभिधानोपपत्तिसूचनायाभ्यासानिमित्तभेदापवादानन्तरं तदपवादत्वेन प्रसङ्गो बुद्धिस्थत्वं यस्येति विग्रहाभ्युपगमेनाभ्यासापवादापवादः प्रसङ्गशब्देनोक्तः । सोमयागस्यैकत्वे ऽप्यभ्यासेन क्रमसमुच्चयदर्शनोपपत्तिवत्तिस्र आहुतीरिति त्रित्वसंख्याया अभ्यासेनोपपत्तेर्न कर्मभेदकत्वेत्यनन्तरोक्ताभ्यासोपजीवनेन पूर्वपक्षकरणादनन्तरसङ्गतिसूचनायेदानीं शब्दः । ननु प्राजा-

पत्यवाक्ये ऽभ्यासेन पूर्वपक्षाकरणान्नेदानीं शब्दसूत्रानन्तरसङ्गतिः सम्भवतीत्याशङ्क्याह * तत्रेति * द्रव्यसंख्यानिवृत्त्यर्थं स्वशब्देन कर्माणि परामृष्टे समिधो यजतीत्यादिबहुत्वसंख्याया अप्युदाहरणत्वोपपत्तेस्तन्निवृत्त्यर्थम् * चोदिता इत्युक्तम् * समिदादिनामधेयस्य देवतायोगनिमित्तत्वात्समिधो ऽग्न आज्यस्य व्यन्त्वित्यादिमन्त्रवर्णप्राप्तदेवताबहुत्वानुवादोपपत्तेर्न कर्मभेदकतेत्याशयः।एकादश प्रयाजान्यजतीत्याद्युत्पन्नकर्मसंख्यानिवृत्त्यर्थमुत्पद्यमानत्वविशेषणं पार्वणौ जुहोत्याज्यभागौ यजतीत्याद्युत्पद्यमानकर्मगतसंख्यान्तरग्रहणायादिशब्दः । सर्वत्रानन्यपरपुनः श्रुत्या कर्मोत्पत्त्यवगतेर्न प्रमेयानुप्रवेशित्वापत्तिः सकृच्छ्रुत्या कर्मैक्यावगतेर्विज्ञातसंख्ये कर्मण्येकादशप्रयाजानित्यादिवदनपेक्षितपदान्तरोपात्तसंख्यानिवेशायोगादावृत्तिकल्पनया च संख्यानुग्रहोपपत्तेर्न कर्म भेद इति वक्ष्यमाणाशयेन पूर्वपक्षमाह * सकृदिति * आख्याते कर्मसंख्यानुपादानाद्वाक्यान्तरश्रुतयागसम्भवे चैन्द्रवायवादिवाक्ये यागकल्पनानुपपत्तिवत्पदान्तरश्रुतसंख्यासम्भवात्स्वपदसंख्याकल्पनानुपपत्तेरनिर्ज्ञातसंख्यत्वात्कर्मस्वरूपे संख्यानिवेशोपपत्तेः । पृथक्त्वैकार्थनिवेशित्वाच्चैकातिरिक्तसंख्याया भेदं विनानुपपत्तेः संख्यापि भेत्त्रीति वक्ष्यमाणाशयेन सिद्धान्तमाह * इतीति * धात्वर्थनामत्वेनाहुतीतिशब्दस्याहुतीरिति संख्याया धात्वर्थविषयत्वावधारणाद्धात्वर्थमात्रभेदकत्वं होमशब्देन सूचितम्।पृथक्त्वेन विनेत्यनेन यत्र पृथक्त्वं तत्र निवेश इत्येवं पृथक्त्वैकार्थनिवेशवाचित्वेन पृथक्त्वनिवेशशब्दो व्याख्यातः । यस्त्वभ्यासेन संख्यानुग्रहो ऽभिहितः स न युक्त इत्याह * न चेति * कथं तर्हि दशमे पशुपुरोडाशस्याराद्रुपकारित्वनिरासेन देवतासंस्कारत्वे सिद्धान्तिते सौत्रामण्यामाश्विनसारस्वतैन्द्रेषु पशुष्वैन्द्रसावित्रवारुणानां पुरोडाशानां पशुदेवतासंस्कारत्वायोगमाशङ्क्य तन्निरासार्थे ऽभ्यासो वा प्रयोजवदेकदेशो ऽन्यदेवत्य इति सूत्रे तद्यथा पशौ पञ्चानां प्रयाजानां चोदकेन प्राप्तानामेकादशसंख्या विधीयते सा चान्तरेणाभ्यासं नावकल्पत इत्यभ्यस्यन्ते प्रयाजा इत्यभ्यासेन संख्यापूरणं भाष्यकृद्वक्ष्यतीत्याशङ्क्याह * अगत्या सा हीति * इह त्वनिर्ज्ञातसंख्यत्वात्स्वरूपभेदोपपत्तेर्नागतिरस्तीत्याह * सम्भवति चेति * चतुः शब्दार्थे चशब्दः । एतदेवोपसंहरति * तस्मादिति * अत एवैकाविंशेनातिरात्रेण प्रजाकामं याजयेदित्यादिस्तोमवृद्धावागमेन संख्यापूरणं द-

१ पार्वणं जुहोतीति २ पु० पा० ।

शमे वक्ष्यते इत्याह * तथा चेति * पूर्वपक्षाशयं विवृणोति * ननु चेति * सिद्धान्ताशयं विवृणोति * नेति * निष्पन्नरूपत्वेनाप्रतीतिरसत्वम्। ननु तिङ्वाच्यायाः संख्यायाः सुब्वाच्यसंख्यावत्प्रकृत्यर्थविषयत्वावगतेः कथं धात्वर्थस्यासंख्यतेत्याशङ्क्याह * या हीति * तिङ्वाच्यायाः संख्यायाः प्रकृत्यर्थविषयताया स्मृत्याचारविरोधान्नानुमातुं शक्येत्याशयः। भावनाग्रहणं दृष्टान्तार्थम्। ननु तिङ्वाच्यस्यैकत्वस्य धात्वर्थगामित्वाभावे ऽपि निःसंख्यधात्वर्थानुष्ठानाशक्तेः संख्यापेक्षायां सकृच्छ्रुत्यैकत्वावगतेर्न पदान्तरोक्तसंख्याश्रयणं युक्तमित्याशङ्क्याह * तत्रेति * सिद्धान्तमुपसंहरति * तस्मादिति * कर्मसंख्यानुदाहार्यत्वे कस्माद्भाष्यकृता द्रव्यसंख्योदाहृतेत्याशङ्क्याह * यद्यपीति * तत्रेति सन्देहभाष्यं यागकल्पकप्राजापत्यशब्दार्थभूतदेवताविशिष्टद्रव्यसप्तदश्यात्कर्मसप्तदश्यप्रतीतेः पूर्वपक्षायोगेनाक्षिपति * कुत इति * सास्य देवतेति सर्वनामार्थे ५२२।१ तद्धितप्रवृत्तेः सर्वनाम्नश्च सन्निहितपशुपरामर्शित्वात्पशुशब्दस्य बहुवचनान्तत्वेनैकशेषत्वावधारणात्तत्परामर्शित्वसिद्धये सर्वनाम्नो ऽप्यस्य चास्य चेति सप्तदशकृत्व उच्चार्यैषामिति सरूपैकशेषं कृत्वा प्रजापतिर्देवतेति देवतासम्बन्धे प्राजापत्य इति तद्धितः कार्यः। सन्निहितपरामर्शित्वे ऽपि वा सर्वनाम्नस्तद्धितान्तपदान्तर्गतत्वेन बहुवचनान्वयात्प्रागपरिपूर्णे तद्धितान्ते पदे पदान्तरान्वयायोगात्पशुशब्दगतबहुवचनालोचनेनैकशेषाप्रतीतेः। पशुशब्दस्य च तद्धितविषयसमर्पकत्वेन के प्राजापत्या इत्यपेक्षायामन्वयात्तद्गतस्य बहुवचनस्य प्राजापत्यशब्दगतबहुवचनोक्तसंख्यानुवादित्वावगतेः। सर्वनाम्नस्तद्दर्शनैकशेषत्वकल्पनायोगात्तद्धितान्तानामेव शब्दानामेकशेषत्वं न सर्वनाम्न (इति सर्वनामैकशेषत्वसदसद्भावसन्देहे तत्तद्द्रव्यदेवतान्वयभेदाभेदसन्देहात्कर्मभेदादसन्देहमुपपादयितुमाह * उच्यत इति * यो बहुवचनान्यथानुपपत्त्यैकशेषः कथ्यते किमयं तद्धितान्तानां प्राजापत्यशब्दानामेव कृतः स न युक्तो भवेन्न तु सर्वनाम्नः[1]) कार्य इति सिद्धान्तवचनव्यक्तिः कृतैकशेषाणां वा सर्वनाम्नां पश्चात्कृतेन तद्धितेन देवतासङ्गतिरिति पूर्वपक्षवचनव्यक्तिरितरेतरयोगाख्यचार्थस्मृतद्वन्द्वापवादत्वेनैकशेषस्येतरेतरयोगवाचित्वावगतेरितरेतरयोगिनां चेतरेतरसापेक्षत्वेनासामर्थ्यापत्तेरेकशेषे कृते तद्धितानुपपत्तिप्रसङ्ग इति पूर्वपक्षदूषणसूचनार्थं पश्चादुक्तवचनव्यक्तिद्वयस्य प्रातिलोम्येन पूर्वसिद्धान्तपक्षोपयोगितामाह * य-

१ अयं पा० ३ पु० ना०।

दीति * सप्तदशानामित्यनेन पशुसमूहस्य द्रव्याख्यसम्बन्ध्यैक्ये सम्बन्ध्यैक्यसिद्धये ऽभिहिते द्रव्यैक्ये ऽपीन्द्राय रथन्तरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय रैवतायेन्द्राय शाक्वरायेतिवद्देवताभेदे सम्बन्धभेदापत्तेस्तच्छङ्कानिरासाय * एकस्याश्चेत्युक्तम् * कुक्कुटावानय मिथुनं करिष्याम इत्यादिविरूपैकशेषस्यार्थप्रकरणसापेक्षत्वाद्विलम्बेनावगतेः शीघ्रप्रतीतिसूचनार्थः सरूपशब्दः किं तावदिति पूर्वपक्षप्रतिज्ञाभाष्यं व्याचष्टे * किं तावदिति * (कुत इत्यादिभाष्येण प्रश्नजिज्ञासोपन्यासपूर्वं सप्तदशपशुसमूहस्यैकदेवतासङ्कल्पेनोपपत्तिं यागैक्ये हेतुत्वेनोक्तामुपपादयितुमाह * कुत इति *[1]) विग्रहवाक्यस्य तद्धितपदार्थकथनार्थत्वाद्विग्रहवाक्यस्थसर्वनामपरामृष्टस्य पशुशब्दार्थस्य तद्धितप्रत्ययार्थत्वावगतेः पशुशब्दस्थेन बहुवचनेन तद्धितप्रत्ययार्थस्य पशुद्रव्यस्य तद्धितोत्पत्तेः प्राग्विग्रहवेलायामेव बहुत्वोपलम्भात्प्राजापत्यशब्दस्थस्य बहुवचनस्य तदनुवादित्वोपपत्तेस्तद्धितान्ते प्राजापत्यशब्दे बहुवचननिमित्तैकशेषत्वकल्पनायोगात्सर्वनाम्नामेवैकशेषः कार्यो न तद्धितान्तानामेवेत्याशयः । प्राजापत्यशब्दस्य चैकशेषत्वकल्पने तस्यावृत्तिपूर्वकत्वात्केवलप्रत्ययप्रयोगासम्भवेन प्रकृतिनिरपेक्षतद्धितमात्रवृत्त्ययोगात्प्रकृतिप्रत्यययोर्द्वयोरप्येकशेषकल्पनापत्त्या गौरवं स्यात्सर्वनाम्नस्त्वेकशेषकल्पने गौरवानापत्तिरित्याशयेनोपपत्त्यन्तरं * माहेतीति *इतिकरणेनोक्तप्रकारपरामर्शात्तद्धितान्तैकशेषत्वाभावएव प्रजापतिप्रातिपदिकात्मिकायां प्रकृतौ प्रत्यये चोभयत्रैकशेषत्वं न भवेद्येन गौरवं नस्यादित्येवं चशब्दयोरध्याहारेणोपपत्त्यन्तरं योज्यम्।द्वयोरिति वाच्ये प्रत्ययानन्तरं बहुवचनश्रुतेस्तत्रैकशेषकल्पनोपपत्तावपि प्रकृतौ बहुवचनाश्रुतेर्नैकशेषकल्पना युक्तेति सूचयितुम् * प्रकृतावित्युक्तम् * पूर्वपक्षे लाघवोक्त्या सिद्धान्ते गौरवं सूचितमुपपादयितुमाह * यो हीति * (ननु प्रजापत्यशब्दस्थबहुवचनान्यथानुपपत्त्योभयोरेकशेषकल्पना युक्तेत्याशङ्क्य प्राजापत्यशब्दप्रतिपादके बहुवचनानुपलब्धिरुक्ता[2]) ननु प्राजापत्यशब्दस्थबहुवचनोपपत्त्यर्थं प्राजापत्यर्थशब्दे प्रत्ययार्थबहुत्वस्यावश्यदर्शनीयत्वात्तस्य च प्राजापत्यशब्दैकशेषं विना दर्शयितुमशक्यत्वात्प्रत्ययमात्रस्य चैकशेषत्वायोगाद्युक्तैवोभयोरेकशेषकल्पनेत्याशङ्क्य प्रत्ययार्थबहुत्वस्य विगृह्यमाणप्राजापत्यशब्दवेलायां कृते-

१ अयं पा० ३ पु० ना० ।

२ अयं पा० ३ पु० ना० ।

त्तेर्द्रव्यभेदाद्यागभेदः कल्पयिष्यतइत्याशङ्क्याह * किं चेति * न हि हृदयादिभेदात्तदुपादानकद्रव्यवदानभेदाद्वाग्नीषोमीयादिपशुयागकर्म भिद्यतइति द्रव्यभेदस्य यागभेदव्यभिचारितोक्ता । श्लोकं व्याचष्टे * यदि हीति * द्रव्यभेदस्य यागभेदासाधकत्वं षष्ठाधिकरणसिद्धान्तावयवसूत्रेणोपपादिता नन्वेकस्य यागस्यैकपशुनिष्पन्नेनैकेनैव हृदयाद्येकादशावदानगणेन सिद्धेः पश्वन्तराणां यागसाधनत्वाभावेन देवतान्वयाभावापत्तेः । सप्तदशानां प्राजापत्यत्वे न स्यादित्याशङ्क्याह * प्रकृतौ चेति * अवदीयते ऽस्मादित्यपादानव्युत्पत्त्या हृदयादिष्ववदानशब्दपश्वङ्गत्वेनावदानगणस्योपाकरणादिवत्प्रतिपश्वावृत्तेस्तत्प्रकृतित्वेन सप्तदशानामपि पशूनां यागसाधनत्वोपपत्तिरित्याशयः । तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * तस्मादिति * विग्रहकाले तद्धितपदस्य विभक्त्यनन्वयेनापरिपूर्णत्वात्तदर्थकथनार्थविग्रहवाक्यान्तर्गतस्य सर्वनाम्नः पशुशब्दान्वयायोगेन तद्गतबहुवचनालोचनाऽऽभावात्तन्निमित्तैकशेषानवगतेः कृते च सर्वनामैकशेषे तस्येतरेतरयोगवाचित्वात्सर्वनामपरामृष्टानां द्रव्याणामितरेतरसापेक्षत्वेनासामर्थ्यापत्तेस्तद्धितानुत्पत्तिप्रसङ्गात्तद्धितापेक्षत्वे चेतरेतरयोगासम्भवेनैकशेषानुपपत्तिप्रसङ्गादितरेतरयोगे च समुदायस्य देवतान्वयापत्तेः प्राजापत्यशब्दे बहुवचनानुपपत्तिप्रसङ्गात् द्रव्यस्वरूपापेक्षया वा कथं चिद् बहुवचनोत्पत्तौ विग्रहतद्धितयोर्द्वयोरप्येकशेषकल्पनापत्तेः सर्वनामैकशेषत्वायोगादेकवचनान्तेन सर्वनाम्ना विग्रहावगतेः प्रत्येकं देवतान्वयावसायेन द्रव्यभेदाद्यागभेद इति सर्वनामैकशेषत्वनिरासेन सिद्धान्तोक्तिसम्भवे ऽपि यत्रैकया चतुर्थ्या बहुवचनान्तपदोक्तानां पशूनां पर्यग्निकृतानारण्यानुत्सृजन्तीत्याद्युत्सर्गविध्यभावेनातिदेशप्राप्तैकादशावदानगणवतां देवतान्वयः क्रियते तत्रापि यागभेदसिद्ध्यर्थं चोदकप्राप्तैकपशुनिष्पन्नैकादशावदानगणसाधनत्वबलेन भाष्यकृतोक्तं सिद्धान्तमुपपादयितुमाह * इतीति * दधि मधु पयो घृतं धाना उदकं तन्तुलास्तत्संसृष्टं प्राजापत्यमिति संसृष्टानां दध्यादीनामेकदेवतान्वयाद्यागैक्ये ऽपि मधूदकयोराज्यविकारत्वेनाष्टमे वक्ष्यमाणत्वाच्चोदकैक्ये चाज्यविकारानाज्यविकारयोः समसंख्यत्वेन भूयो ऽनुग्रहन्यायाविषयत्वान्मुख्यानुरोधेन सर्वेषु दधिधर्मप्राप्तेराज्यविकारत्वोक्त्यानर्थक्यप्रसङ्गात्प्रतिद्रव्यं चोदकभेदावगतेः कर्मैक्ये चोदकैक्योक्तिरयुक्तेत्याशङ्क्य * अत्रेत्युक्तम् * द्रव्य-

१ तद्धीति २ पु० पा० ।

धर्मविषयत्वात्तस्य न्यायस्यैकादशावदानगणस्य च यागधर्मत्वा-
द्दशावदानगणे कर्मैक्ये सति चोदकैक्यं स्यादित्याशयः। एकस्य ग-
णस्यैकस्माच्च पशोर्गणस्य प्राप्तचेत्येकशब्दो द्वेधा विग्रहविवक्षया
तन्त्रेण प्रयुक्तः। श्लोकं व्याचष्टे * न हीति * वाक्यशेषेण सन्दि-
ग्धोपदेशनिर्णयार्थत्वं चोदकोपन्यासस्य सूचयितुं वाक्यशेषत्वो-
क्तिः। ननु प्रकृतिवद्वाक्यशेषाङ्गीकारे ऽपि तत्प्रवृत्तिर्गणेषु स्यादित्य-
ष्टमाधिकरणे प्राजापत्येष्वेकादशिनीविध्यन्तातिदेशस्य वक्ष्यमाणत्वा-
त्तस्यां च प्रतिपश्ववदानगणदर्शनादिहापि तत्प्राप्तिरुपपत्स्यतइत्या-
शङ्क्य भिन्नयागविषयत्वात्तस्य न्यायस्य यागैक्यपक्षे तुल्याका-
लत्वसाम्येनैकादशिनीवत्प्राजापत्येष्वपि सवनीयविध्यन्तापत्तिरु-
क्ता तत्र प्राजापत्या इति श्रवणमुपरुध्येत सप्तदशसंख्या ना-
वकल्पेतेति च भाष्यावयवद्वयस्य विविक्तविषयत्वं स्वपदो-
पात्तमित्यनेनोक्तं यागभेदे संख्यासामञ्जस्योपपादनार्थं बहु-
ष्विति भाष्यं व्याचष्टे * यदा त्विति * पशुयागसाप्तदश्यबु- ५२३।४
द्धौ केन चित्प्रमाणेन कृतायामश्रुतमपि पशुसाप्तदश्यं स्तोमविवृद्धा-
वश्रुतसामागमवदागमनेन पूर्येतेत्यभ्युपगम्यवादार्थः वाक्यशेषत्वो-
क्तिसूचितं चोदकोपन्यासाभिप्रायं विवरीतुमाशङ्कते* ननु चेति *
शङ्कामेवोपपादयति * पश्येति * श्लोकं व्याचष्टे * नात्रेति *
प्राजापत्यानीतीतिकरणेन टुप्टीकोक्तः सिद्धान्तोपक्रमे ऽस्माभिर्द-
र्शितः। सर्वनामैकशेषत्वनिरासेन तद्धितान्तैकशेषोपपादनप्रकारः
सूचितः। तद्धितव्युत्पादनात्प्रागपिकरणे पूर्वपक्षासिद्धेः सर्वनामैक-
शेषस्य तु पश्चादपि करणे[1] सिद्धान्तासिद्धेरेकशेषस्य तद्धितात्प्रा-
क्करणे तद्विषयत्वायोगात्सर्वनामविषयत्वं पश्चात्करणे तद्विषयतेति
पौर्वापर्योक्त्यैकशेषः सर्वनामविषयस्तद्धितविषयो वेति सन्देहो द-
र्शितः। प्राक् सन्देहोपपादनावसरोपादिष्टं सन्दिह्यमानमेकशेषस्य
तद्धितात्पौर्वापर्यस्योपदेशस्य रूपमिति विगृह्येवंरूपत्वात्किमेकया-
गविधावप्ययमुपदेशो ऽनेकयागविधायी वेति विधेयपरिमाणवि-
षयसामर्थ्यविशेषो न निश्चितो ऽस्येति विग्रहोक्तस्य विधेर्भेदानि-
श्चयस्योपदेशेनैव कर्मभेदो ऽवधारित इति निश्चयोक्तिविरुद्धत्वा-
त्प्रौढ्याभ्युपेत्यवादमात्रत्वं द्रष्टव्यम्।तच्छब्देनातिदेशोक्त्युपस्थापिता-
तिदेशविषयभूतप्राकृताङ्गपरामर्शात्प्राकृतैकपशुनिष्पन्नैकावदानगण-
ग्रहणे यादृशं सामर्थ्यमेकपशुसाध्याया विकृतेः प्रकृ-
तिवद्वाक्यशेषान्वयानुपपत्त्या कल्प्यते तादृशेनात्रापि क-

१ क्रियेते इ० ३ पु० पा०।

लिपतेनोपदेशः सप्तदशयागविधायितया निर्णीयतइत्यर्थः । यस्तु कर्मोत्पत्तिकालएव भेदाभेदावधारणावसरान्न पाश्चात्यातिदेशाधीनतेत्युक्तम् * तत्सत्यप्यवसरे सन्दिग्धत्वेनावधारणासामर्थ्यात्परिहरति * यद्यपि चेति * ननु देवताविशिष्टद्रव्यवाचिप्राजापत्यप्रातिपदिकपरबहुवचनवतोपदेशेनैव यागबहुत्वनिश्चयोपपत्तेः किमतिदेशापेक्षयेत्याशङ्क्याह * ततश्चेति* परमार्थेनोपदेशान्निश्चयोपपत्तावपि प्रौढ्या सन्देहमभ्युपेत्यातिदेशान्निर्णयाभिधानमित्याशयः । विपर्ययोक्तिरतिशयार्था ननूपक्रमबलीयस्त्वादुपदेशानुरोधेनातिदेशेन वर्त्तितव्यमित्याशङ्क्याह * न चात्रेति * आनर्थक्यप्रतिहतानां विपरीतं बलाबलमितिन्यायेनानन्यगतित्वादतिदेशो ऽप्यत्रोपदेशाद् बलीयानित्याशयः । प्रकृतिद्रव्याणि प्रापयितुंसमर्थ इत्यनुषङ्गः । यश्चोपदेशस्यातिदेशानुरोधे वृत्तित्वे सन्दिग्धत्वरूपो विरुद्धरूपश्च प्रकारः सो ऽत्र नास्तीति न चेत्यादिनोक्तं तेनोभयथापि विग्रहोपपत्तावतिदेशानुरोधादेकवचनान्तेनैव सर्वनाम्नो विगृह्य तद्धितानामेकशेषत्वनिश्चयाद् द्रव्यदेवतान्वयभेदेन यागभेदसिद्धिरिति सिद्धान्तोपसंहारार्थं तस्मादितिभाष्यं व्याचष्टे * तस्मादिति * ननु प्रदेयैकादशावदानगणप्रकृतित्वस्य पशुधर्मत्वात्कर्मैक्ये ऽपि प्रतिपश्वावृत्तेन्यीय्यत्वात्सप्तदशावदानगणप्राप्त्युपपत्तेरतिदेशाविरोधात्तदनुरोधेन यागभेदानवधारणान्नायमुपसंहारो युक्त इत्याशङ्क्य पूर्वपक्षोक्तं पशुधर्मत्वमनुभाषणपूर्वं दूषयति * यदुक्तमिति * पशुसंस्कारैर्यूपाकरणादिषु द्रव्यकथम्भावोपपत्तावप्यत्रावदानगणे ऽवदानप्राप्तिः प्राक् त्यज्यमानत्वलक्षणस्य प्रकारस्य तद्धितसामर्थ्यादेव ज्ञातत्वात्कथम्भावो नास्तीत्यनेनोक्तम् । यागस्य तु कथं पशुना निष्पादितेन मया ऽपूर्वं साधनीयं किं पुरोडाशवत्साक्षाद् व्रीहिवद्वा प्रदेयावदानगणप्रकृतित्वेनेत्यवदानगणे कथम्भावोद्भावाद्यागधर्मतैवावदानगणस्यावसीयतइत्यर्थः । श्लोकं व्याचष्टे * प्राजापत्येति * ननु प्राजापत्यपशुष्ववदानोपदेशाभावात्साक्षात्साधनत्वोपपत्तेरवदानगणानपेक्षायामप्यग्नीषोमीये ऽवदाननाशितस्य पशोः साक्षाद्यागसाधनत्वायोगात्कथं मया यागः साधनीय इत्यवदानगणापेक्षोपपत्तेः । पश्वङ्गतावदानगणस्य भविष्यतीत्याशङ्क्याह * प्रकृतावपि चेति * नाशितस्य पशोः सक्तुवन्निष्फलत्वाद्धर्माकाङ्क्षा न युक्तेत्याशयः । ननु संस्कारकत्वेनावदानानपेक्षणे ऽपि द्वारत्वेन यागस्यापूर्वापेक्षावत्पशोरवदानापेक्षा भविष्यतीत्याशङ्क्याह * तद्धर्मत्वेति * अवदानोपदेशा-

ऽप्राक् पशोर्विनाशाज्ज्ञानाद्यागवत् द्वारापेक्षानुपपत्तेर्द्वारत्वे कापूर्ववदेव द्वारिधर्मत्वायोगात्पशुधर्मत्वमिच्छता हृदयाद्यवदानानां पशुसंस्कारतैव द्व्यवदानस्य पुरोडाशसंस्कारत्ववदेष्टव्येत्याशयः।

क्रत्वर्थश्चापि संस्कारः पशोर्नाशादुपक्रिया।
इष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता॥

इति वार्त्तिके तु हिंसायाः पशुसंस्कारत्वाभिधानं तस्याः प्राणवियोजनात्मकत्वे ऽपि स्वरूपनाशकत्वाभावादवदानप्रकृतित्वौपयिकत्वाच्चाविरुद्धम्। अवदानानां पशुधर्मत्वनिरासस्य पूर्वोक्तमतिदेशस्यैकस्मिन्कर्मणि सप्तदशावदानगणप्रापणासामर्थ्यमेकस्य चावदानगणस्य सप्तदशद्रव्यप्रकृतिप्रापणासामर्थ्यं प्रत्युपयोगमाह * तस्मादिति * नन्वौपदेशिक्या सप्तदसंख्यया ऽतिदेशिक्या हृदया- ५२५।१
द्येकादशावदानगणप्रकृत्येकत्वं संख्याया बाधादनेकगणाग्रहणे ऽप्यनेकपशुग्रहणं भविष्यतीत्याशङ्क्याह * यद्यपि चेति * सप्तदशयागकल्पनेनाविरोधोपपत्तेर्बाधाभावो यद्यपिशब्देन सूचितः। नन्वित्याशङ्काभाष्यं पशुसामानाधिकरण्येन श्रुतस्य सप्तदशत्वस्यावदानगणस्थत्वायोगादयुक्तमाशङ्क्योपपादयति * नन्विति * पश्ववदानगणयोः सम्बन्धाप्रसिद्धेर्लक्षणानुपपत्तिमाशङ्क्य * यागेत्युक्तम् * पशुशब्दस्य प्राजापत्यशब्दसामाधिकरण्याद्यागीयद्रव्यवाचित्वावगतेरवदानगणस्य च साक्षाद्यागसाधनत्वात्तल्लक्षणा युक्तेत्याशयः। नैतदिति परिहारभाष्यं पशुष्वपि श्रुतायाः संख्याया लक्षणयावदानगणस्थत्वस्योक्तत्वादयुक्तमाशङ्क्योपपादयति * नैतदिति * पशोरपि यागीयद्रव्यप्रकृतित्वाद्यागीयत्वोपपत्तेर्लक्षणाकारणविरोधाभावान्न लक्षणा युक्तेत्याशयः। पशुभिरेव तर्हि सप्तदशभिश्चोदकं बाधित्वा पक्ष्यतइत्याशङ्कानिरासार्थमवदानानि चेत्यादिभाष्यं तात्पर्यतो व्याचष्टे * तेनेति * ननु शुक्लकृष्णादिवर्णभेदभिन्नानामृजुवक्रादिशृङ्गभेदभिन्नानां कुब्जवामनादिसंस्थानभेदभिन्नानां वा सप्तदशानां मध्ये कश्चिदेकः पशुरित्येवमभिप्राय सप्तदशसंख्या यागैक्ये ऽप्युपत्स्यतइत्याशङ्कार्थमेवमिति भाष्यमश्रुतवर्णादिविषयत्वकल्पनप्रमाणाभावाद्वर्णादीनां च साप्तदश्यनियमाभावादानर्थक्यापत्तेश्च ये सप्तदशेत्यनुवादानुपपत्तेर्विशेषानवधारणाच्च वर्णान्तरादिव्यवच्छेदानुपपत्तेरयुक्तमाशङ्क्य मन्दा ऽप्याशङ्का पशुप्रातिपदिकस्यावदानलक्षणार्थत्वाभावात्प्राजापत्यैकपशुनिर्द्धारणावच्छेदकपशुबहुत्वाच्च बहुवचनोपपत्तेरतिदेशप्राप्तैकपशुनिष्पन्नैकादशावदानसाध्यत्वाच्च कृत्स्नस्य प्रकृतिवद्वाक्यशेषसहितस्योपदेशवा-

क्यस्यागमनिकार्थमुदन्यस्तेत्याह * कृत्स्नेति * शङ्काशयमुक्तार्थं व्याचष्टे*एतदिति * श्यामत्वं नियमाद्वर्णाशयत्वमशृङ्गत्वाख्यरूपपरत्वानियमाच्छङ्काशयत्वं न युक्तं पश्वनेकत्वं च विनानेकसंस्थानाप्रसक्तेः संस्थानैक्यरूपैकयोक्तिरनर्थिकेति परिहारार्थत्वेन ते हीति भाष्यं व्याचष्टे * तत्रेति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तस्मादिति * पूर्वपक्षप्रयोजनभाष्यं प्रजापतये सप्तदश पशवः सङ्कल्पन्त इति पूर्वपक्षोपक्रमादेको यागः सप्तदशभिः पशुभिर्निर्वर्त्स्यत इति उपसंहाराच्च सर्वपशुसाध्ययागत्वस्य पूर्वपक्षार्थत्वावगतेरेकपशुसाधनत्वस्य पश्वन्तराहष्टार्थत्वस्य च पूर्वपक्ष्यनभिमतत्वावसायादयुक्तमाशङ्क्यैकमालभ्यमानमन्वालभ्येरन्न दृष्टायापर इति सिद्धान्तभाष्येऽप्यभिमतस्याप्येकपशुसाधनत्वस्यतराहष्टार्थत्वस्य चापादनादापाद्योक्त्यर्थत्वेनोपपादयति * प्रयोजनमिति * अवदातव्यमित्यनेनावदानप्राग्भाविनामुपाकरणादीनां विशसनान्तानां पशुसंस्कारत्वादेकस्यावदानप्रकृतित्वरूपसाक्षात्साधनत्वेऽपि सप्तदशसंख्यस्य साधनत्वात्साधनत्वप्रयुक्तत्वाच्च संस्काराणां सर्वपशुष्वनुष्ठानमवदानानां तु संस्कारत्वाभावादेकस्मादेव पशोरनुष्ठानमिति सूचयता लभतेः संस्कारमात्रोपलक्षणार्थत्वोक्तेश्चावदानप्रकृतित्वनिरासार्थत्वं व्याख्यातम् । यदा चैकस्यैवावदानप्रकृतित्वेन यागसाधनत्वात्प्राधान्ये पश्वन्तराणां तु साधनभूतपशुसंख्यासम्पादनार्थत्वात्तादर्थ्यमिति पूर्वपक्षप्रयोजनमापादितं तदेकपशुनाशे कृत्स्नपशुगणावृत्त्याख्यप्रयोजनान्तरोक्तिर्गुणानुरोधेनेतरावृत्त्ययोगादवदानप्रकृतिभूतपशुनाऽत्राविषयेति दर्शयितुं

८२६।१ माह * तद्विनाशे चेति * पूर्वोपात्तानामपि पशूनां विनष्टत्वापशुप्रतिनिधिभूतपश्वन्तरसंख्यासम्पादनार्थत्वोपपत्तेः कृतानामपि संस्काराणां पुनः क्रिया पश्वावृत्तित्वेन विवक्षिता । एकस्य तु पशोरवदानप्रकृतित्वे पश्वन्तराणां देवतानन्वयापत्तेः प्राजापत्यशब्दस्य बहुवचनायोगप्रसङ्गादापाद्योक्तप्रयोजनापारतोषेणैकस्मिन्नित्याद्यप्रयोजनभाष्यमवदानगणस्य प्रतिपश्वावृत्त्या सर्वपशूनां यागसाधनत्वाविशेषात्समप्राधान्यमभिप्रेत्य यस्य कस्य चित्पशोर्नाशे कृत्स्नपशुगणावृत्त्युक्त्यर्थत्वेनान्यथा व्याख्यातुमाह*अथ वेति* य एव कश्चिदेको ऽनेको वा पशुर्नष्टस्तस्मिन्यस्मिन्कस्मिंश्चिन्नष्टे समस्तपश्वावृत्तिः न त्वेकस्मिन्नष्टे पशौ सर्वेषां यागसाधनत्वाविशेषादित्येवकारार्थः । ननु यथाप्रस्तोतोद्गातृप्रतिहर्तॄणामन्योन्यहस्तधारणेन समन्वारब्धानां सदो गच्छतामुद्गात्रा हस्तमोचनेन विभागाख्ये विच्छेदे कृते

यत्रावृत्तिर्विहितातिदेशेनाहर्गणं प्राप्ता किं यस्मिन्नहन्यवच्छेदस्तस्यैवावृत्तिः कृत्स्नस्य वाहर्गणस्येति सन्दिग्धे साहित्यसम्पत्त्यर्थं कृत्स्नावृत्तौ प्राप्तायामहर्गणेषु यस्मिन्नवच्छेदस्तदावर्त्तेत कर्म पृथक्त्वादिति षष्ठाधिकरणसूत्रेण प्रत्येकमितिकर्त्तव्यतान्वयादेकस्यैवावृत्तिर्वक्ष्यते तथात्रापि प्राप्तेन कृत्स्नपशुगणावृत्तिर्युक्तेत्याशङ्कते * नन्विति * पृथगुत्पन्नत्वेनाह्नां प्रत्येकं साधनशक्त्यवगमात्सह प्रयोगेऽप्याग्नेयादिवत्प्रत्येकमितिकर्त्तव्यतान्वयोपपत्तिरेकावृत्त्युपपत्तावपि पशूनां पूर्वपक्षे व्यासङ्गिसाधनत्वात्तादृशानामेवेतिकर्त्तव्यतान्वयार्थं समस्तावृत्तिर्युक्तेति परिहरति * नैतादिति * सिद्धान्तप्रयोजनभाष्यं व्याचष्टे * सिद्धान्ते त्विति * ननु समुच्चितानां साधनत्वविधावेकनाशे कृत्स्नावृत्तावेकं साम तृचे क्रियते स्तोत्रीयत्रिवृद्बहिष्पवमानमित्यादौ समुच्चितानां मन्त्राणां स्तोत्रसाधनत्वविधानात् तृचं शंसति सूक्तं शंसतीत्यादौ च शस्त्रसाधनत्वविधानात्तां चतुर्भिरादत्तइत्यादौ चाभ्र्यादानादिसाधनत्वविधानादेकमन्त्रविनाशे कृत्स्नमन्त्रावृत्तिः स्यादित्याशङ्कते * नन्विति * स्वार्थाभिधानद्वारा मन्त्राणां स्तोत्रादिसाधनत्वात्प्रतिमन्त्रं च वाक्यार्थभेदात्प्रत्येकमेव स्वार्थाभिधानाख्यावान्तरकार्यद्वारा स्तोत्रादिसाधनत्वे सति संख्यायुक्तेन वचनेन साधनानां समुच्चयाश्रयणात्समुच्चितसाधनत्वाभावेन साधनत्वस्य व्यासङ्गित्वाभावान्नैकनाशे कृत्स्नावृत्त्यापत्तिरिति परिहरति * नेति * एतदेव विवृणोति * यदिति * प्रत्येकं वाक्यार्थाभिधाननिष्पादनाशक्तौ विभज्यमानसाकाङ्क्षत्वे सत्येकार्थत्वापत्तेरेकस्तोत्रादिसाधनानामैकमन्त्र्यं स्यादित्यर्थः । ननु मन्त्राणां स्वार्थाभिधानलक्षणेऽवान्तरकार्ये प्रत्येकं निर्वर्त्तनसामर्थ्यं स्तोत्रादौ संहत्यकारित्वात्साधनत्वं व्यासाङ्गि भविष्यतीत्याशङ्क्य * भिन्नैरेव चेत्युक्तम् * वाक्यार्थाभिधानानां प्रत्येकं स्तोत्रादिसाधनत्वशक्तिभिन्नशब्देनोक्ता संहत्यशब्देन साधनसाहित्यं मन्त्रकार्यैर्वाक्यार्थाभिधाने प्रत्येकं स्तोत्रादिसाधनशक्तिमद्भिरेव साधनसमुच्चयविधिना सह कृत्य स्तोत्रादिकार्यान्तरारम्भावगतेर्व्यासज्यसाधनत्वावसायान्न कार्यान्तरेऽपि मन्त्राणां व्यासज्यसाधनतेत्यर्थः। पशूनां तु न मन्त्रवत्साधनानां साहित्यं किं तु सहितानां साधनतेति वैषम्यमाह * पशूनां त्विति * मन्त्रवत्तत्कार्याणामपि सहितसाधनत्वाभावेऽपि प्रकारान्तरेणापि कृत्स्नावृत्तिद्योतनायाशङ्कते * तावन्मन्त्रेति * एकमन्त्रनाशेनैककार्यनाशे सति कृत्स्नस्वकार्यावृत्तिः स्यात्ततश्च तत्सिद्ध्यर्थं कृत्स्नमन्त्रावृ-

क्तिरपि स्यादित्याशयः। परिहरति * नेति * कार्याणां नान्तरीयकत्वेन सहितसाधनतया विध्यभावादेककार्यनाशे साधनत्वरूपनाशकल्पनानुपपत्तेः साधनभूतमन्त्रनाशेनैव नाशस्याभ्युपेतव्यत्वान्मन्त्राणां च प्रत्येकं साधनत्वेनैकमन्त्रनाशे ऽप्यविनष्टमन्त्रे कार्यनाशायोगादनुनिष्पादित्वेन च मन्त्रावृत्तिं विनावर्त्तयितुमशक्यत्वान्निष्पन्नाविनष्टस्य च कार्यस्य साधनावृत्त्यनपेक्षकत्वान्नावृत्तिर्युक्तेत्याशयः। मन्त्राणां पशुवैषम्यमुपसंहरति * इतीति *

॥ संज्ञाकृतकर्मभेदाधिकरणम् ॥ ८ ॥

## संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

ननु संख्यागुणयोः कर्माङ्गत्वेन तुल्यरूपत्वाद् गुणनिमित्तभेदचिन्तासंख्यानिमित्तभेदचिन्तानन्तरं युक्ता न संज्ञानिमित्तभेदचिन्तेत्याशङ्क्याह * बह्विति * बहुचिन्तायां बह्वायासत्वाकृत्यान्त-
५२७।२ राक्षिप्तांचन्तेन कर्त्तुमशक्तेस्ततः प्रागल्पचिन्ताया युक्तत्वादल्पत्वसाम्येन च बुद्धिस्थत्वात्संख्याचिन्तानन्तरं संज्ञाचिन्ता युक्तेत्याशयः। पृथक्त्वनिवेशाख्यहेतुसाम्यादप्यनन्तरसङ्गतिः संख्यावच्च पृथक्त्वनिवेशनीति वार्त्तिकं सूचयिष्यते * किमेभिरिति * भाष्यं प्रकृतसङ्कीर्त्तनकान्येतानि नामानि कर्मान्तरोपदेशीनि वेति संज्ञाया भेदकत्वसद्भावसन्देहोक्त्यर्थत्वेन स्पष्टत्वादव्याख्याय किं प्राप्तमिति पूर्वपक्षभाष्यं प्रकरणस्य तादर्थ्यप्रमाणत्वेन भेदाभेदयोरव्यापाराद् गुणविधानस्य च कर्मान्तरे ऽप्युपपत्तेस्तदुपन्यासानर्थक्यादयुक्तमाशङ्क्य पूर्वप्रकृतस्य पश्चादुच्चारिताभ्यामथैषशब्दाभ्यां ग्रहणादित्येवं प्रकृतप्रत्यभिज्ञानस्यानुग्राह्यत्वादित्येवं वा प्रकरणानुग्रहशब्दव्याख्यानं गुणविध्युक्तेश्च कर्मविध्यभावेन कल्पनालाघवाभिधानार्थत्वं सूचयितुमाह * तत्रेति * पञ्चम्यन्तापेक्षितं साध्यमकर्मान्तरत्वमिति वक्ष्यमाणमनुसन्धेयम्। एषशब्दस्य सर्वनामत्वात्पूर्वप्रकृतपरामर्शित्वलक्षणं पूर्वप्रकृतापेक्षत्वम्। अथशब्दस्य तु कर्मभेदप्रमाणाभावेनाधिकारार्थत्वायोगात्पूर्वप्रकृतकर्मापेक्षत्वानन्तर्यार्थतया च स्वयमेव निषेत्स्यमानत्वाद् गुणविधानार्थस्य ज्योतिःशब्देन ज्योतिष्टोमानुवादस्य पूर्वप्रकृतज्योतिष्टोमविध्यपेक्षित्ववाचित्वलक्षणं पूर्वप्रकृतापेक्षत्वमभिप्रेतं प्रकृतहानेरप्रकृतप्रक्रियाकल्पनस्य च दौर्बल्यलक्षितबाध्यत्वोक्त्या प्रकरणशब्दस्य तद्बाधकप्रकृतप्रत्यभिज्ञानलक्षणार्थत्वं सूचितम्। पृथक्त्वनिवेशिशङ्काश्रुतिबलेन प्रकृतकर्मप्रत्यभिज्ञानस्यैव

१ संदेहभाष्यमिति ३ पु० पा०।

बाध्यत्वमाशङ्क्य ज्योतिरिति ज्योतिष्टोमस्य प्रतीकमित्यादिभाष्ये वक्ष्यमाणेन ज्योतिः शब्दवाच्यत्रिवृदादिसर्वस्तोमवत्त्वलक्षणगुणयोगेनाथ पुनरिति भाष्यवक्ष्यमाणेन च द्योतनादिगुणयोगेनैकस्यापि ज्योतिष्टोमस्यानेकसंज्ञोपपत्तिरुक्ता अनेकानि नामधेयानि यस्यासावनेकनामधेयस्तस्य भावस्तत्त्वमिति विग्रहः । यथैकस्यैव दर्शपूर्णमासाख्यस्य कर्मणोऽयनादिशब्दवाच्यावृत्त्यादिगुणयोगेनानेकदाक्षायणादिसंज्ञोपपत्तिरिति दृष्टान्तार्थः । न चेत्यनेन गुणविध्युक्तेः कल्पनालाघवाभिधानार्थत्वं सूचितं गुणोक्त्या फलस्याप्युपलक्षणं सूचयितुं फलशब्दः । गुणान्वयार्थं फलान्वयार्थं वा ज्योतिरादिशब्देन ज्योतिष्टोमसङ्कीर्त्तनार्थवत्त्वोपपत्तेर्न संज्ञान्तरं कर्मान्तराक्षेपकमित्याशयः । भविष्यन्तीत्यध्यवसानादकर्मान्तरत्वमिति वक्ष्यमाणसाध्यानुषङ्गः भाष्यमप्यथैषशब्दाभ्यां प्रकृतग्रहणात्तदुपबद्धायाः संज्ञायाः प्रकृतविषयत्वावगतेः प्रकृतप्रत्यभिज्ञानस्य वानुग्राह्यत्वात्प्रकृतस्य च गुणविधानार्थं फलविधानार्थं वानेकसंज्ञोपपत्तेर्ज्योतिष्टोम एव ज्योतिरादिसंज्ञको न कर्मान्तरमित्येवं प्राप्तमिति वक्ष्यमाणसाध्यान्वयेन पूरणीयम् । संज्ञाया वा भेदकत्वनिरासायैव प्रकृते गुणविधानोपपादनार्थं प्रकरणानुग्रहोक्तिरित्येकवाक्यत्वेन भाष्यस्य व्याख्यान्तरं सूचयितुमाह * कथम्भावेति * अत्रापि भविष्यतीत्यध्यवसानादकर्मान्तरत्वमिति वक्ष्यमाणसाध्यानुषङ्गः किं चाथशब्दोपबन्धेन वा संज्ञाया भेदकत्वं स्यात्स्वतो वा तत्राधिकारार्थत्वे मन्दकफलत्वापत्तेः पूर्वप्रकृतकर्मापेक्षितार्थत्वेनापेक्ष्यापेक्षकभावस्य भेदाधिष्ठानत्वाद्भेदद्योदकता ऽऽथशब्दस्य वाच्या न चाङ्गाङ्गिभावं संहत्य फलसाधनत्वं वा विनान्योन्यापेक्षा सम्भवतीत्याशयेनाह * न चेति * पञ्चमे च क्रतूनां क्रमानादरस्य वक्ष्यमाणत्वादानन्तर्यार्थत्वस्याप्यनुपपत्तेर्न तद्द्वारेणापि भेदद्योतकतेत्याह * न च क्रतूनामिति * स्वतस्तु संख्याया भेदकत्वमनाशङ्क्यमेव भावनाभेदो हि लक्षणार्थः । न च ज्योतिरादिसंज्ञा भावनावाचिनी येन तां भिन्द्यादित्याह * न च संज्ञेति * ननु भावनावाचित्वाभावेऽपि संज्ञाया [1] धात्वर्थवाचित्वाच्छब्दान्तरवद्धात्वर्थद्वारा भावनाभेदकत्वं (भविष्यतीत्याशङ्क्याह * न च धात्वर्थ इति * धातूक्तस्य धात्वर्थस्य भावनासंलग्नत्वात्तदवच्छेदकत्वावगतेर्बोध्यस्य बुद्धिभेदकत्ववद्भावनाभेदकत्वं युक्तं नामोक्तस्य तु भावनोपश्लेषाभावेन तदवच्छेदकत्वानवगतेरबुध्यमानस्य घटादेर्बुध्या भेदकत्वं न सम्भ-

---

१ अथ पा० २ पु० ना० ।

वतीत्याशयः[1]) । ननु शब्दान्तरवत्संज्ञाया भावनावच्छेदकत्वरूपेण धात्वर्थवाचित्वाभावाच्छब्दान्तरन्यायेन भावनाभेदकत्वायोगे ऽपि संज्ञाया विधेयविशेषप्रतिपत्त्यर्थत्वाद्भावनानिरपेक्षस्य च धात्वर्थस्य विधेयत्वायोगाद्विधेयभावनाभेदं विना ऽनर्थक्यापत्तेरभ्यासन्यायेन भावनाभेदकत्वं भविष्यतीत्याशङ्क्याह * न चेति * (विधेरप्रवृत्तप्रवर्त्तनस्वाभावत्वादन्यतः प्राप्तेर्विधित्वव्याघातापत्तेः पुनर्विधानलक्षणस्याभ्यासस्य भेदकत्वं युक्तं[1]) सञ्ज्ञायास्त्वप्रवृत्तप्रवर्त्तनस्वभावत्वाभावान्नाभ्यासन्यायविषयतास्तीत्याशयः । नन्वप्रवृत्तप्रवर्तनस्वभावत्वाभावे ऽपि विधेयविशेषप्रतिपत्त्यर्थत्वात्सञ्ज्ञायाः सञ्ज्ञान्तरात्प्रतिपन्ने विशेषे सञ्ज्ञान्तरानर्थक्यापत्तेर्भेदकत्वं भविष्यतीत्याशङ्क्याह * न चाप्रवर्त्तित इति * नानासञ्ज्ञानामविशेषाद्विकल्पेनार्थवत्त्वोपपत्तेर्न तत्वच्छेदप्रतीतिरित्यपि शब्दार्थः प्रतीतो ऽपि तु भेदो विध्यसंस्पर्शादनादृत्य इत्यतिशयोक्तिः । ननु सञ्ज्ञाया विधातृत्वाभावात्स्वतो भेदकत्वायोगे ऽपि ज्योतिरादिसञ्ज्ञस्य यागस्यैतेन सहस्रदक्षिणेन यजेतेत्येतच्छब्दपरामृष्टस्याख्यातेन विधानाद्विधायकोपबृंहिताया भेदकत्वं भविष्यतीत्याशङ्क्याह * यस्त्विति * विधायकस्यान्याक्षिप्तत्वे सञ्ज्ञाविषयभूतकर्मस्वरूपविषयत्वाभावाद्भिन्नविषयत्वेन सञ्ज्ञाविषयभूतकर्मभेदद्योतकत्वानुपपत्तेर्विशिष्टविधित्वाद्वा ऽन्यानाक्षिप्तत्वाभ्युपगमे सञ्ज्ञानिरपेक्षस्यैव तस्य भेदकत्वोपपत्तेः सञ्ज्ञासहकारित्वायोगान्न विधायकसहकृताया अपि सञ्ज्ञाया भेदकता युक्तेत्याशयः । आदिशब्देनैतेनर्द्धिकामो यजेतेत्यादौ फलाक्षिप्ततोक्ता गुणादिना कर्मस्वरूपादुत्तार्यात्माभिमुख्येन क्षेपः प्रेरणं विधायकस्यात्मनि सञ्चारणमाक्षेपः प्रयुक्तिवाचिना वाक्षेपशब्देनातदर्थस्य प्रयुक्त्ययोगात्तादर्थ्यं लक्षितम् । ननु गुणार्थस्य विधायकस्य सञ्ज्ञाविषयभूतकर्मस्वरूपविषयत्वाभावात्सञ्ज्ञाविषयभूतकर्मभेदद्योतकत्वायोगे ऽपि फलस्यानुपादेयत्वेन कर्मोद्दिश्योपादातुमशक्यत्वात्फलार्थस्य विधायकस्य फलोद्देशेन कर्मोपादायकत्वात्प्रकरणान्तरन्यायेन कर्मस्वरूपविषयत्वात्सञ्ज्ञां च विना प्रकृतबुद्धिविच्छेदासिद्धेस्तन्निरपेक्षस्यानुपादेयान्वयस्य भेदकत्वाभावात्सञ्ज्ञासहकारित्वं भविष्यतीत्याशङ्क्याह * फलेति * सञ्ज्ञां विना प्रकृतबुद्धिविच्छेदाभावे प्रकरणान्तरन्यायाविषयत्वादन्यतो वा प्रकृतिबुद्धिविच्छेदे संज्ञानपेक्षणात्फलान्वितकर्मविधिसहकृताया भेदकत्वं

१ भर्थ पा० २ पु० ना० ।

न सम्भवतीत्याशयः। गुणफलयोस्त्वेकवाक्योपादाने प्रकृतकर्माश्रितस्य गुणस्य फलसाधनत्वावगमात्फलान्वयस्य भेदकत्वशङ्का नास्तीत्याह *यद्वेति * नन्विति भाष्येणापूर्वसञ्ज्ञाक्षिप्तस्य कर्मान्तरस्यैतेन सहस्रदक्षिणेनेत्येतच्छब्दसमभिव्याहारलक्षणाद्वाक्याद् गुणान्वयप्रतीतेः प्रकृतस्य गुणविध्ययोगमाशङ्क्य नैष इत्यनेन ज्योतिःशब्दस्य ज्योतिष्टोमशब्दप्रतीकत्वाद्विश्वज्योतिः सर्वज्योतिः शब्दयोश्च ज्योतिःशब्दवाच्यत्रिवृदादिस्तोमयोगात् ज्योतिष्टोमवाचित्वावगतेः प्रकरणस्य वाक्याविरोध उक्तः । तदत्राधिकरणे न्यायतुल्यत्वादेथष गौरित्यादीनामप्युदाहरणत्वावगतेर्गवादिशब्दानां च ज्योतिष्टोमे प्रवृत्तिनिमित्तादर्शनादव्यापकत्वेनायुक्तमाशङ्क्य सर्वेषामुदाहरणत्वेऽप्युदाहरणविशेषे पूर्वपक्षोपपत्तिविशेषप्रदर्शनार्थत्वेनोपपादयति * ज्योतिरादिषु त्विति * तुशब्देन तत्राथैषज्योतिरित्यादिष्वित्युदाहरणपरिग्रहार्थवार्त्तिकस्थस्यादिशब्दस्याथैष गौरथैष आयुरित्याद्युदाहरणान्तरपरिग्रहार्थत्वं सूचितम्। अवयवसादृश्ये ऽप्यवयवान्तरत्वात् ब्राह्मणशब्दाद् ब्राह्मशब्दस्येव ज्योतिष्टोमशब्दो ज्योतिःशब्दस्य पदान्तरत्वावगतेस्तत्प्रतीकत्वाभावमाशङ्क्य ज्योतिष्टोमशब्दार्थे प्रयोगात्तत्प्रतीकतोपपादिता विश्वज्योतिरिति भाष्यावयवः स्पष्टत्वान्न व्याख्यातः"तस्मात्सञ्ज्ञान्तरविषये ऽपि सञ्ज्ञान्तरप्रयोगदर्शनेन सञ्ज्ञायाः स्वतो भेदकत्वाभावाच्छब्दान्तरादीनां च सहकारिणामभावान्न कर्मभेद इति पूर्वपक्षमुपसंहरति *तस्मादिति* सञ्ज्ञा हीतिभाष्येण संख्ययेति तृतीयोक्तस्य भेदहेतुत्वस्य चशब्देनानुकर्षणासञ्ज्ञापि कर्मभेदहेतुरित्येवं सञ्ज्ञा चेति सूत्रावयवं व्याख्यायोत्पत्तिसंयोगो व्याख्यातस्तदाथैष ज्योतिरादावाख्याताभावेन सञ्ज्ञां विनोत्पत्तिवाक्यत्वानवधारणादुत्पत्तिवाक्यस्थाया अपि च सभिदादिसञ्ज्ञायां भेदकत्वानभ्युपगमादयुक्तमाशङ्क्याख्यातपारतन्त्र्यानिरासायाख्यातेन भेदाभेदावधारणात्प्रागेव सञ्ज्ञाश्रुतेरित्येव प्राथम्यवाचितयोत्पत्तिशब्दं व्याख्यातुमाह * इतीति * आख्यातसमुच्चारिताया अप्युद्भिदादिसञ्ज्ञाया नाम्नैव चैवमादीनां भेद इत्युद्भिदधिकरणवार्त्तिके ऽभिहितत्वात्समिदादिसञ्ज्ञाया अपि वाख्यातोच्चारणात्प्रागेव प्रवृत्तेर्भेदाभेदावधारणव्यापाराभावार्थो ऽनुक्तशब्दो व्याख्येयः।उद्भिदा यजेत पशुकाम इत्यादेस्तु कर्मशब्दस्य फलादिपरत्वोपपत्तेः समिदादिवदनन्यपरपुनः श्रुतित्वाभावाद्भेदावधारणाशक्तेर्य एवं ,विद्वान्पौर्णमासीं यजतइत्यादिवच्च यच्छब्दोपबन्धाभावादतिदेशतश्च रूपलाभसम्भवेनारूपत्वाभावादभेदावधा-

रणाशक्तेः सञ्ज्ञाया भेदकत्वोपपत्तिरित्याशयः । वस्त्वन्तरबुद्धेः सका-
शात्सञ्ज्ञानपनयनोक्त्या पौर्णमास्यादिसञ्ज्ञाया अपि स्वतो वस्त्व-
न्तरबुद्धिहेतुतास्त्येव यच्छब्दो पबन्धेन च रूपकर्मशब्दोनाभेदा वधारणा
दपनीयतइति सूचितम् । अनुक्त इति विशेषणस्य फलं दर्शयन् श्लो-
९२८।४ कं व्याचष्टे * या हीति * अनुक्तशब्दस्य सूत्रभाष्यस्थोत्पत्तिशब्द-
व्याख्यानार्थत्वसूचनार्थोत्पन्न इत्युक्त्वा संज्ञातः पूर्वं भेदकत्वेना-
भेदकत्वेन वावधारित इति समुच्चरितधूमं हर्म्यतलमितिवन्नि-
श्चयापरपर्यायाभिव्यक्तिवाचिनोच्चरतिना वचिर्व्याख्यातः । पादि-
चर्योश्च गमिसमानार्थत्वेन ज्ञानार्थत्वादुच्छब्दस्य चोत्कर्षार्थत्वेन
निश्चयरूपज्ञानोत्कर्षवाचित्वादुत्पन्नोच्चरितशब्दयोरवधारितार्थत्वा-
विशेषः। ननु कर्मशब्दसमानाधिकरण्यं विना संज्ञायाः कर्मनामत्वा-
प्रसिद्धेः कथं तद्भेदकतेत्याशङ्क्य संज्ञावशात्पश्चाद्भिन्नकर्मविषयत्वे-
नावधारयिष्यमाणकर्मशब्दसामानाधिकरण्यमनेन यजेतेत्युत्पत्स्य-
मानशब्देनोक्तम्। नन्वेवं संज्ञावशेनाख्यातस्य कर्मान्तरविषयत्वावधा-
रणं तथा ऽवधारिताख्यातसमानाधिकरण्याच्च संज्ञायाः कर्मान्तर-
नामत्वावधारणम् । इतरेतराश्रयं स्यादित्याशङ्क्य संज्ञायाः सर्वसंज्ञा-
विषयत्वनिवेशायोगेन पृथक्त्वनिवेशात्कर्मनामतायामाख्यातापेक्षणे
ऽपि भेदकत्वे निरपेक्ष्यं संख्यावच्चेत्यनेनोक्तम् । पृथक्त्वनिवेशपदवात्रापि
हेतुश्चशब्देनानुकृष्टः अपवादकाभेदावधारकाख्यातसंयोगानिवृत्त्यर्थं
तूत्पत्तिसंयोगोक्तिरिति सूचनार्थो दृष्टान्तः। पृथक्त्वनिवेशित्वमेव प्रश्न-
पूर्वमुपपादयितुं सामान्यन्यायं तावदाह * कथमिति * अनेकार्थत्वस्या-
न्याय्यत्वेनार्थान्तरदर्शनात्संज्ञान्तरापेक्षोक्तिर्दृष्टान्तार्था औत्सर्गिकोक्त्या
ऽन्योन्याश्रयत्वशङ्का परिहृता सामान्यन्यायं प्रकृते योजयति * त-
दिहेति * ज्योतिरादेः संज्ञान्तरत्वस्योपपादनापेक्षत्वान्निश्चितसंज्ञान्तर-
त्वमुदाहरणान्तरमुक्तं सर्वशब्दः सोमेन यजेत ज्योतिष्टोमेन स्वर्गकामो
यजेत वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिसोमयागवाचिप्रकृतसर्व-
यजतिविषयः।प्रागुच्चारिताः सर्वे यजतयो ज्योतिष्टोमविषयत्वाद् गा-
व्यादिसंज्ञान्तरसामानाधिकरण्यं न लभन्ते येन ज्योतिष्टोमाविषयय-
जिसामानाधिकरण्यात्संज्ञान्तरस्यापि ज्योतिष्टोम एव संज्ञी स्यादि-
त्युक्ते ऽर्थान्तरशब्देन लुप्तविषयशब्दकेनार्थान्तरविषयत्वालाभो दृ-
ष्टान्तत्वेनोक्तः। प्रागुच्चारितयाजिविषयभूतो ज्योतिष्टोमश्चेन्न संज्ञी क-
स्तर्हि संज्ञीत्यपेक्षिते यस्त्वेतेन' यजेतेति प्रस्तूयमानो यजतिः सो
ऽर्थान्तरे वर्त्ततइति कृत्वा तद्विषयभूतो यागः संज्ञान्तरस्य संज्ञी-
त्युक्ते । ननु तस्यापि गुणोपबन्धात्फलोपबन्धाद्वा विधायकस्य गुणे

फलेच्छाव्यापृतत्वेन यज्यर्थे व्यापाराभावादभ्यासन्यायेनार्थान्तरे वृत्त्ययोगात्कथं तद्विषयभूतो यागः संज्ञान्तरस्य संज्ञी स्यादित्याशङ्क्य यद्यपि प्रस्तूयमानो यजतिर्विधायकवशेन भिन्नार्थविषयो न भवति तथापि विच्छिन्नानुसन्धानत्वादर्थान्तरे वर्त्तत इत्युक्ते ऽनुसन्धानविच्छेदोपपादनायार्थान्तरानुरक्तायां बुद्धौ यजेर्निपातमुक्तमुपपादयितुं प्रकरणविच्छेदस्योक्तस्योपपादनार्थं पूर्वकर्मविषयाया बुद्धेः प्रस्तूयमानयज्युच्चारणकाले ननु वृत्तिमुक्तामुपपादयितुं गोशब्दस्य पूर्वकर्मवर्णनिवेशे ऽभिहिते गोशब्दस्य पूर्वांशनिवेशे ऽपि कस्मात्पूर्वे बुध्यननुषङ्ग इत्याशङ्क्य व्यवायान्नानुषज्यत इतिन्यायोक्तिः प्रस्तूयमानस्य यजेः संज्ञान्तरावरुद्धं ज्योतिष्टोमं प्रति गमनाशक्तौ ज्योतिष्टोमसंज्ञाविलक्षणगवादिसंज्ञान्तरावच्छेदं हेतुं रूपकद्वाराह*तथा हीति* पूर्वस्य यजेः प्रस्तूयमानं यजर्थागमनं दृष्टान्ततयोक्तं प्रस्तूयमानस्य यजेरर्थान्तरवृत्तिमुपसंहरतीति या तु कर्मान्तरपक्षे ऽथ शब्दस्य पूर्वप्रकृतविध्यपेक्षावाचित्वायोगात्क्रतोश्च क्रत्वन्तरानपेक्षत्वेन पूर्वप्रकृतक्रत्वपेक्षावाचित्वायोगादविवक्षितक्रमत्वेन चानन्तर्यार्थत्वायोगादानर्थक्यापत्तिरुक्ता सा कर्मान्तरत्वे सत्यविकारार्थत्वोपपत्तेर्नास्तीत्याह*एवं च सतीति*आदिशब्दः पूर्वपक्ष्यभिमतपूर्वप्रकृतविध्यपेक्षा- ५२९।१
ग्रहणार्थः प्रतिपत्तृचित्तसमानार्थत्वाच्चाधिकारोक्तेर्नैष्फल्यानापत्तिरित्याशयः । एषशब्दस्य वैष देवदत्त इति प्रागनिर्दिष्टे ऽपि सन्निहिते प्रत्यक्षे प्रयोगदर्शनात्प्राक् प्रकृते ऽपि च सन्निहितप्रत्यक्षत्वेनैव प्रयोगोपपत्तेः प्राक्प्रकृतत्वस्य वाच्यत्वकल्पनायोगात्सन्निहितप्रत्यक्षरूपत्वस्य चोत्तरकालं प्रस्तूयमाने ऽप्यविशेषान्नैषशब्दः।प्राक् प्रकृतत्वमपेक्ष्यत इत्याह*एष शब्दो ऽपीति * या च प्रकृतहान्यप्रकृतप्रक्रियाकल्पनयोर्दुष्टतोक्ता सापि तयोः संज्ञाश्रुतिप्रभवत्वादयुक्तेत्याह*प्रकृतेति * नासामिति भाष्यं पुनःश्रुतित्वाशङ्कानिरासार्थत्वेनाभासमानशङ्कानुपपत्त्याक्षिपति * नासामिति * एतेन सहस्रदक्षिणेन यजेतेति गुणसंक्रान्तशक्तिनाख्यातेनाभेदावधारणान्न संज्ञाया भेतृत्वं सम्भवतीत्याशङ्कामाख्यातस्य विशिष्टविधित्वोपपत्तेरभेदावधारणाशक्तत्वान्निराकर्तुमभेदावधारणोत्तरकालत्वं पुनःशब्देनोच्यते नावृत्तिरित्याशयेन समाधत्ते * इतीति * गुणसंक्रान्तशक्तित्वेनाख्यातस्याभिन्नतयावधारिते कर्मणि पश्चाद्यदि ज्योतिरादिसञ्ज्ञानामिमानि श्रवणानि स्युस्ततो न भिद्युर्नत्वाख्यतेनाभेदः शक्यो ऽवधारयितुमिति भाष्यार्थो ऽनेनोक्तः । ननु विधिभेदं विना विधेयभेदायोगादथैष ज्योतिरित्यादौ च विध्यप्रतीतेर्न सञ्ज्ञाया भेतृता-

युक्तेत्याशङ्क्य ज्योतिः सञ्ज्ञको यागः कार्य इत्यध्याहारेण यागविधित्वाभिधानार्थं तस्मादितिभाष्यं यस्मात्सञ्ज्ञाभेदाद्भिन्नो यागः तस्मादेनद्विधायकमित्यर्थप्रतीतेः स्पष्टत्वादव्याख्याय तदुपपादनार्थमनुवादे हीति भाष्यम् अध्वर्युर्गृहपतिं दीक्षयित्वेत्यादीनामनुवादानामर्थवत्त्वाभ्युपगमादयुक्तमाशङ्क्योपपादयति * समस्तमेवेति * तेषां तु क्रमादिावधायित्वेन अर्थवत्त्वेत्याशयः। ननु गुणविधये ऽनुवादो ऽर्थवान् भविष्यतीत्याशङ्क्याह * अथेति * यागानुवादे ऽपि प्रकरणात्तद्गुणत्वं सेत्स्यतीत्याशयः। अथैष ज्योतिरित्यनेन च कर्मान्तरविधौ सहस्रदक्षिणादीनां ज्योतिष्टोमाङ्गत्वापत्तेस्तत्र च तद्विरोधिगुणान्तरविधानाददृष्टदोषो विकल्पः स्यादित्यभिधानार्थं प्रकृतस्य चेति भाष्यं व्याचष्टे *कर्मैकत्वेति* ननु कर्मान्तरे ऽप्यतिदेशात् द्वादशशतादिप्राप्तेर्विकल्पः स्यादित्याशङ्क्याह *कर्मान्तरत्वे त्विति* आतिदेशिकस्यौपदेशिकेन बाधान्न विकल्पापत्तिरित्याशयः। अनेन च पूर्वपक्षे द्वादशशतादीनां च विकल्पः सिद्धान्ते कर्मभेदाद्व्यवस्थेति प्रयोजनमपि सूचितम्।नन्वकर्मान्तरत्वे ऽपि सहस्रदक्षिणादेः फले विधानात्काम्यत्वेन नित्यद्वादशशतादिबाधकत्वान्न विकल्पापत्तिरित्याशङ्क्याह * न चेति * प्रकृताश्रयलाभे सति विकल्पदोषः शक्यनैव परिहर्तुं सञ्ज्ञया तु प्रकृतबुद्धिविच्छेदात्प्रकृते कर्मणीव फले ऽपि गुणो विधातुमशक्य इत्याशयः। ननु गुणफलयोरेकवाक्योपादाने गुणविशिष्टस्य कर्मणः फले विधौ वाजपेयाधिकरणोक्तवैरूप्यापत्तेर्गुणस्यैव फले विध्यवगमाद् गुणसंक्रान्तशक्तिनाख्यातेन कर्माभेदे ऽवधारिते सञ्ज्ञाया भेदकत्वान्न प्रकृतबुद्धिविच्छेदकतेत्याशङ्क्याह * प्रस्तूयमानेति * अधिकारार्थाथशब्दसमभिव्याहारेणैषशब्दस्य प्रस्तूयमानकर्मविषयत्वावसायादेतेन यजेतेत्येषशब्दनिर्दिष्टप्रस्तूयमानकर्मप्रतिनिर्देशकेतच्छब्दसमभिव्याहृतस्य यजेरपि प्रस्तूयमानकर्मविषयत्वावगतेस्तदेकवाक्यत्वबलेन सञ्ज्ञादीनां प्रकरणावगतं पूर्वकर्मान्वयं बाधित्वा प्रस्तूयमानकर्मान्वयावधारणात्सञ्ज्ञया प्रकृतबुद्धिर्विच्छिद्यतएवेत्याशयः। यस्त्रिरात्रे विभ्रंशत्तेन तस्मिन्पुनरस्त्यथ यो ज्योतिष्टोमे प्रायश्चित्तिमभूदपि ह्येतेनैकविंशतिदक्षिणेन पुनर्यजेतेत्यग्निष्टोमविभ्रंशनिमित्तप्रायश्चित्तार्थत्वेनापि ज्योतिषो विधानादादिशब्दस्तद्विषयः। ततश्च न केवलं सञ्ज्ञातः कर्मान्तरत्वं किं त्वथशब्दसमभिव्याहारादपीति सूचयितुमाह * तस्मादपीति * तस्माच्छब्देन प्रस्तूयमानकर्मान्वयपरामर्शात्तस्य च प्रस्तावापरपर्यायाधिकारार्थाथशब्दसमभिव्याहाराधीन-

त्वादेवं सूचनोपपत्तिः ज्योतिरादिसञ्ज्ञानां ज्योतिष्टोमवाचित्वाद्भेदकत्वं पूर्वपक्षोक्तं ज्योतिष्टोमशब्दावयवत्वाद्वास्यां ज्योतिष्टोमवाचित्वम् अवयवार्थालोचनया वेति विकल्प्याद्यपक्षनिरासार्थं तावन्न चेत्यादिभाष्यं व्याचष्टे * न चेति * दशमे कण्वरथन्तरपृष्ठकार्ये विहितमवयवभूतेन रथन्तरशब्देन रथन्तरधर्मातिदेशाद्रथन्तरयोनौ गेयमिति पूर्वपाक्षिते कण्वरथन्तरशब्दस्य पुनानः सोम धारयेऽत्यस्यामृच्युत्पन्ने सामविशेषे रूढत्वाद्रथन्तरशब्दस्य तदवयवत्वं स्वयोनौ गेयत्वं सिद्धान्तयितुं निराकरिष्यमाणं दृष्टान्तितं विश्वज्योतिःसर्वज्योतिःशब्दयोरेकदेशसादृश्ये ऽप्येकदेशान्तरेणासादृश्याच्छालामालाशब्ददृष्टान्तेन ज्योतिष्टोमशब्दावयवत्वनिरासद्वारा तदर्थवाचित्वे निरस्ते ज्योतिःशब्दस्य ज्योतिष्टोमशब्दप्रतीकत्वं पूर्वपक्षोक्तं यत्त्विति भाष्येणानुभाष्य तन्निरासार्थं प्रकरणसामर्थ्याद्धीति भाष्यं प्रतीकत्वोपपादनार्थं पूर्वपक्षवार्त्तिकोक्तप्रयोगदर्शनानुभाषणपूर्वं व्याचष्टे * यत्त्विति * नन्वेतेन यजेतेत्येतच्छब्दसमभिव्याहारालोचनया यजेज्योतिःशब्दैकवाक्यत्वावगमेऽपि प्रवृत्तिनिमित्ताभावात्कर्मान्तरे ज्योतिःशब्दप्रवृत्त्ययोगमाशङ्क्य द्योततेर्द्धातोर्द्युतेरिसिन्नादेश्च ज इत्यौणादिके सिन्प्रत्ययविधेर्दकारस्य च जकारादेशविधेर्वृद्धिसाधनत्वकारितं द्योतनं मत्वर्थलक्षणया वा ज्योतिष्मत्त्वं प्रवृत्तिनिमित्तं वक्तुमथ पुनरिति भाष्यमर्थतो व्याचष्टे * न चेति * भाष्योक्तकर्मान्तरप्रवृत्तिनिमित्तसद्भावान्नेहान्यथानर्थक्यापत्तिप्रमाणकान् गौणत्वात्, ज्योतिष्टोमविषयत्वमवगम्यतइत्याशयः। अवयवार्थालोचनया विश्वज्योतिःसर्वज्योतिःशब्दयोर्ज्योतिष्टोमवाचितेति द्वितीयं पक्षं पूर्वपक्षोक्तं यच्चेति भाष्येणानुभाष्य तन्निरासार्थं न हीति भाष्यं व्याचष्टे * यो ऽपीति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

॥ देवताभेदकृतकर्मभेदाधिकरणम् ॥ ९ ॥

## गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥

संज्ञावद् गुणस्यापि पूर्वकर्मनिवेशानर्हत्वेन भेदकत्वाद् गुणचिन्तायाः संज्ञाचिन्तानन्तरं सङ्गतिमाह * अत इति * वाजिन- ५३०।२
वाक्यमेवाधिकरणस्य विषयः प्रतियोगियागविधायित्वेन तु वैश्वदेवीवाक्यं दध्यानयसंस्कृततप्तपयःपरामर्शितच्छब्दव्याख्यानार्थं च तप्तवाक्यमुपन्यस्तामिति विवेक्तुमाह * चातुर्मास्येष्विति * सन्देह-

भाष्यं व्याचष्टे * तत्रेति * देवताया अप्यप्राप्यत्वादुभयविधिः क-स्मान्न पूर्वपक्षित इत्याशङ्क्याह * तत्रेति * तस्माद्युक्तं सन्देहभा-ष्यमित्याह * तेनेति * पूर्वपक्षप्रतिज्ञाभाष्यं व्याचष्टे * किमिति* वाजिनामप्यप्राप्तेर्विधेयत्वावगमात्प्राप्ते च कर्मण्यनेकगुणविध्ययो-गान्न पूर्वत्र गुणविधिः सम्भवतीत्याशयेन प्रश्नपूर्वं कुत इत्याशयेन पूर्वं कुत इत्यादिपूर्वपक्षभाष्यं व्याचष्टे * कुत इति * नन्वेवं दे-वताप्रतीतावपि कर्माप्रतीतेः कथं तत्र द्रव्यविधिरित्याशङ्क्य द्रव्यदे-वतान्वयस्य कर्मनिबन्धनतयैवावगतत्वाद्वैश्वदेव्यामिक्षान्वयानुमितं कर्मापि वाजिशब्दादेव प्रतीयत इत्युक्तं तस्मादिह पूर्वविहिते कर्मणि वाजिनविध्युपपत्तिरित्युपसंहारः। ननु वाजिशब्दस्य रूढ्या देवताविशे-षवाचित्वान्नावयवयोगकल्पना युक्तेत्याशङ्क्यं निरस्यन् श्लोकं व्या-चष्टे * वाजिनो नामेति * नन्वेकस्मिन्कर्मणि गुणद्वयसमावेशः कथमित्याशङ्कानिरासार्थं तेनोभयमिति भाष्यं द्वेधा व्याचष्टे * त-स्मादिति * वाजयोगस्य देवताविशेषणत्वे वाजिशब्दादामिक्षान्व-यापरित्यागेनैव वाजिनान्वयावगतेः समुच्चयः। उपलक्षणमात्रत्वे तु वाजिनविधावामिक्षान्वयाप्रतीतेरन्योन्यानिरपेक्षैकार्थ्यादिकल्प इ-त्याशयः। ननूत्पत्तिशिष्टबलीयस्त्वस्य वैश्वदेवाधिकरणे स्थितत्वा-दुत्पत्तिशिष्टामिक्षावरुद्धे यागे वाजिनविध्यनुपपत्तेर्न विकल्पः स-

५३११२ मुच्चयो वा युक्त इत्याशङ्क्याह * सत्यपि चेति * वैश्वदेवशब्दवत् वाजिनशब्दस्य नामधेयत्वायोगाद् गुणविधित्वं विनानर्थक्यापत्तेर्वा-जमेषामस्तीति च सर्वनामार्थवृत्तिना वाजिशब्देन देवताद्वारा सन्नि-हितयागोपस्थापनात् गुणविशिष्टकर्मान्तरविध्यनुपपत्तेरामिक्षानिरा-काङ्क्षे ऽपि सोमक्रये हिरण्यादिविधिवत्सम्भवतीति स्पष्टत्वादनुक्त्वा विकल्पोपपादनार्थं निष्कर्षोक्तिः। ननु क्रयवद्यागस्येह स्वशब्दानुक्त-त्वाद् द्रव्यदेवतानुमितत्वं च ततो निष्क्रष्टुमशक्यत्वान्न निष्कृष्टे यागे गुणान्तरविधिः सम्भवतीत्याशङ्क्याह * यद्यपि चेति * द्रव्यदेव-तानुरक्तत्वेनाप्यनुमितस्य यागस्य क्रियारूपतया कारकरूपाभ्यां द्र-व्यदेवताभ्यां निष्कर्षः सम्भवतीत्याशयः। ननु सत्यपि व्यतिरेके वै-श्वदेवीशब्दाच्छुद्धयागाप्रतीतेरशब्दावगतस्य च शाब्दवाजिनान्वया-योगान्न तस्मिन्वाजिनविधिः सम्भवतीत्याशङ्क्याह * यागेति * वैश्वदेव्यामिक्षाया यजेतेति श्रुतानुमितैकदेशनिष्पन्ने वाक्ये शुद्ध-यागवाचिपदानुमानाच्छब्देनापि निष्कर्षः सम्भवतीत्याशयः। नन्वेवं वैश्वदेवीवाक्ये निष्कृष्टयागोक्तावपि वाजिशब्देन निष्कृष्टाननुवादान्न तत्र वाजिनविधिः सम्भवतीत्याशङ्क्याह * वाजीति * तत्रापि

वाजिदेवत्यो यो यागस्तत्र वाजिनं कुर्यादिति निष्कृष्टयागवाची शब्दोऽनुमीयत इत्याशयः । तेन पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * तस्मादिति * अनेकगुणोपादानलक्षणस्य पूर्वकर्मसंयोगहेतोः पौर्णमास्यधिकरणव्युत्पादितस्यात्राभावात् गुणान्तरावरोधलक्षणं हेत्वन्तरमत्राभिमतमिति दर्शयन् सिद्धान्तमाह *अत्रेति* अप्रकृतेतेति भाष्येण नञ्समासपूर्वकोत्तरपदसमासेनापूर्वसंयोगव्याख्याने ऽपि दध्यादेः कर्मान्तरसंयोगार्हस्य भेदकत्वनिवृत्त्यर्थमपूर्वेणैव संयोग इत्यवधारणेन पूर्वकर्मासंयोगस्यैवोक्तत्वात्पूर्वकर्मण्यसम्भवादित्यनेनैव सूचितमपूर्वसंयोगशब्दस्य व्याख्याद्वयमाह * अपूर्वेति * कारकयोः साक्षादनन्वयाद्देवताशब्दं कर्मलक्षणार्थं मत्वा * कर्मान्तरेत्युक्तम् * द्वितीयव्याख्यायामुत्तरपदसमासपूर्वको नञ्समासः पूर्वकर्मसंयोगानर्हत्वे ऽपि वैश्वदेववाक्यवत्कर्मोत्पादकत्वाभावे भेदकत्वायोगादपूर्वसंयोगस्य भेदापादकत्वाय कर्मविध्याक्षेपकत्वाभिधानार्थत्वेन वाक्ययोरिति सूत्रावयवव्याख्यानार्थं स मे हीति भाष्यमिति सूचयन्सूत्रावयवं व्याचष्टे * वाक्ययोरिति * अपूर्वसंयोगाक्षेपार्थं कथं पुनरिति भाष्यं व्याचष्टे * सत्यमिति * यदुत्याक्षेपभाष्यावयवं शङ्कोत्तरत्वेन व्याख्यातुं सिद्धान्तिनः शङ्कामाह * तत्कार्येति * समुच्चयाशयत्वेन तावद्व्याचष्टे * कथमिति * विकल्पाशयेनैतमेव भाष्यावयवं व्याख्यातुमेकार्था स्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्येति द्वादशाधिकरणन्यायेन समुच्चयासम्भवं शङ्कते * एकार्थास्त्विति * आमिक्षावाक्ये निरपेक्षामिक्षासाधनकत्वेनावगते यागे समुच्चयविध्ययोगाद्वाजयोगस्य चोपलक्षणमात्रत्वोपपत्तेर्न क्रयद्रव्यवद्वचनात्समुच्चयसिद्धिरित्याशयः । विध्यकल्पाशयत्वेन व्याचष्टे * विकल्प एवेति * समाधानार्थं तदुच्यतइति भाष्यं व्याचष्टे * नेति * तद्धितेति भाष्यं पूर्वभाष्योक्तातुल्यबलवत्त्वविवरणार्थत्वेन व्याचष्टे * तदिति * भाष्यद्वये ऽपि तद्धितचतुर्थ्योः श्रुतिवाक्यत्वकृतबलाबलोक्त्यविशेषात्पौनरुक्त्यमाशङ्क्य पूर्वस्य तावत्सामान्यन्यायोक्त्यार्थत्वं सूचयितुमाह * सर्वत्रैव तावदिति * क चित्तद्धितेन क चिच्चतुर्थ्येति वाच्ये बलाबलोक्तये श्रुतिवाक्योपन्यास इत्यनेन सूचितम् । द्वितीयस्य बलाबलोपपादनार्थत्वं सूचयितुं शङ्कते * आहेति * द्वयोः श्रुतित्वाविशेषादित्याशयः विशेषोक्तौ भाष्यं योजयति * तद्धिति * यत्रेति भाष्यस्य प्रकृते ५३२।१
समान्यन्याययोजनार्थत्वं सूचयितुमाह * वैश्वदेवी हीति * देवतान्वयस्योभयत्र श्रौतत्वाद् द्रव्यान्वयस्य तूभयत्र वाक्यीयत्वाच्छ्रुति-

वाक्यत्वकृतविशेषायोगाशङ्कानिरासार्थं तत्रैषामिति भाष्यमाक्षि-
पति * नन्विति * भाष्यस्थो विशेषशब्दस्ताद्धितान्तर्गतास्यशब्दो-
क्तद्रव्यान्वयस्याश्रौतत्वाद्वाक्यीयत्वोक्त्ययोगमाशङ्क्य सामान्यस्याप्र-
देयत्वेन देवतान्वयानर्हत्वाद्विशेषस्यैवान्वयो वाच्यः । स च वा-
क्याधीन इत्यभिधानार्थो ऽथ द्रव्यमात्रान्वयस्य श्रौतत्वे ऽपि वि-
शेषान्वयो वाक्यगम्य इत्यभिधानार्थ इति विकल्प्याद्यपक्षे द्रव्यान्व-
यस्योभयत्र वाक्यीयत्वाद्देवतात्वस्य उभयत्र श्रौतत्वादविशेषे द्र-
व्यसङ्गतिमात्रं करणादित्यन्तेनोक्ते ऽथ द्रव्यमात्रसंयोग इत्यादि-
ना चतुर्थ्या अपि कर्माभिप्रेयमाणत्वलक्षणसंप्रदानवाचित्वात्कर्म-
भूतद्रव्यान्वयोक्तिं विना सम्प्रदानोक्त्यनुपपत्तेर्द्रव्यान्वयवाचित्व-
स्यापि सम्प्रदानवाचित्वस्मृत्याक्षेपाद् द्रव्यान्वयस्यापि श्रौतत्वावग-
त्याशयेन द्वितीयपक्षे ऽप्यविशेषमुक्त्वापि चेत्यादिना द्रव्यमात्रान्व-
ये विरोधाभावेन बलाबलस्यावाच्यत्वात् विशेषान्वयस्योभयत्र वा-
क्यीयत्वान्नैकस्यापि श्रौततास्तीत्युक्तमिति विवेकः । आक्षिप्तं भाष्यं
समाधातुं श्रुत्या देवतात्वमिति भाष्यावयवं तावत्तद्धितान्ताद्देवता-
शब्दात्परस्य भावप्रत्ययस्य सम्बन्धवाचित्वमङ्गीकृत्य द्रव्यवि-
शेषस्य श्रौतदेवतान्वयोक्त्यर्थत्वेन व्याचष्टे * तदिति * विशे-
षस्यैव देवतोच्यतइत्यनुषङ्गः । अस्य शब्दस्य विशेषवाचित्वमु-
पपादयन् श्लोकं व्याचष्टे * विश्वेदेवा इति * विशेषस्यै-
व सर्वनामवाच्यत्वात्त्यागलक्षणव्यवहारयोग्यत्वाच्चास्य शब्देना-
भिधानात्तद्धितेन देवतान्वयोक्तिरित्यर्थः । सम्बधग्रहणाशक्तेर्विशेष-
स्य वाच्यत्वायोगमाशङ्क्य सन्निहितत्वं सम्बन्धोपलक्षणत्वेनो-
क्तम् । ननु द्रव्यविशेषस्यैव देवतान्वये तद्धितेनोक्ते सत्यामिक्षाश-
ब्दो ऽनर्थक इत्याशङ्कानिरासार्थत्वेन द्रव्यविशेषस्य देवतासम्ब-
५२३।२ न्धितया तद्धितोक्तस्यामिक्षया सह विशेषणविशेष्यसम्बन्धो वा-
क्येन गम्यतइत्येवमुत्तरावयवं व्याख्यातुमाह * ततश्चेति * त्यज्य-
मानं द्रव्यं प्रत्युद्देश्यत्वेन देवताया विशेषत्वात्सामान्यस्य च त्या-
गायोगाद्विशेषावगत्युपादानायोपसर्जनत्वमुक्त्वा सम्बन्धं विनोपस-
र्जनत्वासिद्धेस्तात्सिद्ध्यै ऽन्तर्णीतः सम्बन्धो यस्यां देवतायां सोपस-
र्जनं यस्य द्रव्यस्य तत्प्रत्यये तद्धितान्तेन सन्निहितो द्रव्यविशेषो
देवताविशिष्ट इत्येवं निष्पादिते स्वरूपावगतिं विना तदपर्यवसाना-
त्तत्समर्पणाय *आमिक्षापदेनेत्युक्तं*ननु देवताविशिष्टस्य तद्धिता-
न्तपदवाच्यत्वाभ्युपगमे सम्बन्धस्य लक्ष्यमाणत्वापत्तेः श्रौतत्वोक्ति-
रयुक्तेत्याशङ्क्य वैयाकरणमतेन श्रौतत्वोक्तिरित्याह * तत्रेति *

एवं तु स्वमते श्रौतत्वासिद्धेरपरितोषादेकपदगम्यत्वेनौपचारिकी श्रौतत्वोक्तिरित्यन्यथा परिहरति * अथापीति * भाष्यावयवद्वयस्योक्तमेव विविक्तविषयत्वं स्पष्टयति * तेनेति * येन कारणेनामिक्षापदेन तद्धितोक्तो द्रव्यविशेषः समर्प्यते तेन कारणेन विशेषणविशेष्यत्वलक्षणस्यासम्बन्धस्याभावात् द्वाविह सम्बन्धावित्यर्थः । नन्वेवं सति पदान्तरान्वयसापेक्षत्वाच्छ्रुतेरपि न वाक्याद्विशेषः स्यादित्याशङ्क्याह * इतीति * सर्वनाम्नः पदान्तरसन्निधापितार्थविषयत्वात्तेन विना स्वार्थाभिधानपर्यवसानानुपपत्तेः पदान्तरस्यापि सन्निधापकस्य सर्वनामश्रुतिव्यापारान्तर्गतत्वावसायात्पर्यवसिताभिधानाभिधेयार्थाकाङ्क्षासन्निधियोग्यत्वाधीनपदान्तरान्वयात्सर्वनामार्थवृत्तितद्विषयसमर्पकपदद्वयान्वयस्य शीघ्रं प्रतीतेरस्त्यामिक्षावाजिनयोर्विशेष इत्याशयः । ननु विशेषणविशेष्यत्वलक्षणसम्बन्धाभ्युपगमे तस्य भेदाधिष्ठानत्वाद्वैश्वदेव्यामिक्षाशब्दयोर्भिन्नार्थत्वापत्तेर्नीलोत्पलशब्दयोरिव वाक्यलक्षणएवान्वयः स्यात् न श्रौत इत्याशङ्क्याह * ततश्चेति * यतश्च कारणादामिक्षापदेन तद्धितोक्तद्रव्यविशेषसमर्पणनिमित्तं विशेषणविशेष्यत्वम् अतोऽर्थभेदसमर्पणायोगाद्भिन्नार्थत्वानुपपत्तेर्नार्थयोर्विशेषणविशेष्यत्वं किं तु शब्दयोरेवेत्यर्थः। किं तर्हि विशेषणविशेष्यत्वे द्वारमित्यपेक्षायामामिक्षापदसन्निधानात्तद्धितस्य द्रव्यविशेषवाचित्वव्यवस्थापनं द्वारमाह * किं तर्हीति * पदद्वयश्रवणानन्तरं तत्प्रतीतेः समुदायवाच्यत्वशङ्का तद्धितएवेत्येवकारेण निरस्ता सर्वनामार्थवृत्तित्वलक्षणोपपत्तिर्विषशब्देनोक्ता श्लोकं व्याचष्टे * नैवेति * अपत्यादितद्धितवद्विशेषानभिधानेऽपि सन्निहितत्वमात्रत्वाभिधानात्पर्यवसानमाशङ्क्य * अनुपयुक्तेत्युक्तम् * औपगवादिशब्दे देवदत्तादिविशेषाप्रतीतावप्युपगवपत्यत्वमात्रप्रतीत्युपपत्तेर्युक्तमभिधानपर्यवसानं सन्निहितत्वस्य तु प्रकृत्यर्थेनाविशेषणान्निर्विशेषणस्य च सर्वपदार्थसाधारण्येनानुपयोगितयानभिधेयत्वादपत्यादिविशेषणवच्चोपपदार्थाविशेषणफलत्वाभावान्न सन्निहितत्वमात्राभिधाने तद्धितस्य शक्तिः कल्प्येत्याशयः । वैश्वदेवीशब्दे एवेत्यनेन तद्धितएवेत्यन्वयः सूचितः । न चेत्यनेनोत्तरार्द्धं व्याख्यातम् । नन्वामिक्षापदेन विनामिक्षाविषयत्वाप्रतीतौ देवतायोगस्यामिक्षाविषयत्वं वाक्यार्थः स्यादित्याशङ्कानिरासायामिक्षामेवेत्यावृत्त्यैवकारान्वयसूचनार्थम् * न च वाक्यार्थत्वमित्याद्युक्तम् * सन्निहितार्थविशेषविहितत्वात्तद्धितस्य तत्समर्पकपदानपेक्षस्या-

न्वर्थाप्रसिद्धेः स्वतन्त्रपदार्थाग्रहणाद्वाक्यार्थत्वानुपपत्तिरित्यर्थः । भाष्यस्थविशेषपदोक्तशङ्कानिरासोपपादनार्थं तद्धितस्य विषयार्पणमेवेत्येकारान्वयं सूचयितुम् * तेनेत्युक्तम् * उपपदसर्वनामतद्धितानामैकार्थ्ये वृद्धसम्मतिमाह * तथा चेति * आमिक्षाशब्देनैव सिद्धेर्वैश्वदेवीशब्दानर्थक्यं त्वनाशङ्क्यमेवेति सूचयन्नैकार्थ्यम्
५३४।२ मुपसंहरति * तेनेति * यैवेत्येवकारेणामिक्षा * शब्दोक्तैवेत्युक्तम् * सैव वैश्वदेवीशब्देनोक्ता सती देवतासम्बन्धं यास्यतीत्येतदर्थं वैश्वदेवीशब्देनोच्यते इति क्रियार्थायां क्रियायामुपपदे लृङ्व्याख्यानेन योज्यम्। एकार्थे प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकरण्यायोगमाशङ्क्यामिक्षाशब्दस्यामिक्षात्वं वैश्वदेवीशब्दस्य देवतान्वयं प्रवृत्तिनिमित्तं देवतान्वयार्थामिक्षाशब्दोक्तार्थोक्तिपरामर्शिना तच्छब्देन सूचयन्नर्थविशेषणविशेष्यत्वानपेक्षत्वमुपसंहरति * तेनेति * वाजिने तु द्रव्यदेवतान्वयो विशेषणविशेष्यत्वं च द्वयमपि वाक्यीयमेवेत्यभिधानार्थमेकत्रेति भाष्यं व्याचष्टे * इतरत्र त्विति * सम्प्रदेयाद्विना सम्प्रदानायोगादर्थाक्षेपेण विभक्त्या द्रव्यदेवतायोगोक्तिमाशङ्क्य * स्वत इत्युक्तम् * समान्यतो द्रव्यदेवतायोगाक्षेपे ऽपि स्वेन वाजिनशब्दवाच्येन रूपेण हविषो देवतायोगो न विभक्त्योक्त इत्यर्थः । श्लोकं व्याचष्टे * वाजिभ्य इति * तस्य द्रव्यविशेषस्य देवतासम्बन्धः । तत्सम्बन्धः सामान्यतो विशेषतो वा द्रव्यदेवतासम्बन्धो न वाजिपदे ऽन्तर्गत इति कथं चिच्छब्देनोक्तम्। यदि च तद्धितवच्चतुर्थी सर्वनामार्थे स्मर्येत ततः सम्प्रदेयस्य द्रव्यस्य सम्प्रदानभूतदेवतान्वयश्चतुर्थ्यन्ते पदे ऽन्तर्गतः स्यान्न त्वेतदस्तीत्याह * अपि चेति * देवतात्वापेक्षयापिशब्दः श्लोकं व्याचष्टे * सास्येति * यदि चान्यपदार्थो ऽपि चतुर्थ्यन्तात्प्रतीयेत ततो स्मृतो ऽपि देवतान्वयचतुर्थ्यन्ते पदे ऽन्तर्गतः स्यान्न त्वेतदप्यस्तीति सम्प्रदानमात्रं प्रतीयत इति वदतोक्तम्। ननु सम्प्रदेयं विना सम्प्रदानायोगात्सम्प्रदेयमपि चतुर्थ्यन्तात्प्रतीयतएवेत्याशङ्क्याह * तेन त्विति * ननु सम्प्रदानमात्रस्य चतुर्थ्यर्थत्वे देवतात्वस्यापि तयानुक्तत्वाद्वाक्येनापि द्रव्यदेवतावगत्यनुपपत्तेरुभयस्य वाक्यीयत्वोक्तिरयुक्ता स्यादित्याशङ्क्याह * तेनेति * लक्षणया देवतात्वोक्तिमभ्युपगम्य भाष्यमित्याशयः । नन्वेवं सति देवतात्वस्यामिक्षावाजिनवाक्ययोः श्रौतत्वाविशेषात्तुल्यबलत्वं स्यादित्याशङ्क्याह * तत्र चेति * अनेन च तदिहेति भाष्यस्थो ऽपि देवतात्वशब्दः पूर्वभाष्यस्थवत्सम्बन्धवाचितया व्याख्यातः । श्रौतवा-

कर्यीयत्वविशेषोक्तिप्रयोजनाभिधानार्थं विरोधे चेत्यादिभाष्यं व्याचष्टे * इतीति * सन्निकर्षविप्रकर्षौ वा भाष्यस्थाभ्यां श्रुतिवाक्यशब्दाभ्यां विवक्षिताविति व्याख्यानान्तरमाह * किं चेति * श्रुतिशब्दस्य सन्निकृष्टत्वमर्थो वाक्यशब्दस्य विप्रकृष्टतार्थ इत्यर्थः । कथमामिक्षान्वयस्य सन्निकृष्टत्वं वाजिनान्वयस्य विप्रकृष्टापेक्षिते
ऽष्टप्रकारं सनिकर्षविप्रकर्षाभिधानं प्रतिजानाति तावत् * विप्र- ५३५।२
कृष्टेति * एतदेव व्याचष्टे * सर्वेति * आमिक्षायां सामान्यतो देवतान्वयाभिधानं न वाजिनस्येति तावत्प्रकारमाह * तद्यथेति* यद्यपि च भवतु नामेत्यनेन द्रव्यमात्ररूपत्वाविरुद्धात्मतोक्ता तामनुभाषणपूर्वं दूषयति * यत्त्विति * वैश्वदेवीतीतिकरणेन सन्निहितार्थवृत्तितद्धितपरस्त्रीप्रत्ययपरामर्शोत्तेन च सन्निहितस्त्रीद्रव्योक्तेर्वाजिने च नपुंसकव्यवहितशब्दनिर्दिष्टे स्त्रीत्वसान्निध्ययोगाद्विरोधो ऽस्त्येवेत्याशयः । ददातिकल्पनाकल्पनरूपं प्रकारान्तरमाह * अपि चेति * अवश्यकल्पकर्त्तव्यतावचनेनैवं पदद्वयान्वयसिद्धौ ददातिकल्पनानापत्तेस्तत्कल्पनासिद्ध्यर्थं सम्प्रदानसम्प्रदेयसङ्गतिर्ददाति विना * नास्तीत्युक्तम् * देयशब्दे ऽपि कल्पनीये धातुमात्रकल्पनस्यासाधारण्येन पर्यनुयोज्यत्वसूचनार्थं धात्वर्थेन तल्लक्षणा अवश्यकल्पकर्त्तव्यतावचनकल्पने ऽपि विप्रकर्षसिद्धेः कस्मान्न निरस्ता इत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * कर्त्तव्यतेति * प्रश्नपूर्ववैधर्म्यमुपपादयति * कुत इति * वैश्वदेव्यामिक्षाशब्दयोस्तु सामाधिकरण्याद्वैधर्म्यदृष्टान्तत्वोपपत्तिरित्याशयः वाजिशब्दस्य कारकविभक्त्यन्तत्वादपि न नाम्नान्वयः सम्भवतीत्याह * न चेति * ददात्यध्याहारे च विप्रकर्षद्वयापत्तिर्दोष इत्याह * तत्रेति * नन्वामिक्षावाक्ये ऽपि वैश्वदेव्यामिक्षया यजेतेति कल्पनाद्विप्रकर्षद्वयापत्तिरविशिष्टेत्याशङ्कते * इतरत्रापीति * पदद्वयान्वयहेतुत्वाभावान्नान्वयविप्रकर्षापादकं यजिकल्पनमित्याशयेन परिहरति * नेति * आमिक्षावाक्ये च यजिमात्रं
कल्प्यं वाजिनवाक्ये तु यजिर्ददातिश्चेति विशेषमाह*तव त्विति* ५३६।१
वाजिनवाक्यस्यानेकदोषदुष्टत्वसूचनार्थं परकीयत्वं विवक्षितुम् * तवेत्युक्तम् * त्वदीये वाजिनवाक्ये ऽर्थयोर्द्रव्यदेवतयोः सम्बन्धसिद्ध्यर्थं यजिश्च पश्चाद्भविष्यत्यादौ च द्रव्यदेवतापदयोरन्वयार्थं ददातिरित्युक्ते ददातिनैवार्थयोरप्यन्वयसिद्धेः । किं यजिनेत्याशङ्क्य * परेत्युक्तम् * परस्या देवतायाः प्रतिग्रहीतृत्वाभावेन तत्स्वत्वापादनलक्षणदानायोगान्न तेन द्रव्यदेवतान्वयः सम्भवतीत्या-

शयः व्यतिरेकवाचिना तुशब्देनामिक्षावाक्ये यजिमात्रकल्पनेति सूचितं चतुर्थ्याश्चोत्सर्गतोऽवगतस्यापि सम्प्रदानवाचित्वस्य वाजिनपदान्वयात्प्रागपवादकोपपदयोगाभावान्निश्चयेनानिर्णीतस्य देवतात्वत्वलक्षकत्वायोगात्प्रागेव च देवतात्वलक्षणायां ददातिकल्पनायोगापत्तेः सम्प्रदानसम्प्रदेयपदैकवाक्यत्वार्थं कल्पितेन ददातिना तदन्वये निष्पादिते वाजिनप्रतिग्रहीतृत्वाभावात्सम्प्रदानत्वानुपपत्तेर्देवतालक्षणार्थत्वं वाजिपदस्याभिप्रेत्य देवतापदत्वोक्तिर्ददातिकल्पनोत्तरकालमपि कारकपदयोरन्योन्यान्वये विप्रकर्षमाह * कल्पितेऽपि चेति * वैश्वदेव्यामिक्षाशब्दयोस्तु सामानाधिकरण्यात्कारकविभक्त्यन्तत्वाभावाच्च न कश्चिद्विप्रकर्षहेतुरित्याह * नन्विति * सामानाधिकरण्यवैयधिकरण्यलक्षणं तृतीयं प्रकारमाह * सत्यपि चेति * सर्वत्रैकविषयत्वनिबन्धनत्वादन्वयस्यैकविभक्त्यन्तत्वं विनैकविषयत्वाप्रतीतेर्वाजिसम्प्रदानकं वाजिनमित्येकविभक्त्यन्तत्वाय सम्प्रदानवाचिन्याश्चतुर्थ्याः सम्प्रदेयलक्षणार्थत्वाद्वैयधिकरण्ये विप्रकृष्टेत्याशयः। एतदेवारुणाधिकरणभाष्यसम्मत्या द्रढयति * तथा चेति* श्रुतिलक्षणात्मकं चतुर्थं प्रकारमाह*किं चेति*लक्षणामुपपादयति*न हीति*दृष्टान्तेनामिक्षायां श्रुतिः सूचिता प्रसिद्धिविरोधात्त्रात्रेयस्य देवतात्वमस्तीत्याशयः।सम्प्रदानस्य देवतात्वेऽनिष्टापत्त्यन्तरमाह * यदि चेति * विरुद्धलक्षणत्वादपि संप्रदानस्य देवतात्वं नास्तीत्याह * प्रतिग्रह इति * एवमपि कथं सम्प्रदानत्वेन देवतात्वं लक्ष्यतइत्यपेक्षायां प्रकारद्वयमाह * तेनेति * तस्या देवताया उद्देश इति समासान्तर्गतषष्ठ्युक्तस्योद्देशकर्मत्वस्य विशेषणप्रधानेन निर्देशेन लक्ष्यतोक्ता नन्वप्रतिग्रहीतृत्वाद्देवतायामैश्वर्यं सम्भवतीत्याशङ्क्याह * तादात्म्येति * देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तममित्यादौ ब्राह्मणादिवद्देवताया अप्यैश्वर्यप्रसिद्धेर्यस्यै वा कस्यै देवतायै पशुरालभ्यते सैव मेधपतिरित्यार्थवादेभ्यश्च देवतात्वस्यैश्वर्यरूपत्वप्रसिद्धेः प्रतिग्रहाभावेऽपि तदुद्देशपूर्वकेण त्यागेन तदधीनत्वापादनान्मुख्यैश्वर्याभावेऽपि औपचारिकमैश्वर्यमस्तीत्याशयः। येऽपि सम्प्रदानद्वैविध्यमभ्युपगम्य प्रतिग्रहणात्मकस्य सम्प्रदानस्य देवतात्वाभावेऽप्यनिराकरणात्मकसम्प्रदानस्य देवतात्वमिच्छन्ति तन्मतेऽपि चतुर्थ्युक्तेन सम्प्रदानत्वसामान्ये तत्तद्विशेषदेवतात्वलक्षणाद्विप्रकर्ष इत्याह * यद्यपीति * सन्दिग्धत्वलक्षणं पञ्चमं प्रकारमाह * अपि चेति * श्लोकं व्याचष्टे
५३७।१ * वाजिभ्य इति * शङ्कोत्तरत्वेनोत्तरार्द्धं व्याख्यातुम् * नन्वित्या-

द्युक्तम् * सकलरूपसाम्ये ऽपि पदावधारणोपायान् बहूनिच्छन्ति सूरयः क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुतीरिति प्रकृतिप्रत्ययान्वाख्यानस्मृतेरपि पदभेदावधारणोपायत्वेनेष्टत्वात्प्रयाजाः सविभक्तिकाः कर्त्तव्या इत्यादौ च वेदे ऽपि विभक्तिप्रसिद्धेर्विभक्तीनां पारिभाषिकत्वाभावादन्वाख्यानभेदेन शब्दभेदात्सन्देहोपपत्तेरर्थसन्देहस्य चोभयसाधारण्येनापर्युनुयोज्यत्वाच्छब्दसन्देह एवं विप्रकर्षापादक इत्याशयः। उत्पन्नशिष्टत्वलक्षणं षष्ठं प्रकारमाह * किं चेति * अस्तु तावदुत्पन्नशिष्टत्वलक्षणो विशेषो वैश्वदेवाधिकरणोक्तेनोत्पत्तिवाक्यविज्ञातमित्यादिचित्राधिकरणवार्त्तिकोपपादितेनोत्पत्तिशिष्टबलीयस्त्वेनोत्पत्तिशिष्टगुणावरुद्धे कर्मणि गुणान्तरं विधातुमेवाशक्यमित्याह * यथा चेति * श्लोकोक्तमुत्पत्त्युत्पन्नशिष्टत्वविशेषस्य सन्निकर्षविप्रकर्षप्रकारत्वमुपपादयितुं प्रतिजानाति * वैश्वदेवेति * प्रश्नपूर्वं वैश्वदेवाधिकरणोक्तमेव न्यायमुपपादनार्थं स्मारयति * कुत इति * श्लोकं व्याचष्टे * वाजिनं हीति * अस्मिंश्च व्याख्यानप्रकारे सामान्यतो ऽप्यामिक्षान्वयस्य श्रौतत्वाभावे ऽपि वाजिनाद् बलीयस्त्वमित्याह *ततश्चेति* वाक्येनैव सामान्यतो ऽप्यामिक्षादेवतान्वयितया विधीयतइति वाच्ये तथापि सामान्यस्य ऽब्रवीतीत्याद्यप्रकारानभ्युपगमे ऽपि आमिक्षाया बलीयस्त्वोक्त्यतद्बुद्धिस्थीराकरणार्था विपरीतोक्तिः। ननु यागमात्रान्वये ऽपि भेदस्तावन्न सिध्यतीत्याशङ्क्याह * प्रकरणानपेक्षेति * अप्रकृतानां यागानामप्रतीतेः प्राकृतानां चानपेक्षणाद्यागान्वयायोगाद्विशिष्टविधिरेवापद्येतेत्याशयः। स्वार्थासमाप्तत्वेन च वाक्यान्तरानपेक्षत्वान्न तद्विहिते कर्मण्यनेन गुणविधिः सम्भवतीत्याह * न चेति*
रूढियौगिकत्वलक्षणं सप्तमं प्रकारमाह * विश्वदेवाश्चेति * उत्त- ५३८।१
रार्द्धं व्याचष्टे * वाजिन इति हीति * अवयवप्रसिद्धेर्विप्रकर्षोपपादनार्थमक्षरैरेव बुध्यन्तइति प्रोक्षणाधिकरणवार्त्तिकोक्तं दौर्बल्यं स्मारयति * वाक्यार्थवच्चेति * न केवलं विश्वेदेवस्य शब्दस्यया रूढ्या वाजिशब्दस्यावयवप्रसिद्धिबाधः किं त्वात्मस्थयापीत्याह *वाजीति * देवतात्वे ऽश्वानामयोग्यत्वादस्त्येव विश्वेषु देवेषु वृत्तेर्देवतात्वसिद्धिः। कार्यमित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * देवतात्वं नामेति * अन्यत्र देवतात्वोक्त्या न च गतयोग्यत्वस्याग्न्यादेरनवगतयोग्यत्वस्य वाश्वादेः शब्दैकसमधिगम्यत्वाद्युक्तं देवतात्वमित्यर्थः। यौगिकत्वाभ्युपगमे ऽपि विश्वदेवविषयता क्लेशगम्येत्याह * सत्यपीति * श्लोकं व्याचष्टे * सर्वे हीति * ननु व्री-

हीन्प्रोक्षतीत्यादिवत् प्रकृतग्रहणं भविष्यतीत्याशङ्क्य वैषम्यमाह * * गुणेति * एतदेव विवृणोति * संस्कार्यत्वे हीति * देवतायाः संस्कार्यत्वं विनाऽप्यारादुपकारित्वाद्यागस्य प्रयोजनवत्त्वोपपत्तिरित्यर्थः। संस्कारकर्मत्वे ऽपि तप्तस्य पयसो दध्यानयनसंस्कृतस्यामिक्षाशब्देन घनीभूतस्य वैश्वदेवयागे विनियोगात्तदनुनिष्पादिनो द्रवस्य वाजिनशब्दोक्तस्योपयुक्तशेषत्वात्प्रतिपत्त्युपेक्षस्य प्रतिपत्तिर्भ-
५३९।१ विष्यतीत्याह * कामं वेति * प्रकृतग्रहणे ऽप्यग्न्यादीनामष्टानां प्रकृतत्वाविशेषाद्विश्वेदेवमात्रविषयत्वं न सिध्यतीत्याह * प्रकृते" ति * ननु विश्वेदेवशब्देनाष्टानामपि ग्रहणं भविष्यतीत्याशङ्कते * अथेति * एकदेवतोद्देशेन यागसिद्धेः सर्वदेवतोद्देशो निष्प्रमाणक इति परिहरति * तदिति * बहुवचनं प्रमाणत्वेनाशङ्कते * बह्विति * न तत्सर्वोद्देशे प्रमाणमिति परिहरति * नेति * अष्टानां मध्ये के ऽत्र ये ग्राह्या इत्यनवधारणात्सर्वग्रहणं भविष्यतीत्याशङ्कते * न त्रिष्विति * द्वादशाधिकरणन्यायेनाद्या स्तिस्रो देवता इत्यवधारणं सम्भवतीति परिहरति * न मुख्यं वेति * अतो ऽष्टानां मध्ये विश्वेदेवमात्रग्रहणं निष्प्रमाणकमित्युपसंहरति * तस्मादिति * अनन्तरोपादिष्टवाजवतां च वाजिशब्देनोक्तौ नैराकाङ्क्ष्याच्च वाजिनान्वयो युक्त इत्याह * साकाङ्क्षा चेति * सप्तमं प्रकारमुपसंहरति * तस्मादिति * देवशब्दस्य वाजिशब्देन लाभोपपत्तेर्दुर्लभत्वोक्तिरयुक्तेत्याशङ्क्य * तत्रापि चेत्युक्तम् * वाजिशब्दोच्चारणेनैव विश्वेदेवग्रहणसिद्धेः किं प्रयोजनलाभेनेत्याशङ्क्याह * न चेति * शास्त्रेण च वाजिशब्दोच्चारणएव पुरुषस्य प्रवर्त्तितत्वाच्च वाजिशब्देनार्थद्वारा विश्वेदेवशब्दलक्षणायां प्रमाणमस्तीत्याह * वाजीति * एवं च वाजिनयागे विश्वेषां देवतात्वे सत्यपि वाजिशब्देनैवोक्तानां देवतात्वाद्देवताभेदेनामिक्षावाक्यस्थदेवतानुवादायोगात्पौर्णमास्यधिकरणन्युत्पादितया प्राप्ते कर्मण्यनेकार्थविध्यशक्त्यापि कर्मभेदसिद्धिरित्याह *
५४०।१ ततश्चेति * परस्मादिति सूत्रार्थोपसंहारभाष्यं व्याचष्टे * इतीति * अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेतेति सूत्रमथेत्यादिभाष्येणोपवर्णनापरिहारार्थत्वेन व्याख्यायाथ वेत्यादिना दध्यादेरपि गुणस्याष्टदोषविकल्पापत्तेः पूर्वकर्मण्यसम्भवाद्भेदकत्वप्रसक्तावयवादार्थतया ऽधिकरणान्तरत्वेन व्याख्यातं तत्र द्वितीयव्याख्यायां तत्सन्निधेर्गुणार्थेन पुनः श्रुतिरित्यनेन पौनरुक्त्यापत्तेः प्रयोगकालीनविकल्पालोचनेन चोत्पत्तिशास्त्रान्यथात्वकरणायोगात्पूर्वपक्षानुपपत्तेराद्यैव

व्याख्या युक्तेत्याह * अगुणेति * गुणान्तरावरुद्धकर्मोत्पत्त्यभावेनो-दाहरणभेदहेतुत्वेनोक्तस्यापूर्वसंयोगस्याभावात्प्रत्युदाहरणत्वं दध्या-देर्वैषम्योक्तये ऽनेनोच्यतइत्यर्थः । प्रत्युदाहरणत्वं विवृणोति अन्येनेति *

॥ दध्यादिद्रव्यसफलत्वधिकरणम् ॥ ११ ॥

## फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २५॥

सम्भवत्प्रकृताश्रयलाभस्य गुणस्योदाहरणत्वाभिधानार्थमग्नि-होत्रमिति भाष्यं व्याचष्टे * अग्निहोत्रमिति * सन्देहभाष्यं व्याच-ष्टे * तत्रेति * तस्यैवेति सिद्धान्तवचनव्यक्तिपूरणेनापवादतयान-न्तरसङ्गतिः सूचितां गुणशब्दस्य सिद्धार्थवाचित्वात्सिद्धस्य च निर्व्यापारस्य फलसाधनत्वायोगाद्वाक्यभेदापत्तेश्चानेनैव द्वारभूत-व्यापारविध्ययोगाद् गुणफलान्वयायोगाशङ्कानिरासार्थं प्रकृतकर्मसं-बन्धोक्तिः । ननु शुद्धकर्मोत्पत्तौ गुणस्यानन्तरस्तत्र एवाभेदकत्वो-क्तेः पूर्वपक्षायोगात्सन्देहो न युक्त इत्याशङ्क्याह * द्वयमेवेति * यथा शुद्धोत्पत्तावभेदकतोक्ता तथानेकस्य गुणस्य प्राप्ते कर्मण्या-शङ्क्य विधित्वाद्भेदकतापि चोदना वा गुणानां युगपच्छास्त्रादित्य-त्रोक्ते ननु विध्यशक्तेस्तत्र भेदकत्वादिह गुणनिमित्तभेदप्रकरणे पूर्वपक्षहेतुत्वेनोपन्यासो न युक्त इत्याशङ्क्य यथा सगुणकर्मोत्पत्तौ पूर्वसंयोगानर्हत्वात् गुणस्य भेदकत्वं तथा शुद्धोत्पत्तावनेकस्यैव पूर्वकर्मसंयोगानर्हत्वहेतुसाम्याद्भेदकत्वं विध्यशक्तिस्तु पूर्वसंयोगा-नर्हत्वोपपादिकेति सूचनार्थं दृष्टान्तत्वेन * स गुणोत्पत्तावित्युक्त-म् * प्रकारान्तरव्याख्यानार्थम् * विधीयमानेत्युक्तम् * द्वयमेवे-त्येवकारेण प्राप्ते कर्मण्यनेकविध्यशक्तेः साक्षाद्भेदहेतुत्वाभावः सू-चितः । भेदहेतुत्वेन फलस्य गुणस्यानेकार्थोपादाने ऽप्युपपत्तौ नाव्यापिन्या विध्यशक्तेर्भेदकतेत्याशयः । एवमपि कथं सन्देहोपप-त्तिरित्याशङ्क्य * तेनेत्युक्तम् * गुणफलात्मकानेकार्थोपादानस्य पूर्वत्रासम्भवे भेदकत्वात्सम्भवे चाभेदकत्वात्सम्भवासम्भवविष-यः सन्देहो भेदाभेदसन्देहहेतुरित्याशयः । नन्वेवमपि किमग्निहो-त्रहोमान्तरमिति पूर्वपक्षवचनव्यक्तिप्रतियोगितया स एवेति सि-द्धान्तवचनव्यक्तिदर्शयितव्या न गुणात्फलमितीत्याशङ्क्याह * तत इति * यतः कारणात्पूर्वकर्मण्यनेकार्थोपादानसम्भवासम्भवसन्देहो भेदाभेदसन्देहहेतुस्ततः कारणादेतयोः सम्भवासम्भवयोः सिद्ध्यर्थं फलान्वयः कस्येति विचार्यमित्यर्थः । कर्मणो हि फलान्वये ऽनु

पादेयफलान्वयेन कर्मोत्पत्तेः प्रतीयमानाया बाधकस्य प्रत्यभिज्ञानस्य गुणाधिक्येनाभावात्पूर्वस्मिन्कर्मणि गुणफलोपादानासम्भवः । गुणफलान्वयत्वाश्रयत्वेन पूर्वकर्मापेक्षणात्सम्भव इत्याशयः । वृत्त्यन्तरोदाहृत्यातिक्रमेणोदाहरणान्तरोपादाने प्रश्नपूर्वकारणमाह
५४१।१ * किमर्थं पुनरिति * ननु भेदाभेदयोरनुष्ठानविशेषानुपयोगे ऽपि कर्मणः फलान्वये दधिगोदोहनादेः क्रत्वर्थत्वात्फलकामनां विनाप्यनुष्ठानं विकृतौ चातिदेशः स्यात् गुणफलान्वये तु पुरुषार्थत्वात्सत्यां कामनायामनुष्ठानमनतिदेशश्चेत्यनुष्ठानविशेषस्य द्वयेऽपि साम्याद्विशेष इत्याशङ्क्याह * क्रत्वर्थेति * गोदोहनादेः पुरुषार्थतैवोत क्रत्वर्थतापीति क्रत्वर्थपुरुषार्थचिन्ता चतुर्थे करिष्यमाणत्वान्नेह कार्येत्याशयः । नन्वनुष्ठानविशेषानुपयोगे ऽपि भेदाभेदनिर्णयस्तावद्भविष्यतीत्याशङ्क्याह * इह त्विति * अनुष्ठानानुपयोगिनिर्णयानर्थक्यादुपयोगानुगुणमेवोदाहार्यमित्याशयः । कथं गोदोहनोदाहरणे भेदाभेदयोरनुष्ठानविशेषानुपयोग इत्याशङ्क्योपपादयति * न चेति * ननु गोदोहनात्फले क्रत्वर्थप्रणयनाश्रितस्य फलसाधनत्वादन्तः क्रतुप्रयोगः प्रणयनात्तु फले क्रत्वर्थात्प्रणयनात्तस्य भेदापत्तेर्बिवा एतद्यज्ञाच्छिद्यते यदन्यस्य तन्त्रे प्रतेतत् ऽन्यस्य तन्त्रे प्रतीयतइति क्रतुमध्ये ऽन्यप्रयोगनिषेधाद् बहिः क्रत्वित्यनुष्ठानविशेषाशङ्कानिरासार्थम् * प्रणयनस्येत्युक्तम् * देशान्तरप्रापणरूपसंस्कारस्वभावत्वात्प्रणयनस्य प्रणेतव्यापेक्षायां स्ववाक्ये प्रणेतव्याश्रवणाच्चमसेनापः प्रणयन्तीति सन्निहितवाक्यान्तरश्रुतानामपां प्रणेतव्यत्वावगतेस्तासां च क्रत्वर्थत्वेन नैराकाङ्क्ष्यात्पदकर्मवत्प्रणयनस्याप्रयोजकत्वेनान्यासामनाक्षेपाद् बहिः प्रयोगे च पृथगितिकर्त्तव्यतानुष्ठानाक्षेपापत्तेः प्रयुक्तिलाघवार्थं भेदे ऽप्यन्तः क्रतुप्रयोगः सेत्स्यतीत्याशयः । दध्युदाहरणे तु भेदाभेदयोरनुष्ठानविशेषोपयोगो ऽस्तीत्याह * इह पुनरिति * नन्विहापि पृथगितिकर्त्तव्यतानुष्ठानाक्षेपापत्तेः प्रयुक्तिलाघवायान्तः क्रतुप्रयोगो भविष्यतीत्याशङ्क्य * दर्वीत्युक्तम् * सर्वेषां जुहोतिचोदितानां दर्विहोमाख्यत्वस्यापूर्वत्वस्य च वक्ष्यमाणत्वादित्याशयः । अग्निहोत्रविध्यन्तग्रहणात्सायम्प्रातरभ्याससिद्धेः सकृत् क्रियानुपपत्तिशङ्कानिरासार्था वा पूर्वोक्तिः प्रयोजनाभावमात्रेण चेह गोदोहनस्यानुदाहरणोक्तिः । परमार्थतस्तु तस्यापि दाक्षायणादेरुक्थ्यादिसंस्थानां च फलान्वयेनैनैव न्यायेन सिद्धे तत्र तत्रांशान्तरचिन्तेति द्रष्टव्यम् । ननु स्वर्गे यावज्जीवशब्दोक्ते च जीवने ऽनुपादेये विधीयमानो ऽपि होमः प्रत्यभि-

ज्ञानाद्यथा न भिद्यते तथेहापीति कर्मफलान्वयोक्तेर्भेदानुपयोगमाशङ्कते * नन्विति * गुणाधिक्येनाप्रत्यभिज्ञानाद्वैषम्यमाह * नैतदिति * श्लोकं व्याचष्टे * फलेति * प्रत्यभिज्ञासम्भवं प्रश्नपूर्वमुपपादयति * कुत इति * श्लोकं व्याचष्टे * अग्निहोत्र- ६४२।२
मिति * शुद्धोत्पन्नस्यापि वाक्यान्तरेण दधिवैशिष्ट्यात्प्रत्यभिज्ञानं शङ्कते * नन्विति * तस्यामुत्पादकत्वेन मुख्यत्वनिमित्तबलीयस्त्वाभावादुत्पत्तिप्रतिबन्धकत्वं न सम्भवतीत्याशयेन परिहरति * नेति * एतदेव विवृणोति * येन तावदिति * अतुल्यकार्यत्वादप्यगुणवाक्यस्योत्पत्तिप्रतिबन्धकत्वं न सम्भवतीत्याह * उत्पत्तीति * फलवाक्यानन्वयादपि गुणवाक्यस्य फलोत्पादकत्वप्रतिबन्धकत्वं न सम्भवतीत्याह * उत्पत्तीति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * गुणादिवाक्यानामपेक्षासन्निधिभ्यामुत्पत्तिवाक्येनैवान्वयः। परस्परं त्वनपेक्षत्वादेव तावदनन्वयः दध्नेन्द्रियकामस्येत्यादौ कथं चिदपेक्षासम्भवे ऽप्यसम्बद्धव्यवायेनाननुषङ्गात्सन्निधिरनाशङ्क्य एवेत्यर्थः। श्लोकं व्याचष्टे* अनुत्पन्नस्येति * नन्वित्यनेन परस्परानपेक्षोत्पत्तिमेवोपेक्षन्तइत्यवधारणाभ्युपगमेन सूचिता चतुर्थे त्वैकस्य दध्नः क्रत्वर्थत्वे पुरुषार्थत्वे च दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादिति संयोगपृथक्त्वं कारणमित्युक्ते शेष इति चोदिति सूत्रेण दध्ना जुहोतीति विहितस्य दध्नः फलापेक्षायामितरेण इन्द्रियफलत्वोक्तेरेकवाक्यत्वात्संयोगपृथक्त्वाभावमाशङ्क्य नार्थपृथक्त्वादिति सूत्रेण होमार्थत्वेन विहितस्य दध्नः फलानाकाङ्क्षत्वादेकवाक्यताभावं वक्ष्यतीत्याह * वक्ष्यति चेति * ननु फलवाक्यस्य गुणवाक्यानन्वये ऽप्युत्पत्तिवाक्येनैव गुणवाक्यान्वितेनान्वयाद्दधिविशिष्टप्रत्यभिज्ञोपपत्स्यतइत्याशङ्कते * तत्रेति * एवमपि।

पयोदधियवागूश्च सर्पिरोदनतण्डुलाः।
सोमो मांसं तथा तैलमापस्तानि दशैव तु॥

इति दश द्रव्यविशिष्टत्वादुत्पत्तेर्नेह प्रत्यभिज्ञा सम्भवतीत्याशयेन परिहरति * तदिति * दशद्रव्यवैशिष्ट्याद्वैलक्षण्येन प्रत्यभिज्ञाने निरस्ते यदि कश्चित्फलवाक्ये गुणवाक्यानालोचनादवैलक्षण्यं ब्रूयात्तन्मते प्रत्यभिज्ञानुत्पत्तिः प्रागेवोक्तेति सूचनपूर्वं श्लोकं व्याचष्टे * उत्पत्तीति * ननु दशद्रव्यवैशिष्ट्ये सत्यप्याकाङ्क्षा- ६४३।२
वशाद्दधिमात्रविशिष्टो होमः फलवाक्ये ग्रहीष्यतइत्याशङ्कते * अथ दधिसद्भावेति * फलवाक्यस्य दधिवाक्यान्वयमनपेक्ष्य गुणवा-

क्यान्विनोत्पत्तिवाक्यमात्रान्वयद्वारा फलवाक्येन दधिविशिष्टहोमग्रहणे सर्वगुणवाक्यानामगृह्यमाणाविशेषत्वेन युगपत्फलवाक्यान्वयात्केवलदधिविशिष्टहोमग्रहणाशक्तेस्तन्मात्रग्रहणमिच्छता फलवाक्यस्य दधिवाक्यान्वयो ऽभ्युपेतव्यः स च प्रागेव वारित इति परिहरति * तथा सतीति * ननु दशानां द्रव्याणां समुच्चयेन होमविशेषणत्वे सति दधिमात्रविशिष्टहोमग्रहणाशक्तिरस्तु तेषां तु विकल्पनान्वयाशक्यो दधिमात्रविशिष्टो होमो ग्रहीतुमित्याशङ्क्याह * अपि चेति * एवमपि नित्यपाक्षिकत्वेन वैलक्षण्यात्प्रत्यभिज्ञा न सम्भवतीत्याशयः । श्लोकं व्याचष्टे * यद्यपि तावदिति * ननु फलवाक्येनापि दधिपक्ष एव होमो ग्रहीष्यतइत्याशङ्क्याह * न चेति * उद्देशं विना यदाशब्दान्वयायोगात्फलाद्देशे च होमस्योपादेयत्वावगतेरुद्देश्यत्वायोगान्नित्यं दध्नोः विशेषणत्वापत्तेर्नित्यदधिविशिष्टस्य च होमस्यान्यतो प्राप्तेर्विधेयत्वाद्भेदापत्तिरित्याशयः । ननु नित्यदधिविशिष्टरूपाप्रत्यभिज्ञाने ऽपि फले विधीयमानस्य होमस्वरूपस्य प्रत्यभिज्ञानोपपत्तेः कर्मफलान्वयोत्तरकालं कर्मणो गुणाधिक्यं विधीयमानमपि न भेदमापादयतीत्याशङ्क्ते * नन्विति * एवं सति प्रत्यभिज्ञोपपत्तावप्यनेकार्थविधानादाग्नेयादिष्विव
५४४।२ कर्मभेदापत्तिरिति परिहरति * नैतदिति * श्लोकं व्याचष्टे * दधिहोमेति * ननु विकल्पेन प्राप्तस्य दध्नो नियममात्रकरणान्नानेकार्थविध्यापत्तिरित्याशङ्क्याह * यथैव चेति * नियमस्यापि विधित्वादन्यथा च गुणवाक्यानालोचने ऽप्यर्थादनियतानेकद्रव्यप्राप्तेर्दधिशब्देन नियममात्रकरणात्कर्मफलान्वयरूपैकार्थविधानादवाक्याभेदापत्तेर्यथा दध्यादेर्वाक्यान्तरेण विधाविन्द्रियकामवाक्ये यदि फलान्वयमनादृत्य केवलो दधिनियमः क्रियते तत एवैकार्थविधानं फलान्वयस्यापि तु विधेयत्वादपरिहार्यमनेकार्थविधानतया वैकल्पिकपशुद्रव्यफले वाक्यान्तरैः कल्पिते ऽपि यदि केवलस्य दधिनियमस्य करणं तत एवैकार्थविधानं सिद्ध्येन्न त्वेतदस्तीति व्यवधारणकल्पनया ऽयोज्यम् । विशेषतो ऽस्मिन्पक्षे तण्डुलादिपरिसंख्यापत्तेरपरिहार्यानेकार्थतेति तण्डुलादीत्यनेन सूचितं फलान्वयस्यापि तु करणं दधिनियमस्याप्यन्यतो प्राप्तस्य करणादपरिहार्यो वाक्यभेद इति सूचयितुमाह * न हीति * होमात्फले भेदापत्तिमुपपादितामुपसंहरति * तेनेति * विधेयशब्दाध्याहारेण कर्मात्र विधेयं स्यादिति भेदसिद्ध्यै कर्मविधित्वं प्रतिज्ञाय तद्धेतुत्वेन कर्मणः फलान्वयः सूत्रशेषेणोक्त इत्येवं किमित्यादिभाष्यव्याख्याते ऽथ सूत्रं

योजयन् पूर्वपक्षमाह * अत इति * भाष्यस्थन्याय्यशब्दं भावार्थाधिकरणन्यायविषयं सूचयन् श्लोकं व्याचष्टे * समस्तमेवेति * कर्मणः फलान्वयसम्भवो गुणस्य चासम्भव इति द्वयस्यापि भावार्थाधिकरणसिद्धत्वोक्त्यर्थः समस्तशब्दः। ननु फले गुणविध्ययोगे ऽपि कर्मणि गुणो विधास्यते ऽत आह * नेति * एतदेव प्रश्नपूर्वमुपपादयति * कथमिति * अप्राप्तस्यापि गोदोहनादेः फलश्रुतिवैयर्थ्यापत्तेर्न कर्मणि विधिर्युक्त इत्युत्तरार्द्धेनोक्तं श्लोकं व्याचष्टे*तत्र नामेति* कर्मणि गुणविध्ययोगे ऽपि फले गुणविधिर्भविष्यतीत्याशङ्कापि तस्माद्धोमात्फलमिति न्याय्यम्। न दध्नः फलमिति न्याय्यमित्यादिभाष्यपर्यालोचनया कमर्ण एव न्याय्यं न गुणादित्यवधारणप्रतीतेरनेनैव भाष्येण निरस्तेति सूचयन् समस्तं पूर्वपक्षभाष्यं व्याख्यानायावतारयति* अत इति * समस्तं भाष्यमवतारितमवयवशो व्याख्यास्यमानं किमित्यस्य दृष्टं हीत्येतदेकवाक्यतया भिन्नवाक्यतया च द्वेधा प्रतिभाने ऽप्येकवाक्यतैव युक्तेति वक्तुमुपक्रमते * तत्रेति * एतद्भाष्यमध्यइति तत्रशब्देनोक्तं भिन्नवाक्यत्वव्याख्यां दूषयितुमुपन्यस्यति * एकस्तावदिति * ननु दृष्टं ही- ५४५।२
त्येतदेकवाक्यतया किमेतदेव न्याय्यत्वे कारणं कारणान्तरं वेति कारणविशेषप्रश्नप्रतीतेः किमितीति कारणप्रश्नार्थत्वेन व्याख्या न युक्तेत्याशङ्क्यैतावानित्युक्ते तदुपपादनार्थम् * नेतीत्युक्तम् * सिद्धान्तप्रक्रियात्वं नञ्योगान्निराकरणप्रतीत्योपपादितं दृष्टं हीत्यादेस्तर्हि कथं योजनेत्यपेक्षायाम्*इतर इत्याद्युक्तम्* दृष्टं हीत्यनेन पूर्वपक्षिणोक्ते सामान्यतो दृष्टेनेत्यादिना सिद्धान्ती स्वयमेव यदीत्याद्याशङ्ख्य शङ्कां निराकरोतीत्यर्थः। नेति ब्रूम इत्यादेर्दृष्टाददृष्टसिद्धिरित्येतस्य सिद्धान्तग्रन्थत्वे कथं तर्हीति सिद्धान्ती प्रश्नस्यासङ्गतत्वापत्तेरिमां व्याख्यां दूषयति * तत्र त्विति * पूर्वपक्षिप्रश्न एव तर्ह्यसावस्त्वित्याशङ्ख्य होमफलान्वयाक्षेपविषयत्वात्सिद्धान्तिप्रश्नत्वावगतिरैकान्तिकशब्देन सूचिता स्वमतेन दृष्टं हीत्येकवाक्यतया किमिति प्रश्नं व्याख्यातुं सम्यक्त्वं तावदाह * इतीति * कीदृशीत्यपेक्षायामाह * तच्चेति * स्थितन्यायसम्भवोपपादनार्थम् * दधीत्युक्तम् * नन्वेवमनन्यप्रमाणकत्वाद्वेदार्थे ऽनुमानाशङ्का न युक्तेत्याशङ्क्याह * यद्यपि चेति * वेदावगम्ये ऽर्थे ऽनुमानादीनां निषिद्धे ऽपि कारणत्वे वेदार्थसन्देहे यो ऽनुमानाद्यविरुद्धः सो ऽङ्गीकार्यो न विरुद्ध इत्येवं वेदार्थनिर्णये तेषां हेतुत्वं भविष्यतीत्याशयेनेतीति पूर्वपक्षभाष्यं व्याचष्टे * पुनः पुनरिति * सामान्यतो दृष्टे पूर्वपक्षिणा

होमफलान्वयरूपवेदार्थनिर्णायकत्वेनाभ्युपगम्यमाने बहून् दोषानुद्भावयिष्यामीत्येवं दुष्टाशयेन सिद्धान्तिना सामान्यतो दृष्टं मदभिप्रेतत्वेनारोपितमिति विदितसिद्धान्त्याशयत्वं पूर्वपक्षिणः सूचयितुं * मेत्युक्तम् * निर्दोषकारणासम्भवे काशकुशावलम्बनन्यायेनानुमानं मया वाच्यं शब्दस्य करणस्य सद्भावादनुमानस्य च बहुदोषत्वेन मयापि ज्ञातत्वान्नानुमानमहं ब्रवीमीत्यर्थः । कृष्यादितः कर्मणः सकाशाद् व्रीह्यादिफलं दृष्टमिति कर्मफलान्वयस्य न्याय्यत्वे कारणमारोपयता सिद्धान्तिना यत्कर्मफलान्वये साध्ये कर्मणः फलवत्तया दर्शनमुक्तं तत्किं हेतुत्वेन सादृश्यरूपेण वा साधर्म्यमात्रत्वेनैवेति त्रेधा विकल्प्य स्वयमेवाशङ्क्याशङ्क्य पूर्वपक्षिणा यदीत्यादिभाष्येण निरस्तं तद्व्याख्यातुमुपक्रमते * कथमिति* यदीति हेतुत्वाशङ्काभाष्यं व्याचष्टे * यदि तावदिति * कृष्यादाविति भाष्येण होमविषयः कर्मशब्दः कृष्यादिविषयो वेति विकल्पहोमदर्शनमसिद्धं कृष्यादौ च यद्दर्शनं तद्धोमधर्म इति दोषद्वयमुक्तं तद्व्याचष्टे * तत इति * फलवत्त्वस्य साध्यत्वेन साध्यधर्मविशिष्टधर्मिरूपप्रतिज्ञार्थैकदेशत्वादसिद्धेरसतश्च दर्शनायोगादसिद्धतेत्याशयः । स्वीयसो ऽपि द्वितीयकल्पस्य कृष्यादितः कर्मण इति सामानाधिकरण्यादाद्यकल्पे ऽपि च होमस्थस्य फलवत्त्वदर्शनस्य कृष्यादावन्वयाभावेन स्वीयस्त्वतुल्यत्वादुत्थानं .ननु दृष्टं हीति भाष्यस्य व्याप्त्याभिधानमात्रार्थत्वात्तद्गतस्य कर्मशब्दस्य हेतुविशेषणार्थत्वाप्रतीतेर्फलवत्त्वदर्शनमात्रं व्याप्तिपक्षधर्मत्वसम्भवाद्धेतुरित्याशङ्कार्थमथेति भाष्यं होमे फलवत्त्वदर्शनमात्रस्याप्यसिद्धत्वेनापक्षधर्मत्वापरिहारादयुक्तमाशङ्क्योपपादयति * अथ विनेति * वस्तुतो सदपि पक्षधर्मत्वं कल्पनया ऽभ्युपगम्याशङ्केत्याशयः । वास्तवपक्षधर्मत्वाभावे ऽपि कल्प्येत पक्षधर्मतेत्यर्थः । फलवत्त्वमात्रस्याद्रव्ये ऽपि तन्त्वादौ पटादिफले दर्शनात् द्रव्यादपि दध्नः फलापत्तेरिष्टविघातकारी हेतुस्तन्त्वादेर्वा निष्फलाभ्युपगमे ऽप्यन्वयव्यतिरेकजस्य फलवत्त्वदर्शनस्यापह्नोतुमशक्यत्वादनैकान्तिक इत्यभिधानार्थं द्रव्यादपीति भाष्यं व्याचष्टे * तत इति * ननु सौर्यादौ प्रयाजादिदर्शपूर्णमासधर्मान्वयेनावगतात्सादृश्यात्तदीयाद्धयाजादिधर्मान्तरान्वयस्य तथा हि लिङ्गदर्शनमिति वदता वक्ष्यमाणत्वात्प्रसिद्धधर्मान्वयेन प्रवृत्तस्योपमानस्याप्रसिद्धधर्मान्वये ऽपि प्रामाण्यप्रतीतेर्होमे कृषिसादृश्यात्फलवत्त्वोपमानं भविष्यतीत्याशङ्कार्थमथ कृषीति भाष्यं व्याचष्टे * अथ सादृश्येति * उपमया फलवत्त्वं

कल्प्यतइत्यर्थः । साधनवैलक्षण्येन स्वरूपवैलक्ष्यण्येन च होमस्याप्य-
सादृश्यादुपमानासम्भवोक्त्यर्थं होमो ऽपीति भाष्ये किं चिद्वैलक्षण्ये
ऽपि व्यापाररूपत्वेन सादृश्याविघातादयुक्तमाशङ्क्योपपादयति *
तत्रेति * धर्मसामान्यभूयस्त्वलक्षणत्वात्सादृश्यस्य भूयस्त्वस्य ५४६।२
त्वापेक्षिकत्वेन भूयस्तरापेक्षायां भूयसो ऽप्यभूयस्त्वापत्तेः सुसदृ-
शापेक्षायां मन्दसादृश्यस्य सादृश्यभावो युक्त एवेत्याशयः । प्रक्षे-
पाधिकस्त्यागो विवक्षितः यदीत्यादिशङ्कोत्तराणि पूर्वपक्षवचनत्वे-
नैकग्रन्थत्वे ऽपि विवेकायास्माभिः पृथक् कृतानि सुसदृशानपेक्षणे
ऽतिप्रसङ्गापत्तिलक्षणकारणोक्त्यर्थमथेत्यादिभाष्यं व्याचष्टे * अथे-
ति * सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्य-
गुणकर्मणां सामान्यमिति कश्यपवचनाद्दध्नो ऽपि सद्रूपत्वादि-
धर्मसामान्ययोगेन कृषिसादृश्यापत्तेस्तत्परिहारार्थं सुसदृशापेक्षेति
यो ऽभिप्रायः पूर्वं मनसि कृतः सो ऽनेन विवृत इत्यर्थः । होमो
ऽपीति भाष्याभिप्रायविवरणार्थमथ द्रव्यादिभाष्यं व्याचष्टे * अथे-
ति * भाष्यार्थं वृद्धश्लोकेन सङ्क्षिपति * आह चेति * न चे-
तिभाष्यमुपमानस्य यावद्दृष्टैकावच्छिन्नापराधारधर्मविषयत्वेनाप्रसि-
द्धधर्मान्वये प्रामाण्यायोगात्सौर्यादौ तु प्रकृतधर्मातिदेशस्य करणा-
नुग्रहान्यथानुपपत्तिप्रभवार्थापत्तिप्रमाणकत्वेन लिङ्गदर्शनस्योपोद्
बलनमात्रार्थत्वात्सादृश्यमात्रेणादृष्टधर्मोपमानं न सम्भवतीत्यभि-
धानार्थं जातिप्रयोगापत्तेः साधर्म्यमात्रेणानुमानं न सम्भवतीत्य-
भिधानार्थं वेति द्वेधा व्याचष्टे * न चेति * फलवत्तया दृश्य-
मानकृषिसाधर्म्याद्धोमस्य फलवत्त्वानुमाने सत्त्वादिना द्रव्य-
साधर्म्याद्दध्नो ऽपि फलवत्त्वं स्यादिति साधर्म्यसमाख्या जातिः सा-
धनादिवैलक्षण्येन कृषिवैषम्यान्निष्फलतेति वैधर्म्यसमाख्याविक-
ल्पसमाख्यादीन्यपि जात्यन्तराणि यथासम्भवं योज्यानि साधर्म्य-
शब्देन भाष्यस्थस्य सादृश्यशब्दस्य व्याख्यान्तरं कृतम् । मात्रशब्द-
व्याख्यानायोनुमानवादोक्तनियम्यनियामकत्वलक्षणव्याप्यव्यापक-
भावे नैरपेक्ष्योक्तिः साधर्म्यमात्रेण सर्वधर्मप्राप्त्ययोगं चोदनासू-
त्रस्थेन भाष्येण द्रढयति * तथा चेति * उपमानेन सर्वधर्मप्राप्त्य-
योगमुपपादयति * तथा हीति * यद्धीतिभाष्यं स्वरूपतस्तावद्व्या-
चष्टे * यद्धीति * आक्षेप्तुमाह * अत इति * साध्याक्षेपकत्वश-
क्तिः प्रयोजकत्वाख्या कारणशब्देनाभिप्रेतेति समाधत्ते * तस्मा- ५४७।४
दिति * दृष्टान्ते सन्ततोर्ध्वगत्याद्यवच्छिन्नस्य धूमादेर्विपक्षवृत्त्यभा-
वात्साध्याक्षेपशक्तिलक्षणप्रयोजनकत्वरूपव्याप्यत्वावगमे ऽपि गो-

पालघटिकादौ तादृग्रूपत्वाभावे साध्यानाक्षेपकत्वदर्शनात्पक्षे ता-
द्रूप्येणैव प्रत्यभिज्ञायमानस्य साधकतेति वक्तुं सपक्षे यद्व्याप-
कस्य साध्यभूतस्य गमकत्वसम्भावनात्मककारणत्वलक्षणव्याप्य-
त्वरूपेण दृष्टं तदन्यत्र पक्षे तथाविधमेव गृह्यमाणं साधकमिति व-
दता तच्च यथाविधं करणभूतं तथाविधमेव साध्ये ऽप्यवगम्यतइ-
त्येवं कारणभूतमितीतिकरणस्य तादृग्रूपप्रत्यभिज्ञानार्थत्वमभ्युगम्य
भाष्यं व्याख्यातं कारणशब्दस्य शक्त्यभिप्रायत्वं प्रकटयितुं न त्वप्र-
सिद्धेः कार्यकारणभावइति भाष्यस्य स्वयं कृतां व्याख्यां स्मारयति
*एवं चेति * न चैतत्स्वमनीषिकामात्रेणैवं व्याख्यायते किं त्वत्र-
त्योपसंहारभाष्यालोचनयैवेत्याह * तथा चेति * अथेति हेत्व-
न्तराशङ्काभाष्यं तन्निरासार्थं चोपरत इति भाष्यमेकग्रन्थेनावतार-
णापूर्वकं व्याचष्टे * यदि तर्हीति * इदमा पक्षधर्मत्वाभावेन दूषि-
तात्फलवत्त्वदर्शनात्कर्मत्वस्य हेतोः पक्षधर्मत्वानिश्चयाद्विशेषः सू-
चितः । भाष्योक्तस्यानुमानस्य प्रतिज्ञाहेतुदृष्टान्तान्वदताग्निहोत्रवा-
क्यविहितस्य कर्मणः सिद्धान्तिनापि फलवत्त्वाभ्युपगमात्सिद्ध-
साध्यतापरिहारायात्र वाक्ये यच्छ्रुतमिति विशेषितम् ।अर्थाक्षिप्तेःप्र-
योगान्तरे फलस्याप्येतदेव विशेषणमिदमोक्तमनुमाप्येत्यनेन दृष्टं हीति
भाष्योक्तस्यैवानुमानस्यायमपि विकल्प इति सूचितं सम्प्रति साध-
नत्वस्यापि सन्देहहेतुत्वेनैकान्ताख्यनिर्णायसाधकत्वाद् * अनैका-
न्तिकी करोतीत्युक्तम् * तदेव फलवदिति सावधारणस्य प्रतिज्ञार्थ-
त्वात्सम्प्रति साधनत्वोपपत्तिः दधिहोमसम्बन्धस्यापि सिद्धान्तिना
फलसाधनत्वेनेष्टत्वात्तदभिप्रायेणैतद्वाक्यश्रुतौ दधिहोमसम्बन्धः
फलवान्द्रव्यसम्बन्धत्वात्तन्तुसंयोगवदित्यनुमानसूचनार्थं संयोगा-
नां चेति भाष्यावयवनोक्ते दधिहोमसम्बन्धस्य द्व्याश्रितत्वेन
द्रव्यमात्राश्रितत्वाभावाद् द्रव्यसम्बन्धत्वस्यासिद्धत्वमाशङ्क्यानेका-
श्रितत्वे ऽपि योगस्य द्व्याश्रयत्वे ऽपि भवत्यन्यतराश्रयो व्यपदेश इ-
त्यनेन न्यायेनैकाश्रितत्वाविरोधसूचनार्थस्तच्छब्दः शक्तिरूप एव
च क्रियाकारकयोः सम्बन्ध इतिवार्त्तिकाच्छक्तेः फलसाधनत्वप्रती-
तेर्दध्नेति तृतीयोक्ता दध्नो होमकरणत्वाच्छक्तिः फलवती शक्तित्वा-
त्तन्तुशक्तिवदिति चशब्दसूचितानुमानान्तरप्रदर्शनायादिशब्दः प-
टादेर्वानादिकर्मजन्यत्वात्साध्यविकलत्वं दृष्टान्तस्याशङ्क्य कर्मणो
विनष्टत्वेनाभावे सति पटाद्युत्पत्तेस्तन्तुजन्यत्वायोगोक्त्यर्थत्वेनोपर-
तग्रहणं व्याख्यातुम् * उपरतेत्यात्युक्तम् * फलोत्पत्तिकाले उप-
रतग्रहणसूचितः साध्यविकलत्वाभावस्तद्दर्शनार्थमित्यर्थः । कर्मा-

भावे फलोक्तिदर्शनार्थमित्यर्थः द्रव्यमपीति भाष्यावयवव्याख्याना-
र्थम् * तेनेत्युक्तम् * उपरतग्रहणसूचितः साध्यविकलत्वाभा-
वस्तच्छब्देन परामृष्टः अपि चेति भाष्ये धर्मविशेषविपरीतसाधन-
त्वलक्षणविरुद्धत्वोक्त्यर्थत्वेन व्याचष्टे * अपि चेति * दृष्टोऽर्थः
फलमस्येति विग्रहः प्रत्यक्षदृष्टत्वस्याशब्दगम्यत्वोक्त्या व्याख्यानादा-
नन्तर्याशयोऽयं दृष्टशब्दः येऽपि यथा निरपेक्षस्य कर्मणः संयोगवि-
भागो फलमभिघाताद्यपेक्षस्य च वेगाख्यः संस्कारस्तथावयवसंयो-
गापेक्षस्यावयविद्रव्यमपीति वदन्ति। तन्मतेऽप्यवयवसंयोगापेक्ष-
त्वात्तदारब्धमवयविद्रव्यमेव व्रीह्यादितुल्यं स्यात् नापरोक्षार्थग्रह-
णशक्तिरूपमिन्द्रियमित्यभिधानार्थं कृषीति भाष्यं व्याख्यातुम्* व्री-
ह्यादीत्युक्तम् * तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * त-
स्मादिति * एवं जातीयकशब्देन शब्दैकसमधिगम्यत्वोक्त्या हेतो-
रप्रयोजकत्वं सूचितं कथं तर्हीति सिद्धान्तिप्रश्नभाष्यमवधिद्वयेन
व्याचष्टे * यदीति * द्वितीयावधिनोत्तरभाष्यं व्याचष्टे * उच्य- ५४८॥
तइति * आद्यावधिपक्षे शब्देनेत्यवधारणीयं विशिष्टविधानाद्वधि-
पदानर्थक्यमपरिहार्यमित्याशयः। तस्मादित्युपसंहारभाष्यमेकस्य
न्याय्यत्वोक्ताावितरान्याय्यत्वस्यार्थसिद्धत्वेनातिरिक्तत्वादयुक्तमाश-
ङ्क्य समाधत्ते * तस्मादिति * न केवलमेकमेदोपादानलक्षणया
श्रुत्या होमस्य फलभावनाकरणत्वावगतेर्वाक्योपात्तस्य दध्नः कर-
णत्वाभावः किं तु दध्नः फले होमे च विधौ वाक्यभेदापत्तेरपीत्य-
भिधानार्थमपि चेति भाष्यं होमे दधिविधेः सिद्धान्तिनोऽनिष्टत्वा-
दयुक्तमाशङ्क्योपपादयति * अपि चेति * निर्व्यापारस्याव्यापार-
रूपस्य करणत्वायोगादापाद्यैतदुक्तमित्याशयः। नन्वित्याशङ्काभाष्यं
वस्तुसामर्थ्येऽपि वाक्यभेदापत्तेरुभयार्थत्वेन विध्ययोगाद्विध्यधीन-
त्वाच्च तादर्थ्यस्यायुक्तमाशङ्क्य व्याचष्टे * नन्विति * फलार्थ-
मेव विहितस्याश्रयापेक्षायां प्रकरणाद्धोमस्याश्रयत्वावगमात्प्रसङ्गेन
होमसाधनत्वसिद्धेर्नोभयार्थत्वायोभयत्र विध्यापादनं युक्तमित्या-
शयः। यद्वैकस्य वस्तुनोऽनेककार्याशक्त्याशयमसामर्थ्याभिधान-
मिति मत्वेयमाशङ्केत्यन्यथा व्याचष्टे * वस्त्विति * नन्वेकस्य
वस्तुनोऽनेककार्योत्पादनशक्तेरनेकत्र दर्शनाद्वस्त्वशक्त्याशयेनासा-
मर्थ्योक्त्यनुपपत्तेर्विध्यशक्त्याशयैर्वा सामर्थ्योक्तिरवसीयतइत्याश-
ङ्क्याह * तथा हीति * न ब्रूम इति परिहारभाष्यं व्याचष्टे * न
ब्रूम इति * अविहितेत्यनेनाश्रयापेक्षायामपि विधिं विना दधिहो-
मान्वयानुष्ठानासिद्धेः प्रसङ्गसिद्धिर्निरस्ता युगपत्सम्भवासम्भवा-

भ्युपगमापत्तेरभ्युभयार्थत्वेन विधिर्न सम्भवतीत्याह * सन्निकृष्टेति *स्वपदार्थे ऽन्यान्वयविधानाद्दधिहोमान्वयः सन्निकृष्टः । ननूभयार्थत्वेन विध्ययोगे ऽपि फलपदानर्थक्यपरिहारार्थं सन्निकृष्टत्यागेन विप्रकृष्टः विधिरपि युक्त इत्याशङ्क्याह * तस्मादिति * दधिविशिष्टस्य होमस्य फले विधौ स्वपदार्थस्यैवान्यान्वयविधानात्सन्निकृष्टविध्युपपत्तेस्तदभिमतो विप्रकृष्टोबाधनं सम्भवतीत्याशयः । तस्मादिति पूर्वपक्षोपसंहारभाष्यं सूत्रोक्तकर्मफलान्वयोपसंहारार्थत्वेन व्याचष्टे * इतीति *

## अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥२६॥

स्वर्गकामवाक्यात्तुल्यत्वोक्तेर्भावार्थाधिकरणन्यायाविषयत्वसिद्धिं प्रयोजनमाह * यादृशेष्विति * फलस्यैकत्र कर्मान्वयेनापरत्र गुणान्वयेनातुल्यत्वं भाष्यव्याख्यातं प्रश्नपूर्वमुपपादयति * कथमिति * सर्वत्रविधेर्भावनाविषयत्वाद् गुणसञ्चारायोगाशङ्कानिरासमाधाराग्निहोत्राधिकरणोक्तं स्मारयन् श्लोकं व्याचष्टे * भावनाख्यमेवेति * नन्वग्निहोत्रनामवद्दधिपदस्यापि वैकल्पिकदधिप्राप्तेस्तत्प्रख्यन्यायेन नामत्वोपपत्तेर्विधातव्यार्थत्वायोगाच्च तेन धात्वर्थापतितस्य विधित्वस्य धात्वर्थानुत्तारणं सम्भवतीत्याशङ्क्य * अशेषेत्युक्तम् * कर्मविषयतत्प्रख्यान्यशास्त्रसद्भावे ऽपि फले तत्प्रापणवैयर्थ्याभावाच्चेह तत्प्रख्यन्यायो ऽस्तीत्याशयः । ननु विधेयान्तरोपादाने ऽपि विशिष्टविध्युपपत्तेर्धात्वर्थाद्विधित्वानुत्तारणाद्दधिविशिष्टस्य होमस्य साधनत्वोपपत्तिरवसीयतइत्याशङ्क्याह * न चेति * तत्सन्निधेर्गुणार्थेन पुनः श्रुतिरित्यत्रोक्तं परामृष्टम् । ननु विशिष्टविध्ययोगे ऽपि होमे दधिविध्युपपत्तेर्न गुणफलान्वयः सेत्स्यतीत्याशङ्क्याह * यथा चेति * दध्नो वाक्यान्तरात् प्राप्तेस्तण्डुलादिवैयर्थ्यापत्तेश्च तद्व्युदासार्थविध्याशङ्कायोगाच्च होमद्धिविधिरित्याशयः। गोदोहनादेः प्रणयनादौ विध्याशङ्कां दधिव्याजेन निरसितुम् * फलेत्युक्तम् * अतुल्यत्वोपपादनस्य प्रकृतोपयोगमाह * तस्मादिति * गुणफलयोः कारकत्वेन क्रियां विनान्वयायोगात्स दध्ना कुर्यादित्यनेन दधिविशिष्टभावनाविधावुक्ते नामपदयोर्भावनानभिधायित्वादाख्यातपदार्थस्य चाविधेयत्वाभ्युपगमाद्विधेयत्वाभ्युपगमे वा भावार्थाधिकरणोक्तश्रुतिबलीयस्त्वाद्धात्वर्थस्यैव फलान्वयापत्तिरित्याशङ्कार्थं कतमो ऽत्रेति भाष्यं व्याचष्टे * कतमो ऽत्रेति * फलान्वयस्याप्रवृत्तप्रवर्त्तनात्मकाविधिविषयत्वाभावे

ऽन्यज्ञातज्ञापनात्मकविधिविषयत्वसद्भावात्प्राप्तायां च भावनायां फलान्वयज्ञापने गुणान्वयज्ञापने च भावना वा विधिप्रत्ययावृत्तिलक्षणवाक्यभेदापत्तेर्भावनाविध्यवगमे ऽपि धात्वर्थविध्यापादकहेत्वभावान्न धात्वर्थस्य फलान्वयापत्तिरित्याशयेन जुहुयादित्युत्तरभाष्यं व्याचष्टे * सिद्धान्तेति * विधित्वविधिसम्बन्धो विधेयतेत्यर्थः । ५५०।४
नन्वित्याशङ्काभाष्यं व्याचष्टे * नन्विति * ननु होमान्वयस्य श्रौतत्वोक्तावपि विधेयत्वानभिधानात्कथमनेन प्रश्नाभिप्रायविवरणमित्याशङ्क्याह * पुरुषेति * प्रत्ययान्तस्य पुरुषाव्यभिचारित्वाद्विशेषणानर्थक्यापत्तेः पुरुषानुष्ठेयत्वेन प्रयत्नं वदतीत्यर्थावगमाद्विध्यधीनत्वाच्चानुष्ठेयत्वस्य होमसम्बद्धं प्रयत्नं विधेयं वदतीत्यभिधानाद्धोमस्यापि विधेयतोक्ता भवतीत्याशयः । होमान्वयविधौ दधिपदानर्थक्यापत्तेस्तत्परिहारायैकपदोपादानलक्षणप्रत्यासत्तिरूपायाः श्रुतेः शब्दधर्मत्वेनाक्षरश्रवणलक्षणश्रुतितो दुर्बलाया बाधायुक्त एवेत्यभिधानार्थमत्रेति परिहारभाष्यं व्याचष्टे * सत्यमिति * अस्मदीयेष्वितिभाष्यं स्पष्टत्वादव्याख्याय युष्मदीयेष्विति भाष्यं पूर्वोक्तदधिश्रुतिबाधातिशयोपपादनार्थत्वेन प्रश्नपूर्वं व्याचष्टे * कथमिति* श्लोकं व्याचष्टे * श्लोकार्थेति * तस्मादिति पूर्वपक्षनिरासोपसंहारभाष्यं स्पष्टत्वादव्याख्याय स्वपक्षसाधुत्वोक्त्यर्थं गुणेति भाष्यं व्याचष्टे * गुणेति * अवश्यं हीति भाष्यं शङ्कोत्तरत्वेनावतारयति * तत्रेति * एतदेव प्रश्नपूर्वमुपपादयति * कथमिति *श्लोकं व्याचष्टे * प्रत्ययस्तावदिति * एवमपि धातु- ५५१।२
विशेषस्य कथं वक्तव्यतेत्याशङ्क्य * ततश्चेत्युक्तम् * अप्राप्तार्थधातूच्चारणे धात्वर्थविध्यापत्तेर्गुणफलान्वयरूपविवक्षितार्थालाभात्प्रकरणप्राप्तहोमानुवादिधातूपादानमङ्गीकृतमित्याशयः । होमशब्दस्तद्वाचिधातुलक्षणार्थः । ननु जुहोत्युपादाने ऽपि निराश्रयस्य गुणस्य फलसाधनत्वायोगाद्विधित्सितस्याश्रयाश्रयिसम्बन्धस्यापि विध्यापत्तेर्वाक्यभेदे प्रसङ्गाज्जुहोत्यनुपादाने तु पशुकाम उक्थ्यं गृह्णीयादित्यादिवद्धोमं कुर्वता दध्नेन्द्रियं कुर्यादित्याश्रयाश्रयिसम्बन्धविधायिवाक्यकल्पनेन गुणफलान्वयोपपत्तेर्जुहोत्युपादानमयुक्तमित्याशङ्क्याह *दधिसम्बन्धो ऽपि चेति* वाक्यभेदापत्तेः श्रुतस्य वाक्यस्याश्रयाश्रयिसम्बन्धाविध्यशक्तित्वेन वाक्यकल्पनाप्रतिबन्धकत्वादधिकारलक्षणप्रकरणोपस्थापितहोमान्वयविधायकादेव वाक्यात्प्राप्तस्याश्रयाश्रयिसम्बन्धस्यानुवादान्न वाक्यभेदापत्तिरित्याशयः । अनेन चैकस्य विधेः सम्बन्धद्वयविध्यसामर्थ्यं पूर्वपक्षोक्तं परिहृतम्।नन्वनुवाद-

मात्रार्थत्वे जुहोतेरविवक्षितार्थत्वादानर्थक्यं स्यादित्याशङ्क्याह * यथा चेति * अर्थाविवक्षायामपि प्रत्ययानुग्रहार्थवत्त्वेनार्थवत्त्वं भविष्यतीत्यर्थः । नन्वित्याशङ्काभाष्यं प्रत्ययानुग्रहायाप्युच्चारिताद्धातोः प्रतीतस्य होमस्याश्रयत्वेनाप्यवश्यविधेयतया ग्रहैकत्ववद्विध्यसंस्पर्शलक्षणाविवक्षाकरणाभावाद्विधानापत्तेस्तस्यैव भावार्थाधिकरणं न्यायात्फलसाधनं स्यादित्यभिप्रायत्वेन व्याचष्टे * नन्विति * विध्यसंस्पर्शलक्षणाविवक्षाकारणाभावे ऽपि वाक्यभेदापत्तेरनुवाद्यत्वलक्षणाविवक्षाकारणासद्भावेनाविधेयात्वान्न फलसाधनत्वापत्तिरित्यभिप्रायं नेति परिहाभाष्यं व्याचष्टे * नैष दोष इति * करोत्यर्थस्य होमान्वयप्रतीतावपि तन्निरपेक्षस्य विधेयत्वानपायात्तन्मात्रविधानेन च गुणफलान्वयरूपप्रयोजनसिद्धेः कल्पविधिप्राप्तभावनावच्छेदकगुणाश्रयत्वाद्वा भावनाविशेषणत्वानुवादोपपत्तेर्न विधेयत्वापत्तिरित्यर्थः । भाष्यमपि होमान्विते ऽपि करोत्यर्थः शुद्ध एव विधेयो होमान्वयरूपस्तु करोत्यर्थविशेषो ऽनूद्यते केवलं ननु होमविशिष्टं प्रयत्नं कुर्यादिति करोत्यर्थविधौ होमविशिष्टतानूद्यमाना करोत्यर्थस्य विधेयतां बाधते येन सा ऽपि विधेया स्यादिति व्याख्येयम् । नन्वित्यगृहीताभिप्रायशङ्काभाष्यं व्याचष्टे * नन्विति * प्रतीयमानत्वरूपेणापरित्यज्यमानो होमो विधेयो ऽपि भवन्करणीभवतीत्यपिशब्दसूचितो ऽर्थः परिहाराभिप्रायविवरणार्थमुच्यतइति भाष्यं व्याचष्टे * सिद्धान्तेति * शब्दसामर्थ्याद्धोमान्वितभावनाप्रतीतावपि दधिपदानर्थक्यापत्तेर्होमस्य फलसाधनत्वेन विध्ययोगात्साधनत्वप्रतीतिर्भ्रान्तिरित्यर्थः । साध्यत्वेनाविधेयत्वोक्तेः दृष्टान्तार्थत्वं वक्तुम् * यथैवमुक्तम् * दधिपदेत्यनेन वाक्यशब्दस्य वाक्योपात्तदधिपदानर्थक्यापत्तिलक्षणाद्धोमाविधाननिरासहेतूक्त्यर्थतोक्ता दध्यवच्छिन्नताश्रितशब्देनोक्तेत्यंशशब्देन सूचितं होमवैशिष्ट्यप्रतीतेस्तर्हि का गतिरित्याशङ्कानिरासार्थता विशिष्टशब्दस्य यथा चेत्यनेनोक्ता । ननु होमस्याविधेयत्वे दध्नः साक्षात्फलसाधनत्वापत्तेस्तस्येति सूत्रावयवेन होमस्याश्रयत्वोक्तिरयुक्तेत्याशङ्क्य यत एव दध्यवच्छिन्ना भावना गम्यते ऽत एव धर्म्यन्तर्थानपेक्षस्य गुणस्य भावनावच्छेदकत्वायोगाद्धोमद्वारा गुणस्य फलसाधनतोपवर्णेणोक्तेत्यभिधानार्थमत एवेति भाष्यं व्याचष्टे * य-
५५२।२ थेति * राजदृष्टान्तेन द्वाराबाचिताश्रयशब्दस्योपवर्णेणोक्तेति सूचनार्थं दृष्टान्तो ऽप्युदाहृतः तस्मादिति सिद्धान्तोपसंहारे भाष्यं स्पष्टत्वान्न व्याख्यातं कथमितीति कर्त्तव्यताप्रश्नभाष्यं द्वारतया

न्वितेन धात्वर्थेनैव गुणस्यानुग्रहसिद्धेरिति कर्त्तव्यतानाकाङ्क्षत्वादयुक्तमाशङ्क्योपपादयितुमाश्रयाश्रयिसम्बन्धो ऽशत्रयातिरिक्तः करणांशान्तर्गतो वेति पृच्छति * कः पुनरिति * द्वारान्वयस्यांशत्रयातिरिक्तत्वे गुणस्य करणत्वे द्वारेणैवानुग्रहसिद्धेः कथम्भावायोगात्तत्सिद्ध्यर्थमतिरेकानतिरेकौ विचार्याविल्याशयः प्रश्नार्थं विवृणोति * किमिति * व्यतिरेकपक्षं गृह्णाति * के चित्ताव-दिति * प्रश्नपूर्वमुपपादयति * कथमिति * गुणकरणिकायां भावनायां द्वारांशेनैव कथम्भावाकाङ्क्षानिवृत्तौ वा व्यतिरेकाव्यतिरेकचिन्तानर्थक्यापत्तेर्धात्वर्थकरणभावनांशत्रयातिरेकप्रदर्शनार्थश्चतुर्थशब्दः। श्लोकं व्याचष्टे * यत्रेति * धात्वर्थेन गुणस्य करणत्वनिष्पादने सिद्धान्तवद्धात्वर्थस्य करणांशान्तर्गत्यापत्तेः करणत्वस्य साधकतमत्वलक्षणत्वात्तमबर्थस्य चातिशयस्यापेक्षिकत्वादपेक्ष्यमाणानुग्राहकधात्वर्थाभावे ऽनुपपत्तिरभिप्रेता आपेक्षिकत्वातिशयरूपस्य करणत्वस्यापेक्ष्यमाणेनानुग्राहकेणोपजननमभिप्रेतं करणांशातिरेके च सति आश्रयस्य करणत्वोपजननेन करणानुग्राहकतयाङ्गत्वात्प्रकरणेनाश्रयलाभोपपत्तिरित्याह * तत्रेति * अङ्गत्वादेव च प्रकरणेनाश्रयलाभोपपत्तेश्चोदनालिङ्गभूतेन धातुना ऽनुवादोपपत्तिरित्याह * तथा लब्धश्चेति * कथं पुनः करणांशातिरेकमात्रेणाङ्गत्वासिद्धिरित्याशङ्क्याह * पदेति * नामपदमस्येति नामार्थो बहुव्रीहिणोक्तः स्वमतेन करणांशे व्यतिरेकमाह * शक्यते त्विति * प्रचिततरत्वमुपपादयति * धात्वर्थेन हीति * धात्वर्थस्य व्यापाररूपत्वात्साक्षात्कारकत्वोपपत्तेर्भावनावच्छेदकत्वोपपत्तेश्च शीघ्रं करणाकाङ्क्षानिवर्त्तकत्वं गुणस्य त्वव्यापाररूपत्वात्काष्ठादिवत्साक्षात्कारकत्वानुपपत्तेर्भावनावच्छेदकत्वानुपपत्तेश्च भावनाख्यक्रियावच्छेदकधात्वर्थसम्बन्धोत्तरकालं करणत्वनिष्पत्तेश्चिरेण करणाकाङ्क्षानिवर्त्तकतेत्यर्थः। करणांशान्तर्गतिमाश्रयस्योपसंहरति * तस्मादिति * आश्रयस्यांशत्रयातिरेकनिरासः किमर्थं इत्यपेक्षायां कथम्भावोपपत्तिप्रयोजनत्वोक्तिपूर्णं संस्थाधिकरणन्यायेन सर्वेषां गुणानां काम्यानामाश्रयैः सह सामानविध्यनिरासात्तत्रैव गुणस्य कर्मसादृश्याभावेन तद्धर्मतातिदेशायोगादिति कर्त्तव्यताविरहेण करणत्वानिर्वाहाशङ्कानिरासार्थमाश्रयभूतकर्मधर्मादिदेशस्य वक्तव्यत्वात्सन्निधानात्तु नित्यस्येति कर्त्तव्यतयेति गम्यत इति च संस्थाधिकरणभाष्ये वक्ष्यमाणत्वादिहाभिधानमयुक्तं प्रासङ्गिकाभिधाने ऽपि वा यस्मादेवं चायं जुहोत्यर्थो ऽनुवाद इत्यादिभाष्येणाधिकर-

शेषे समाप्ते ऽभिधेयत्वात्ततः प्रागयुक्तमभिधानमित्याशङ्काद्वयं निरस्यति *तेनेति* एतदधिकरणव्युत्पाद्यगुणकरणत्वनिर्वाहार्थंहि वाश्रयधर्मातिदेशस्य वक्तव्यत्वेन प्रसक्तत्वादापन्नत्वादग्निहोत्रस्य चाश्रयत्वेनोपस्थानाद्विध्यन्ताश्रयित्वे ऽभिहिते तस्य स्वयं फलवत्त्वेन गुणं प्रति द्वारत्वाख्याश्रयत्वायोग्यदन्यस्य चाश्रयत्वयोग्यस्य होमस्याप्रकृतत्वादनेनैव वाक्येनाश्रयविधौ वाक्यभेदापत्तेर्गुणफलान्वयानुपपत्तिरित्याशङ्काशेषस्याग्निहोत्रविध्यन्तातिदेशोक्तः । प्रागनुत्थानात्तन्निरासार्थं यस्मादेव चेत्यादिभाष्यशेषं विनाप्यधिकरणपर्यवसानानुपपत्तेस्ततः प्रागस्मिन्नधिकरणे ऽभिधानं युक्तमित्याशयः । यद्यपि च संस्थाधिकरणे सामानविध्ये निरस्ते कुतस्तर्हीति कर्त्तव्यताप्राप्तिरित्यपेक्षायामाश्रयगतेतिकर्त्तव्यतानिर्देशो वक्ष्यते तथापीह गुणफलान्वयनिर्वाहार्थं वक्तव्य एवेति प्रयोजनभेदेनापौनरुक्त्यसूत्रनार्थं संस्थाधिकरणविषयत्वोक्तिः। यद्वा संस्थानां काम्यत्वेनानित्यत्वान्नित्यधर्मात्ययानुपपत्तेः सामानविध्यायोगाद्विकारतान्यदीयधर्मग्राहितेति विकारशब्देनान्यदीयधर्मग्राहित्वे ऽभिहिते कस्यासौ विकार इत्यपेक्षिते स नित्यस्येति सूत्रावयवेन नित्यस्याश्रयस्योक्त्यादिः काम्यो गुणो विकार इति नित्यत्वसाम्येनाश्रयस्य नित्यधर्मान्वयाविरोधादित्येवं विकारास्तु कामसंयोगे स नित्यस्य समत्वादिति संस्थाधिकरणसिद्धान्तसूत्रस्य व्याख्यान्तरसूचनार्थः । आश्रयधर्मातिदेशस्य वक्तत्वमुक्त्वा तदभिधानार्थस्यानयेति भाष्यस्य किं केन कथं भावे
५५३।१ ऽप्यतिरिक्ताश्रयापेक्षावादिव्याख्यां दूषणायोपन्यस्यति * तत्रेति * दूषयति * तत्त्विति * स्वमतेन षष्ठीसमासत्वेन व्याचष्टे * अत इति * प्रश्ने कुत इति भाष्यं नासौ साध्यस्य भवतीति साधनेन सम्बन्ध्यन्त इत्यादिसंस्थाधिकरणभाष्ये साध्यभूतधात्वर्थान्वयद्वारा साधनभूतस्य गुणस्येतिकर्त्तव्यतान्वयस्य वक्ष्यमाणत्वाद् गुणस्य साक्षादितिकर्त्तव्यतान्वयायोग्यत्वावगतः कर्त्तव्यताविशेषत्वाच्चेतिकर्त्तव्यतायाः कर्त्तव्यतापरपर्यायानुष्ठेयरूपेण धात्वर्थेनैवान्वययोग्यत्वप्रतीतेः । सिद्धरूपस्य गुणस्येति कर्त्तव्यतान्वयो न सम्भवतीत्यभिप्रायत्वेन व्याचष्टे *कुत इति* करणत्वप्रयुक्तत्वादितिकर्त्तव्यतान्वयस्य साक्षात्करणत्वाभावाद् गुणस्य साक्षादितिकर्त्तव्यतान्वये ऽपि धात्वर्थद्वारा करणत्वेन तद्द्वारेतिकर्त्तव्यतान्वयाविरोधात्कर्त्तव्यताविशेषत्वोक्तेश्चानुष्ठेयवाचित्वे धात्वर्थस्याप्यनुष्ठेयत्वेनेति कर्त्तव्यतां प्रति प्रयोजकत्वापत्तेरपूर्वप्रयुक्त्युक्तिबाधप्रसङ्गाद् भाव्यान्वयिवाचित्वावगतेर्गुणस्यापि करणत्वेन भाव्यफ-

मवाक्यस्य कर्मोत्पत्तिवाक्यानन्वयात्तत्प्राप्तकर्मानुवादकत्वं न स-म्भवतीत्याशङ्कोत्तरत्वेन व्याचष्टे * केनेति * उभयाकाङ्क्षालक्षणा-न्वयाभावे ऽपि गुणकामस्याश्रयभूतकर्मोत्पत्त्यपेक्षत्वादुत्पत्तिवा-क्यान्वयो ऽस्तीत्याशयः । परिसंख्यासूचनार्थं गुणकामवाक्यस्य कर्मफलान्वयाविधायित्वे प्रागुक्ते ऽपि फलवाक्यान्वयाभावेन त-त्प्राप्तकर्मानुवादस्यानाशङ्क्यत्वात्फलं प्रति वा विधायकं वाक्यं ना-स्तीति व्याख्या न कृता । ननु गुणकामवाक्ये फलवाक्यप्राप्तहोमानु-वादसिद्ध्यर्थं नान्यद्धोमस्य फलविधायकं वाक्यं नास्तीत्यवाच्यं ऽपि होमस्य फलापेक्षत्वात्तस्यैवेन्द्रियं फलं भविष्यतीत्याशङ्कानि-रासायास्य भाष्यस्यैषो ऽर्थः कैश्चिद् कृतः स किमित्युपेक्षित इत्या-शङ्क्योपन्यासपूर्वं तद्व्याख्यां दूषयति * के चित्त्विति * होमस्यावि-धेयत्वे विहिते फलविध्याशङ्कानुत्थानादप्रस्तुतोपन्यासापत्तिरि-त्याशयः। तस्मादित्याशङ्काशेषनिरासोपसंहारभाष्यं भिन्नवाक्यत-या भासमानमेकवाक्यतया व्याचष्टे*तस्मादिति*अग्निहोत्रवाक्य-प्राप्तकर्मानुवादित्वेनेन्द्रियवाक्यस्य कर्मान्तराविधायित्वाभावाच्च गु-णफलान्वयविधायित्वानुपपत्तिरिति भाष्यार्थे दर्शिते जुहोतेः प्रत्य-यानुग्रहार्थत्ववच्चोदनालिङ्गत्ववच्चाश्रयलिङ्गत्वमपि फलमनुवादा-र्थवत्त्वाय सूचयितुं गुणफलात्मककारकान्वयस्य क्रियात्मकभा-वनाद्वारत्वाद् गुणस्य भावनावच्छेदकतया धात्वर्थद्वारत्वाद्धोमस्या-नुग्राहकतोक्ता गुणधात्वर्थयोः साध्यसाधनान्वयस्य वा फलसाध-नतेति पक्षान्तरोक्त्यर्थमथ वेति भाष्यं व्याचष्टे * अथ वेति * येन कारणेन दध्नः फलमुक्तं तेनैव सम्बन्धादित्युक्ते किं तत्कारणमित्य-पेक्षिते विवक्षितशब्दोक्तं दधिशब्दोप्रमादपाठत्वे कारणमुक्त्वा दध्न एव तर्हि फलं युक्तमित्याशङ्क्य * केवलाच्चेत्युक्तम् * अस्मिन्पक्षे
५५४।१ वाक्यभेदं शङ्कते * अत्र त्विति * अत्र पक्षे ऽनेनैव वाक्येन द-धिहोमान्वयविधानात्तस्य फलान्वयविधानाच्च वाक्यभेदः स्यादि-त्युक्ते प्रकरणाद्धोमान्वयो भविष्यतीत्याशङ्क्य * दधिफलसम्बन्धे चेत्युक्तम् * गुणस्य फलान्वयोत्तरकालं तदन्यथानुपपत्त्या सामा-न्यतो धात्वर्थान्वये ऽवगते तद्विशेषापेक्षायां प्रकरणाद्धोमाख्यो वि-शेषो लभ्यते नान्यथेत्याशयः । दध्ना जुहोतीति वाक्यात्तर्हि होमान्वयो भविष्यतीत्याशङ्क्य * पूर्वोक्तेनेत्युक्तम् * गुणादीनां त्वसम्बन्धादिति वार्त्तिकोक्तेन न्यायेनेन्द्रियवाक्यस्य दधिहोमान्व-यकारिवाक्यैकवाक्यत्वाभावान्नैन्द्रियवाक्ये तत्कारितहोमान्वयग्र-हणमित्याशयः । तस्मादाद्यैवेन्द्रियवाक्यव्याख्या युक्तेत्याह * अत

इति * अत्रैव समाप्तिभाष्यानुगुण्यमाह * तथा चेति * का तर्ह्यथ वेति भाष्यस्य गतिरित्याशङ्क्याह * तेनेति * युक्तिशून्योत्प्रेक्षाविकल्पः एवं तु समस्तभाष्यभङ्गापत्तेराद्यपक्षोपसंहारैकवाक्यत्वेन व्याचष्टे * अन्यं त्विति * उपसंहारे दधिशब्दस्य विवक्षितत्वादिति हेतूक्त्यानर्थक्यमाशङ्क्य * सोपपत्तिकइत्युक्तम् * सम्बन्धशब्देन विशेषणप्रधानेन सम्बन्धोपसर्जनदधिनिर्देशात्समस्तभाष्यैकवाक्यत्वाविरोध इत्याशयः भाष्यस्येति करणव्याख्यानायेति शब्दः स्वमतोपपादनाय वाक्यभेददूषणपरिहारं प्रतिजानाति * शक्येति * प्रश्नपूर्वं परिहरति * कथमिति * तृतीयोक्तस्य करणत्वस्येन्द्रियभावनादेशेन विधानात्तस्य च क्रियासम्बन्धिरूपत्वादर्थापत्त्या प्रतिसम्बन्धिरूपक्रियाप्रतीतेः सम्बन्धावगमान्न वाक्यभेद इत्याशयः। क्रियात्मकभावनावच्छेदकधात्वर्थविशेषानिर्धारणं मात्रशब्देनोक्तम्। ननु वाक्यभेदाभावे ऽपि श्रुतस्य दध्नो विधेयत्वसम्भवे गम्यमानस्य सम्बन्धस्य विधेयत्वकल्पना न युक्तेत्याशङ्क्याह * शक्नोति * करणशक्तिरेव क्रियाकारकरूपार्थद्वयाधीननिरूपणत्वात्सम्बन्धशब्देनोपचरितेत्याशयः। नन्वेवमपि करणत्ववद्दध्नो ऽपि विधेयत्वात्तस्य च धर्मित्वेन प्राधान्यात्करणत्वविशिष्टस्य दध्नः फलहेतुत्वं युक्तं न दधिविशिष्टस्य करणत्वस्येत्याशङ्क्याहेतीति शाब्दे व्यवहारे शाब्दस्यैव प्राधान्यस्य विवक्षितत्वात्सम्बन्धस्यैव विभक्त्योक्तत्वेन प्रत्ययार्थतया शब्दतः प्राधान्यात्फलहेतुता युक्तेत्याशयः। नन्वेवमपि होमाख्यधात्वर्थविशेषानवच्छिन्नक्रियामात्रसम्बन्धस्य फलसाधनत्वविधौ धात्वर्थविशेषानपेक्षणाद्धोमावच्छिन्नक्रियासम्बन्धस्य तु विधौ प्रकरणालोचनात्प्रागेव होमलाभाभ्युपगमापत्तेर्नोभयथापि प्रकरणाद्धोमलाभोपपत्तिरित्याशङ्क्याह * तत्र त्विति * यथा वैश्वदेवीशब्देनैव सन्निहितस्य द्रव्यविशेषस्य देवतान्वये ऽभिहिते ऽप्यामिक्षाशब्दो विशेष्यान्वयार्थस्तथेहापि धात्वर्थविशेषानवच्छिन्नायां भावनायां दध्नः करणत्वायोगाद्वाक्यभेदापत्तेश्च वाक्योपात्तेन जुहोतिनेदन्तया धात्वर्थविशेषानुपनयनाद्य प्रकरणाद्धात्वर्थविशेषो लप्स्यते तदवच्छिन्नायां भावनायां करणं सद्दधिफलसाधनमिति प्रकरणलभ्यधात्वर्थविशेषावच्छिन्नया क्रियया सह दध्याख्यकारकसम्बन्धस्य फलान्वये वाक्येनावगते को ऽसौ क्रियात्मकभावनावच्छेदको धात्वर्थविशेषः प्रकरणलभ्य इति निर्द्धारणापेक्षायां प्रकरणाद्विशेषनिर्द्धारणेत्यर्थः। प्राकरणिकहोमलाभोक्तेर्भाष्योपपादनं प्रयोजनमाह * तेनेति * ननु दध्नेन्द्रियं

भावयेदिति फलभावनायां दध्नः करणत्वाभिधानाद्धोमभावनां प्रति करणत्वानवगतेः फलभावनाकरणत्वलक्षणस्यैव तु क्रियाकारकान्वयस्य फलहेतुत्वाभ्युपगमे कर्मफलान्वये ऽपि फलभावनाकरणाभूताद्धोमात्फलमित्यपि वक्तुं शक्यत्वात्क्रियाकारकान्वयस्य फले विधापत्तेरन्यतरप्राप्तौ च सम्बन्धविधेर्जाघन्यधिकरणे निपेत्स्यमानत्वाद्धोमप्राप्तौ दधिहोमसम्बन्धविध्यनुपपत्तेरप्राप्तौ वा होमस्यापि विध्यापत्तेरयुक्तमिदं पक्षान्तरमित्याशङ्क्याह * ततश्चेति * समस्तभाष्यसमर्थनायायुक्तमपि पक्षान्तरं प्रौढ्यौपपादितमित्याशयः । समाप्तिभाष्यं कथं तर्हि समर्थनीयमित्याशङ्क्य द्वेधा समर्थय-
५५५।। ते * समाप्तीति * विशेषणभूतसम्बन्धप्रधानो ऽयं निर्देश इत्याशयः । ननु कारकाणामन्योन्यान्वयायोगाद् गुणस्य साक्षात्फले विध्यनुपपत्तेर्भावनायां विधेयत्वात्प्राप्तायां च तस्यां फलान्वये गुणान्वये च ज्ञाप्यमाने सकृदुच्चरितस्य वाक्यस्यानेकार्थपरत्वायोगादावृत्तिलक्षणवाक्यभेदापत्तेस्तत्परिहारार्थं गुणफलान्वितापूर्वभावनाविध्यभ्युपगमे ऽपि गौरवलक्षणो वाक्यभेदः स्यादित्याशङ्क्ने * नन्विति * पदद्वयान्वयव्यापारस्य पदद्वयसमभिव्याहारलभ्यत्वेनैकार्थवाच्यनेकपदकल्पकार्थापत्तिप्रसवशक्तिकल्पनलक्षणगौरवानापादकत्वादनेकार्थविशिष्टैकभावनाविधायकस्य विधिप्रत्ययस्य नैकविधिकल्पकार्थापत्तिप्रसवशक्तिकल्पनाद् गौरवं वाच्यं तच्चेह फलान्वयस्याविधेयत्वान्नास्तीत्याशयेन प्रतिज्ञाहेतुप्रश्नपूर्वं परिहरति * नैष इति * श्लोकं व्याचष्टे * बहवो ऽपीति * फलभावनायां प्रवृत्तेर्विध्यनपेक्षत्वोपपादनार्थम् * यो हीत्युक्तम् * ननु भावनार्थे ऽपि विधित्वे गुणार्थत्वाद्विधेर्भावनायामतात्पर्याद्विधेयस्य च गुणस्य करणत्वात्क्रियात्मकभावनाकाङ्क्षत्वे ऽपि प्रकृतस्वर्गफलकभावनान्वयान्नैराकाङ्क्ष्योपपत्तेर्भाव्यानाकाङ्क्षत्वादनुवाद्यायाश्च भावनाया भाव्येन विशेष्टुमशक्यत्वाद्भावनामात्रानुवादेन दधिविध्यापत्तेरिन्द्रियविशिष्टभावनानुवादोक्तिरयुक्तेत्याशङ्क्य दधिविशिष्टायां भावनानुवादोक्तिरयुक्तेत्याशङ्क्य दधिविशिष्टायां भावनायां विधेस्तात्पर्यं वक्तुम् *भावनां विधत्तइत्युक्तम्* विधिमात्रार्थस्यापि प्रत्ययस्य स्वारसिकफलांशप्रवृत्त्यनुमोदत्वाभिप्रायेणानुवादकत्वोक्तेर्नैकस्य प्रत्ययस्य विध्यनुवादार्थत्वविरोधः । ननु गुणकामेषु भावनाविध्यभ्युपगमे विहितविध्ययोगाद्भावनाभेदः स्याद्विधेयायाश्च भावनायाः करणाकाङ्क्षायां प्रत्यासत्तेर्द्धात्वर्थस्यैव कारणत्वान्न गुणात्फलं स्यादित्याशङ्काद्वयं निरस्यन्नधिकरणार्थमुपसंहरति * तस्मादिति * प्रा-

सायां भावनायां गुणफलयोर्द्वयोरन्वयायोगादन्यतरानर्थक्यापत्ते-र्भावनान्तरविध्यभ्युपगमे ऽपि धात्वर्थस्य प्राप्तत्वेनाविधेयत्वात्क-रणत्वानुपपत्तेर्गुणस्यैव करणत्वमविधेयत्वादेव च धात्वर्थस्याभे-दात्तस्यैव चेह कर्मशब्देनोक्तत्वादकर्मान्तरता युक्तेत्याशयः ।

॥ वारवन्तीयादीनां कर्मान्तरताधिकरणम् ॥ १२ ॥

## समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

प्रकृताश्रयालाभे गुणफलान्वयापवादार्थत्वेन धात्वर्थाभेदा-पवादार्थत्वेन वानन्तरसङ्गतिमाह * इदानीमिति * रेवतीवाक्यस्यैव विचार्यत्वादग्निष्टुद्वाक्योदाहरणानर्थक्यमाशङ्क्याह * तत्रेति * गु-णफलान्वयस्य कर्मान्तरत्वस्य च पूर्वकर्मापेक्षत्वाद्विचार्यप्रतियोगि-कर्मविधायित्वेनाग्निष्टुद्वाक्यस्यापि विचारविषयतास्तीत्याशयः । वारवन्तीयस्याग्निष्टोमसामत्वाप्राप्तौ पक्षद्वये ऽपि वाक्यभेदापत्तेस्त-त्परिहारार्थं भाष्यानुदाहृतमपि वारवन्तीयवाक्यमुदाहृतम् * त-त्रेति * सन्देहभाष्यं व्याचष्टे * तत्रापीति * पूर्वपक्षवचन-व्यक्तिः क्लिष्टत्वसूचनार्थं पश्चादुक्ता पूर्वपक्षभाष्यं संक्षिप्य व्या-चष्टे * किमिति * विदितस्येति भाष्योक्तो धात्वर्थानुवादः पशु-काम एवं कृत्वेत्यादिभाष्योक्तश्च फलस्य कर्मसमभिव्याहारनिरा-सेन गुणसमभिव्याहारः समस्तशब्देन व्याख्यातः। एतदेवोपपादय-ति * तथा हीति * ननु रेवतीवारवन्तीयान्वयविधानात्तस्य च फलान्वयविधानाद्वाक्यभेदः स्यादित्याशङ्क्याह * रेवतीति * पृ-थक्श्रुतिः श्रवणमस्येति विग्रहः। शङ्कोत्तरत्वेन श्लोकं व्याचष्टे * यस्त्विति * उत्पत्तिशब्देनोत्पत्तिफलत्वाल्लक्षणया रेवतीवारवन्ती-ययोः सम्बन्धापादिका रेवत्याधारवारवन्तीयक्रियोक्ता तेन रेव-तीषु वारवन्तीयं कुर्यात्तेन च पशून् कुर्यादित्यावृत्तिः स्यादित्याश-ङ्कार्थः क्त्वाप्रत्ययेन विधावस्मृतेनापि धातुवाच्यायाः क्रियायाः पू-र्वकालत्वोक्तेस्तस्याश्चाप्राप्तत्वेनानुष्ठानं विना पूर्वकालत्वायोगाद्वि-धिफलानुष्ठानाक्षेपसिद्धेर्न विधिप्रत्ययावृत्तिरित्युत्तरार्थः। नन्वेवम-प्यग्निष्टुति वारवन्तीयस्य प्राप्तत्वाद्रेवतीषु विधिसंक्रान्तेस्तासा-मेव फलहेतुत्वापत्तेर्वारवन्तीये पशवः फलमिति भाष्यमयुक्तमि-त्याशङ्क्याह * तत्रापीति * गुणफलान्वयविवादे तेनेति सर्वना-म्नो गुणपरामर्शित्वस्याभ्युपगन्तव्यत्वात्तस्य च प्राधान्यनिर्दिष्टपरा-मर्शित्वाद्रेवतीषु कृतेन वारवन्तीयेन पशून्कुर्यादिति वाक्यार्थप्रती-तेर्वारवन्तीयस्य क्रत्वर्थत्वेन प्राप्तस्यापि दधिवत्फलं प्रति विधिर्यु-

क्त इत्याशयः। यागवद्वारवन्तीयस्यापि प्राप्तत्वाद्विधिर्न सम्भवतीत्याशङ्कां गुणोपादानवशेन यागाद्विधायकोत्तारणं न प्राप्तिमात्रेण रेवतीनां च करणीभूतगुणपरामर्शिनैतच्छब्देन विलिङ्गसंख्यात्वादुपादानाशक्तेर्न वारवन्तीयाद्विधायकोत्तरणावगतिरित्याशयेन निरस्यन् श्लोकं व्याचष्टे * गुणेति * नन्ववगतप्राधान्यस्यान्यार्थता न युक्तेत्याशङ्क्य धात्वर्थस्थानीयशब्देनेप्सिततमत्वाभावे ऽप्यनीप्सितकर्मत्वेन प्राधान्योपचार इत्युक्ते तथापि कर्मत्वेनोक्तस्य कथं करणतेत्याशङ्क्य करोतिवाच्यां भावनां प्रति कर्मत्वे ऽप्याख्यातोक्तां प्रतिकरणत्वाविरोधः करोत्यभिहितामित्यनेनोक्तः दधिहोमसम्बन्धो वाक्येन विधीयते इति पूर्वाधिकरणभाष्योक्तेन न्यायेनेहापि रेवतीष्विति सप्तमीश्रुतेरधिकरणभूतान्यो रेवतीभ्यः फलमित्यवगमादधिकरणत्वाक्षिप्तस्य चाधाराधेयसम्बन्धस्य विभक्त्यन्तर्गतत्वेन प्रत्ययार्थतया प्राधान्याच्छ्रुत्या फले विधिप्रतीतेरेतेनेत्येकवचनान्तेन च सर्वनाम्नो परामर्शोपपत्तेर्यत्पशून्भावयेत्तदेतेन रेवतीवारवन्तीयसम्बन्धेनेति वचनव्यक्त्यभ्युपगमे तु सम्बन्धादेव फलमित्याह * अथ वेति * नन्वन्येषामपि वाक्यभेदानां सिद्धान्ते वक्ष्यमाणानां कः परिहारः पूर्वपक्षिणो ऽभिमत इत्याशङ्क्याह * एवं च सतीति *कृत्वाशब्दार्थस्य रेवत्यन्वयविषयत्वेनाप्राप्तस्या ऽप्येकविंशतित्वमग्निष्टोमसाम कृत्वेत्यतो वारवन्तीयवाक्यसहिताद्वारवन्तीयाग्निष्टोमसामविषयत्वेन प्राप्तस्यादिशब्देनानुवादः सूचितः। सिद्धान्तएव
५५७।२ त्वतिगौरवलक्षणो वाक्यभेदः स्यादित्याह * कर्मान्तरेति * अल्पार्थविधौ च सर्वपदार्थान्वयसम्भवे बह्वर्थविधिर्न लभ्यतइति प्रतिज्ञाहेतुप्रश्नगौरवलक्षणो ऽपूर्वमुपपादयति * तवेति * पूर्वपक्षे वाक्यभेदपरिहारमुपसंहरति * तेनेति * भाष्यकृता तर्ह्येतच्छब्दादीनामनुवादकता कस्मान्नोक्तेत्याशङ्क्याह * सर्वे चेति * प्रकृतवाच्येतच्छब्दान्वयेनाभेदोक्त्यर्थमपि चेतिभाष्यं स्पष्टत्वादव्याख्याय तस्मादिति पूर्वपक्षोपसंहारभाष्यं फलतो व्याचष्टे * तस्मादिति * प्रकृताश्रयालाभाद् गुणफलान्वयानुपपत्तिं वक्तुं गुणफलान्वयस्य प्रकृताश्रयलाभापेक्षां दर्शयन् सिद्धान्तमारभते* इतीति *स गुणः फले विधातुं शक्य इति वाच्ये प्रकृताश्रयालाभे गुणफलान्वयायोगवद्धात्ववगतस्य कर्मसम्बन्धस्यानुवादत्वायोगाद्विध्यापत्तेः प्रकृतयागाश्रितस्य वारवन्तीयस्य फलान्वयाभ्युपगमे ऽपि दुष्परिहरो वाक्यभेद इति सूचयितुं फलभूतयागाभेदोक्तिः। उत्तरार्द्धसूचितमर्थं विवृणोति * इदं तावदिति * फले विधीयमानस्य गुणस्या-

अयभूतधात्वर्थापेक्षायामेकवाक्योपात्तस्य यागस्याश्रयत्वप्रतीतेस्ता-
दृशस्याप्तत्वेनानुवादायोगाद्विध्यापत्तेर्विध्ययोगाद्यागान्तरत्वं स्यादि-
त्याशयः। स चेति यज्यर्थः परामृष्टः अत्रैव दृष्टान्तमाह *तद्यथेति*
यथेन्द्रियकामवाक्ये ऽन्यत एव दध्नो होमान्वयलाभान्न कर्मान्तर-
ता व्यवसितेति पूर्वानुषङ्गेण योज्यम्।दृष्टान्तं विवृणोति * श्रुतेति *
यद्वा दधिहोमसम्बन्धमात्रे विधीयमानइति ल्यब्लोपे पञ्चमीमङ्गी-
कृत्यैकग्रन्थतया योज्यम्।नन्विहाप्याश्रयापेक्षायां प्रकरणान्वयो ल-
प्स्यत इत्याशङ्क्याह * शक्नोति हीति * साम्नो यागनिष्पत्त्यशक्ता-
वपि रेवतीनां याज्यानुवाक्यावद्देवतोद्देशद्वारा निष्पादकत्वं भविष्य-
तीत्याशङ्कामग्निष्टुत्याग्नेया ग्रहा भवन्तीति सर्वाभ्यासेष्वग्निर्देवत्याच्च
श्रुतेरैन्द्रीणामृचां साधनत्वायोगान्निराकर्तुं शक्यामपि सप्तम्या सा-
माधारत्वश्रुतेर्यागसाधनत्वाशङ्कैव नोत्तिष्ठतीत्येवं निराकर्तुम् *रे-
वतीगुणकमित्युक्तम् * एतदेवोपपादयति * तथा हीति * सा-
क्षाद्यागसाधनान्तरपरिसंख्यार्थं कर्तृग्रहणम् देवताभिधानार्थगक्ष-
राभिव्यक्तिद्वारापि स्तोत्रसाधनत्ववद्यागसाधनत्वं यज्ञकर्मणी-
त्येकश्रुत्यविधिविरोधान्नानास्वरसमाहारात्मकस्य साम्नो न स-
म्भवतीति सूचयितुम् * साम्नेत्युक्तम् * सत्सम्बन्धानुवादित्वा-
दित्यनेनं सूचितमर्थमुपसंहरति * तस्मादिति * नन्वेवमपि स्तो-
त्रस्याश्रयत्वोपपत्तेर्गुणफलान्वयो निर्वक्ष्यतीत्याशङ्क्याह * यस्त्विव-
ति * नन्ववान्तरप्रकरणात्प्रणयनस्य गोदोहनाश्रयत्ववदिहापि
वारवन्तीयमग्निष्टोमसाम कार्यमित्यग्निष्टोमस्तोत्रावान्तरप्रकरणान्तः
पातकल्पतयाग्निष्टोमस्तोत्रस्याश्रयत्वमभ्युपगमिष्याम इत्याशङ्क्य * ५५८।२
आतिदेशिकत्वादित्युक्तम् * उत्पत्तावेव प्रकरणाभिव्यक्तेर्विकृ-
तावुत्पत्त्यभावान्न स्तोत्राणां प्रकरणं सम्भवतीत्याशयः। वारवन्तीय-
स्याश्रयालाभं वृद्धवाक्येन द्रढयति * आह चेति * ननु षड्जादि-
स्वरसमाहाररूपाया गीतेः सिद्धरूपायाः फलसाधनत्वेन विधीयमा-
नाया निर्व्यापारायाः साधनत्वायोगात्साध्यभूतव्यापारापेक्षायां प्र-
करणाद्यागसाधनत्वस्यावगतस्य साक्षादसम्भवे ऽपि तदङ्गस्तोत्र-
द्वारोपपत्तेर्गुणफलान्वयो निर्वक्ष्यतीत्याशङ्कते * अथेति * वार-
वन्तीयस्य यागानङ्गत्वाद्याङ्गाङ्गभूते स्तोत्रे ऽवतारो न सम्भवतीति
परिहर्तुं यो हि प्रधानोपकारित्वेन श्रूयते स तदङ्गो ऽपि स्थित उ-
पकरोतीत्येवं फलपतइत्यौदुम्बराधिकरणवार्त्तिकोक्तमङ्गावतारन्या-
यस्याङ्गमात्रविषयत्वं स्मारयति * तदिति * एतदेवाङ्गावतारन्या-
योदाहरणे सप्तदशारत्नित्वे वाजपेयाङ्गत्वं दर्शयन्नुपपादयति * स-

सदशेति * वाजपेयोपकारित्वं विना तदङ्गत्वायोगाद्वाजपेयस्य च साक्षात्परिमाणेनोपकारासम्भवाद्यथा वाजपेयस्योपकर्तुं शक्नोति सप्तदशारत्नित्वं तथोपकरिष्यतीत्यध्यवसानाद्वाजपेयाङ्गपशुयागाङ्गयूपाङ्गत्वद्वारोपकरोतीत्यवधार्यतइत्यर्थः । इदं पुनरित्यनेनोत्तरार्द्धमुपपादितं वारवन्तीयस्य क्रियानङ्गत्वं वक्तुमनङ्गभूताया अपि क्रियाया वारवन्तीयस्य करणत्वोपजननेनोपकारित्वाद् गुणभूततोक्ता। ननु वारवन्तीयस्य क्रियां प्रत्यनङ्गत्वे ऽपि फलसाधनत्वान्यथानुपपत्त्या साधनत्वावगमात्साक्षात्साधनत्वायोगे ऽपि स्तोत्रद्वारा कल्पयिष्यतइत्याशङ्क्य योग्यतानपेक्षेणाकाङ्क्षामात्रेण साध्यक्रियान्वयायोगं वक्तुमपेक्ष्यमाणं केवलं न तु सप्तदशारत्नित्ववचो * ग्रमानामित्युक्तम् * अङ्गत्वं चपरम्परयाप्युपकारित्वमात्रेण युक्तमाश्रयापेक्षायास्तु निर्व्यापारस्य कारकत्वानुपपत्तेर्व्यापारवत्त्वसिद्ध्यर्थत्वादयोग्यतया च क्रियया व्यापारवत्त्वासिद्धेः फलसाधनत्वानुपपादकव्यवहिताश्रयकल्पना न युक्तेत्याश्रयत्वोक्त्या सूचितम्। अप्रकृतमेव तर्ह्याश्रयत्वयोग्यं क्रियान्तरं कल्पयिष्यतइत्याशङ्क्य * अथेत्युक्तम् * कर्मान्तराङ्गत्वरूपवाक्यार्थान्तरप्रतिपत्त्यापि वारवन्तीयार्थवत्त्वोपपत्तेः फलान्वयस्यावश्योपादेयत्वाभावान्नाप्राकृताश्रयकल्पना युक्तेत्याशयः अन्यथापि चानर्थक्यपरिहारोपपत्तौ नानर्थक्यतदङ्गन्यायो ऽस्तीत्याह * न चेति * फलान्वयवत्कर्मान्तरान्वये प्राकरिणिकाश्रयान्वयकल्पनक्लेशाभावात् * सुतरामित्युक्तम् * नन्वावृत्तिसंख्यादेर्गुणस्य प्रकृतकर्मस्वरूपसाधनत्वाभावे ऽपि कर्मसम्बन्धिप्रयोगपरिच्छेदसाधनत्वात्फलान्वयवद्वारवन्तीयस्यापि यागसम्बन्धिस्तोत्रसाधनत्वात्फलान्वयो भविष्यतीत्याशङ्क्याह * अत्यन्तेति * कर्मसिद्धिं विना प्रयोगपरिच्छेदासिद्धेः प्रयोगपरिच्छेदे साधिते कर्मसाधितमिति बुद्धेर्वैपर्म्यमित्याशयः । नन्वत्यन्तभेदे ऽपि सम्बन्धिसम्बन्धात्पशुयागे ऽनुगृहीते वाजपेयो ऽनुगृहीत इति बुद्धिवत्स्तोत्रे कृते यागः कृत इति बुद्धिर्भविष्यतीत्याशङ्क्याह * वाजपेयस्येति त्विति * पशुयागविषयो यागशब्दः साध्यसाधनभावलक्षणसम्बन्धविशेषस्तु न व्यवधाने सम्भवतीत्याशयः । यथा कथं चिद्यागाश्रयत्वप्राप्तेस्तत्सम्बन्धानुवादोपपत्तावप्यग्निष्टोमाख्यस्तोत्रसाधनसामत्वलक्षणस्याग्निष्टोमसामत्वलक्षणस्याग्निष्टोमसामत्वस्याप्राप्तेरनुवादायोगाद्वाक्यभेदापत्तेश्च वि-
५५९।१ ध्ययोगादग्निष्टोमसामशब्दो ऽनर्थकः स्यादित्याह * यद्यपीति * आश्रयत्वेन प्रसज्यमानेष्वित्यध्याहारः । अग्निष्टोमसाम्नीति साम-

शब्दः स्तोत्रलक्षणार्थः । एवमेतस्येत्युभयथा अनर्थकं स्यादित्याह * पुनरपि चेति * सन्निधानेनाग्निष्टुद्याग़ाङ्गाग्निष्टोमस्तोत्रसम्बन्धलाभशङ्कानिरासार्थम् * वाक्येनेत्युक्तम् * एतस्य यदग्निष्टोमस्तोत्रसाधनं साम तद्रेवतीषु वारवन्तीयं कृत्वा पशून्भावयेदित्यग्निष्टोमसाम्नो ऽग्निष्टुता विशेषणे विशिष्टानुवादाद्वाक्यभेदः स्यादित्यर्थः । अथैतस्य यत्स्तोत्रसाम तद्रेवतीषु वारवन्तीयं कृत्वेति पूर्वं वारवन्तीयस्याग्निष्टुत्सम्बन्धः क्रियते ततः पूर्ववत्सर्वस्तोत्रान्वयापत्तेरग्निष्टोमशब्दानर्थक्यात्प्रसङ्गात्तत्परिहारार्थं विशेषणे यथा वाक्येनाश्रयकल्पने वाक्यभेदस्तथैव स्यादित्याह * तस्यैवेति * तथैव वाक्यभेदे पौनरुक्त्यमाशङ्क्यैतस्यैवेति विशेषणे यो विशिष्टानुवादलक्षणः स एवेत्यनेकार्थविधिलक्षणादन्यतोक्ता रेवतीवारवन्तीयान्वयस्य च क्त्वाप्रत्ययेनाक्षेपोपपत्तेः विधायकानावृत्तावप्येकस्य वाक्यस्यानेकार्थव्यापाराद् गौरवमपरिहार्यमित्याह * ऋक्सामेति * वारवन्तीयस्य फलं प्रति विधेयोपादेयगुणभावाद्रेवतीः प्रत्यनुवाद्योद्देश्यप्रधानभावाद्वैरूप्यं चकारेण सूचितम् ।नन्वग्निष्टुत्प्रकरणेनाश्रयान्वयलाभात्तस्मिंश्च वारवन्तीयमग्निष्टोम सामकार्यमिति विधिना वारवन्तीयस्याग्निष्टुत्सम्बन्ध्यग्निष्टोमस्तोत्रान्वयात्रैन वाक्यभेदापत्तिरित्याशङ्कते * ननु चेति * ननु क्रत्वर्थस्य वारवन्तीयस्याग्निष्टोमस्तोत्रान्वयविधाने ऽपि फलार्थस्य कथं तदन्वयसिद्धिरित्याशङ्क्याह * वारवन्तीयं हीति * वारवन्तीयेन साध्यतया क्रत्वपेक्षणादग्निष्टोमस्तोत्रद्वारैव च वारवन्तीयस्य साधनत्वात्क्रतोश्च [1]साध्यत्वात्प्रकृतातिक्रमकारणाभावाच्च नान्यगतत्वाशङ्केत्यर्थः । पुरुषार्थस्य वा [2]वाक्येनाग्निष्टोमस्तोत्राश्रयत्वविधानं च प्रकरणलभ्याश्रयानपेक्षणात्स्वतन्त्राग्निष्टोमस्तोत्रप्रयोगाभावे ऽपि क्रत्वन्तरार्थप्रयोज्यस्याप्यग्निष्टोमस्तोत्रस्याश्रयत्वोपपत्तेरेतच्छब्दानर्थक्यप्रसङ्गं परिहर्त्तुं तेनाश्रयविशेषणे वारवन्तीयस्याश्रयान्वयविधिनिमित्तवाक्यभेदवदाश्रयस्याग्निष्टुद्विशेषणविधिनिमित्तो ऽपि वाक्यभेदः स्यादित्याह * पुनरपि चेति * एतस्य यद्वारवन्तीयं तद्रेवतीषु कृत्वा पशून् भावयेदिति प्रकरणप्राप्तक्रत्वङ्गत्वस्यैव वारवन्तीयस्य रेवत्याधारतया विधीयमानस्य फलान्वयविधानात्तस्य च वारवन्तीयाग्निष्टोमसामविधिवाक्येनाग्निष्टोमस्तो-

१ एवमेतस्येत्यारभ्यऋक्सामेत्यन्तस्य ग्रन्थस्य पाठान्तरं वाक्येनेत्यारभ्य ऋक्सामेत्यन्तं ज्ञेयम ।

२ इदं पाठान्तरं ।

त्रद्वारैवाग्निष्टुदङ्गत्वावगमान्नैतद्वाक्यभेदद्वयापत्तिरित्याशङ्क्याह * एतस्यैवेति* वारवन्तीयस्य रेवत्यन्वयात्प्रागग्निष्टुदन्वये ऽप्याग्नेय्याग्नीध्रमुपतिष्ठतइत्यत्र प्राकृतानामाग्नेयीनां स्तोत्रादिद्वारा क्रत्वन्वये ऽपि द्वारविशेषानपेक्षे क्रत्वन्वयाश्रयणेनोपस्थानान्वयवद्वारवन्तीयस्याप्यग्निष्टोमस्तोत्रान्वयानपेक्षक्रत्वन्वयमात्रोपलक्षितस्य फलान्वयोपपत्तेः । क्रत्वन्वयप्राग्भाविफलान्वयपक्षवत्पश्चाद्भाविफलान्वयपक्षे ऽपि सर्वस्तोत्रान्वयापत्तेः द्वितीयवाक्यभेदाभावे चाद्यो वाक्यभेदः स्यादेवेत्यापिशब्दार्थे वाशब्दः स एवेत्येवशब्दोत्कर्षाङ्गीकारेण व्याख्येयम्। क्रत्वन्वयानुवादपूर्वं च वारवन्तीयस्य रेवत्यन्वयकरणे क्त्वाशब्दस्यातिगौरवं स्यादित्याह * ऋक्सामेति[1] * रेवतीयस्य वारवन्तीयवाक्येन वाग्निष्टोमस्तोत्रगामित्वं स्यात्तद्वाक्यविहिताद्वास्याभेदात्सामान्यतो दृष्टेन वेति त्रेधा विकल्प्य गुणादीनां त्वसम्बन्धादिति वार्त्तिके गुणाद्विदिवाक्यानामन्योन्यान्वयाभावस्योक्तत्वाद्रेवतीवाक्यस्य वारवन्तीयवाक्यैकत्वाभावेनाद्यं तावत्कल्पं दूषयति * नैतदिति * वारवन्तीयरूपैक्ये ऽपि क्रत्वर्थपुरुषार्थरूपेण भेदाद्देवदत्तस्येव युद्धभोजनावस्थयोः स्थानैक्यनियमो नास्तीति द्वितीयं दूषयति * पूर्वेति * पुरुषार्थस्य वारवन्तीयस्यात्मनो व्यापारवत्त्वासिद्ध्यर्थं क्रतुं साधयतो ऽपि क्रत्वङ्गत्वं वैलक्षण्योक्त्या निरस्तम्।ननु वेदस्य तत्स्थानत्वाकल्पकत्वे ऽपि क्रत्वर्थवारवन्तीयवत्क्रत्वन्तःप्रयोज्यवारवन्तीयत्वात्पुरुषार्थस्यापि सामान्यतो दृष्टेनाप्यग्निष्टोमस्तोत्रस्थानत्वकल्पना भविष्यतीति तृतीयं कल्पमाशङ्क्य दूषयति * सामान्यतो दृष्टेति * विशेषणमात्रानाङ्गवारवन्तीयादिव्यभिचारनिवृत्तावपि शब्दैकसमधिगम्येष्वर्थेषु सामान्यतो दृष्टप्रमाणत्वस्य नैवं जातीयकेष्वेतद्भवति दृष्टाददृष्टसिद्धिरितीति पूर्वाधिकरणभाष्येणोक्तत्वान्न सामान्यतो दृष्टेनाप्यग्निष्टोमस्तोत्रस्थानत्वसिद्धिरित्यर्थः अग्निष्टोमस्तोत्रस्थानत्वानवगतिमेव वृद्धवाक्येनोपपादयति * आह चेति * फलाय विहितं सामवेदमध्ये पाठं स्वरूपज्ञानार्थमपेक्षते न क्रतुकालीनमग्निष्टोमस्तोत्रस्थाने पाठं वारवन्तीयरूपमात्रविधानेनाग्निष्टोमस्तोत्रान्वयनैरपेक्ष्यलक्षणस्वातन्त्र्यावगमादित्यर्थः । नन्वुक्थ्यादीनां फले विधीयमानानां ज्योतिष्टोममाश्रयतां वाक्यान्तरवशेनान्ते निवेशवद्वारवन्तीयस्याप्याश्रयभूते ऽग्निष्टुत्यग्निष्टोमस्तोत्रस्थाने विधानात्तत्रैव निवेशो भविष्यतीत्याशङ्क्याह * यदीति* स्था-

१ इदं पाठान्तरमितआरभ्यैतावत्पर्यन्तः ग्रन्थः पुनरुक्तः प्रतिभाति ।

नान्तरादर्शनेनोक्थ्यादीनामन्यत्र निवेशो नाश्रये तत्स्थानत्वदर्शनमात्रादित्याशयः। प्रकृतातिक्रमकारणाभावादिति यदुक्तं तदपि दूषयति * यदि चेति * शङ्कादूषणमुपसंहरति * तस्मादिति * ननु ५६०।२
पुरुषार्थस्यापि वारवन्तीयस्य प्रसङ्गेन क्रतुसाधनत्वात्क्रत्वर्थवारवन्तीयधर्मलाभो भविष्यतीत्याशङ्कते * ननु चेति * यथाभ्युदितेष्टयामिज्यार्थयोरपि दधिपयसोस्तण्डुलैः सह श्रपणविधानेन प्रासङ्गिकतण्डुलश्रपणरूपप्रतीतौ कार्यसाधनत्वात्प्रणीताधर्मलाभ इति नावमिकदृष्टान्तार्थः। ग्रहणप्रणयनादीनां प्रणीताद्यङ्गत्वात्कार्यप्रयुक्तत्वाच्चाङ्गानां प्रणीताकार्यश्रपणापूर्वोपकारित्वावगतेरनङ्गस्थितानामपि चोपकारिस्थितत्वमात्रेणोपकारित्वोपपत्तेः श्रपणोपकारिणोर्दधिपयसोः स्थितानां श्रपणापूर्वोपकारित्वात् प्रणीताकार्यापन्नयोर्दधिपयसोर्युक्तं करणमग्निष्टोमसामत्वस्य तु क्रत्वर्थवारवन्तीयानङ्गत्वादनङ्गस्य चानतिदेश्यत्वात्क्रत्वर्थवारवन्तीयकार्यापन्ने ऽपि पुरुषार्थरूपवारवन्तीयेऽतिदेशानुपपत्तेर्नानुष्ठानं युक्तमिति वैषम्यमाह*तत्रैवेति * क्रत्वर्थवारवन्तीयाङ्गताग्निष्टोमसामत्वस्यानाशङ्क्यत्वमर्थान्तरन्यासेनाह * प्रकरणेति * फलार्थेन वारवन्तीयेन प्रकृताग्निष्टुद्ग्रहणे सति वारवन्तीयस्याष्टुत्साधनत्वे ऽग्निष्टोमसामत्वस्य द्वारत्वेनोपकारित्वात्पुरुषार्थे वारवन्तीयं प्रति गुणत्वं शङ्क्येत क्रत्वर्थे तु प्रतिगुणताशङ्कितुमप्यशक्येत्याशयः। साक्षाच्च साम्नो यागसाधनत्वाशक्तेरग्निष्टोमस्तोत्रद्वारा यागसाधनत्वं यागसाधनत्वाच्चाग्निष्टोमस्तोत्रान्वय इत्यन्योन्याश्रयापत्तेः प्रकृताग्निष्टुद्ग्रहणस्यैवासिद्धत्वात्पुरुषार्थमपि प्रति गुणत्वं नास्तीति* तदेव त्वित्यनेनोक्तम् * कदा चिदप्यसिद्धमितिवाच्ये * मृदूक्त्याद्यापीत्युक्तम् * नन्वग्निष्टोमसामत्वस्य क्रत्वर्थवारवन्तीयानङ्गत्वे ऽपि प्राकृताग्निष्टोमसाम यज्ञायज्ञीयधर्माणां कार्यापत्त्या वारवन्तीयाङ्गत्वात्पुरुषार्थे ऽपि वारवन्तीये प्रासङ्गिकक्रतुसाधनत्वात् प्राप्ते ऽग्निष्टोमसामधर्मकत्वात् गुणवृत्त्याग्निष्टोमसामत्वानुवादोपपत्तेर्न वाक्यभेदो भविष्यतीत्याशङ्कामर्थान्तरन्यासेनैव निरस्यन्नाह *यदि त्विति* पुरुषार्थस्य॰ वारवन्तीयस्याग्निष्टोमसामशब्दवाच्याग्निष्टोमस्तोत्रसम्बन्धावगमे सत्यग्निष्टोमसामभूतक्रत्वर्थवारवन्तीयधर्माणां पुरुषार्थे वारवन्तीये दधिपयसोरिव प्रणीताधर्माणां प्राप्तिः स्यात्तदनवगमात्तु क्रतुसाधनसामत्वमात्रेण सामान्तरेष्विवाग्निष्टोमसामधर्माप्राप्तेः कार्यप्रयुक्तत्वाच्च धर्माणां वारवन्तीयत्वमात्रेणाधानाद्यङ्गवारवन्तीय इव प्राप्त्ययोगान्न गुणवृत्त्याप्यग्निष्टोमसामत्वानुवादोपपत्तिरित्या-

शयः । अतः प्रासङ्गिकक्रतुसाधनत्वेनाग्निष्टोमसामत्वलाभादपि वाक्यभेदपरिहारो न सम्भवतीत्युपसंहरति * तस्मादिति * अतो गुणफलान्वये वाक्यभेदपरिहाराशक्तेस्तत्परिहारार्थं यागान्तरविधिरेष्टव्य इत्याह * इतीति * ननु यागान्तरविधावप्राप्तानेकार्थविशिष्टयागविधानाद् गौरवं स्यादित्याशङ्क्याह *तथा सति हीति * साद्यस्क्राः साहस्रा इति चैकेन शब्देन युगपदुपादानलक्षणभङ्गाख्यनिकायवतामग्निष्टुदादीनामेकाहानां निकायित्वावान्तरसामान्येन सुसदृशत्वात्पूर्वस्याग्निष्टुतो विध्यन्तो रेवत्यादियागेषु उत्तरेषु प्रवर्त्तते इत्यष्टमे निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यादित्यत्र वक्ष्यमाणत्वात्तदीयधर्मप्राप्तेरित्यर्थः । बहुप्राप्तिमेव विवृणोति * एषशब्दस्तावदिति*अतः कृत्वाशब्दाक्षिप्तार्थविशिष्टयागमात्रविधानाल्लाघवमित्युपसंहरति * कृत्वाशब्देति * ननु रेवतीवारवन्तीयान्वयस्याग्निष्टोमस्तोत्रक्रियाविशेषणत्वात्तस्याश्चेहाविधेयत्वात् न वि-
५६१।१ शिष्टविधिः सम्भवतीत्याशङ्कते * न त्विति * एतदेव विवृणोति * तथा हीति * श्लोकं व्याचष्टे * यानीति * अग्निष्टोमस्तोत्रस्याविधेयत्वात्तद्विशेषणत्वेन रेवतीवारवन्तीयान्वयानपेक्षे ऽपि कृत्वाशब्दोक्तायाः अग्निष्टोमस्तोत्रभावनायाः स्वरूपेण प्राप्ताया अपि रेवतीवारवन्तीयान्वयविशिष्टरूपेणाप्राप्तेस्तादर्थ्येन विधेयत्वात्तद्विशेषणसत्त्वेनाक्षेपोपपत्तेर्वाक्यभेदाप्रसङ्गाद्विशिष्टविधिः सम्भवतीति परिहरति * नैष इति * करोत्यर्थमिति वाच्ये करोत्यर्थस्याकारकत्वात्क्रियारूपभावनान्वयायोगाशङ्कानिरासार्थं धातुसम्बन्धाधिकारविहितक्त्वाप्रत्ययसामर्थ्यात्क्रिययोरप्यन्वयः प्रतीतः क्रियाकारकलक्षणान्वयायोगे ऽपि च समानकर्तृकत्वेन पूर्वोत्तरकालत्वेन च विशेषणविशेष्यरूपान्वयोपपत्तिसूचनार्थं त्वान्तकरोत्युक्तिः । ननु कृत्वाशब्दोक्तभावनाद्वारा यागभावनया रेवतीवारवन्तीयान्वयग्रहणे ऽप्यग्निष्टोमसाम्ना विशेषणे वाक्यभेदापत्तेरग्निष्टोमस्तोत्रावच्छिन्नैव भावना कृत्वाशब्देनोक्तेति ज्ञातुमशक्यत्वाद्वारवन्तीयस्य च स्वरूपेणातिदेशतो ऽग्निष्टोमस्तोत्रान्वयप्राप्तावपि रेवत्याधाररूपेणाप्राप्तेस्तद्रूपविधावग्निष्टोमसामत्वानुवादायोगादग्निष्टोमसामशब्दो ऽनर्थकः स्यादित्याशङ्क्याह * नवेनेति * भावनावच्छेदकधात्वर्थान्वयं विना रेवतीवारवन्तीयान्वयस्य भावनाविशेषणत्वायोगात्साम्नश्च यागसाधनत्वाशक्तेः प्रधानभूतयागाख्यधात्वर्थान्वयायोगाद्रेवतीषु वारवन्तीयं यागसाधनं कृत्वेति यागस्य कृत्वाशब्दोक्तभावनावच्छेदकत्वानुपपत्तेस्तदवच्छेदकधा-

त्वर्थापेक्षायां वारवन्तीयस्यातिदेशतो ऽग्निष्टोमस्तोत्रभावनाविशेषणत्वावगतेर्वारवन्तीयान्वितानां रेवतीनामपि तद्विशेषणत्वावगताद्रेवत्याधारस्य वारवन्तीयस्याप्यग्निष्टोमसामत्वानुवादोपपत्तिरित्याशयः । आद्यं श्लोकं व्याचष्टे * रेवतीति * कृदन्ताक्षेपशब्दयोगेन क्रतोरिति षष्ठ्याः कर्तृवाचित्वात्स्वविशेषणस्यैव क्रतुनाक्षेप इत्यर्थः । द्वितीयां व्याचष्टे * सत्विति * साक्षाद्रेवतीवारवन्तीयसम्बन्धोपजीवनाशक्तेर्गुणत्वेन चानर्थक्यतदङ्गन्यायविषयत्वादङ्गेषु तत्सम्बन्धं विक्षेप्तुमारभमाणः क्रतुः क्वाङ्गे निक्षेप्तव्य इत्यपेक्षायां वारवन्तीयस्यातिदेशेन विज्ञातस्थानत्वाद्रेवतीरपि तत्स्थानाः कल्पयतीत्यत्र वाक्ये ऽग्निष्टोमस्तोत्रसाधनायाविधाने ऽपि रेवतीवारवन्तीयान्वयः क्रतुविशेषणमप्यग्निष्टोमस्तोत्रे संक्रामतीत्यग्निष्टोमसामशब्दानर्थक्यदोषो नास्तीत्यर्थः । एवमद्रव्यदेवतात्मकत्वेन वारवन्तीयस्य यागसिद्ध्यशक्तत्वान्न साक्षात्प्रकृतयागान्वयो ऽस्ति अङ्गावतारन्यायाविषयत्वाच्च स्तोत्रद्वारापि पुरुषार्थत्वपक्षे नास्ति क्रत्वर्थत्वपक्षे त्वङ्गावतारन्यायविषयत्वादस्तीति वैषम्यमुक्त्वा साम्नः स्वयं क्रियारूपत्वेनाश्रयभूतक्रियान्तरानपेक्षत्वात्पुरुषार्थस्य चाङ्गत्वेनान्वयायोगादिति वक्ष्यमाणादपि कारणात्प्रकृतयागान्वयो नास्तीत्याह * अतश्चेति * परपक्षदूषणवेलायामेवेतदपि कारणं वाच्यं सत्कस्मात्स्वपक्षसमर्थनात्पश्चादुक्तमित्याशङ्क्य मन्दत्वसूचनायेतीपदर्थवाच्याङ्प्रयोगेण दर्शितं वारवन्तीयस्य गीतिरूपत्वेन क्रियात्वादाश्रयभूतक्रियानपेक्षत्वे सौभरस्यापि वृष्ट्यादिफलार्थस्यानेनैव न्यायेनाश्रयानपेक्षत्वाद्व्यूहः क्रतुप्रयोगापत्तेः क्रत्वङ्गभूतस्तोत्राश्रयत्वप्राप्त्यभावेन स्तुवीतेत्यनुवादानुपपत्तिप्रसङ्गात्करणनिर्देशमात्रेण त्वाश्रयापेक्षत्वे यागादेरपि करणत्वाभ्युपगमादाश्रयापेक्षापत्तेर्वारवन्तीयस्यापि च फलभावनाकरणत्वे पशुकामो ह्येतेनेत्येतच्छब्देन परामर्शापत्तेः करणत्वनिर्देशनाश्रयापेक्षत्वस्यापरिहार्यत्वप्रसङ्गाद्यागादिवच्च सौरभस्यापि फलभावनाकरणत्वमात्रात्करणत्वनिर्देशोपपत्तेः । प्रत्युतैकक्रियाकरणस्यान्यकरणत्वानुपपत्तेः फलभावनाकरणत्वमात्रात्करणत्वनिर्देशोपपत्तेर्वाच्यत्वादनभिमतैव साम्नः क्रियारूपता प्रोद्ध्योक्तेति गम्यते षड्जादिस्वरसमूहात्मकत्वेन गीतेः सिद्धरूपत्वात्तद्रूपस्यापि साम्नः क्रियात्वाभावादपि तु कर्मशब्दः स्याद्भावो ऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टो ऽन्यैरिति सामिक्याश्च क्रियात्वोक्तेः सामार्थो यः कश्च गीतः सम्वरइति श्रुतेः सामशब्दस्य षड्जर्षभगान्धारमध्यमपञ्चमधैवताख्यस्वरसमूहवा-

चित्वावगमात्स्वरशब्दस्य च मारुतस्तूरसि चरन्मद्रं जनयति स्वर-मित्यादिदर्शनाद्वायवीयसंयोगविभागजनितनादाख्यध्वन्यपरपर्याय-घोषात्मकशब्दपरत्वावगतेस्तस्य चाकाशगुणत्वप्रसिद्धेः क्रियात्वे च साम्नो ऽशब्दात्मकत्वेनोच्चारणाख्याध्ययनायोगात्सामान्यधीयतइति प्रयोगायोगापत्तेर्ध्वनिनादापरपर्यायस्वरात्मकगीतिर्जनिकायामुच्चार-णक्रियायामृचं प्रति प्रधानसाम्नो गुणभूतत्वाय संस्कारकर्मत्वव्य-पदेशसिद्ध्यर्थं गीतित्वमुपचर्य व्याख्यातुं शक्यत्वादुच्चारणक्रिया-द्वारैव च वक्ष्यमाणाधिकरणस्थाया हीष्यादिप्रति सौरभस्याश्रयत्वो-पपत्तेरुपपादयितुं शक्यत्वाद्वारवन्तीयस्य च क्रियात्वे तस्यैवाग्निष्टुतो ऽग्निष्टोमस्य गुणे वारवन्तीये पशवः फलमिति पूर्वपक्षवचनव्यक्त्य-योगात्सन्देहासम्भवेनाधिकरणारम्भानापत्तेर्न पारमार्थिकी क्रि-यात्वोक्तिः सप्तमाधिकरणे तु स्वरस्य सामत्वनिरासो न ह्यभिवत्पक्ष-ग्राममभिव्यञ्जको यो ऽनादे स कवतीषु भावयितुं शक्यो यदि भा-व्येत न कवत्यो भवेयुरिति तत्रत्यभाष्यालोचनयैव गीत्याख्यषड्गा-दिस्वराभावे ऽप्यक्षराभिव्यक्तिदर्शनेन तेषां स्वानुरक्तत्वरूपाभिव्यञ्ज-कत्वे ऽप्यक्षरस्वरूपानभिव्यञ्जकत्वात्तदभिव्यञ्जकवायवीयसंयोग-विभागानां स्वरजनकत्वात्स्वरत्वमुपचर्यतइति द्रष्टव्यं तद्धर्म्योक्त्यैव षड्जादिस्वरूपस्यार्थस्याभिवनीयस्य कवतीषु भावयितुं शक्यताया भावो ऽर्थ इति तत्रत्यसिद्धान्तसूत्रावयवेनाभिधानात्तेनापि क्रियावा-चिता सामशब्दस्योक्तेति नाशङ्कनीयं रथन्तरादिशब्दस्य च गानवा-च्यत्वेन प्रसिद्धगानवाचित्वादृग्वाचित्वे प्रसिद्धग्रहणत्वादित्यवयवेन निरस्ते हन्तिविष्यादिजन्यविकारवदृग्विकारवाचित्वात् दृग्वाचिता न युक्तेति विकारो ह्यविशिष्टो ऽन्यैरित्यन्त्यावयवेन हेत्वन्तराभिधाना-न्न हन्त्यादिदृष्टान्तोक्त्या क्रियात्वं सामसु चिन्तितमिति शङ्कनीयं किं तत्कारणमित्यपेक्षायामाह * पश्येति * श्लोकं व्याचष्टे * दधी-
५६२।१ ति * गडिवदनैकदेशे शक्तिशक्तौ विशिअवयवइत्यादावक्रियायामपि धातुस्मृतेर्गण्डादिशब्दाच्च क्रियानवगतेर्धातुवाच्यत्वमात्रात् क्रिया-त्वासिद्धेः परमार्थतो वारवन्तीयस्याव्यापारत्वेनाक्रियात्वे ऽपि प्रायेण धातूनां क्रियावाचित्वादौपचारिकाक्रियात्वसूचनार्थं धातुवाच्यत्वो-क्तिः क्रियानपेक्षत्वे को दोष इत्यपेक्षायामाह * ततश्चेति * सि-द्धान्तमुपसंहरति * तस्मादिति * सूत्रतात्पर्यं व्याख्याय भाष्य-मनुसन्दधानः समोष्विति सूत्रावयवं भाष्यकृद्व्याख्यानस्य क्लिष्ट-त्वात्स्वयं तावद्व्याचष्टे * समोष्विति * गुणशब्दस्येह सिद्धरूपार्थ-वाचित्वादाश्रयत्वानपेक्षत्वे ऽभ्युच्चयमात्रेण क्रियात्मकत्वहेतूक्तिः

भाष्यकृद्व्याख्यानमपि समर्थयते *भिन्नेति* न हीति भाष्यमप्राधान्याद्रेवतीनामेतच्छब्दान्वयायोगादप्राप्तेश्चोद्देश्यत्वायोगाशङ्कानुपपत्तेरयुक्तमाशङ्क्योपपादयति *न हीति* वारवन्तीयात् प्राथम्योक्तेर्यद्वृत्तयोगः प्राथम्यमित्यद्युद्देश्यलक्षणमिति न्यायेनोद्देश्यत्वमुद्देश्यत्वाच्च प्राधान्यमप्याभातीत्यानन्तर्योक्त्या सूचितम्। ननु सतीष्वपि रेवतीषु विशिष्टानुवाददोषः प्राप्नुवन्कस्मान्नोक्त इत्याशङ्क्याह*तत्रेति* तच्चाग्निष्टोमसामेत्यपरोऽपि वाक्यभेदः प्राप्नोतीति सूचनार्थैकशब्दः असतीनां च रेवतीनां फलार्थवारवन्तीयान्वयविधौ कृत्वेन्वयाप्राप्तेरन्यत्र च गुणभूतानामन्यान्वयविध्ययोगादेतच्छब्दो ऽर्थशून्यः स्यादित्येतच्छब्दान्वयानुक्त्या सूचितं भाष्यकृतेत्युत्तरभाष्यपातनिकार्थमाह * तच्छब्देति * शुद्धानां रेवतीनां वारवन्तीयं प्रति विधौ पश्चादग्निष्टुद्यागान्वयायोगे ऽपि प्रागेव यागान्वयितया तां विधाय तासां च यागान्वये द्वारापेक्षायां द्वारतया वारवन्तीयान्वयं विधाय यागविशिष्टरेवतीविशिष्टस्य वारवन्तीयस्य फलान्वयविधिर्भविष्यतीत्याशङ्कार्थमथेति भाष्यं व्याचष्टे * अथ त्विति * रेवतीविशिष्टस्य वारवन्तीयस्याग्निष्टोमसामत्वाप्राप्तेरनुवादायोगाद्वाक्यभेदापत्तेश्च विध्ययोगादग्निष्टोमसामशब्दानर्थक्यदोषोक्त्यर्थं तथेति भाष्यं रेवतीयागान्वयरेवतीवारवतीयान्वयवारवन्तीयफलान्वयरूपार्थत्रयविधिर्निमित्तवाक्यभेदानुपन्यासयुक्तमाशङ्क्य व्याचष्टे * तथापीति *

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदोऽयमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥

इत्यनेन न्यायेन वाक्यभेदत्रयाभ्युपगमवच्चतुष्टयाभ्युपगमे ऽप्यदोष इत्याशयेनाशङ्कार्थमथेति भाष्यं व्याचष्टे * अथेति * एतस्यैवेति परिहारभाष्यमेतत्पदानुरोधेनैवाग्निष्टुद्रेवत्यन्वयाभ्युपगमादयुक्तमाशङ्क्य द्वेधा व्याचष्टे * तथा सतीति * वारवन्तीयस्याग्निष्टोमसामत्वविधावनुज्ञाते वाक्यभेदत्रयातिरेकापत्तेस्तत्परिहारार्थमग्निष्टुद्रेवत्यन्वयविध्यपगमाद्वाक्यभेदत्रयातिरेकापत्तेरेव चैतच्छब्दस्य रेवतीशब्दवदग्निष्टोमसामशब्देनाप्यनन्वयादानर्थक्यं तच्चैतस्याग्निष्टोमसामेत्यन्वयविधौ वाक्यभेदत्रयातिरेकापत्तेरित्याद्यव्याख्याने ऽर्थः रेवतीविशेषणत्वेनैतच्छब्दविवक्षायामपि वाक्यभेदपञ्चकापत्तेः सकृच्छ्रुतस्यैतच्छब्दस्यानेकविशेषणात्वायोगादग्निष्टोमसामविशेषणत्वाविवक्षाविवक्षायां वा वाक्यभेदपञ्चकापत्तिरिति द्वितीये । यथा विशिष्टानुवादपक्षे यथा-

क्रममवस्थितस्यैतच्छब्दस्य रेवतीविशेषणत्वं तथा रेवत्युपादानपक्षे ऽपि यथाक्रममेवावस्थानं नोत्कर्ष इत्येवकारार्थः। अस्मिन्पक्षे रेवतीनामुपादेयत्वात्सामाम्नायसिद्धा या रेवत्यस्ता एतस्याग्निष्टुतः कार्या इति स्वरूपानुवादार्थतया यच्छब्दो योज्यः। सिद्धान्ते ऽपि कर्मान्तरस्य क्रियान्तरविशेषणस्यैव विधानात् वाक्यभेदो ऽपरिहार्य इत्याशयेनाथेति प्रश्नभाष्यं गुणे पुनः फले कल्पनात इत्यादिभाष्येण पूर्वपक्षे वक्ष्यमाणानां वाक्यभेदानामसमाप्तत्वान्मध्ये सिद्धान्तदो-
५६३।६ षं शङ्कानवकाशादयुक्तमाशङ्क्योपपादयति *इहैवेति* यागान्तरस्याग्निष्टुद्यागाङ्गत्वेन विधिर्गुणविशिष्टस्य वाग्निष्टुतः फले विधिः फलार्थस्यापि वा गुणस्य प्रकरणप्राप्तयागाङ्गत्वानुवाद इति पक्षान्तराणां सिद्धान्तप्रतियोगित्वात्पूर्वपक्षत्वमभ्युपेत्यापि प्रश्नावसरसमर्थनायैतदुक्तं फले गुणविधिः प्रकरणप्राप्ताश्रयाभूतयागानुवादश्चेति त्वत्रत्यपूर्वपक्षवचनव्यक्तयः सर्वा निरस्ता एव । विस्मयहेतुदर्शनपूर्वं भाष्यं व्याचष्टे *तथा नामेति* यजेतेति विदितस्यैतद्वचनामेति पूर्वभाष्योक्तयागानुवादद्वारेतरानुवादासिद्धिरेवं च सति विपरिवृत्तिप्राप्तो यजिरित्यादिवार्त्तिकोक्त्या तथा शब्देन परामृष्टायागस्यायोग्यत्वेनाश्रयत्वाप्राप्तेर्वस्तुतो ऽसम्भवन्नप्यनुवादः पूर्वपक्षे स्थित्वोक्त इति नामशब्देन सूचितम्। रेवतीष्वित्युत्तरभाष्यं व्याचष्टे *सिद्धान्तेति* नन्विति प्रश्नाशयविवरणभाष्यं स्वविशेषणाविशिष्टायाः क्त्वाशब्दोक्ताया भावनाया यागभावनाविशेषणत्वाद्विशिष्टैकार्थविध्युपपत्तेरयुक्तमाशङ्क्योपपादयति *नन्विति* क्त्वान्तत्वोक्त्या तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वेति क्त्वाशब्दोक्तभावनाया रेवतीयागे ऽतिदेशप्राप्तायाः प्रत्यभिज्ञानादविधेयत्वेनाविधेयभावनाविशेषणत्वायोगः सूचित। स्वरूपेणाविधेयत्वे ऽपि रेवतीवारवन्तीयान्वयविशिष्टरूपेण विधेयत्वाद्विशेषणत्वोपपत्तिरित्याशयेनेतीति परिहारभाष्यं व्याचष्टे *नेति* उच्यतइत्याशङ्काभाष्यं विधेययागभावनाविशेषणत्वात्क्त्वाशब्दार्थस्य लिङा ऽर्थाद्विधाने ऽपि रेवतीवारवन्तीयान्वयो लिङा क्त्वाप्रत्ययेन वा न विहित इत्येवं व्याचष्टे *रेवतीनामिति* ननु रेवतीवारवन्तीयान्वयाविधाने ऽप्युभयोः क्त्वाशब्दोक्तैकभावनाविशेषणत्वेनारुणैकहायनीवदन्योन्यानियमसिद्धेः। समभिव्याहारलभ्यान्वयप्रतीतिरविरुद्धेत्याशङ्कानिरासार्थं तत्रेति भाष्यमरुणैकहायनीन्यायवैषम्योक्त्यशक्तेरयुक्तमाशङ्क्योपपादयति *तेनेति* रेवतीवारवन्तीयविशिष्टक्त्वाशब्दार्थविशिष्टयागभावनाविध्यर्थाक्षेपात्क्त्वाशब्दार्थस्य रेवतीवारवन्तीयविशिष्ट-

त्वप्रतीत्या तयोरन्योन्यानियमः प्रतीतो ऽप्यविधेयत्वान्नादर्त्तव्य इत्या-
शयः।सम्बद्धेति विशेषणप्रधानो निर्देशः । नन्वविधेयत्वे रेवतीवा-
रवन्तीययोरप्रयोग एव स्यादित्याशङ्क्य *यागेत्युक्तम* कृत्वाशब्दो-
क्तभावनाविशेषणत्वेन प्रतीयमानयोः कथं यागभावनाविशेषणते-
त्याशङ्क्य * यद्यपीत्युक्तम * रेवतीवारवन्तीयसम्बद्धत्वरूपेणोक्त-
त्वात्सम्बद्धत्वरूपेण सतीं प्रतीयमानामपि कृत्वाशब्दवाच्यां स-
म्बद्धत्वरूपस्याविधेयत्वाच्छुद्धायाश्चानुष्ठानाशक्तेरनादरणीयत्वाद-
सतीमप्रतीयमानामिव प्रतिपद्य रेवतीष्वन्यान्यपि सामानि प्राप्नु-
वन्ति सामाप्यन्यास्वृक्षु प्राप्नोतीत्यध्यवस्यतीत्यध्याहारेण ल्यप्प्र-
त्ययो योज्यः । सन्निहितकृत्वाशब्दोक्तभावनाविशेषणत्वस्याविधे-
यत्वेनानादरणीयत्वाद्व्यवहितयाप्येकवाक्योपात्तया प्रधानभूतया
यागभावनया ऽन्वयो युक्त इत्याशयः । ननु यागभावनाविशेषणत्वे
ऽपि साक्षात्तदन्वयायोगादङ्गत्वेन चाङ्गावतारन्यायविषयत्वात्तद-
ङ्गावतारावगतेः । कस्मिन्नङ्गविशेषे ऽवतार इत्यपेक्षायां वारवन्ती-
यस्य प्रकृतावग्निष्टुत्यग्निष्टोमस्तोत्रविषयत्वेनेहापि तद्विषयत्वावगमा-
द्रेवतीनां चाधारत्वश्रुतेः । साम्नैव प्रत्यृचामाधारत्वप्रसिद्धेः सा-
मान्तराणां चातिदेशतो निर्ज्ञातचैनर्गन्तरानाकाङ्क्षत्वादेकाग्निष्टो-
मस्तोत्रविषयतयान्योन्यानियमः सेत्स्यतीत्याशङ्क्य * एकस्तोत्रेत्यु-
क्तम् * वारवन्तीयस्याग्निष्टोमस्तोत्रविषयत्वेनातिदेशतः प्राप्तरूपदं-
शानर्थक्यापत्तेः स्तोत्रान्तरविषयत्वावगमाच्चात्र च प्राकृतसामकार्या-
पत्तिप्रमाणाभावेनाधिकावापावगतेरारोप्यमाणानां च साम्नां त्रीणि
ह वै यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुबत्र ह्येवावपन्त्यत एवोद्वप-
न्तीति श्रुत्या प्राकृतीष्वेव गायत्र्यादिष्वभ्यस्यमानासु निवेशावगतेः
ऋगन्तरानाकाङ्क्षत्वाद्रेवतीनां तद्विषयत्वानवगतेरेकस्तोत्रविषय-
त्वानियमादेकस्तोत्रविषयत्वे ऽपि वानेकसामकयोर्माध्यन्दिनार्भवप-
वमानयोर्यस्मिन्नेवाद्ये मध्यमे ऽन्त्ये वा स्तोत्रैकदेशे वारवन्तीये तस्मि-
न्नेव रेवत्य इति नियमाभावान्नान्योन्यानियमः सेत्स्यतीत्याशयः : उ-
प्यन्ते प्रक्षिप्यन्ते सामान्यास्त्विति अधिकरणवाचि घञन्तेनावापश-
ब्देनाङ्गन्तुकस्य साम्नो ऽभिनिर्ज्ञातप्राकृतर्गाधारत्वेनाधारभूतर्गन्तरा-
नाकाङ्क्षत्वं सूचितम् । एवं सति को दोष इत्यपेक्षायामाह * तत्रे-
ति * तेनानयोरन्वयायातिदेशे ऽवगताग्निष्टोमस्तोत्रस्थानवारवन्ती-
योद्देशेन रेवतीविध्यापत्तेर्यागभावनानन्वयाद् दुष्परिहरो वाक्यभेदः
स्यादित्याह * अत इति * यागभावनान्वयनिरासायैवकारः नैष ५६४।२
दोष इत्यादिपरिहारभाष्याशयमाह * नैष इति * अप्राप्तविषय-

तैर्वंविधशब्देनोक्ता अप्राप्ते ऽर्थे कृत्वेत्यस्य विध्यन्वयो विधेयत्वाश्च्य: फलमित्यर्थः । श्लोकार्थमुपपादयति * सर्वत्रैवेति * कृत्वाशब्दार्थविशिष्टयागभावनाविधिना विशेषणस्याविधाने ऽपि त्काप्रत्ययेन धातुवाच्यायाः क्रियायाः क्रियान्तरसमानकर्तृकत्वाभिधानादनुष्ठानं च विना कर्तृत्वायोगादनुष्ठानावगतेरप्राप्तत्वाच्च रेवतीवारवन्तीयानुवादायान्वयक्रियाया अभिषुत्य हुत्वेतिवन्निमित्तार्थश्रवणायोगादनुष्ठानानुवादानुपपत्तेर्विधावस्मृतस्यापि कृत्वाशब्दस्यार्थाद्विध्याक्षेपकत्वाद्विधेयं कृत्वा शब्दार्थविशेषणस्य रेवतीवारवन्तीयान्वयस्य विधेयत्वोपपत्तिरित्याशयः । कृत्वाशब्दोक्तायाः क्रियायाः प्राप्तत्वान्निमित्तार्थश्रवणोपपत्तिमाशङ्क्य स्वरूपेण प्राप्तावपि रेवतीवारवन्तीयान्वयवैशिष्ट्यरूपेणाप्राप्तेस्तादर्थ्येनैव च विधेयत्वाभ्युपगमाच्च निमित्तत्वाश्रयणं युक्तमिति * न चेहेत्यनेनोक्तम् * द्वाविति भाष्यं शङ्कोत्तरत्वेन व्याचष्टे * यदि तर्हीति * यथेति दृष्टान्तभाष्यमपि सकृदुच्चरितस्य त्काप्रत्ययस्यानुष्ठेयत्वपूर्वकालत्वरूपानेकार्थपरत्वायोगादप्रवृत्तिलक्षणो वाक्यभेदः स्यादिति शङ्कोत्तरत्वेन व्याचष्टे * कथमिति * पूर्वकालत्वानुष्ठेयत्वयोर्विशेषणविशेष्यभावात्पूर्वकालत्वविशिष्टानुष्ठेयत्वरूपैकार्थोपपत्तेर्विशिष्टरूपेण च त्काप्रत्ययेनोपादानादेकशब्दोपादानलक्षणाया अपि च वाक्यभेदपरिहारप्रक्रियायाः शोणशब्दे च त्वैकार्थसमवायिरक्तावान्तरजातिवाचिनि दृष्टत्वान्न वाक्यभेदापत्तिरित्याशयः । त्काप्रत्ययानिष्पादितापरपर्यायानुष्ठानावगमे ऽपि भुक्त्वाव्रजतीत्यादौ विध्यभावे तत्कार्यत्वाप्रतीतेः कृत्वाशब्देनैव च तदर्थविधौ न चेदन्येन शिष्टा इत्यनेन न्यायेन विशिष्टयागभावनाविध्ययोगापत्तेर्भाष्योक्तपरिहारापरितोषात्स्वयं निर्विशेषणस्य करोत्यर्थस्य विशेषणत्वायोगाद्रेवतीवारवन्तीयान्वयस्य विधेययागभावनाविशेषणान्तर्भावाभ्युपगमेन लिङैव विधेयत्वमुपपादयति * अथ वेति * द्रव्यस्याविशेषितस्यापि स्वरूपमात्रेण विशेषणत्वोपपत्तेस्तद्विशेषणस्यानन्तर्भावादविधेयत्वे ऽपि करोत्यर्थस्याविशेषितस्य निरूपणाशक्तेर्विशेषणत्वायोगाद्विधेयविशेषणान्तर्गतत्वाद्रेवतीवारवन्तीयान्वयस्य विशेषणविशेषणत्वे ऽपि विधेयता युक्तेत्याशयः । श्लोकं व्याचष्टे * तत्रेति * पश्वेकत्वाधिकरणपूर्वपक्षन्यायस्यापि क्रियाविशेषणत्वहेतुकाविवक्षासिद्धान्तेनाबाधादुपन्यासः यागभावनाविशेषणस्य करोत्यर्थस्य रेवतीवारवन्तीयान्वयविशिष्टतां विना विशेषणत्वायोगात्सावश्यमभ्युपगन्तव्येत्युक्ते कथं पदान्तरोपात्तस्यान्तर्गतिरित्यपेक्षायां यस्यो-

भयं हविरार्त्तिमार्च्छेदित्यत्रार्त्तिनिमित्तभूताया मृष्यामहे हविषा विशेषणमिति वदता भाष्यकारेण पदान्तरोक्तहविर्विशिष्टायां आर्त्तेर्निमित्तत्वोक्त्या पदान्तरोक्तस्य निमित्तान्तर्गतिमुक्त्वा दृष्टान्तत्वेन सूत्रयितुमार्त्त्यधिकरणभाष्यं पठितं ननु विशेषणाविशेषणस्य कथं प्रधानान्वय इत्याशङ्क्याह * तथा चेति * अङ्गगुणाविरोधे च तादर्थ्यादित्यत्राङ्गसादृगुण्यानुष्ठानस्य प्रधानसादृगुणार्थताया वक्ष्यमाणत्वादित्याशयः। रेवतीवारवन्तीयान्वयविध्युपपादनस्यानियमाशङ्कापरिहारोपयोगमाह * तस्मादिति * रेवतीवारवन्तीयान्वयेन विशेषितायां कृत्वाशब्दोक्तायां भावनायामृक्सामयोर्नियम इत्युक्ते तस्याः पूर्वकालत्वलक्षणनिष्पन्नरूपत्वात्कथमनिष्पन्नरूपेणान्वयेन विशेषणमित्याशङ्क्य शुद्धस्य करोत्यर्थस्य पूर्वकालत्वनिरूपणाशक्तेर्विशिष्टस्य पूर्वकालत्वोक्त्या विशेषणस्य पूर्वकालत्वोक्तिर्निष्पन्नशब्देन सूचिता। ननु वारवन्तीयस्यातिदेशतो ऽग्निष्टोमस्तोत्रसाधनत्वावगमात्तस्य च सर्वस्तोत्रान्त्यत्वेन यागात्प्रागयोगात्पूर्वकालत्वानुपपत्तेः। क्त्वाप्रत्ययस्य च मुखं व्यादाय स्वपितीतिवत्समानकर्तृकत्वमात्रेणोपपत्तेः। पूर्वकालवाचित्वायोगान्न तद्वशेनानुष्ठेयतया क्त्वाप्रत्ययोपात्तस्य रेवतीवारवन्तीयान्वयस्योत्तरक्रियान्वयः सिद्ध्येदित्याशङ्क्याह * कृत्वाशब्दश्चेति * मुखं व्यादाय स्वपिति सम्मील्य हसतीत्युपसंख्यानात्समानकर्तृत्वमात्रवाचित्वे ऽपाह स्मृतेः प्रयोगाच्च पूर्वकालवाचित्वस्यावगतस्य त्यागायोगादनेकार्थस्य करोतेरिहानुष्ठानवाचित्वायोगे ऽपि यागप्रक्रमात्प्रागेवाविकलानुष्ठानसिद्ध्यर्थं सर्वं पदार्थानामिदं करिष्यामीत्येवमध्यवसेयत्वाद्वाचा करोति मनसा करोतीत्यादौ चाध्यवसाने ऽपि प्रयोगदर्शनात्परिकल्पनाध्यवसानापरपर्यायप्रतिपत्तिवाचित्वावगतेः। सामानुष्ठानस्य चर्त्विक्कर्तृत्वाद्यजमानकर्तृकयागसमानकर्तृकत्वस्याप्यनुपपत्तेः क्त्वाप्रत्ययस्य पूर्वकालवाचित्वाविरोध इत्याशयः। नन्वेवमपीत्याशङ्काभाष्यमर्थैकत्वादेकं वाक्यमित्यत्रार्थशब्दस्य प्रयोजनवाचित्वाभ्युपगमाद्वाच्यभेदमात्रेण वाक्यभेदानापत्तेरयुक्तमाशङ्क्य विधिप्रयोजनत्वाद्वाक्यस्य विधेयभेदाशयत्वेन व्याचष्टे * नन्विति * नैव इति परिहारभाष्यं रेवत्याभिधानस्याप्यप्राप्तार्थत्वेन विधिप्रयोजनत्वाद्विधेयभेदप्रतीतेरयुक्तमाशङ्क्य रेवत्यादिविशिष्टैकयागभावनाविधिसिद्ध्यर्थं रेवत्याद्यभिधानोपपत्तेर्न विधेयभेदो ऽस्तीत्येवमर्थत्वेन व्याचष्टे * नैष दोष इति * वाच्यनानात्वेनानेकार्थत्वस्यार्थैकत्वादित्यत्र प्रयोजनैकत्वादुपपन्नमिति भा-

ष्येण निरस्तत्वात्प्रयोजनस्य च विशिष्टभावनाविधानस्यैकत्वाच्च वाक्यभेदापत्तिरित्युक्तं भावनाया विधेयत्वं यागविधर्युक्तिभाष्यकारीया न युक्तेत्याशङ्क्य * सा चेत्युक्तम् *, नन्वितिभाष्यं पूर्वशङ्काशयविवरणार्थत्वेन व्याचष्टे * नन्विति * वाक्यानेकत्वानिमित्तानेकार्थत्वशङ्काभ्रान्तिनिवृत्त्यर्थम् * यदीत्युक्तम् * अत्रेति परिहारभाष्यं विशिष्टविध्यन्यथानुपपत्तिकल्पितैर्विधिभिरनेकार्थविधाने ऽपि प्राधान्येनैव विधेयस्य प्रयोजनत्वात्तस्य चात्रैकत्वाच्च वाक्यभेदापत्तिरित्येवमर्थत्वेन व्याचष्टे * उच्यतइति * न हीति भाष्यावय-
५६६।१ वमनेकप्राधान्यनिरासोपपादनार्थत्वेनावतारणपूर्वकं व्याचष्टे * तदाहेति * एतदेवोपपादयति * तथा हीति * धारणव्यापृतरेवतीपर्यवसाने रेवत्यो धारयेयुरिति निर्देशप्रसङ्गाद्रेवत्याश्रयणव्यापृतवारवन्तीयपर्यवसाने सम्बन्धिद्वयसम्बन्धेन व्यापृतसम्बन्धपर्यवसाने वा रेवतीषु वारवन्तीयं कुर्यादिति निर्देशापत्तेः स्वोत्पत्तिव्यापृतयागपर्यवसाने यागः स्यादिति निर्देशापत्तेः फलपर्यवसाने पशवः स्युरिति निर्देशापत्तेस्तच्छब्दपरामृष्टरेवत्यो वारवन्तीयमिति भाष्योक्तरेवतीवारवन्तीयतत्सम्बन्धयागपशुक्रियाणां यजमानव्यापारयागभावनान्तरव्यापारत्वावसायात्ततः प्राग्विधेरपर्यवसानापत्तेर्नानेकस्य प्राधान्येन विधिः सम्भवतीत्याशयः । तस्मादिति वाक्यभेदपरिहारोपसंहारभाष्यं व्याचष्टे * अहं तस्मादिति * ननु गुणफलान्वयपक्षे ऽप्येतच्छब्दस्याग्निष्टोमसाममात्रविशेषणत्वाभ्युपगमे रेवतीविशेषणत्वानभ्युपगमादेतच्छब्दस्योभयविशेषणत्वानभ्युपगमादेतच्छब्दस्योभयविशेषणत्वनिमित्तो वाक्यभेदः परिहर्त्तुं शक्य इत्याशङ्कानिरासार्थं गुणे पुनरिति भाष्यं व्याचष्टे * गुणेति * तथाप्यग्निष्टोमसाम्नो वारवन्तीयेनाग्निष्टुतान्वयविधानाद्वाक्यभेदो ऽपरिहार्य इत्याशयः । अथेति भाष्येणाग्निष्टुद्यागाङ्गत्वेन यागान्तरं रेवतीवारवन्तीयवाक्येन विधास्यतइत्याशङ्क्य तथापीत्यनेन निरस्तं तदनेनापि प्रकारेण कर्मान्तरत्वसिद्धेः पूर्वपक्षानुपयोगित्वात्सिद्धान्ताविरोधाच्चानर्थकमित्याशङ्क्याह*अथेति * शङ्काभाष्यं व्याचष्टे * तत्रेति * एवं विधपक्षान्तराभ्युपगमे को गुणो भविष्यतीति पृच्छति * किमिति * गुणविषयत्वे ऽपि सामान्यविवक्षया नपुंसकनिर्देशाविरोधः प्रकरणाबाधैतत्पदानुग्रहरूपं गुणद्वयमाह*प्रकरणं तावदिति* परिहारभाष्यं व्याचष्टे * तत्रेति* कीदृग्वाक्यभेद इत्यपेक्षायां प्रत्युद्देश्यं वाक्यपरिसमाप्तिलक्षण इति दर्शयितुमाह *न हीति * अथैवमित्यादिशङ्काभाष्यं गुणफलान्वयस्याभिधानात्पु-

नरुक्तमाभासमानं परमते नादर्थ्यमेभ्युपेत्यैव रेवत्याख्यर्गन्तप्रगानाच्छायव्यगाधारत्वलक्षणविशेषहानेनाश्रयवैगुण्यरूपदोषान्तरोक्त्यर्थन्येन व्याचष्टे * अथेति * अग्निष्टुद्यागस्यैव गुणान्तरविशिष्टस्य फलान्वयाभिधानायैतदिति स्वमतेनार्थान्तरं गुणकामत्वापरित्यागेनैव वक्तुमाह * अथ चेति * एतदेव पक्षान्तरमुपपादयति * तथा च सतीति * कर्मान्तरपक्षे ऽपि सन्निकृष्टार्थविधिर्लप्स्यतइत्याशङ्क्य * न चेत्युक्तम् * गुणविशिष्टकर्मान्तरविधौ गुणपरत्वात्कर्मोत्पत्तिपरत्वायोगे ऽपि कर्मोत्पत्तिसिद्ध्यर्थं उत्पत्तिपरत्वस्यापि कल्प्यत्वात् गौरवापत्तिर्नास्मिन्पक्षइति विशेष इत्याशयः । उत्पत्तिं करिष्यतीत्यनुषङ्गः । नन्वनुत्पत्तिपरत्वे रेवत्यस्तासां च पदान्तरोपात्तवारवन्तीयान्वय इत्यनेकार्थविधिर्न लभ्यतइत्याशङ्क्य * विधानाच्चेत्युक्तम् * फलस्यानुपादेयत्वेन प्राप्तस्यापि कर्मणः फले विधानादनेकगुणविशिष्टता सेत्स्यतीत्यर्थः । श्लोकं व्याचष्टे * यागं हीति * फलस्याज्ञातज्ञापनं विधिर्विवक्षितः । ननु विशेषणफले चास्मिन् वाक्यभेदो भविष्यतीत्यनेन न्यायेन कर्मविधाने ऽपि तात्पर्यस्य फले ऽवतारादू गुणविशिष्टत्वानुपपत्तिरित्याशङ्क्य विधेः फलपरत्वनिरासार्थं तस्योद्देश्यतोक्ता इति करणः श्लोकार्थसमाप्त्यर्थः।ननु फले विधीयमानस्य कर्मणो ऽर्थानुत्पत्तिविधिमप्यनुभवितुं प्रक्रममाणस्य गुणान्तराधिक्यं बलवद्विपरिवृत्त्यभावनोत्पत्तेरनिवारणात्कथमकर्मान्तरतेत्याशङ्क्य मन्यमानशब्देनानभिमतत्वं सूचयितुमाह * एवमिति * नन्वेवं सति सा- ५६७।१
म्नो यागासाधनत्वात्तृतीया न युज्येतेत्याशङ्क्य द्वेधा समर्थयते * स्तोत्रेति * दोषान्तरोक्त्यर्थं नैव शक्यमिति भाष्यं व्याचष्टे * तत्रेति * गुणान्तरविशिष्टत्वे प्रत्यभिज्ञानतिरोधानेनानुपादेयान्वयनिमित्तकर्मोत्पत्त्यनिवारणात्कर्मान्तरत्वापत्तेर्न पूर्वस्मिन्यागे रेवतीवारवन्तीयान्वयविधिः शक्य इत्याशयः। रेवतीवारवन्तीयान्वयस्य क्रियान्तरविशेषणत्वाल्लिङां विध्यशक्तेर्ऋगन्तराणामविधेयत्वमभिप्रेत्यैतदुक्तमिति तन्निरासाय लिङो ऽशक्तत्वे ऽपि कृत्वाशब्दस्य विधिशक्तेरुक्तत्वाद्विधेयत्वोपपत्तेर्गुणफलान्वयपक्षे काम्येनैव गुणविशिष्टकर्मफलान्वयपक्षे नैमित्तिकेन ऋगन्तरप्रगानेन नित्यवायव्याधारत्वरूपविशेषबाधाद्धाने ऽपि वैगुण्यानापत्तिरित्यभिधानार्थं नन्वित्याशङ्काभाष्यं व्याचष्टे * नन्विति * कृत्वाशब्देन विधातुं शक्यमिति सूचनार्थो भाष्ये करोतिः कर्मान्तरपक्षे नीरूपस्य कर्मणो विधेयत्वायोगेन साधनाकाङ्क्षत्वाद्विधानाच्च प्रागतिदेशतो लाभा-

भावादर्थात्साधनान्तरविधिर्युक्तः। पूर्वकर्मपक्षे त्वनाकाङ्क्षितसाधनविधायित्वकल्पना कृत्वाशब्दस्य न युक्तेत्याशयं सर्तीति परिहारभाष्यं व्याचष्टे * सिद्धान्तेति * वचनं तर्हीत्याशङ्काभाष्यं वचनशब्दस्य पूर्वभाष्यस्थवचनशब्दवत्कर्मान्तरविधिवाचित्वे ऽभ्युपगमविरोधापत्तेर्गुणान्तरविशिष्टप्रकृतकर्मविधिवाचित्वे तु प्रकृते • कर्मानाकाङ्क्षितगुणान्तरविधिकल्पनस्यानन्तरभाष्यानिरस्तत्वेन गुणान्तरविशिष्टप्रकृतकर्मविध्ययोगादयुक्तमाशङ्कोपपादयितुमाह * वचनं तर्हीति * केनेत्यपेक्षायां गुणान्तरविशिष्टप्रकृतकर्मविधेर्निरस्तस्याप्यनिरस्तत्वं मन्वेयमाशङ्केति सूचनार्थं पूर्वोक्ताभिप्रायद्वयोक्तिः। ननु कर्मविध्यभ्युपगमे यजत्यनुवादोक्तिर्न युज्येतेत्याशङ्क्याह * यजिरिति * फलोद्देशेन कर्मविधाने ऽपि फलान्वयस्यापि गुणान्वयवद्विशेषणत्वात्तत्पक्षपरत्वे गुणविधेरेवायोगेनानेकगुणविधेर्दूरोत्सारितत्वापत्तेरुत्पत्तिपरत्वं विनानेकार्थविध्ययोगात्तदन्यथानुपपत्त्योत्पत्तिपरत्वावगतेरुत्पन्नोत्पत्त्ययोगात्कर्मान्तरत्वसिद्धयुक्त्यर्थं यदीति परिहारभाष्यं व्याचष्टे * सिद्धान्तेति * स्वाभिप्रेतं कर्मान्तरत्वं यदनेकार्थं विध्यन्यथानुपपत्तेः फलं तत्कथयतीति वदतानेकार्थविध्यन्यथानुपपत्त्या प्रकृतकर्मविधिर्निरस्त इति प्रकटितम्। अनेन वा रेवतीवारवन्तीयसम्बन्धसम्बन्धिनया कर्मणो वचनमित्यध्याहारेण भाष्यव्याख्या सूचिता। ननु कृत्वा यजेतेत्युपपदाक्रान्तत्वेन विधिशक्त्ययोगादवतारायागस्वरूपानुवादावगतेरङ्गाङ्गिसम्बन्धार्थत्वेन चानुवादार्थवत्त्वोपपत्तेर्न कर्मान्तरत्वसिद्धिरित्याशङ्कार्थं नन्विति भाष्यं पूर्वस्मिन्कर्मण्यनेकार्थविधौ वाक्यभेदापत्तेः कर्मान्तरत्वसिद्धयुक्त्या सूचितत्वादयुक्तमाशङ्कोपपादयति * नन्विति * गुणान्तरविशिष्टप्रकृतकर्मविधिपक्षस्य कर्मान्तरत्वसिद्धयुक्तिसूचितवाक्यभेदापत्त्या निरस्तस्यापि कण्ठोक्त्या वाक्यभेदवचनेनानिरस्तत्वात्पुनः शङ्कोपपत्तिरित्याशयः। भाष्यं च कृत्वाशब्दसमभिव्याहाराद्गुणे विधिसंक्रान्तिसूचनार्थस्ततः शब्दः प्रयोजनशब्दस्य प्रधानवाचित्वाद्रेवतीवारवन्तीयसम्बन्धस्याङ्गप्रधानलक्षणो यागेन सम्बन्धो भविष्यतीत्यर्थः। इहाप्युत्पत्त्यविधानाभिप्रायैवानुवादोक्तिः नैवमिति परिहारभाष्यं कर्मान्तरत्वसिद्धयुक्तिसूचितार्थविवरणत्वेन व्याचष्टे * नैवमिति * कीदृग्विवरणमित्यपेक्षायामाह * यदि हीति * न तेन यागेन सम्बध्यतइत्युक्तं गुणेन तर्हि सम्बध्यतामित्याशङ्क्य गुणेनापि न सम्बध्यतइति नञनुषङ्गापिशब्दाध्याहाराभ्यां वदता यागस्य रेवतीयसम्बन्धस्य च पशुकामं प्रत्यसम्बन्ध इत्येवं भाष्यं

व्याख्यातम्। यद्वा गुणेनेतीत्थंभूततृतीयया गुणविशिष्टेन यागेनेत्याभि-
धानाद्विशिष्टस्य यागस्य पशुकामं प्रत्यसम्बन्ध इत्येवं व्याख्यातम्
उभयेतिभाष्यं रेवतीयसम्बन्धस्य यागफलाभ्यां सम्बन्ध इत्येवम-
र्थमाभासमानमस्मिन्पक्षे गुणस्य फलान्वयाभावादयुक्तमाशङ्क्य
यागस्य गुणफलाभ्यां सम्बन्ध इत्येवं व्याख्यातुमाह * सम्बध्यमानं ५६८।२
चेति * फलपदं गुणविशिष्टेन यागेन सम्बध्यमानं यागस्योभयस-
म्बन्धापादकत्वाद्वाक्यं भिन्द्यादित्यर्थः। वाक्यभेदोक्तेरुपलक्षण-
त्वात्स्वयं पूर्वाधिकरणोपक्रमोक्तं कर्मान्तरत्वे युक्त्यन्तरं स्मा-
रयति * गुणेति * या च यदि तु पशुकामः स्यात्ततो ऽनेनैव
रेवत्यादिविशिष्टेनेति वचनव्यक्तिरुक्ता साप्यप्राप्तफलान्वया-
नुवादायोगादयुक्तेत्याह * न चेति * अप्राप्तत्वादेव फला-
न्वयस्य यदिशब्दोक्ता निमित्ततापि प्रत्युक्तेत्याह * तेनेति * फ-
लान्वयस्य निमित्तत्वाभावे नैमित्तिकेनगन्तरप्रगानेन नित्यवाय-
व्याधारत्वारव्यविशेषबाधाद्विगुणयपरिहाराशङ्का न युक्तेत्याह * अत-
श्चेति * ननु रेवतीवारवन्तीयान्वयस्य यागाङ्गत्वे यागस्य च फ-
लान्वये विधीयमाने वाक्यभेदापत्तेः। प्रकृतस्य यागस्य गुणवि-
शिष्टस्य फले विध्ययोगे ऽपि गुणस्यैव फले विधिः प्रकरणप्राप्त-
यागाङ्गत्वानुवादश्च भविष्यतीति पक्षान्तराशङ्कार्थमथेति भाष्यं
व्याचष्टे * अथेति * नन्वाश्रयाश्रयिभावानुवादनिरासन्यायेनै-
वाङ्गत्वानुवादनिरासासिद्धेः पृथगुपन्यासो न युक्त इत्याशङ्कानिरा-
सार्थं प्रश्नपूर्वं विशेषमाह * कः पुनरिति * गुणफलान्वयविधायि-
नो वाक्यस्याश्रयलाभार्थं प्रकरणापेक्षत्वेन तद्बाधकत्वायोगात्प्रक-
रणेनाङ्गत्वज्ञाने सत्यानर्थक्यतदङ्गन्यायविषयत्वसम्भवाद्योग्यत्वा
त्स्तोत्रं ऽवतरतो वारवन्तीयस्य तद्विशेषापेक्षायां क्रतुमात्रार्थो वार-
वन्तीये ऽग्निष्टोमस्तोत्रसाधनत्वदर्शनेनास्यापि तत्स्थानत्वावगतेस्त-
द्वारा रेवतीनामपि तत्स्थानत्वावधारणादनुवादोपपत्तिरित्याशयः।
तदिति परिहारभाष्यं व्याचष्टे * तदिति * आश्रयलाभायाधिका-
रलक्षणप्रकरणापेक्षत्वे ऽप्यङ्गत्वप्रमाणभूतकथम्भावलक्षणप्रकरणा-
नपेक्षत्वात्तस्य चासंयुक्तप्रकरणादिति तृतीयाधिकरणसूत्रे श्रुत्या-
दित्रयसंयुक्ताङ्गविषयत्वनिषेधाद्वाक्यबाधितेन प्रकरणेनाङ्गता न श-
क्यावगन्तुमित्याशयः। तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मा-
दिति * यागगुणकं वेति भाष्यं शङ्कोत्तरत्वेन व्याचष्टे * तत्रेति*
रेवतीवारवन्तीयस्येति भाष्यावयवेन रेवत्याधारस्य वारवन्तीयस्य
फलसम्बन्धो ऽभिहितः। तस्मादिति सिद्धान्तोपसंहारभाष्यं व्या-

चष्टे * तस्मादिति * रेवत्याधारस्य वारवन्तीयस्य यागगुणत्वे ऽग्निष्टोमस्तोत्रान्वयो न स्यादित्याशङ्कार्थमथ पुनारिति भाष्यं व्याचष्टे * अथ पुनरिति * क्रियान्तरस्य यागस्य विशेषणेन रेवत्याधारेण वारवन्तीयेन सहाग्निष्टोमसाम्नः कथं सम्बन्ध इत्यर्थः । उच्यतइति परिहारभाष्यं कृत्वाशब्दस्य रेवतीवारवन्तीयान्वयार्थत्वेनाग्निष्टोमसामान्वयायोगादनेन वचनेनाग्निष्टोमसामत्वासिद्धेरयुक्तमाशङ्क्य वारवन्तीयमग्निष्टोमसाम कार्यमित्यग्निष्टुत्प्रकरणस्थातिदेशप्राप्तवचनेनान्वयेनोपपादयति * तत्रेति * नन्वतिदेशाद्वारवन्तीयस्याग्निष्टोमस्तोत्रस्थानत्वप्राप्तावपि रेवतीनां कथं तत्स्थानत्वप्राप्तिरित्याशङ्क्य क्लृप्तस्थानेन साम्नैव रेवतीस्थानकल्पनेति प्रागुक्तन्यायोपन्यासः । अस्यैव भाष्यस्य स्वरूपार्थं व्याख्यातुमाक्षिपति * अग्निष्टोमेति * द्वेधा व्याचष्टे * तेनेति * प्रकृतौ ज्योतिष्टोमे यज्ञायज्ञीयस्याग्निष्टोमाख्यस्तोत्रसाधनत्वेनाग्निष्टोमसामशब्दवाच्यत्वात्तत्कार्यापत्तिर्वारवन्तीयस्याद्यव्याख्याने ऽभिप्रेता द्वितीये सामशब्दस्य सामसाध्यस्तोत्रलक्षणार्थत्वमभिप्रेत्य कार्यार्थत्वात्साधननियमस्य स्तोत्रकार्यार्थत्वेन वृत्तिर्विवक्षिता अथेति भाष्येणापि चैतस्यैवेति[1] विस्पष्टमकर्मान्तरवचनमिति पूर्वपक्षभाष्यार्थमनुभाष्य तन्न्यायविरोधादित्यनेन परिहृतं तदेतच्छब्दस्तावद्धर्मलक्षणायानुवादो भविष्यतीति वार्तिकेन व्याख्यातत्वाद्व्याख्याय तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * त-
५६९।२ स्मादिति *

॥ सौभरनिधनयोः कामैक्याधिकरणम् ॥ १३ ॥[2]

## सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥

सौभरस्य केवलकाम्यत्वे हीषादेः समाम्नायावगतस्य निधनान्वयस्य क्रत्वर्थे सौभरे ऽनुपयुक्तत्वात्समाम्नायानर्थक्यपरिहारार्थं काम्यसौभरविषयत्वावगतेर्निधनत्वानुवादसम्भवाद्वाक्यभेदापत्त्या पूर्वपक्षनिरासासम्भवं तत्साध्यफलार्थस्य हीषादेर्भेदेन प्रार्थने ऽपि मन्दप्रयोजनत्वापत्तेः । फले विध्ययोगात्पूर्वपक्षासम्भवं चाशङ्क्य नित्ये नैमित्तिके च सौभरे हीषादेरनन्यसाध्यफलसाधनत्वं भविष्यतीति सूचयितुं त्रैविध्यमाह * ज्योतिष्टोम इति * यदि बृहत्सामातिरात्रः स्यात्सौभरमुक्थ्यानां ब्रह्मसाम कार्यं यदि रथन्तरसामा सौरभं कुर्यादिति वाक्याभ्यां बृहद्रथन्तर-

---

१ चवनाश्रयत्वं नेति २ पु० पा० ।

योर्निमित्तयोः सौरभविहितमित्यर्थः । नित्यविधिस्तु षोडशीसंस्थाविषयः । फलान्वये कादाचित्कत्वापत्तेर्नित्यत्वायोगात्सौभरमुक्थ्यानां ब्रह्मसाम भवतीति दाक्षायणयज्ञे द्वे पौर्णमास्यौ यजेत द्वे अमावास्ये इति काम्याया दर्शपूर्णमासावृत्तेरिवोत्पत्त्यर्थं भविष्यतीत्याशङ्क्य * नित्यस्यैवेत्युक्तम् * फलोद्देशपूर्वकस्यानुष्ठानस्य कादाचित्कत्वे ऽपि तन्निरपेक्षानुष्ठानस्य नित्यतोपपन्नेत्याशयः । काम्यस्यापि नित्यत्वाविरोधं संस्थाधिकरणसिद्धान्तसूत्रावयवेन द्रढयति * तथा चेति * ननु क्रत्वर्थे सति पारार्थ्यज्ञानात्फलश्रुतिरर्थवादः स्यादित्याशङ्क्याह * क्रत्विति * अर्थवादकल्पफलविषयः पर्णमय्यधिकरणन्याय इत्याशयः । नन्वेवमप्येकस्मात्सौभरप्रयोगात्फलत्रयसिद्धेर्निधनव्यवस्थानुपपत्तेः । सिद्धान्तासम्भवे नेदमनारभ्यमित्याशङ्क्य प्रयोगभेदेनानेकफलसाधनत्वं चतुर्थाधिकरणे वक्ष्यमाणमाह * एतदपि चेति * सर्वेभ्यो दर्शपूर्णमासावित्याविशेषश्रुतेरेकस्मिन्प्रयोगे सर्वफलोत्पत्तिं पूर्वपक्षयित्वार्थस्य फललक्षणस्योत्पत्त्या प्रयोगे सोपादानलक्षणयोगाभावादनुपादेयस्य चाविवक्षितसाहित्यत्वात्सर्वशब्दस्य च प्रकृतग्राहित्वात्प्रकृतानां चेष्टिसाध्यानां पशुग्रामादीनामन्योन्यनिरपेक्ष्यसाध्यत्वावगमात्तादृशानामेव सर्वशब्दानिर्दिष्टानां दर्शपूर्णमाससाध्यत्वावगतेरेकमेव फलमेकस्मिन्प्रयोगे भवतीति योगेन पर्यायेण फलसिद्धिरिति सिद्धान्तयिष्यते अधिकरणारम्भसिद्ध्यर्थं क्रत्वर्थस्यैव सौभरस्य फलत्रयान्वयः स च पर्यायेणेत्युक्त्वा निधनवाक्यमात्रस्य चिन्ताविषयत्वात्सौभरवाक्योदाहरणमनर्थकमाशङ्क्य गुणफलान्वयस्याश्रयलाभार्थं निधनव्यवस्थायाञ्च विषयलाभार्थमिति पक्षद्वये ऽप्युपयोगं प्रकृत्येतिशब्देन सूचयन्नुदाहरणभाष्यं व्याचष्टे * तदिति * तत्रेति सन्देहभाष्यं व्याचष्टे * तत्रेति * ननु संख्यासञ्ज्ञावद् गुणस्यापि धात्वर्थानपेक्षस्य भावनानन्वयात्साक्षाद्भावनाभेदकत्वानुपपत्तेः संख्यया कर्मभेद इति धात्वर्थभेदवाचिनः कर्मभेदपदस्यात्रानुषङ्गाद्धात्वर्थभेदाभेदयोर्गुणप्रकरणे विचार्यत्वावगतेरिह चोभयथापि धात्वर्थाभेदात्प्रकरणासङ्गतिं विचारस्याशङ्क्य भावनाभेदाभेदविचारस्य प्रासङ्गिकत्वेन तावत्सङ्गतिमाह * यद्यपि चेति * भावनाभेदाभेदयोरपि वा लक्षणार्थत्वेन गुणप्रकरणे ऽप्यनुषङ्गाद्धात्वर्थभेदाभेदवत्प्रकरणसङ्गतिः सम्भवतीति परिहारान्तरमाह * अथ वेति * तस्या एव च शब्दान्तरं भेदकं भविष्यत्यपूर्वस्यानभिधेयत्वात्कर्मभेदानुनिष्पाद्येव च तदिति न पृथग्विचारमर्हतीति शब्दान्तराधिक-

रणवार्त्तिके पूर्वभेदस्य लक्षणार्थत्वनिषेधाद्भावनाभेदाभेदाविति वा-
क्ये शुद्धाया भावनाया निरूपणाशक्तेर्भेदाचिन्तानुपपत्तिमाशङ्क्य
धात्वर्थावच्छेदेन भेदानिरूपणे ऽपि फलावच्छेदेन भेदं निरूपयितुं
फलतो ऽपूर्वाभिभवेति व्युत्पत्त्या भावना फलापूर्वशब्देनोक्ता भाव-
नाभेदाभेदयोरेव लक्षणार्थत्वे ऽपि धात्वर्थनिरपेक्षायास्तस्या नि-
रूपणाशक्तेस्तत्सिद्ध्यर्थं धात्वर्थभेदाभेदयोरपि विचार्यत्वाल्लक्ष-
णार्थतापिशब्देनोक्ता यद्वा लक्षणार्था चेत् वेदा कृत्वाप्रकरणेनापि
सम्बन्ध इति सूचनार्थत्वेनोत्कृष्यापिशब्दो योज्यः । फलभेदादेव च
कर्मैक्याविशेषे ऽप्यनुष्ठानविशेषसिद्धेर्विचारस्य प्रयोजनवत्त्वं से-
त्स्यतीत्याह * एवं चेति * हीषादेः फले विधौ निधनव्यवस्थाप-
काभावात् वृष्ट्यर्थे सौभरे हीष्वनियमाभावादन्नाद्यर्थे स्वर्गार्थे वा
इतरयोरपि प्रयोगे निधनव्यवस्थायां हीषेव प्रयोक्तव्यमित्येको
विशेषः । यदा तु हीषापि वृष्टिमेव प्रार्थयते तदा द्वे वृष्टी पूर्वपक्षे
प्रार्थनीये सिद्धान्ते त्वेकैव सौभरेणेति विशेषान्तरं वृष्ट्यभावात्स-
स्यशोषापत्तौ यावत्या वृष्ट्या सस्यानि निष्पद्यन्ते तावत्या एव का-
म्यमानत्वात्तावत्याश्च सौभरादेव सिद्धेर्वृष्टेः सर्वस्य चासमन्ततयैव
कान्तं वृष्ट्यादीति विचारग्रन्थवार्त्तिके कालान्तरीयतया काम्यत्व-
निषेधात्कालान्तरीयशोषशङ्कायामपि वृष्टिकामनानुपपत्तेरभ्युच्चय-
मात्रेणोक्तमिति सूचनयापि चशब्दः कथमिति सन्देहहेतु-
५७०।२ प्रश्नभाष्यं व्याचष्टे * कुत इति * यद्येवमित्यादे-
रधिकरणसमाप्तिपर्यन्तस्यान्येषां व्याख्यां दूषयितुमुपन्यस्यति
* केचित्तावदिति * ननूत्तरयोर्वाक्ययोर्निधनपदाश्रुतेर्निधनपदा-
न्वयो न सम्भवतीत्याशङ्क्याह * यद्यपि चेति * शाखान्तरे त्रि-
ष्वपि वाक्येषु निधनपदश्रुतेस्तदालोचनेनेहाप्याकाङ्क्षाकल्पनया
ऽनुषङ्गोपपत्तिर्यद्यपिशब्देन सूचिता पूर्वपक्षभाष्यं व्याचष्टे * किं
तावदिति * पुरुषप्रवर्त्तकविधिलक्षणार्थं पुरुषशब्दमभिप्रेत्य पुरुष-
श्रुतिव्याख्यानार्थं पुरुषस्येत्यादिभाष्यमाद्यपदेन व्याख्यातं विधौ
पुरुषस्येत्यादिभाष्यमाद्यपदेन व्याख्यातं विधौ पुरुषशब्दस्यासाधुत्वा-
न्न चाविहितमङ्गं भवतीति च न्यायेन नियतस्य निधनस्याङ्गत्वा-
त्समाम्नायात्साधारण्यतः प्राप्तस्यापि विध्यर्थवत्त्वोपपत्तेरपरितो-
षादन्यथापुरुषश्रुतिव्याख्यानार्थमथ वेति भाष्यं निधनपदेनापि ही-
षान्वये निधनाक्षिप्तसौभरविशेषणत्वेन श्रुतिवृत्तस्यैव वृष्टिकामपद-
स्यान्वयोपपत्तेः सौभरलक्षणार्थत्वायोगादयुक्तमाशङ्क्य श्रुतिशब्दः
स्वप्राधान्यवाची लक्षणाशब्दश्चान्यविशेषणत्ववाचीत्येवं द्वितीयेन

व्याख्यातं सूत्रसूचितहेत्वन्तरोक्त्यर्थमेवं चेति भाष्यं तृतीयेन वृष्ट्याद्यर्थं सौभरावयवत्त्वाद्धीषादेः सौभरद्वारा वृष्ट्याद्यन्वयसिद्धेर्निधने कामसंयोग इति प्रतिज्ञासूत्रावयवानुपपत्तिमाशङ्क्य फलान्तराभिप्रायत्वेन व्याख्यानार्थं सौभर इति पूर्वपक्षोपक्रमभाष्यं श्लोकस्य समस्तपूर्वपक्षभाष्यव्याख्यार्थत्वसूचनायान्त्येन व्याख्यातं हीषादेरित्यनेन निधनशब्दस्य हीषादिलक्षणार्थतोक्ता फलान्तरान्वय हीषादेः सौभरानपेक्षत्वापत्तेर्निधनत्वासिद्धिमाशङ्क्य फले विहितस्य हीषादेराश्रयापेक्षायां प्रकरणात्सौभराश्रयत्वावगतेस्तत्र च निधनत्वेनैव समाम्नानान्निधनत्वानुवादोपपत्तिरिति सूचनार्थः।सौभर इति सूत्रावयवो निधनशब्दस्य हीषादिलक्षणार्थत्वव्याख्ययैव व्याख्यातो भवति आद्यपादं व्याचष्टे * यदि हीति * शाखाभेदेन हीषादेः सौभरनिधनत्वेन पठितस्य सौभरविधिश्रुत्या विकल्पेन प्राप्तस्य स्वरसतः प्रापणात्मकविधिमात्रप्रवृत्तयैकपुनःश्रुत्या फलान्वयित्वेनाप्राप्तविध्यर्थतया गतिसम्भवे ऽन्यव्यावृत्तिफलत्वायोगाद्व बाधानुपपत्तेर्नियमो ऽनर्थकः स्यादित्याशयः। द्वितीयं व्याचष्टे * वृष्टिकामेति * तृतीयं व्याचष्टे * पुरुषार्थेति * चतुर्थं व्याचष्टे * ५७१।१ तस्मादिति *

सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यान्निधनार्था पुनःश्रुतिः॥ २९॥

वाशब्दव्याख्यानार्थं तेन नास्य निधनादपरं फलमिति भाष्यं व्याचष्टे * उच्यत इति * अथेति भाष्येण हीषादेर्निधनपदान्वये फलपदस्य वाक्यभेदभयेनानन्वयात्प्रमादसमाम्नायापत्तिरित्याशङ्क्य तन्निरासार्थत्वेन वृष्टिकामायेत्यादिका या कामश्रुतिः सा तच्छब्दपरामृष्टसौभरविषया तद्विशेषणार्था न हीषादेः फलान्वयविध्यर्थेत्येवं सर्वस्योक्तकामत्वात्तस्मिन्कामश्रुतिः स्यादिति सूत्रावयवव्याख्यार्थमुच्यतइत्यादिभाष्यं व्याचष्टे *निधनेन त्विति* फलश्रुतेर्हीषाद्यनन्वयेऽपि निधनव्यवस्थाविषयभूतसौभरविशेषणार्थत्वान्नानर्थक्यापत्तिरिति विशेषणत्वोक्त्या सूचितं निधनमात्रे हीष्विधौ निधानान्तरानर्थक्यापत्तेर्निर्विशेषणस्य निधनस्यातिवदनुवादायोगाद्व वृष्टिकामस्य प्रकरणलभ्यनिधनविशेषणसौभरद्वारा निधनविशेषणत्वेनावगतस्यानुवादान्तर्गत्यवगतेरवाक्यभेदाशयः। भाष्ये लक्षयतिर्विशेषणवाची पूर्वार्द्धं व्याचष्टे * हीषेति * हीषो निधनपदेनासम्बन्धे नि-

धनपदानर्थक्यमित्यर्थः * उत्तरार्द्धं व्याचष्टे * अस्मत्पक्षे त्विति * सौभरफलान्वयविधायिनो यो वृष्टिकाम इति वचनान्तरस्यैक्ये ऽपि फलस्योद्देश्यत्वाप्रत्युद्देश्यं च वाक्यसमाप्तेर्वचनान्तरैरिति बहुवचनं पदशब्दस्य लक्षणयावयववाचित्वात्सौभरावयवानां निधनादीनां समाम्नायादेव प्राप्तत्वाद्धीषादिनियममात्रविधौ नानेकार्थविधिलक्षणावाक्यभेदापत्तिरित्यर्थः । किमर्थं त्वित्याशङ्कोत्तरत्वेन निधनार्थेति सूत्रावयवव्याख्यानार्थं भाष्यं व्याचष्टे * न चेति * वृष्ट्यादिफलत्वेनोक्तस्यापि सौभरस्यात्रोपलक्षणं नानर्थकमित्यर्थः । यत्तु काम्यत्वाभावे हीषादीनां बलविशेषाभावेनान्योन्यबाधकत्वायोगान्नियमानर्थक्यमुक्तं तत्परिहरति * विनापि चेति * सौभरत्वसामान्याभावात्सर्वासां प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्यानां भक्तानां यः साधारणत्वात्सामान्यरूपः समूहस्तद्वाचित्वादित्यर्थः । तथापि कथं बाध इत्यपेक्षायामाह * तच्छ्रुत्या हीति * सौभरश्रुत्या लक्षणया निधनान्तरप्राप्तेरर्थाक्षिप्तवद्धिप्रकर्षविशेषाद् बाधा युक्तेत्यर्थः।सौभरशब्दस्य वाक्षरवाचित्वाभावात्तद्बाधेति श्रुत्यर्थबाधो नास्तीति परिहारमाह * अथ वेति * स्तुतिसाधनर्गक्षराभिव्यक्त्यर्थत्वात्साम्नस्तद्बाधे प्रधानबाधद्वारापि बाधः शङ्क्येत ऋगक्षरातिरिक्तविवर्णाक्षराख्यसौभरबाधे तु तस्य नियतकालसामभागपरिपूरणार्थत्वेन साम प्रति गुणभूतत्वात्तद्बाधेन कथं चित्सामबाधेति सूचनार्थम् * स्तोभेत्युक्तम् * परव्याख्यां दूषयितुमुपक्रमते * एवं त्विति * सन्देहहेतुं तावत् दूषयति * तदिति * श्लोकं व्याचष्टे * हीषिति * सिद्धान्तं दूषयति * तथेति * श्लोकं व्याचष्टे * निधनेति * निधनमात्रानुवादेन हीष्विधौ फलपदानर्थक्यात्सौभरश्रुत्यैव च प्राप्तत्वेन पुनः श्रुत्यानर्थक्याद्व्यवहितान्वयदोषपरिहारार्थं च वृष्टिकामविशिष्टनिधनानुवादेन हीष्विधानस्योक्तत्वाद्वृष्टिकामत्वादेः प्राप्तत्वादनेकार्थविधिलक्षणवाक्यभेदाभावे ऽप्यबाधः कामत्वादेरपि प्राप्तेर्नित्यानुवादायोगाद्यथा चार्तेः शुद्धाया नित्यत्वेन निमित्तत्वायोगाद्विशिष्टाया निमित्तताश्रिता तथेह विधेयान्वयनिरपेक्षस्वरूपमात्रालोचने शुद्धस्यापि निधनस्यानुवादोपपत्तेर्विशेषणस्यानुवादान्तर्गत्याश्रयणहेत्वभावाद्विशिष्टानुवादलक्षणो वाक्यभेदो ऽपरिहार्य इत्यर्थः । प्रकृताश्रयालाभस्य पूर्वपक्षनिरासहेतोरनुक्तत्वान्निधनान्वयविधिनिमित्तवाक्यभेदप्रसङ्गस्य च निरासहेतोः सुपरिहरत्वात्पूर्वपक्षनिरासो ऽप्ययुक्त इत्याह * पूर्वपक्षेति * स्वमतेन व्याचक्षाणः सन्देहस्वरूपं तद्धेतुं च ता-

वत्प्रतिज्ञापूर्वमाह * तस्मादिति * श्रुत्या फलपरत्वसम्भवे साधनभूतसौभरलक्षणानुपपत्तेः सन्देहायोगमाशङ्क्य प्रकृतसौभराश्रयत्वसम्भवासम्भवलक्षणासन्देहहेतुसूचनार्थम् * वाक्येत्युक्तम् * प्रकृताश्रयालाभाद् गुणफलान्वये वाक्यासामर्थ्ये सति श्रुत्यासम्भवाल्लक्षणोपपत्तेर्वाक्यसामर्थ्यसदसद्भावालोचनात्सन्देहोपपत्तिरित्याशयः । श्लोकं व्याचष्टे * हीषिति * कथं तर्हि भाष्यं व्याख्येयमित्यपेक्षायामाह * तदा चेति * वृष्टिसाधने सौभरे हीष्विधौ समाम्नायादेव प्राप्तेः फलतो निधनव्यवस्थार्थत्वावगतेर्हीषिति निधनमित्यर्थो लभ्यत इत्याशयः। विधेयहीषक्षरान्वये च वृष्टिकामशब्दस्य हीषक्षरान्वयान्यथानुपपत्त्या सौभरलक्षणार्थत्वकल्पनोपपत्तेस्तद्विषयतया विशेषणशब्दो व्याख्येय इत्याह * वृष्टिकामायेति * ननु सिद्धान्ते ऽपि हीषक्षरान्वयिसौभरोपलक्षणार्थत्वाद् वृष्टिकामशब्दस्य हीषक्षरान्वयाभ्युपगमेन हीषेति सिद्धान्तवचनव्यक्तिभाष्यावयवेन तन्निरासो न युज्येतेत्याशङ्क्याह * न हीषेति * वृष्टिकामशब्दोक्तस्य ५७३।१
फलस्य सौभरोपलक्षणत्वमनपेक्ष्य स्वेन रूपेण न सम्बन्ध इत्यर्थः पूर्वोक्ते सन्देहे सन्देहभाष्यमुपपाद्य पुरुषश्रुतिव्याख्याभाष्यं यथापुनर्विधानसामर्थ्यादित्यनेन हीषादित्वनियोगाविध्याशयं व्याख्यातं तथैव व्याख्येयमित्याह * तत्रेति * तत्र शब्दस्योक्तेन प्रकारेण सन्देहोपपत्तौ सत्यामित्यर्थः । व्याख्यातभाष्यान्तर्गतस्य प्रयोगेति भाष्यावयवस्य श्रुतिप्राप्तानां नियमेन निवर्त्तयितुमशक्यत्वादित्यादि वाक्यासक्तेन हीषादिप्रयोगस्य सौभरश्रुत्याख्यवचनप्राप्तत्वेन समर्थत्वाद् बाधितुमशक्यत्वान्नियमार्थत्वेनापि विधेरर्थवत्त्वेन सम्भवतीति सूचितात्व्याख्यानादन्यथा सौभरप्रयोगविधिनैव तदङ्गभूतहीषाद्यनुष्ठानसिद्धेः कुर्यादिति पृथक्प्रयोगविधिरनर्थकः स्यादित्येवमपि व्याख्या सम्भवतीत्याह * प्रयोगेति * तामेव दर्शयति * यदि हीति * अथ वेति द्वितीयपुरुषश्रुतिव्याख्याभाष्यम्। अस्मिन्व्याख्याने सिद्धान्ते ऽपि निधनपदानन्वयेन तस्य सौभरलक्षणार्थत्वायोगात्स्ववाक्यानुपात्तस्य विशेष्टुमशक्यत्वाद् वृष्टिकामशब्दस्य सौभरलक्षणार्थत्वे ऽपि तद्विशेषणत्वानभ्युपगमात्स्वप्राधान्योपपत्तेर्भाष्यानाञ्जस्यापत्तेश्च स्वार्थत्वाच्च फलश्रुतेरिति स्वप्राधान्याशयव्याख्यानायोगाद्यथाश्रुतं व्याचष्टे * किं चेति * ननु प्रकृतसौभराधिकारिपुरुषप्रत्यभिज्ञानात्तस्य चावगतसौभरसाधनत्वेन काम्यमानवृष्टिसाधनानपेक्षत्वात्साधनवाचिहीषादिपदान्वयानुपपत्तेः। शाखाभेदप्राप्तानेकहीषादिव्यवस्थापेक्षत्वावगमाद्धीषादिपदानां निधन-

व्यवस्थार्थत्वप्रतीतेः क्व तेषां व्यवस्थेति निधनव्यवस्थाविषयापेक्षायां यथा यदग्नये च प्रजापतये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातरिति देवताव्यवस्थार्थयोर्वाक्ययोर्व्यवस्थाविषयभूतहोमलक्षणार्थत्वेन सायम्प्रातःशब्दयोर्देवतापदान्वयस्तथा वृष्टिकामादिशब्दानां निधनव्यवस्थाविषयभूतसौभरलक्षणार्थत्वेन हीषादिपदान्वयसम्भवे प्रत्यभिज्ञाऽविरुद्धा पूर्ववृष्टिकामादिकल्पनया प्रकृताश्रयलाभक्लेशापादिका गुणफलान्वयकल्पना न युक्तेत्याशङ्क्याह * साधनेति * अग्निसूर्ययोरन्यतोऽप्राप्तयोः कालद्वयलक्षितहोमे विधानात्फलतो व्यवस्था युक्ता इह तु सौभरश्रुतिप्राप्तनिधनान्तरव्यावृत्तौ त्रिदोषपरिसंख्यापत्तेः व्यवस्थार्थत्वायोगात्प्रकृतानुपपत्तेरपूर्ववृष्टिकामाद्यवगमात्साधनापेक्षायां साधनसमर्पणार्थेनैव हीषादिपदेन वृष्टिकामादेः सम्बन्धो न व्यवस्थार्थेनेत्याशयः। अपूर्वेष्टिकामाद्यवगतिः साधनापेक्षित्वोक्त्या सूचिता इतरस्मिन्निति भाष्यं व्याचष्टे * अन्यथेति * अनेन च भाष्येणास्मत्कृतमेव सन्देहव्याख्यानं स्फुटीकृतमित्याह * तथेति * अभ्युच्चयमात्रार्थत्वाद् भूयस्त्वभाष्यमुपेक्षितम् * हीषो निधनपदानन्वयाद्वाक्यभेदाशङ्कानुपपत्तेस्तन्निरासार्थत्वेनाद्यसिद्धान्तसूत्रावव्याख्यानायोगात्स्वयं सर्वस्य सौभरस्योक्तकामत्वेन प्रकृतप्रत्यभिज्ञानाल्लक्षणया प्रकृतसौभरानुवादिका कामश्रुतिर्नापूर्वफलोक्त्यर्थेत्येवं व्याचष्टे * सिद्धान्ते त्विति * श्लोकं व्याचष्टे * सर्वस्येति * परोक्षवृत्त्या निधनान्तरप्राप्तेर्मन्थरत्वादप्राप्तावस्थस्यैव हीषः प्रत्यक्षवृत्त्या शीघ्रं विधानान्न त्रिदोषत्वापत्तिरित्याशयः। वृष्ट्यादेः स्ववाक्यानुपात्तसौभरविशेषणत्वायोगात्किमर्थं सौभरं विशेष्यतइत्याशङ्कोत्तरत्वेनोत्तरावयवव्याख्यानायोगात्किमर्थमनूद्यतइत्याशङ्कोत्तरत्वेन व्याचष्टे * किमर्थेति * वृष्टिकामादिशब्दैः श्रुत्युपात्तफलत्यागेन सौभरलक्षणा न युक्तेत्याकङ्क्षते * कस्मात्पुनरिति * प्रकृतस्य सौभरस्यैकाक्षरसाध्यत्वेनाश्रयत्वायोग्यत्वादाश्रयत्वयोग्यस्य च निधनस्य प्रकरणाभावात्प्रकृताश्रयालाभेन गुणफलान्वयायोगाच्छ्रुत्यर्थान्वयानुपपत्तेर्लक्षणा युक्तेति परिहरति * तदिति * फलेऽसाध्ये नेष्टमाश्रयमाप्नुयादित्यन्वयः। श्लोकं व्याचष्टे * हीषेति * न केवलं फलान्वयपरेण वाक्येनैवाश्रयलाभाद्वाक्यभेदः किं त्वाश्रयभूतस्य
५७४।७ निधनस्य सौभरेण विशेषणीदपीत्याह * तथेति * स्ववाक्ये सौभरानुपादानात्प्रकरणाद्विशेषलाभः कथमपीत्यनेन सूचितः। एवं सति को दोष इत्याशङ्क्याह * तत्रापीति * ननु साक्षात्सौभरस्या-

अयत्वायोग्यत्वे ऽप्यवयवावियविनोरत्यन्तभेदाभावेनात्यन्तभेदाच्च यागस्तोत्रयोर्न स्तोत्रे साधिते यागः साधित इति शक्यं वक्तुमिति पूर्वाधिकरणवार्त्तिकोक्तन्यायाभावादवयवद्वाराश्रयत्वोपपत्तेस्तस्य च प्रकरणलभ्यत्वान्न वाक्यभेदापत्तिरित्याशङ्क्याभ्युपेत्यवादेन परिहरति * किं चेति * हीषित्यक्षरं यद्यपि सौभरस्य साधनं तथापि क्व भक्तौ तन्निविशतइत्यनेन च धारणान्निधनानुवादानुपपत्तेस्तद्विधावपरिहार्यो वाक्यभेद इत्याशयः। सामानाधिकरण्यबुद्धिहेतुकत्वादभेदस्यैकस्मिंश्चावयवे ऽवयविसामानाधिकरण्यबुद्ध्यभावेनाभेदाभावादेकावयवसाधनत्वेनावयविसाधनत्वानुपपत्तेरनङ्गेचाङ्गावतारन्यायस्य प्राधान्यावस्थितम्। यत्तु तदङ्गेनोपसर्पतीति पूर्वाधिकरणवार्त्तिके निषिद्धत्वाद्यथा शक्नुयात्तथाश्रयेदिति कल्पनानुपपत्तेरभ्युपेत्यवादमात्रत्वं दर्शयन् श्लोकं व्याचष्टे * न तावदिति* द्वादशाधिकरणसूत्रोदाहरणेनातिशयोक्तिः। ननु यथा पशुकामस्योक्थ्यं गृह्णीयात्षोडशिना वीर्यकामः स्तुवीतातिरात्रेण प्रजाकामं याजयेदित्युक्थ्यादिग्रहयागाभ्यासानां फले विहितानां यागाभ्याससमुदायात्मकज्योतिष्टोमाश्रितत्वेनावगतानां ज्योतिष्टोमस्यानेकयागाभ्यासरूपावयवस्योक्थ्याद्यभ्यासमात्रेणाव्याप्तेः क्वावयवे स्थितानां ज्योतिष्टोमसाधनतेत्यपेक्षायां तमग्निष्टोमात्पराञ्चं गृह्णीयादित्युक्थ्यस्याग्निष्टोमपरत्वं वाक्यात्तं पराञ्चमुक्थ्येभ्यो गृह्णीयादिति च षोडशिनस्तत्परत्वं वाक्यादतिरात्रे षोडशिनं गृह्णातीतिचोक्थ्यपरत्वेनावगतस्य षोडशिना ऽतिरात्रे विधानादतिरात्रस्य सर्वान्त्यत्वप्रतीतेरन्ते निवेशस्तथा समाम्नायाद्भविष्यतीत्याशङ्कते * अथेति * उक्थ्यादीनां ज्योतिष्टोमस्याद्ये मध्यमे वा प्रदेशान्तरे क्वाप्यदृष्टेरलौकिकत्वेन चान्यत्र स्थितानां रूपावधारणफलान्वयोक्थ्यादिव्यपदेशासम्भवात्सम्भवत्स्वपि रूपावधारणफलान्वयोक्थ्यादिव्यपदेशेषु वाक्यान्तरावगतस्यान्ते निवेशस्य विषयान्तराविज्ञानेन फलार्थोक्थ्यादिविषयत्वावधारणाद्युक्तो ऽन्ते निवेश हीषादीनां लोकावेदसामान्तरभक्त्यन्तरेष्वपि दृष्टेरन्तनिवेशानियमात्सौभरान्तनिवेशस्य च पाठप्राप्तस्य क्रतुपुरुषार्थसौभरसिद्ध्यर्थहीषादिविषयत्वेनोपयोजितत्वात्स्वातन्त्र्येण फले विहितानां स्थाननिवेशानवगतेर्निधनानुवादो न सम्भवतीति परिहरति * तदिति * श्लोकं व्याचष्टे * युक्तमिति * अलौकिकत्वं त्रेधोपपादयितुम् * ५७५।१
न चेत्युक्तम् * ग्रहयागाभ्यासत्वस्यान्यत्रापि भावात् ज्योतिष्टोमरूपनिष्पत्त्यर्थाभ्यासातिरिक्तत्वेनैवेषां निरूप्यत्वात्तन्मध्यपाते च

ज्योतिष्टोमरूपनिष्पत्तावेव व्यापारापत्तेरद्रव्यत्वात्केवले कर्मशेषः स्यादित्यंशवदाभ्यस्यायेन यागान्तरत्वायोगान्नान्तर्निवेशं विना रूपावधारणं न चानवधारितरूपाणां फले विधिरुक्थ्यादिसंज्ञा चोपपद्यतइति स्वरूपेण फलान्वयित्वेन संज्ञित्वेन च प्रधाप्यलौकिकतेत्याशयः।सम्भवत्यप्यन्यथा रूपाद्यवधारणे वाचनिकस्यान्ते निवेशस्यानन्यविषयत्वात्फलार्थस्यैवोक्थ्यादेर्विषयत्वावसाय इत्यधानार्थो ऽनन्यविषयत्वेनेति श्लोकवस्रवो ऽन्तर्निवेशं विना रूपाद्यवधारणाभ्युपगमे ऽप्यन्तर्निवेशोपपादनार्थं इति यो ऽपि चेति पश्चाद्व्याख्यया सूचितम्। अनेन चोक्थ्यादिषु व्यवस्थितं नियतमेव स्थानं यद्यप्यव्यवस्थितं तथापि वाचनिकस्य स्थाननिवेशस्यानन्यविषयत्वादेतद्विषयतयैव व्यवस्थितमित्यपि योजना सूचिता। क्रत्वर्थत्वेन फलार्थत्वेन च यत्सौभरविधानन्तेनोपयोजित इत्युक्ते गुणफलान्वयविधिवाक्येनाश्रयान्वयाविधाने ऽप्यविहितस्याग्राह्यत्वापत्तेः कल्पितविधिविषयत्वाभ्युपगमाद्धीषादेः फलान्वयसिद्ध्यर्थेन सौभरविधानेनोपयोजित इति भ्रान्तिं निरसितुं सौभरेण फलं विशेषितं नन्वस्य हीषादेर्लोकादिवर्त्तित्वे ऽपि प्रकृतस्य सौभरावयवभूतस्यानन्यवर्त्तित्वान्निश्चय इत्याशङ्क्याह * यदीति * प्रकृतनियमे प्रमाणं नास्तीत्याशयः। ननु स्वरूपेण हीषादेः प्रकृतग्रहणनियामकाभावे ऽप्याश्रयत्वेन गृहीते सौभरे हीषादेर्निधनस्थानत्वात्फलार्थस्यापि हीषादेः सौभरावयवत्वेन सौभरे समाप्ता तेन हीषादिनैक्यान्निधनस्थानत्वं सेत्स्यतीत्याशङ्कते * ननु चेति * यद्यपि लोकादिगतो हीषादिर्गुणफलान्वये विधिना गृह्यते तथापि प्रकृतसौभराश्रितत्वाद्य एव सौभरावयवत्वेन समाम्नातो हीषादिः प्रकृतः फलार्थो ऽपि स एवेति सौभरावयवत्वेनैकत्वात्तदेव स्थानं भविष्यतीत्येकस्य हीषादेर्नानास्थानत्वादर्शनेनैवान्तर्निवेशनियामकाभावस्योक्तत्वात्स्वरूपैक्यमात्रेणाशङ्कानुपपत्तेः।सौभरावयवत्वेनैक्यं व्याख्येयम्।सत्यप्यैक्ये प्रयोजनभेदे स्थानस्य देवदत्तादौ शक्तिभेददर्शनात्स्थानान्तरे ऽपि च सौभरारम्भसमाप्त्यन्तराले प्रयुक्तस्य हीषादेः सौभरावयवत्वोपपत्तेरवयवान्तरोपजनापत्तेश्चोक्थ्योदिवदविरोधाच्च कार्यान्यत्वे तत्स्थानत्वनियमासिद्धिरिति परिहरति * नैतदिति * श्लोकं व्याचष्टे * न शब्दैकत्वेनेति* स्थानं दृष्टसामर्थ्यमित्यनेन शक्तिभेदः तत्स्थानस्येत्यध्याहारः सूचितः। स्वरूपनाशाशङ्कानुपपत्तेस्तन्निरासायोगादात्मीयवाचिस्वशब्दाङ्गीकारेण सौभरात्मीयस्य तदवयवत्वरूपस्यानाशादिति व्याख्येयम्। न चेत्यनेनोत्तरार्द्धं व्याख्यातं वाक्य-

न्तीये निरस्तमपि प्रणीताधर्मन्यायमितरेतराश्रयाख्यदोषान्तराभि-
धित्सया पुनरुपन्यासपूर्वं निरस्यति * प्रासङ्गिकेति * निधन- ५७६।२
स्थानप्रयोगाभावे समाम्नातेनैव हीषा सौभरसिद्धेः फलार्थस्य हीषः
सौभरसाधनत्वायोगात्स्थाननिवेशादेव सौभरसाधनता वाच्येत्या-
शयः । नन्वप्रकृतस्य हीषादेः फले विधौ तस्य सौभरसाधनत्वात्प्राक्
स्थानविशेषासिद्धेरितरेतराश्रयं स्यात्प्रकृतप्रत्यभिज्ञाने तु तद्विरो-
धेनाप्रकृतग्रहणायोगात् प्रकृतग्रहणावगतेस्तस्य च समाम्नाया-
देव स्थानविशेषसिद्धेर्नेतरेतराश्रयापत्तिरित्याशयेनाशङ्कते * नन्वि-
ति*यदि च वारवन्तीयसंस्कारः कश्चिद्विधीयेत ततः कथं चिद् व्री-
हिप्रोक्षणादिष्विव प्रकृतप्रत्ययो भवेदिति पूर्वाधिकरणवार्त्तिकन्याये-
नोपादीयमानत्वे प्रकृतग्रहणायोगमाशङ्क्य यस्य हविर्निरुप्तं पुरस्ताच्च-
न्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे
पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनश्चरूं ये
क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति अभ्युदितेष्टावुपा-
दीयमानत्वे ऽपि तण्डुलादीनां प्रकृतग्रहणं दृष्टान्तितं चन्द्राभ्युदये
निमित्ते दार्शं हविः दार्शेभ्यो देवताभ्यो ऽपनयेदिति विभजतिवा-
क्यार्थस्य षष्ठे वक्ष्यमाणत्वाद्देवतां विना प्रक्रान्तदर्शानिष्पत्तेर्देवता-
न्वयाकाङ्क्षायां मध्यमादिवाक्यैरत्र प्रकृतस्य हविषो देवतान्तरवि-
धावनपेक्षितविध्यापत्तेः प्रकृतहविर्विषयत्वावगमाद्यच्छब्दोपबन्धेन
प्रकृतविषयत्वदृढीकरणात्प्रकृतनियमो युक्तः । इह तु श्रुतिकृतस्य
हीषादिमात्रप्रत्ययस्य प्रत्यभिज्ञारूपेण सन्निधिना॥

श्रुतेः कर्मान्तरज्ञानं सन्निधेरेककर्मता ।
तत्र श्रुतिबलीयस्त्वं जानतां कथमेकता ॥

इति न्यायेन बाधायोगाद्गत्यन्तराभावाच्च न प्र-
कृतनियमस्स भवतीति वैषम्योक्त्या परिहरति * युक्तं
तत्रेति * अतो गुणफलान्वयरूपवाक्यार्थायोगान्निधनव्य-
वस्थारूप एव वाक्यार्थो युक्त इत्युपसंहरति * तस्मा-
दिति* ननु वृष्टिकामादिशब्देन सौभरलक्षणापत्तेर्निधनव्यवस्थापक्षो
ऽप्ययुक्त इत्याशङ्क्याह * यदेति * अनेन च पुरुषश्रुतेरिति पूर्वप
क्षहेतोर्द्वितीयव्याख्यापक्षे परिहार उक्तः । ननु साधनलक्षणायामपि
कारीर्यादिसाधनलक्षणाप्रसङ्गे सौभरेण विशेषणाद्वाक्यभेदः स्या-
दित्याशङ्क्याह * तत्रेति * लक्षणायाः प्रकृतविषयव्यवस्थापकत्वा-
त्प्रकृतस्यैव साधनस्य लक्षणेत्याशयः । निधनव्यवस्थाविषयभूतप्रकृत-
सौभरविशेषलक्षणार्थत्वाच्च वृष्टिकामशब्दस्य कारीर्यादिलक्षणा-

शङ्कामपि नाधिरोहतीत्याह * प्रकृतेति * कामोपबन्धानां पदानां फलपरत्वस्यैकादशाद्ये वक्ष्यमाणत्वाद् वृष्टिकामशब्दएव वृष्टिशब्द उक्तः । यथान्नाद्यस्य स्वर्गस्य वा साधनभूतं सौभरं वृष्टिशब्दो लक्षयतीत्याशङ्का न सम्भवति तथा वृष्टिसाधनकारीर्यादिलक्षणाशङ्कापि न सम्भवतीति सूचनार्थम् * दृष्टान्तत्वेन न चेत्युक्तम् * पुरुषश्रुतेरिति पूर्वपक्षहेतोर्विभिद्यपुनः श्रुत्यपेक्षव्याख्यापक्षे परिहारमाह * सत्यामपि चेति * काम्यत्वाभावे हीषादीनां तुल्यबलत्वेनैकस्येतरबाधकत्वायोगान्नियमायोगाशङ्का विनापि च गुणकामत्वेनेत्यादिवार्त्तिके निरस्तेतीत्युक्तमित्यनेनोक्तम् । ननु प्रवो देवा ऽग्नय इत्याज्यसूक्ते समाम्नायावगतक्रमाक्रमान्तरेण चाप्रयोगदर्शनेन सौभराङ्गरूपापि विधीयमानस्य हीषादेः समाम्नायावगतस्थाननियमप्रमाणाभावात् वृष्टिसाधनं यत्सौभरं तस्य च यन्निधनमिति विशिष्टानुवादाद्वाक्यभेदो ऽस्मिन्नपि पक्षे स्यादित्याशङ्क्याह * ते चेति * नियमस्य यथाप्राप्तविषयत्वान्नापूर्वविधावित्र क्रमान्तराशङ्केत्याशयः । व्याख्याते ऽर्थे भाष्यं योजयति * तदिति * समासे ऽधिकरणार्थे परव्याख्यादूषणव्याक्षिप्तचित्तत्वात्प्रागनुक्तामनन्तरसङ्गतिमाह * तदिति * ननु वृष्टिसाधनस्य सौभरेण विशेषणादस्मिन्नपि सिद्धान्तव्याख्याने परव्याख्यावद्विशिष्टानुवादलक्षणवाक्यभेदस्य प्रसक्तस्यापरिहृतत्वेनाधिकरणार्थासमाप्तेरन्तराले स्वावसरानुक्तानन्तरसङ्गत्यभिधानमयुक्तमाशङ्क्यास्मिन् व्याख्याने वाक्यभेदाप्रसक्तिमाह * यस्त्विति * हीषो निधनान्वये तस्योद्देश्यत्वेनाविवक्षितविशेषणत्वाद्वाक्यापन्नस्य निधनमात्रान्वयस्य प्रकरणलभ्यसौभरविशेषणत्वेनापादनप्रसङ्गाद्वाक्यभेदापत्तिः । फलपदान्वये तु तस्योद्देश्यलक्षणार्थत्वेन स्वयमनुद्देश्यत्वाल्लक्षणायाश्च हीषाद्यन्वयसिद्ध्यर्थत्वेन तदन्वयापादकप्रकृतसौभरविषयत्वावगमान्न वाक्यभेदप्रसक्तिरित्याशयः । परव्याख्याने चोदित आसीदिति भूतनिर्देशोक्तं प्रसङ्गान्निधनमात्रव्यवस्थार्थान्येतानि वाक्यानि नानिधनकसौभरविशेषव्यवस्थार्थानि वेत्यनुष्ठानोपयिकं चिन्तान्तरं प्रस्तौति *
५७७।२ इदं त्विति * सर्वशाखागतानां सौभरविशेषाणां न चैकं प्रतिशिष्यतइत्यनेन व्यवस्थया प्रत्येकस्माच्च फलसिद्धेः समुच्चयेनायोगे ऽपि विकल्पेन प्रयोगोपपत्तेर्हीषादिश्रुतेः सौभरावाचित्वेन तद्व्यवस्थापकत्वायोगान्निधनमात्रव्यवस्थार्थानीति पूर्वपक्षमाह *तत्रेति * सिद्धान्तं प्रतिजानातीति प्रश्नपूर्वमुपपादयति * कथमिति * सौभरगीत्यविशेषे ऽपि प्रतिशाखमवान्तरगीतिविशेषसद्भावाच्छा-

खान्तरस्थस्य सौभरगीतिविशेषस्य शाखान्तरस्थसौभरभक्तियोगे सत्याधारभूताक्षरभूताक्षरविशेषाधीनत्वात्स्वरविशेषात् क्रमगीतिविशेषाभिव्यक्तेर्विकल्पप्राप्तिविषयस्यैव नियमविषयत्वात्समस्तस्य च सौभरस्य वृष्ट्यादिसाधनत्वेन विधानाद्विकल्पप्राप्तेः शाखाभेदेन पठितस्य समस्तस्यैव सौभरस्य व्यवस्थेत्यर्थः। श्लोकं व्याचष्टे* सामरूपं हीति*सूक्ष्मभिदभिन्नत्वाद् गीतिविशेषाणां भक्त्यन्तरयोगे रूपनाशापत्तेरित्याद्ययुक्त्यर्थः। ननु न गिरागिरेति ब्रूयादिति गिरापदनिषेधानुवादेनैरं कृत्वोद्गेयमितीरापदविधानाद्यज्ञायज्ञीयस्य गिरापदस्थाने इरापदप्रयोगाद्रूपान्यत्वापत्तिर्यथा न विरुध्यते तथा रूपान्यत्वापत्तिरविरुद्धेत्याशङ्क्य * न चेत्युक्तम् * तत्र रूपान्यत्वात्मकविकारानभ्युपगताविरापदविधिविरोधापत्तेस्तत्परिहारार्थं विकारो युक्तः न त्विह विरोधो ऽस्तीत्याशयः। ननु विकाराश्रयणे विरोधो नास्तीत्याशङ्क्य * सर्वत्र चेत्युक्तम् * प्राप्तरूपान्यत्वात्मके विकारे प्राप्तिप्रमाणविरोधापत्तेः शरैः कुशानां फलचमसेन सोमस्य सूर्यादिपदेन वाग्न्यादिपदस्यागत्यैव बाधदर्शनात्सत्याङ्गतौ बाधा न युक्तेत्याशयः। विकल्पप्राप्तौ चेत्यनेन समस्तैव चेति चशब्दाध्याहारेण युक्त्यन्तरोक्त्यर्थत्वेनोत्तरार्द्धं व्याख्यातम्। ननु निधनमात्रनियमश्रुतौ अश्रुतसमस्तनियमाभ्युपगमो न युक्त इत्याशङ्क्याह * अत इति * शिष्याचार्ययोः सहभोजनप्राप्तौ शिष्यस्य कांस्यभाजित्वनियममनियतपात्रभोज्याचार्यो ऽनुरुन्धानो लोके दृश्यतइति द्वादशाधिकरणसिद्धो दृष्टान्तः। यद्वा वृष्टिकामः सौभरेणेति विश्रितः सौभरप्राप्तेः समाम्नायाच्च हीषप्राप्तेरुभयप्राप्तौ च सम्बन्धविधिर्जाघन्यधिकरणे वक्ष्यमाणत्वात्सम्बन्धाविधिप्रतीतेर्हीष निधनसौभरविशेषोपादानं च विना सम्बधासिद्धेर्हीष्निधनकसौभरनियम एव विध्यर्थ इत्याह * एषो ऽपि चेति * एवमेव सिद्धान्तमुपसंहरति * तस्मादिति *

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरकृतौ तन्त्रवार्तिकटीकायां सर्वानवद्यकरिण्यां न्यायसुधाख्यायां द्वितीयाध्यायस्य द्वितीयः पादः।

# न्यायसुधायाम् ।

## ॥ द्वितीयाध्यायस्य तृतीयः पादः ॥

॥ अथ ग्रहाग्रतायाः ज्योतिष्टोमाङ्गताधिकरणम् ॥ १ ॥

गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयत्संयोग- ५७८।४
स्याशेषभूतत्वात् * १ *

निश्चितविधेयत्वस्य गुणस्य क्व पूर्वत्रासम्भवाद्भेदकत्वं क्व वा फले विधानेन व्यवस्थार्थत्वेन वा पूर्वत्र सम्भवात् अभेदकतेति निर्णीते सन्दिग्धविधेयत्वस्य क्व विधेयत्वात् भेदकत्वं क्व वा तदभावादभेदकतेति निर्णेतुं यदि रथन्तरसामा यदि बृहत्सामेति वाक्ययोः किं रथन्तरसामत्वबृहत्सामत्वे विधीयेते ज्योतिष्टोमएव वा ग्रहाग्रविशेषविधौ निमित्ततयोच्यते इति चिन्तां दर्शयितुं तत्रेति सन्देहभाष्यं एकापूर्वसाधनीभूतस्तुतिसमूहात्मकस्तोत्रविशेषरूपपृष्ठैक्ये ऽप्यवान्तरकार्यभूतायाः स्तुतेर्गुणसङ्कीर्णात्मकत्वाद् द्रव्यान्तरेण शूद्रादेर्बृहता च चित्राद्येर्गुणस्य कीर्त्तनात् बृहद्रथन्तरयोद्वारभेदेन पृष्ठसाधनत्वात्समुच्चयावगतेर्नित्यत्वेन कादाचित्कत्वान्निमित्तत्वानुपपत्तेः । सिद्धान्तवचनशक्त्ययोगादयुक्तमाशङ्क्योपपादयितुमाह * ज्योतिष्टोम इति * न्यायाद् बृहद्रथन्तरयोः समुच्चयावगमे ऽपि बृहद्वा रथन्तरं चेति वचनाद्विकल्पावगतेः पाक्षिकत्वान्निमित्तत्वोपपत्तिरित्याशयः । एवमपि कर्माश्रुतेस्तद्भेदाभेदसन्देहो न युक्त इत्याशङ्कां निरस्यन् भेदाभेदविषयत्वेन सन्देहभाष्यं व्याचष्टे * तत्रेति * रथन्तरसामत्वस्य बृहत्सामत्वस्य वा गुणस्य सोमयागविषयत्वात्सोमशब्दस्य सोमसाध्ययागलक्षणार्थत्वसूचनार्थं सगुणमित्युक्तं बृहद्रथन्तरसामत्वयोर्ज्योतिष्टोमे प्राप्तत्वेन विधेयत्वात्सामान्तरनिवृत्त्यर्थत्वे च तद्विध्यानर्थक्यापत्तेः । कर्मान्तरत्वनिश्चयात्सिद्धान्तासम्भवेन सन्देहायोगमाशङ्क्य प्राप्तयोरपि बृहद्रथन्तरसामत्वयोर्ग्रहाग्रविशेषविधौ निमित्तार्थं कीर्त्तनमिति सूचनार्था

ग्रहाग्रताविशेषणविध्युक्तिरित्येवं सिद्धान्तवचनव्यक्तिभाष्यं व्याख्या-
तुम् * तस्यैवेत्युक्तम् * यदीति सन्देहहेतुभाष्यं प्रकरणाद् बृह-
द्रथन्तरसामशब्दयोर्ज्योतिष्टोमवाचित्वावगतेः पूर्वपक्षायोगादयुक्त-
माशङ्क्योपपादयितुमाह * तत इति * सर्वसामकार्येषु रथन्तर-
मेव बृहदेव वा न सामान्तराणीति कृत्स्नेन क्रतुना रथन्तरस्य बृहतो
वा संयोगे ज्योतिष्टोमे सामान्तरविध्यानर्थक्यापत्तेस्तदयोगात्कर्मा-
न्तरत्वं रथन्तरं बृहद्भवत्येवेति सत्तामात्रेण रथन्तरस्य बृहतो वा
क्रतुसंयोगे त्वकर्मान्तरतेत्याशयः । नन्वेवं सति बृहद्रथन्तरयोर्वि-
शेषणत्वेन सामान्तरव्यावर्त्तकत्वावगतेः कृत्स्नक्रतुसंयोगस्यैव न्या-
य्यत्वात्सिद्धान्तानुपपत्तेः । सन्देहो न युज्यतेत्याशङ्क्यासत्ताव्यावृ-
त्त्यापि बृहद्रथन्तरयोः पाक्षिकत्वात् विशेषणत्वोपपत्तेर्न तन्मात्रेण
कृत्स्नक्रतुसंयोगसिद्धिरिति परिहारसम्भवे ऽपि प्रौढ्या क्रतोरेव
विशेषणत्वाभ्युपगमने सिद्धान्तसम्भवं वक्तुमाह * तस्मिन्नुभयम-
पीति * विशिष्टानुवाददोषापत्तेर्विशेषणाविशेष्यत्वायोगमाशङ्कते *
ननु चेति * पूर्वपक्षे तावन्निमित्तत्वमेव नास्तीति परिहरति * भवे-
दिति * केवलबृहद्रथन्तरसामकत्वस्याप्राप्तत्वान्निमित्तत्वं न स-
म्भवतीत्याशयः । ननु सिद्धान्ते ऽपि अप्राप्तत्वादेव केवलबृहद्रथ-
५७९।१ न्तरसामकत्वस्य निमित्तत्वं न सम्भवतीत्याशङ्क्याह * निमित्तत्व-
मपि चेति * समासश्रुत्यवगतस्य केवलरथन्तरसामकत्वस्य केवल-
बृहत्सामकत्वस्य वा प्राप्त्यभावान्निमित्तत्वायोगे ऽपि रथन्तरव-
त्त्वस्य बृहद्वत्त्वस्य वा निमित्तत्वसम्भवात् बृहद्रथन्तरयोरसत्ताव्या-
वृत्त्यान्योन्यमात्रव्यावृत्त्या वा विशेषणत्वाभ्युपगमेन विशेष्यत्वाभ्यु-
पगमेन वा बृहद्रथन्तरसामकत्वापादनेन निमित्तता सिद्धान्ते
ऽभ्युपगन्तव्येत्याशयः । नन्वेवमपि विशिष्टानुवाददोषापत्तेः कः
परिहार इत्यपेक्षायामाह * यत्सम्बन्धाच्चेति * शुद्धस्य क्रतोः सा-
म्नो वा ग्रहाग्रविधौ निमित्तत्वायोगाद्विशिष्टस्यैव निमित्तत्वाव-
गतेर्विशेषणस्याप्युद्देश्यान्तर्गतेर्न विशिष्टानुवाददोषापत्तिरित्याशयः।
शुद्धस्योद्देश्यत्वायोगे विशेषणस्योद्देश्यान्तर्गत्यभ्युपगमे ऽपि वाक्य-
भेदानापत्तिसूचनायास्यैवाधिकरणभाष्यपाठः । पूर्वपक्षसूत्रस्थतुशब्द-
व्यावर्त्यसिद्धान्तोक्त्यर्थं किं तावदिति भाष्यप्रकरणोक्तियुक्त्यन्त-
राणामभ्युपलक्षणार्थेत्येवं व्याचष्टे * किं तावदिति * सन्निधिल-
क्षणात्प्रकरणात्सोमशब्दस्य ज्योतिष्टोमविषयत्वप्रतीतेर्बृहत्पृष्ठं भव-
ति रथन्तरं पृष्ठं भवतीति वचनान्तरेण बृहद्रथन्तरप्राप्तेर्यदि शब्द-
प्रतीतस्य च निमित्तत्वस्य प्राप्त्यपेक्षत्वादकर्मान्तरत्वे च ग्रहाग्र-

हरति . * तस्मादिति * अतो निमित्तत्वायोगेन विधेयत्वावगतेः केवलरथन्तरमेवास्य सामेति बहुव्रीह्यर्थत्वात्तस्य चाप्राप्तत्वान्निमित्तत्वं न सम्भवतीत्युपसंहरति * तस्मादिति * अतो निमित्तत्वायोगेन विधेयत्वावगतेः केवलरथन्तरसामकत्वलक्षणस्य गुणस्य भेदकता युक्तेति प्रकृतमुपसंहरति * अत इति * * निमित्तत्वावेदकस्य यदिशब्दस्य का गतिरित्याशङ्क्य प्रतीतमपि निमित्तत्वमसम्भवात्त्याज्यमित्यभिहितम् । निमित्तत्वान्यथानुपपत्त्या केवलरथन्तरसामकक्रत्वन्तरस्य विधेयत्वकल्पनापक्षस्तु केवलरथन्तरसामकक्रत्वन्तरस्य नित्यत्वेन निमित्तत्वायोगात्प्रौढिमात्रेणोक्तः । ननु कर्मान्तरे ऽप्यतिदेशात् गायत्रादिसामान्तरप्राप्तेः केवलरथन्तरसामत्वं
५८०।१ न सम्भवतीत्याशङ्क्याह * शक्यं हीति * अतिदेशस्योपदेशेन बाधोपपत्तेरित्याशयः । श्लोकान्त्यपादं व्याख्याय सामान्तरव्यावृत्त्या रथन्तरस्य ज्योतिष्टोमविशेषणत्वायोगे ऽप्ययोगव्यावृत्त्या विशेषणत्वं भविष्यतीत्याशङ्कानिरासार्थत्वेन तृतीयं व्याचष्टे * न चेति * रथन्तरस्याविशेषात्सर्वसामकार्यविशेषणत्वप्रतीतेः पृष्ठव्यतिरिक्तेषु च सामकार्येषु तस्यायोगव्यावृत्तेरप्ययोगान्न सर्वव्यापिविशेषणत्वं सम्भवतीत्याशयः । महाबलमिदं चेच्छत्रमित्यादिवत्तर्ह्यविशेषणस्यैव सत्तामात्रेण निमित्तत्वं भविष्यतीत्याशङ्कानिरासार्थत्वेन द्वितीयं व्याचष्टे *नेति* विशेषणादि गायत्रच्छन्दस इत्यादिवत्तर्हि सामर्थ्यमेवास्त्वित्याशङ्कानिरासार्थत्वेनाद्यं व्याचष्टे * न च सामर्थ्येनेति * गायत्रच्छन्दःप्रभृतीनां तु मन्त्रगतत्वेन विधावशक्तत्वादगत्या यथा कथं चिद् गतिः कल्प्येत्याशयः । समासाभावस्तु शङ्कितुमेवाशक्य इत्याह * दृश्यते चेति * अतः सिद्धा कर्मान्तरतेत्याह * एतीति * ज्योतिष्टोम एव तर्ह्येकसामकत्वं विकल्पेन विधास्यत इति शङ्कते * अथेति * विषमशिष्टत्वाद्विकल्पायोगमाह * न शक्यमिति * एतदेवोपपादयति * इदं हीति * क्रत्वन्तरे ऽपि तर्ह्येकसामकत्वं न सम्भवतीत्याशङ्क्याह * क्रत्वन्तरे त्विति * अनेन च ननु यथेत्याद्याशङ्कापरिहारभाष्यार्थो व्याख्यातः । स्वार्थप्राधान्याविघातादपि केवलरथन्तरसामकक्रत्वन्तरविधिरेव युक्त इत्याह * एवं चेति * ननु निमित्तार्थत्वे ऽपि बहुव्रीह्यर्थस्यैव निमित्तत्वात्स्वार्थप्राधान्यं न विहन्यतइत्याशङ्क्याह * अन्यथा हीति * क्रतोः स्वरूपेण निमित्तत्वायोगादित्याशयः । उक्तेन च प्रकारेण केवलरथन्तरसामकत्वस्यावश्यविधेयत्वे व्यवहितान्वयहेतुहेतुमल्लिङ्पक्षयोर्यदि रथन्तरसामेत्यस्य ग्रहाग्रविध्येकवाक्यत्वाभ्युपगमात्

चोदना वा गुणानां युगपच्छास्त्रादित्यनेन न्यायेनानेकार्थोपादानलक्षणादपि गुणात्कर्मान्तरविधिसिद्धिरित्याह * यदि चेति * ऐन्द्रवायवाग्रत्वस्य ग्रहणाविशेषणत्वेन यागाविशेषणत्वाभावात्तस्य च पूर्वपक्षे ऽप्यतिदेशलभ्यत्वेनाविधेयत्वात्तद्द्वारापि विधेययागविशेषणत्वानुपपत्तेः। कर्मान्तरस्याप्यैन्द्रवायवाग्रत्वविशिष्टस्य विध्ययोगमाशङ्क्यैन्द्रवायवाग्रत्वविशिष्टगृह्णातिपरप्रत्ययोक्तापूर्वभावनाविशिष्टयागभावनान्तरविध्युपपत्तिसूचनार्था ग्रहाग्रभावना विधानशब्देनोक्ता क्रत्वर्थोत्पादकस्य वाजिनादेर्गुणस्य तन्निरपेक्षभावनाभेदकत्वाभावे ऽपि तदनुत्पादकस्य साक्षाद्भावनयैवान्वयाद्भेदकत्वसूचनायापूर्वभावनाविध्युक्तिः। विधायकस्याच्छब्दानन्तर्यादपि सोमशब्दलक्षितयागविधिरवसीयतइत्याह * सोम इति * नन्विति कर्त्तव्यतानुपदेशान्न कर्मान्तरविधिर्निर्वहतीत्याशङ्क्याह * सोमेति * व्याख्याते ऽर्थे भाष्यमनुसन्धत्ते * इदमेवेति * वाक्येनेति भाष्यावयवं यदिशब्दत्यागरुच्यध्याहारपक्षयोर्ग्रहाग्रविधेर्यागविध्येकवाक्यत्वाभावादयुक्तमाशङ्क्य वाक्यग्रहणस्य च यदि रथन्तरसामा सोमः स्यात्सौभरेण स्तुवीतेति सन्दंशाभिव्यङ्ग्यावान्तरप्रकरणोपलक्षणत्वेनोपपादयितुमाह * ग्रहाग्रेति * आहेति भाष्येण स्याच्छब्दस्य यदिशब्दोपहतशक्तित्वाद्यागविध्ययोगमाशङ्क्य यदिशब्दत्यागेनानुपघातोक्त्यर्थमत्र ब्रूम इत्यादिभाष्यं महावाक्ये ऽवान्तरवाक्याप्रामाण्यादयुक्तमाशङ्क्योपपादयति * यद्यपीति * अथ वा यदीत्यथवाशब्दं यदिशब्दत्यागपक्षनिवृत्त्यर्थत्वेन व्याचष्टे * परित्यागवदिति * ननु कल्पकाभावात्स्वोत्प्रेक्षामात्रकल्पितो रुच्यध्याहारः प्रसज्येतेत्याशङ्क्याह * कर्त्तव्यतेति * विधिनानिच्छतः प्रवर्त्तयितुमशक्यत्वात्कार्यत्वान्यथानुपपत्त्या रुचिः कल्प्यतइत्याशयः। वैकल्पिकत्वसिद्धिश्च रुच्यध्याहारप्रयोजनमेवकारेण सूचिता अथ वा यथेत्यप्यथवाशब्दमध्याहारपक्षनिरासार्थत्वेन व्याचष्टे * अध्याहारादपीति * पक्षान्तरमन्यथाभूतं यद्रचयति तदेवं मत्वेत्यर्थः। कथं पुनरित्याशङ्काभाष्यं दृष्टान्तस्य साध्यविकलत्वोक्त्यर्थत्वेन व्याचष्टे * परस्त्विति * यद्युपबन्धात्साक्षान्न शालिभोजनस्य ५८१।४
विधेयत्वप्रतीतिर्व्यत्ययाभ्युपगमे ऽपि दध्युपसेचनस्य शालिभोजनं प्रति यदिशब्दावगतनिमित्तत्वायोगात्तदेकवाक्यत्वानुपपत्तेः। स यदि केन वाक्येन विहितत्वोक्तिः कथमित्याशयः। उच्यतइति भाष्येण व्यवहितान्वयकल्पनया दध्युपसेचनस्येष्यमाणत्वेनावगतस्य भोज्यव्यञ्जनार्थत्वेनेष्यमाणतया षाष्टिकान् पयसा भुञ्जीतेति व्य-

अनार्थप्रयःसाहचर्येणावधारणात् भोजनप्रयुक्तत्वेन तदभावे ऽनुष्ठानासिद्धेः कांस्यभोजिन्यायेनोपसेचननियमाच्छालिभोजननियमावगतेः स यदि केन वाक्येन भोजनविधिसिद्धिरिति परिहृतेन वै खल्वित्यनेन यदिशब्दान्वये ऽपि इच्छावाचित्वाभावाद्भक्ष्यमाणत्वावगतिः सम्भवतीत्याशङ्क्योच्यतइत्यनेन कामप्रवेदने ऽकच्चिदिती ति कच्चिच्छब्दोपपदवर्जे कामस्येच्छायाः प्रवेदने प्रज्ञापने गम्यमाने लिङ्विभक्तिस्मरणाल्लिङैवेष्यमाणत्वावगतिरुपपादिना तत्र कथं व्यत्ययो लिङश्च कामप्रवेदनार्थतावगम्यतइत्याशङ्क्याह * व्यत्ययेनेति * अमगत्यादिष्विति गत्यर्थस्यामो धातोर्भावे क्तप्रत्ययमुत्पाद्यानुनासिकस्य क्विप् झलोः क्ङितीति दीर्घत्वादान्तङ्गतमवगतमित्यान्तशब्दस्य ज्ञानवाचित्वाल्लोकप्रसिद्धस्य व्यत्ययकामप्रवेदनार्थत्वज्ञानस्य सिद्धं च तदान्तं चेति विग्रहेणोक्तस्य विवरणं कथनमित्यर्थः । एवं जातीयके वाक्ये लोके व्यत्ययकामप्रवेदनार्थत्वप्रतीतेरनिष्पन्नस्य चोपसेचनस्य निमित्तत्वायोगात्तदिच्छाया निष्पन्नाया यदिशब्देन निमित्तत्वोक्त्यवगतेस्तत्समभिव्याहृताया लिङः कामप्रवेदनार्थत्वस्य न्याय्यत्वादङ्गभूतोपसेचनकर्त्तव्यतया च प्रधानभूतेष्यमाणभोजनाक्षेपाशक्तेर्भोजनेष्यमाणत्वोक्तिवैय्यर्थ्यप्रसङ्गाद्व्यत्ययस्य न्याय्यत्वावगतेर्व्यत्ययकामप्रवेदनार्थलिङङ्गीकरणं युक्तमित्याशयः। एवमिति दार्ष्टान्तिकभाष्यं व्याचष्टे * तत्रेति * स यदि लौकिकवाक्येष्वेवं विधवाक्यार्थदर्शने सतीति तत्रशब्दार्थः व्यत्ययाभ्युपगमस्य किं प्रयोजनमित्यपेक्षायां विधिशक्तिप्रतिबन्धकयदिशब्दापनयनं प्रयोजनमाह * ततश्चेति *गुणविधायिरथन्तरसामशब्दानपेक्षत्वे ऽपि कर्मविधिस्तावत्सम्भवतीति पदद्वयोपन्यासेन सूचितम्। नन्वेवं सतीतिं भाष्येण ग्रहाग्रताविधेर्यदिशब्दान्वये सत्यविधायकत्वापत्तेर्ग्रहाग्रता नानुष्ठेया स्यादित्याशङ्क्योच्यतइत्यादिना परिहृतं तस्याशयद्वयमाह * ग्रहानिति * ऐन्द्रवायवशुक्राग्रत्वयोर्विधेयत्वेनेष्टत्वात्तच्छब्दयोरुपन्यसनीयत्वे ऽपि तयोरप्राप्तत्वाद्विधायकाश्रवणे ऽपि विधायककल्पनेनावश्यविधेयत्वसूचनायानुपन्यासः । इष्यमाणस्य साध्यत्वावगतेः फलवच्च यागानुष्ठानमात्रेण ग्रहाग्रत्वासिद्धेः पृथक् प्रयत्नसाध्यत्वात्कर्त्तव्यत्वकल्पनेत्याद्याशयार्थः ।ग्रहाग्रताविशेषमिच्छतो यागोपदेशेन ग्रहाग्रताया यागप्रयुक्तत्वसूचनेन यागाङ्गत्वबोधनात्साङ्ग्यागविधिनैव ग्रहाग्रताविशेषस्यापि विधिरिति द्वितीयार्थः । हेतुहेतुमतोर्लिङिति हेतौ कारणे स्वार्थान्यानुष्ठानापादके तत्प्रयोजको हेतुश्चेति हेतुसंज्ञत्वेन स्मृते प्रयोजके हे-

तुमति च फले परेण स्वार्थानुष्ठेतयापाद्ये प्रयोज्ये लिङ्विभक्तिस्मृतेः स्यादिति हेतौ लिङ् गृह्णीयादिति विधौ गृह्णीयादिति चाहेतुमति स्यादिति विधाविति पक्षान्तरोपन्यासो ऽपि पूर्वापरितोषेणैवेत्याह * विनैवेति * न केवलं यदिशब्दत्यागाध्याहाराभ्यां विनेत्यपिशब्दार्थः । रथन्तरसामेति भाष्यं हेतौ स्यादिति लिङ्पक्षे रथन्तरसामसोमहेतुका ऐन्द्रवायवाग्रा ग्रहाः कर्त्तव्या इत्येवं विशेषणपरत्वेन व्याख्यातुमाह * तत्रेति * यागकर्त्तव्यतास्मिन्पक्षे न सिद्ध्येदित्याशङ्क्याह * न चेति * हेतुमति गृह्णीयादिति लिङ्पक्षे ऽप्येतदेव भाष्यम् । ऐन्द्रवायवाग्रत्वहेतुरथन्तरसामा सोमः कर्त्तव्य इत्येवं व्याख्यास्यन् पक्षं तावदाह * अथ वेति * ननु हेतुमति लिङ्पक्षे यदिशब्दस्य व्यवहितान्वयाभावे ऽपि ऐन्द्रवायवाग्रत्वस्य विशेषणत्वेन प्रागभिधेयत्वादैन्द्रवायवाग्रान् गृह्णीयाद्यदि रथन्तरसामा सोमः स्यादिति पदानुपूर्व्या वाक्यार्थव्याख्यापत्तेर्मध्यपतितस्य यदिशब्दस्य पूर्वच्चारितहेतुमदर्थे लिङन्वयाभ्युपगमे न स्यादिति लिङन्वयाभावान्निरूपपदायाश्च लिङो हेत्वर्थत्वानुपपत्तेः सोमयागस्य केन चिच्छब्देन हेतुत्वोक्तिरयुक्तेत्याशङ्क्याह * अनुक्तमपि चेति * हेतुमता हेतुमात्राक्षेपात्सोम एव हेतुरिति कथमवधारणेत्याशङ्क्य सन्निधेश्चेत्युक्तं भाष्यं व्याचष्टे * तत्रापीति * परप्रकरणस्थस्य क्रत्वन्तरस्यावान्तरप्रकरणाभिव्यञ्जकसन्दंशशून्यायां शाखायां वाक्यं विना ग्रहाग्रविशेषस्य तदङ्गत्वायोगादङ्गाङ्गित्वलक्षणार्थत्वं प्रयोज्यप्रयोजकत्वाख्यहेतुहेतुमत्वोक्तेर्वक्तुं कार्यते ऽन्यार्थमन्यदनुष्ठाप्यते ऽनेनेति व्युत्पन्नेन कारणशब्देन हेतुशब्दो वैयाकरणानुसाराद्व्याख्यातः । फलशब्देन च वैयाकरणानां हेतुमच्छब्दव्याख्यापरार्थापाद्यानुष्ठानत्वलक्षणप्रयोज्यत्वविवरणायैव द्रष्टव्या सुखग्रहणायोक्ताश्चतुरः पक्षान्संगृह्णाति * यदिशब्देति * ननु किमर्थः पूर्वपक्षे ऽतिनिर्बन्ध इत्यपेक्षायामाह * सर्वं चेति * तस्मादिति सूत्रार्थोपसंहारभाष्यं स्पष्टत्वादव्याख्याय बृहद्रथन्तरसामसंयोगस्य ग्रहाग्रत्वलक्षणाङ्गरूपशेषानुष्ठानवेलायामभूतत्वादनिष्पन्नत्वादित्येवं संयोगस्येति सूत्रावयवव्याख्यानार्थमपि चेति भाष्यं व्याचष्टे * किं चेति * क्रतोरपि ग्रहणवेलायामनिष्पन्नत्वात्कथं हेतुमल्लिङ्पक्षे निमित्ततेत्याशङ्क्यानिष्पन्नस्याप्यारब्धत्वेन वर्त्तमानत्वान्निमित्तत्वं भवतीति वैधर्म्यदृष्टान्तेन सूचितम् । श्लोकं व्याचष्टे * प्रातःसवने हीति * स्वसत्तयान्यानुष्ठानापादकवाच्यर्थं कारणशब्दः पक्षत्रयाशयेन मम त्वित्युक्तं चतुर्थपक्षाशयेनाह * अथ वेति * क्रतोरप्यनिष्पन्नत्वेनानिमित्तत्वाशङ्का स चेत्यनेन निरस्ता । यदि ५८२।६

जगत्सामाग्रयणाग्रानिति जगत्सामसंयोगस्य ज्योतिष्टोमे प्रत्यनङ्ग-भूतत्वात्तत्साहचर्येण बृहद्रथन्तरसामसंयोगयोरप्यनङ्गत्वात्कर्मान्तराक्षेपकतेत्येवं संयोगस्येति सूत्रावयवव्याख्यानार्थमपि च निःसन्दिग्धमिति भाष्यं व्याचष्टे * जगत्सामा चेति * जगदाख्यस्य साम्नः क्वचिदभावाज्जगत्यामृच्युत्पन्नस्य साम्नो जगत्सञ्ज्ञत्वप्रतीतेः सामशब्दस्य रथन्तरसामबृहत्सामेतिवत् तुल्यवन्निर्देशात्पृष्ठसाधनसामवाचित्वावगतेर्विषुवति च महादिवा कीर्त्यं पृष्ठं भवतीति बिभ्राड्बृहत् पिबत्विति जगत्यामुत्पन्नस्य महादिवाकीर्त्यस्य साम्नः पृष्ठसाधनत्वेन विधानात् विषुवत्येवाग्रयणस्याग्रत्वं निविशतइति वक्तुं दशमे ज्योतिष्टोमस्य जगत्सामत्वं निषेत्स्यति ।

## एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥

पूर्वपक्षनिरासद्वारा सिद्धान्तोक्त्यर्थतया तुशब्दव्याख्यार्थे तुशब्दादिभाष्ये प्रकरणग्रहणं प्रागवद्युक्त्यन्तराणामप्युपलक्षणार्थेति दर्शयितुमाह * पूर्वेति * ननु ज्योतिष्टोमस्य ग्रहाग्रत्वलक्षणगुणविधौ प्रकरणादेव तद्गुणत्वलाभात्तद्वाची सोमशब्दो ऽनर्थकः स्यादित्याशङ्कानिरासार्थमेकस्येत्यादिसूत्रावयवं व्याचष्टे * एकस्यैव हीति * भावे लकारव्याख्यानायोच्चारणमित्युक्तं सोमः स्यादिति कर्मविधिप्रतीतेर्भेदमाशङ्क्य ग्रहाग्रविशेषलक्षणगुणविधानार्थत्वेनाकर्मविधित्वात्कर्मभेदनिरासार्थमेकत्वमिति सूत्रावयवं व्याचष्टे * गुणेति * नन्वेतदुक्तमित्यादिभाष्येण बृहद्रथन्तरसामशब्दयोरनेकसामकत्वाज्ज्योतिष्टोमे ऽनुपपत्त्याशङ्कानिरासार्थत्वेन ज्योतिष्टोमस्य बृहद्वा पृष्ठं रथन्तरं पृष्ठं वा भवतीति गुणवाक्यान्वयात् बृहद्रथन्तरवत्त्वेनानेकसामत्वे ऽपि बृहद्रथन्तरसामव्यपदेशोपपत्तेर्न बृहद्रथन्तरसामत्वलक्षणाद्वा गुणाद्भेद इत्येवमेकत्वमिति सूत्रावयवस्य सूचितं व्याख्यान्तरमाह * अथ वेति * बृहद्वा पृष्ठं रथन्तरं वेति वाक्याद् बृहद्रथन्तरयोर्वैकल्पिकत्वावगतेरयोगव्यावृत्त्या विशेषणत्वसम्भवसूचनार्थं गुणवाक्यैरिति बहुवचनं पुनरिति भाष्यं समासासम्भवानुभाषणार्थत्वेन व्याख्यातुमाह * यत्त्विति * विशेषणाभावादिति भावव्युत्पन्नेन विशेषणशब्देन नानेकसामकस्य क्रतोरेकेन साम्ना विशेषणाभावे ऽभिहिते ननु सामान्तरव्यावृत्त्या बृहद्रथन्तरयोर्विशेषणत्वासम्भवे ऽपि वैक-

लिपकत्वात्स्वायोगव्यावृत्त्या विशेषणत्वं भविष्यतीत्याशङ्क्यास्य क-
तोर्यत्सामेति सर्वसामकार्यानुवादेन तत्र रथन्तरं भवत्ये-
वेति अयोगव्यावृत्तेरव्यापकत्वेनासम्भवस्य न च रथन्तर-
सत्तामात्रं विशेषणमिति वार्त्तिकेनोक्तत्वात्सामान्तरसापे-
क्षस्य रथन्तरस्य विशेषणत्वापत्तेः सापेक्षत्वेनासामर्थ्यात्स-
मासविघातः स्यादिति सामान्तरेत्यनेनोक्तं तदुच्यतइत्यादिभाष्योक्तं
तावत्परिहारमाह *तत्रेति*प्रौढ्या स्वयं परिहारान्तरमाह *विग्रह
इति * पूर्वार्द्धं व्याचष्टे *यदि हीति * पाक्षिकत्वविशेषणफलं नि-
त्यशब्देनोक्तं स्वातन्त्र्यलक्षणार्थवस्तुशब्दोक्तान्यनैरपेक्ष्यविशेषणफ-
लमन्यसहितशब्देनोक्तं स तथैवेत्येवकारेणान्यव्यवच्छेदव्याप्तयोर्व्या-
वर्त्तितत्वान्नित्यस्य चान्यव्यवच्छेदं विना ऽन्यसहितस्य च व्याप्तिं
विना विशेषणत्वायोगादुभयमुक्तं पाक्षिकत्वात्त्वन्यव्यवच्छेदाभा-
वे ऽप्ययोगव्यावृत्त्या विशेषणत्वसम्भवे यतस्त्वित्यनेनोक्ते नन्वेव-
कारं विना विशेषणत्वानभिव्यक्तेर्यत एव कारस्ततो ऽन्यस्य व्यावृ-
त्तिरिति न्यायेनैवकारस्यान्यव्यवच्छेदवाचित्वान्नाभावव्यवच्छेदोपप-
त्तिरित्याशङ्क्य * यदि चेत्युक्तम् * विनाप्येवकारं समाससाम-
र्थ्याद्विशेषणत्वाभिव्यक्तिर्यदिशब्देनोक्ता एवकारापेक्षणे ऽप्यत्र स-
त्ताया विशेषणत्वात्तदस्यास्तीति वास्त्यर्थस्मृतमत्वर्थवृत्तिबहुव्रीहियु-
क्तत्वाच्च तत एवैवकारप्रयोगेणासत्त्वव्यावृत्तिर्युक्तेत्याशयः। यद्वेत्य-
नेन श्रुतविशेष्यान्वितेनाप्येवकारेण रथन्तरासत्त्वव्यावृत्तिसिद्धेर्ना-
श्रुतसत्तान्वयो ऽवश्यकल्प्य इत्युक्ते कथमन्यान्वितेनैवकारेणान्या-
सत्त्वव्यावृत्तिसिद्धिरित्याशयेन तत्रेति पृष्ठे तद्धीत्यनेन साम-
रूपताया नित्यत्वेन तद्विषयावधारणानर्थक्यादस्य क्रतोः
सामकार्यं करोत्येवेत्यवधारणार्थप्रतीतेरसतश्च कार्यकरणत्वायो-
गात् *असत्त्वव्यावृत्तिसिद्धिरित्युक्तम् * ननु पाक्षिकत्वे ऽपि ज्यो-
तिष्टोमगतसर्वसामकार्याव्यापित्वात्केवलस्य विशेषणत्वानुपपत्तेः
सामान्तरसापेक्षस्य विशेषणत्वाभ्युपगमापत्तेः समासानुपपत्तिरि-
त्याशङ्क्यान्यसहितं च स्यादित्यनेन सूचितं परिहारमाह * न चे- ५८३।६
ति *बृहद्रथन्तरे सामनी भवत इत्यादिवत् द्वन्द्वनिर्देशे तदभावे ऽपि
वा गायत्रामहीयवादिवदेकस्तोत्रविषयत्वे सत्यन्यसाहित्यं विना वि-
शेषणत्वायोगात्केवलस्य सापेक्षत्वापत्तिः। रथन्तरं पृष्ठं भवतीति तु
सामान्तरनिरपेक्षस्य रथन्तरस्य पृष्ठाख्यस्तोत्रसाधनत्वेन विधाना-
दस्य क्रतोर्यत्सामेत्यनुवादे ऽपि रथन्तरसाध्यपृष्ठस्तोत्रमात्रद्वारा
क्रतुसम्बन्धित्वप्रतीतेः सर्वसामकार्याव्यापित्वे ऽपि विशेषणत्वस-

म्भवान्न सापेक्षत्वापत्तिरित्याशयः । सामशब्दस्य क्रतुसम्बन्धिरूप-वाचित्वे ऽपि रथन्तरशब्दसमभिहारात्पृष्ठमात्रद्वारा क्रत्वन्वयनिमित्त-त्वावगतेः पृष्ठसिद्ध्यै च रथन्तरस्य सामान्तरानपेक्षत्वात्समासा-विघातः प्रौढिमात्रेणोक्तः । परमार्थतस्तु सामशब्दं विनापि क्रतुसम्ब-न्धिनो रथन्तरस्य निमित्तत्वप्रतीत्युपपत्तेः। सामशब्दानर्थक्यप्रसङ्गा-दुक्थ्यो वैरूपसामा षोडशी वैराजसामेत्यादिषु पृष्ठार्थे वा प्रकृति-लिङ्गसंयोगादित्यनेन न्यायेन वैरूपादेः पृष्ठसाधनत्वद्योतनार्थत्वेन साम्नः पृष्ठलक्षणार्थत्वात् दूरापास्ता सामान्तरापेक्षेति यद्वेत्यनेनोक्त-म् । सामशब्दस्य च पृष्ठलक्षणार्थत्वे बृहद्रथन्तरयोस्तद्विषयत्वे-नेतरेतरव्यावृत्त्यापि विशेषणत्वं सम्भवतीत्याह * अथ वेति * पू-र्वार्द्धव्याख्यानमुपसंहरति * तेनेति * उत्तरार्द्धं व्याख्यातुमुपक्रम-ते *अथ वास्त्विति * विग्रहे यद्विशेष्यत्वमित्यवयवं व्याख्यातुं न च क्रतुविशिष्टं रथन्तरमिह प्रतीयतइति पूर्वोक्तं दूषणमनुभाषते * ननु चेति * परिहारत्वेन श्लोकावयवं व्याचष्टे * उच्यतइति * कृत्स्नसंयोगाभावेन रथन्तरस्य विशेषणत्वायोगादवैदिकस्यापि च विग्रहवाक्यस्य वैदिकसमासव्याख्यानार्थत्वेन वेदानुमतत्वात्तदुग-तापि विशेष्यतागत्याङ्गीक्रियतइत्याशयः। वृत्तिविग्रहयोर्भिन्नार्थत्वा-योगाद्रथन्तरं साम यस्याःसाविति विग्रहस्यापि अन्यपदार्थप्राधा-न्यार्थत्वावगतेर्लोहितोष्णीषादिवद्विशेषणतात्पर्यमात्रमत्राभिप्रेतमि-ति विवक्षोक्त्या सूचितम्।ननु क्रत्वन्तरेष्वपि रथन्तरस्याभावान्न क्र-तुना विशेषणं सम्भवतीत्याशङ्क्याह * यद्यपि चेति * सर्वाङ्गोप-संहारिणा क्रतुप्रयोगविधिना युगपत्सर्वसामग्रहणाद्विनियोगवाक्ये-भ्यश्च प्रकरणालोचनं विना क्रत्वन्वयाप्रतीतेरेकैकसामान्वयानवग-मान्नैकेन साम्ना क्रतुर्विशेष्टुं शक्यः साम्नस्त्वेकैकेन क्रतुना पर्याये-णान्वयादेकेन विशेषणत्वोपपत्तिरनन्तरमेवोपपादयिष्यते । यद्यपि तु विधिना रथन्तरस्य युगपदनेकक्रतुसाधारण्याप्रतीतावपि वास्त-वात्साधारण्यादस्यैव रथन्तरं सामेति क्रत्वन्तरव्यावृत्त्या ज्योतिष्टोम-स्य रथन्तरविशेषणत्वासम्भवस्तथाप्ययोगव्यावृत्त्या सम्भवतीत्यभ्यु-पेत्यवादाशयः । परमार्थतस्तु कार्यान्वये विशेषणापेक्षणात्स्व-वाक्योपात्तैन्द्रवायवाग्रत्वलक्षणकार्यान्वयिनि च रथंतरे ज्योतिष्टो-मस्यासाधारण्योपपत्तेर्ज्योतिष्टोमस्यैव रथन्तरमैन्द्रवायवाग्रत्वे नि-मित्तमित्यन्यव्यावृत्त्या विशेषणत्वसम्भवं वक्तुमाह * स्ववाक्ये चे-ति * देवदत्तस्य गौरानय इत्यादौ वस्तुतो देवदत्तयज्ञदत्तादीनां गोसम्बन्धतुल्यत्वे ऽप्यानयनान्विते गवि देवदत्तस्यासाधारण्याद्वि-

शेषणतेत्याशयः । दृष्टान्तमेवोपपादयति * तथा हीति * गोसम्बन्धो न देवदत्तस्य केवलः किं तु यज्ञदत्तादेरपि येन गौस्तस्यैवोच्येत न चोत्पलस्य नीलत्वं केवलं किं तु रक्ततापि येन तदेवोत्पलमुच्येतेत्येव योज्यम् । वस्तुतोऽसाधारण्ये च विशेषणमनर्थकं स्यादित्याह * यदि चेति * अतो देवदत्तस्य गौरित्यादौ वाक्योपात्तानयनादिकार्यान्वितगवादिविशेष्याविषयमेव देवदत्तादेर्विशेषणस्यासाधारण्यं वाच्यं न वास्तवमित्याह * तस्मादिति * नन्वन्येषामपि सोमयागानां ज्योतिष्टोमविकारत्वाद्रथन्तरसामत्वनिमित्तैन्द्रवायवाग्रत्वप्राप्तेर्नैन्द्रवायवाग्रत्वनिमित्तभूतरथन्तरविषयमपि ज्योतिष्टोमस्यासाधारण्यं भवतीत्याशङ्क्याह * अस्ति चेति * क्रत्वन्तरस्थस्य रथन्तरस्यातिदेशान्निमित्तत्वप्राप्तावप्युपदेशात् ज्योतिष्टोमस्थस्यैव निमित्तत्वेन पवमाने वा अत्र रथन्तरं कुर्वन्तीत्यादौ स्तोत्रान्तरसाधनरथन्तरवति क्रत्वन्तरे रथन्तरानिमित्तैन्द्रवायवाग्रत्वप्राप्तिनिवृत्त्यर्थमिष्टत्वात् ज्योतिष्टोमस्यापि स्ववाक्योपात्तकार्यान्वितरथन्तराविषयमसाधारण्यमस्तीत्यर्थः । शुद्धस्य च निमित्तत्वायोगान्निमित्तत्वप्रतीत्युत्तरकालं तन्निर्वाहार्थं विशेषणान्वयाभ्युपगमात्ततः प्राग्विशेषणविशेष्यभावानपेक्षणादुपसर्जनत्वेन रथन्तरस्य निमित्तत्वनिषेधानुपपत्तेः क्रतुरथन्तरयोर्मध्ये कस्य निमित्तत्वं कस्य निमित्तविशेषणतेत्यपेक्षायां प्रथमप्रतीतत्वाद्रथन्तरस्यैव निमित्तता युक्तेत्याह * प्रथमतरेति * इष्यते पाक्षिकं वस्त्विति श्लोकव्याख्यानमुपसंहरति * तस्मादिति * सम्भवति च रथन्तरविशिष्टस्य ज्योतिष्टोमस्य ज्योतिष्टोमविशिष्टस्य वा रथन्तरस्य निमित्तत्वे यदिशब्दत्यागादयश्चत्वारोऽपि पक्षा न युक्ता इत्या * हेतीति * शुद्धायाश्च लिङः कामप्रवेदने हेतुहेतुमतोर्वा प्रयोगाभावात् यदिशब्दोक्तस्य निमित्तत्वस्यानिष्पन्नक्रियाविषयत्वायोगान्निष्पन्नतादिच्छाविषयत्वाभ्युपगमेन तदुपबद्धाया लिङः कामप्रवेदनार्थतां निमित्तत्वायोगाद्वा तद्गतेन स्वत्तयाप्यनुष्ठानप्रयोजकत्वेन प्रयोजकत्वसाम्यात्स्वार्थान्यानुष्ठानप्रयोजकत्वलक्षणया हेत्वर्थतां मथ्यमानाग्न्यनुत्पत्तिनिमित्तकरक्षोघ्न्यनुवचनविधिशेषे वा रक्षांसि वा एवं तर्ह्यालभन्ते यर्हि न जायते यर्हि चिरं जायतइत्यग्न्युत्पत्तिप्रतिबन्धकरक्षोपघातार्थत्वेन रक्षोघ्नीस्तुत्यर्थे यर्ह्युपबद्धस्याग्न्यजन्मनस्तर्ह्युपबद्धरक्षःप्राप्तिनिमित्तकनैमित्तिकत्वकीर्तनात् यर्हि शब्दसमानार्थस्य यदिशब्दस्य नैमित्तिकवाचित्वमभ्युपेत्य तद्गतेनान्यसत्तयास्वानुष्ठानस्य प्रयोज्यत्वेन प्रयोज्यत्वसाम्यात्परार्थप्रयो- ५८४।१

ज्यस्वानुष्ठानत्वलक्षणया तदुपबद्धाया लिङ्गो हेतुमदर्थतां वक्तुं निमित्तत्वप्रतीतेरवश्याभ्युपगन्तव्यत्वात्प्रतीतस्य च निमित्तत्वस्यो- क्तरीत्यासम्भवित्वेन त्यागायोगान्नाप्रतीतकामप्रवेदनाद्यर्थग्रहणं यु- क्तमित्याह * न चेति * बृहद्रथन्तरयोर्ग्रहणवेलायामनिष्पन्न- त्वान्निमित्तत्वायोगस्याथेत्याद्यनुभाषणपूर्वं परिहारभाष्यं व्याचष्टे * भूतेति * लोके भूतस्य पुत्रजन्मादेरुत्सवादौ वर्त्तमानस्य च क्षेमसुभिक्षत्वस्य वासे भविष्यतश्च वर्षस्य गृहकरणे वेदे च पुत्र- जन्मादेरेव भूतस्येष्ट्यादौ वर्त्तमानस्य च दीक्षितत्वस्य दानादिप- र्युदासे भविष्यतश्च दर्शपूर्णमासारम्भस्यारम्भणीयायां निमित्तत्वा- योगहेतुत्वेनाशङ्कनीयमित्यर्थः । यदि तु निष्पन्नेनैव निमित्तेन भा- व्यमित्याग्रहस्ततः सङ्कल्पितत्वेनाननुष्ठितस्यापि भोजनस्य स्थलस-
१ म्मार्जने निमित्तत्वोपपत्तेर्निष्पन्नकार्यकारित्वान्निमित्तत्वोपचारः स- म्भवत्येवेत्याह * अपि चेति * सूक्तवाकएव याज्येतिवदौपचारि- कत्वद्योतनायैवकारः एकान्तावधारितत्वमेवोपपादयति * ज्योति- ष्टोमेति * अङ्गभेदेन साङ्गप्रधानप्रयोगप्रक्रमे वैकल्पिकाङ्गानवधार- णात् कस्य चित्प्रयोगस्य निरूपितैकरूपस्योपक्रमपूर्वसमाप्त्यसिद्धे- रिदं कुर्यामिदं वेति च प्रयोगमध्ये दोलायमानमतेः कालविक्षेपात् प्रयोगनैपुण्यासिद्धेः प्रयोगप्राशुभावार्थं च शुष्केष्टिकाले निरूपितै- करूपप्रयोगाभ्यासासिद्धेर्वैकल्पिकाङ्गनिमित्तकेषु नानर्त्विक्कर्तृकेष्वै- न्द्रवायवाग्रत्वादिषु नानर्त्विजां यजमानस्य च सम्प्रतिपत्त्यसिद्धेः प्रयोगस्य कौशलस्याभ्यासस्यादिशब्दोक्तायाश्च सम्प्रतिपत्तेर्वैकल्पि- काङ्गावधारणाधीनसिद्धत्वादेवं विधाङ्गमिदं कर्म कर्त्तव्यमित्यव- धारणपूर्वकप्रवृत्तिनियमाज्ज्योतिष्टोमक्रमेणैव रथन्तरं प्रयोक्ष्यतइ- त्येकान्तेनावधारितमित्यर्थः । एकान्तावधारणमात्रेण कथन्निष्प- न्नकार्यकारितेत्याशङ्क्याह * न चेति * एतदेवोपसंहरति * त- स्मादिति * कुतोऽस्तु निमित्तत्वे वर्त्तमानमेव निमित्तं भविष्यती- त्याह * यदा त्विति * स्यादितिचेति भाष्यं व्याचष्टे * चेति * यत्त्वित्यादिसामान्यतो दृष्टानुभाषणपूर्वं परिहारभाष्यं द्वेधा व्याच- ष्टे * यत्त्विति * स्वयं साध्यविकलत्वं दृष्टान्तस्याह * अपि चेति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तस्मा- दिति * जगत्साम्नोऽप्यपूर्वकर्मत्वाभावात् ज्योतिष्टोमापेक्ष या कर्मान्तरं जगत्सामेत्युक्तं न विषुवदपेक्षयेति बहुवचनेन सूचितम् ।

॥ अथ अवेष्टेः क्रत्वन्तरताधिकारताधिकरणम् ॥ २ ॥

# अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥

उदाहरणभाष्यं व्याचष्टे * राजेति * सन्देहभाष्यं व्याचष्टे * तत्रेति * ब्राह्मणादिकर्तृलक्षणेन गुणेनेह भेदस्य प्रतिपाद्यत्वात्कर्त्तुश्च प्रयोगाङ्गत्वात्तन्मात्रभेदकत्वोपपत्तेर्भाष्ये यागशब्दः प्रयोगलक्षणार्थ इति प्रयोगान्तरोक्त्या सूचितम्। कथमिति भाष्येण सन्देहहेतुं पृष्ट्वा राजसूयवाक्यस्थो राजशब्दः क्षत्रियमात्रे वर्त्तते ब्राह्मणादिष्वपि वेति सन्देहो हेतुत्वेनोक्तस्तस्य साक्षान्मूलसंन्देहहेत्वायोगाद्वर्णत्रयस्य राजसूये ऽधिकारः क्षत्रियमात्रस्य वेति मूलसन्देहहेतुभूतसन्देहहेतुत्वद्वारा मूलसन्देहहेतुत्वं दर्शयितुमाह * तत्सिद्ध्यर्थं चेति * न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतिन इति इत्यादिवाक्यस्थस्य राजशब्दस्य क्षत्रियवाचित्वाभावाद्राजसूयवाक्यस्थराजशब्दविषयत्वं विचारस्य वक्तुमधिकारीत्युक्तं त्रयाणामपि क्षत्रियस्यैवेति तथैवेत्यनेनातिदिष्टे योग्यत्वाद्वाचक इत्यध्याहारेण पूरणीयं केनचित्प्रकारेणेति यौगिकत्वोक्त्या सूचितम्। सन्देहान्तरं वर्णत्रयक्षत्रियमात्रवाचित्वसन्देहहेतुत्वेन दर्शयितुमाह * ततो ऽपीति * चतुर्थ्यर्थे तसिः। ननु राजसूये क्षत्रियमात्राधिकारे ऽप्येतयान्नाद्यकामं याजयेदित्येतद्वाक्यविहितेष्टिप्रयोगान्तरे वर्णविशेषानुपादानात् ब्राह्मणादेर्गुणस्य प्राप्तत्वेनाविधेयत्वाद्भेदकत्वानुपपत्तेः सिद्धान्तासम्भवात्सन्देहो न युक्त इत्याशङ्कते * ननु चेति*योगसिद्ध्यधिकरणन्यायेनैकस्मिन्प्रयोगे फलद्वयसिद्ध्ययोगादन्नाद्यकामावेष्टेः प्रयोगस्य राजसूयान्तर्गतावेष्टेः प्रयोगान्तरात् भेदावगतेः सन्निधौ त्वविभागादित्यत्र कर्मान्तरविधित्वे निराकरिष्यमाणे ऽपि प्रयोगान्तरविधिनान्नाद्यकामवाक्यस्यास्त्येवेति सूचयितुं पृथक्प्रयोगस्यैव वचनमित्येवकारः प्रत्युक्तः। राजसूयवाक्यस्यापि फलपरत्वाद्वाक्यभेदापत्तेवर्णविशेषान्वयायोगमाशङ्क्य कर्त्तुः प्रयोगाङ्गत्वाद्वाक्यान्तरेण च राजसूयप्रयोगाविधानात् प्रयोगस्य चोत्पत्तिवक्रियाविषयत्वात्फलकर्तृविशिष्टक्रियाविषयप्रयोगविधौ वाक्यभेदानापत्तिसूचनार्थम् * प्रयोगेत्युक्तम् * ब्राह्मणादिवाक्यानां प्रयोगान्तराविधायित्वे राजसूयमध्यप्रयुक्ताया एवावेष्टेः संयोगपृथक्त्वात्फलद्वयोपपत्तेस्तस्याश्च विज्ञातक्षत्रियकर्तृकत्वाद् ब्राह्मणादिवाक्यवच्चान्नाद्यकामवाक्ये कर्त्रन्तराश्रवणेन प्रयोगान्तरानाक्षेपकत्वाद्योगसिद्ध्यधिकरणन्यायेन चैतस्मिन्प्रयोगे फलद्वयसिद्ध्ययोगात्प्रयोगान्तराक्षेपे ऽपि क्षत्रियस्यैवान्नाद्यकामस्य प्रयोगान्तरोपपत्ते-

वर्णान्तरस्याप्राप्तत्वात् ब्राह्मणादेर्गुणस्य विधेयत्वाद्भेदकत्वोपपत्तेः।स-न्देहं समाधत्ते * नैतदिति * नन्वन्नाद्यकामशब्देन वर्णान्तरस्याप्यु-पादानात्कथं न वर्णान्तरसम्बन्ध इत्याशङ्क्य दृष्टान्तद्वयेनोपपादयति * तद्यथेति * अप्रवृत्तप्रवर्त्तकत्वाद्विधेरस्मिन्सति कुर्यादिति का-दाचित्क्याः कर्त्तव्यताया विध्यर्थत्वात्कदाचित्केनैव निमित्तेना-न्वयादधिकारिविशेषणस्य च तस्मिन्सत्यधिकारान्निमित्ते ऽन्तर्गते जातेश्च नित्यत्वेनाधिकारिविशेषणत्वायोगात्कथं राजशब्दात् भो-क्तृत्वलक्षणाधिकारिविशेषावगतिरित्याशङ्क्य * राजेत्युक्तम् * जातेर्नित्यत्वेनापादनाशक्तेस्तद्वत एवाधिकारात्कर्तृविशेषणभूताया एवार्थादधिकारिविशेषणतापीत्याशयः । यथा राजसूयान्तर्गते ऽवे ष्टिप्रयोगे भोक्तृत्वविशेषो भवति तथा बाह्ये ऽपीत्यत्यन्तसाम्यार्थं दृ-ष्टान्तान्तरम्।अतोऽन्नाद्यकामवाक्येन ब्राह्मणादिप्राप्त्ययोगाद्राजशब्द-स्यायौगिकत्वे राजसूयाधिकारेण जातिवाचित्वे वा ब्राह्मणो यजे-तेत्यादिवाक्यैर्ब्राह्मणादिप्राप्तिरिति द्वावेव पक्षौ न त्वन्नाद्यकाम-वाक्यात्प्राप्तिः शङ्कनीयेत्युपसंहरति * तस्मादिति * किं ताव-दित्यादिपूर्वपक्षप्रतिज्ञाभाष्यं तत्सिद्ध्यर्थमित्येतदर्थेन ततःशब्दे-न निमित्तार्थसिद्ध्यर्थवर्णत्रयप्राप्तिसिद्ध्यर्थवर्णत्रयवृत्तित्वसिद्ध्यर्थ-ता यौगिकत्वस्योक्ता इत्येवं व्याचष्टे * किं तावदि-ति*सहशब्देन राजशब्दस्यापि वर्णत्रयवृत्तित्वमुक्तं राज्यमित्यनेन राज्यं यस्येति भाष्यावयवो यौगिकशब्दस्य कुलालनापितादिशब्दवदवय-वव्युत्पत्त्यनपेक्षत्वे ऽपि क्रियागनिमितत्वप्रदर्शनार्थत्वेन व्याख्यातः । भाष्ये वक्ष्यमाणयुक्तीः सुखग्रहणार्थं संक्षेप्तुमाह * तथा हीति * क्रियायोगनिमित्तत्वे क्रियाकर्तृत्वयोर्द्वयोरपि शक्तिकल्पनापत्तेर्जा-तिमात्रे शक्तिकल्पनायाः प्रयोगसम्भवे योगनिमित्तत्वायोगाच्च ध्रु-मो न प्रयुज्यतइत्यादिभाष्येण प्राग्वक्ष्यमाणे ऽपि जातियोगलक्षणनि-मित्तद्वयसम्भवे ऽपि प्रकरणवशाद्यदिशब्दसमभिव्याहाराच्च योग-निमित्ततैवोचितेति युक्तिश्चशब्देन राजसूयशास्त्रस्य त्रैवर्णिकाधि-कारोक्त्यर्थत्वेन महाविषयत्वलाभः सूचित इत्येवमथ वेत्यादिभाष्यं वक्ष्यमाणयुक्तेः पश्चादभ्युच्चयमात्रत्वद्योतनार्थं व्याख्यातम् ।उत्तरा-र्द्धं व्याचष्टे * उभयेति * तावच्छब्देनैवैवं तावद्युक्तिरिति वक्-ताभ्युच्चयत्वं सूचितं निमित्तेत्यनेन भाष्यं वक्ष्यमाणप्रकरणादियु-क्त्यन्तरसूचनार्थता एवं चेति चकारस्य व्याख्याता बार्हस्पत्यादेर्मध्य-निधानपूर्वकाभिघारणस्य राजसूयप्रयोगवचनेन ग्रहणं प्रकृतावेष्टिप्र-

१ कर्मोऽन्तः प्रयुज्यत इ० २ पु० पा० ।

योगप्रत्यभिज्ञानं चादिशब्देनोक्तम्।यौगिकत्वोक्तेः प्रयोजनमाह*तस्मादिति*ननु राजशब्दस्य जातिवाचित्वाभावे राजयोगनिमित्तराज्यशब्दार्थानवधारणान्न राजशब्दस्य तत्कारणनिमित्तता युक्तेत्याशयेन किं पुनरिति भाष्येणाशङ्क्य जनपदेत्यनेन परस्वहरणे चौर्यशब्दवत् जनपदस्य च सर्वतो रक्षणे चौरादीनां च जनपदपुरेभ्यो निष्कासने राज्यशब्दस्य रूढितोक्ता तद्व्याचष्टे*तच्चेति*नामशब्देन रूढित्वं सूचितम् । यद्वा राजशब्दस्य पालननिमित्तत्वे ऽपि अध्वर्य्वादिशब्दवत् रूढित्वानपायात् पूर्वपक्षे ऽपि राज्यशब्दस्य राजयोगनिमित्तत्वोपपत्तेः प्रत्यभिज्ञायमानावयवार्थबाधायोगात्पालनस्य राजकर्मवाचिराज्यनामकत्वात्पालनकारिवाचिता राजशब्दस्यावसीयतइति सूचनार्थो नामशब्दः। भाष्यमपि राजशब्दस्य राज्यकरणनिमित्तत्वायोगे ऽपि पालनकरणनिमित्तत्वाद्यौगिकतोपपन्नेत्येवमर्थत्वेन व्याख्येयम्।आर्यावर्त्तेति भाष्यादसार्वत्रिकत्वशङ्कां निवर्त्तयितुम् * सर्वेत्युक्तं * जनपदपुरोपद्रवे कार्योद्धरणं विना तद्रक्षणासिद्धेस्तदुद्धरणस्य रक्षणोक्त्यैवं सिद्धत्वाद्रक्षणप्रतिबन्धकारिविषयतोद्धरणस्य राज्येत्यनेनोक्ता सर्वलोकप्रसिद्धावार्यावर्त्तविशेषणानर्थक्यमाशङ्क्यासार्वत्रिकत्वे ऽप्यप्रसिद्धितो ऽस्याः प्रसिद्धेर्बलीयस्त्वप्रदर्शनार्थतार्यावर्त्तेत्यनेनोक्ता पालने राज्यशब्दप्रयोगमात्रेण राजशब्दस्य तत्करणनिमित्तत्वावगतिः कथमित्यपेक्षायां राज्ञः कर्मेति भाष्येण राजप्रातिपदिकात्कर्मणि प्रत्ययस्मृतिहेतुत्वेन उदमेघप्रातिपदिकाच्चापत्ये प्रत्ययस्मृतिर्दृष्टान्तत्वेनोक्ता । तत्सर्वं विपरीतसाधकत्वेनाक्षिपति * राज्ञ इति * पालनकारिणि राजशब्दस्य रूढ्या प्रवृत्तत्वात् राज्यशब्दानुगमानपेक्षत्वे ऽपि विदितराज्यशब्दार्थानां तद्दर्शनापि राजशब्दार्थव्युत्पत्तिः सम्भवतीति जातिनिमित्तत्वानिरासायोक्तेति परिहरति * उच्यतइति * पालनकरणनिमित्तापेक्षत्वे ऽप्यवयवयोगानपेक्षत्वात्स्वातन्त्र्योक्तिः । यद्यप्यवयवयोगमनपेक्ष्य साधुपालनासाधुनिग्रहकारी राजशब्दवाच्यत्वेन मनुपाणिन्यादिभिरवधारितस्तद्योगाच्च प्रतिज्ञातसाधुपालनासाधुनिग्रहव्यापारेण तदवश्यं कार्यं तस्य च कर्म राज्यशब्दवाच्यमित्यवधारितं तथाप्यस्माकं जातिवाची पालनकारिवाची वा राजशब्द इति सन्देहे राजकर्मवाचित्वेन स्मृतस्य राज्यशब्दस्य पालने प्रयोगात्पालनकारिवाचित्वनिर्णयसिद्धेर्युक्तो ऽस्माकं राजशब्दावधारणाधीनराज्यशब्दार्थावधारणाद्विपर्ययो राज्यशब्दार्थावधारणाधीनराजशब्दार्थावधारणात्मक इत्यर्थः । दृष्टान्तपूर्वं श्लोकं

५८७।१ व्याचष्टे * यथैवेति * जनपदरक्षणमादिशब्दोक्तं च दुष्टनिग्रहणं मया कार्यमित्यङ्गीकरणाद्यो लब्धराजव्यपदेशस्तेनावश्यं तत्कर्त्तव्यमिति मन्वादिभिस्तस्य कर्म राज्यमिति पाणिनिप्रभृतिभिः स्मृतमिति विवेकः। छेदनादिसंस्कारैर्बन्धनार्हीकृतं द्रव्यमालम्ब्य यथा यूपो निरूप्यते तथा राज्यशब्दवाच्यप्रजापालनकरणाङ्गीकरणात्तदधिकृतं द्रव्यमालम्ब्य राजेत्यर्थः । नन्वेवमपि क्षत्रियस्य प्रजापालनं परमो धर्म इति क्षत्रियस्यैव पालनस्मृतेस्तस्यैव राजशब्दवाच्यत्वाद्राजसूये ऽधिकारः स्यादित्याशङ्क्याह * तच्चेति * शूद्रस्यापि तर्ह्यधिकारः स्यादित्याशङ्क्याह * तन्त्विति * एतदेवाशङ्कापूर्वमुपपादयति * ननु चेति * यूपादिवद्राजत्वस्यालौकिकत्वे सति विहितोपायापेक्षा स्यात्तस्य तु प्रजापालनकारित्वरूपस्य प्रत्यक्षत्वात्तावन्मात्रस्य च क्रतुनापेक्षितत्वाद्विप्रादेरविहितराज्यकरणप्रत्यवाये ऽपि अधिकाराविघात इत्याशयः। राज्यरहिते ऽपि क्षत्रिये राजशब्दप्रयोगात्तद्विरुद्धं राज्ययोगनिमित्तत्वानुमानम्। अयुक्तमित्याशङ्कार्थं नन्वितिभाष्यं व्याचष्टे * नन्विति * अधार्मिके राजनि साधुरक्षणासाधुनिग्रहाभावे ऽप्यैश्वर्यमात्रे राजशब्दप्रयोगाद्रक्षणेन चैश्वर्यमुपलक्ष्यतां तन्निमित्तकरादानवृत्त्युपजीवनेन वेत्यनियमसूचनार्थम् * वृत्तिमित्युक्तम् * ननु रक्षणवृत्त्युपजीविन्यक्षत्रिये ऽपि प्रयोगाद्यौगिकावगतेः प्रकर्षसेचनमकुर्वतीष्वप्सु प्रोक्षणीशब्दवद्योग्यत्वमात्रेणानीश्वरे क्षत्रिये प्रयोगसम्भवाज्जातिवाचित्वकल्पना न युक्तेत्याशङ्क्याह * उक्तं हीति * प्रकर्षसेचनयोग्यत्वकारणस्य द्रवत्वस्याप्सु स्वाभाविकस्य भावादुदासीनास्वपि प्रोक्षणीशब्दो युक्तः।जनपदपुरैश्वर्ययोग्यतायां तु हेतुभूताया हस्त्यश्वादिसम्पत्तेर्वीर्यातिशयस्य च क्षत्रिये ऽपि क्वचिदभावादितरेष्वपि च केषुचिद्भावात् विहितत्वनिमित्तायां तु क्षत्रियस्यैव योग्यतायां यौगिकत्वपक्षे ऽप्यश्वप्रतिग्रहेष्टिनिमित्ताश्वदानवदनिषिद्धसम्भवे निषिद्धाधिकारविशेषणायोगाद्विहितस्यैव राज्ये योग्यस्याधिकारविशेषणत्वापत्तेर्ब्राह्मणादिषु प्राप्त्ययोगाद्योग्यत्वनिमित्तराजशब्दप्रयोगानुपपत्तेर्जातिनिमित्तस्यावश्याभ्युपगमनीयत्वात् ।

एकदेशे ऽपि यः शब्दो दृष्टो जातिनिबन्धकः ।
तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥

इति बर्हिराज्याधिकरणवार्त्तिकोक्तन्यायेन राज्यरहिते क्षत्रिये जातिनिमित्तत्वेनाभ्युपगतस्य राजशब्दस्य राज्ययोगिन्यपि क्ष-

त्रिये जात्यत्यागादक्षत्रिये ऽपि च क्षत्रियकार्यापत्त्या प्रयोगोपपत्तेरजहत्स्वार्थवृत्तित्वेन जात्यत्यागसम्भवान्नानेकशक्त्यापादकं निमित्तान्तरं कल्पनीयमित्याशयः। क्षत्रियस्य प्रजापालनं कार्यमित्यजानानामपि शूद्रादीनां ब्राह्मणादिषु राजशब्दप्रयोगात्कार्यापत्तिहेतुत्वानुपपत्तेरश्वकर्णादिवत् क्व चिज्जातिवाचित्वं क्व चिद्यौगिकतेति अवश्याभ्युपगमनीयत्वाद्राजसूयवाक्यस्थस्य राजशब्दस्य द्विधापि सम्भवात्सन्देहे सति प्रकरणादिभ्यो यौगिकत्वं निश्चीयतइति परिहारार्थं न ब्रूम इत्यादिभाष्यं व्याचष्टे * परः पुनरिति * यदिशब्दे समभिहाराच्चेत्यनेन यौगिकत्वस्य युक्तत्वं दर्शयतीति वदता राजशब्दस्य यौगिकत्वनिश्चयाद्राजसूयान्तर्गतस्योवेष्टिप्रयोगस्य ब्राह्मणादौ निमित्ते बार्हस्पत्यादिमध्यनिधानपूर्वकाभिघारणलक्षणगुणविधानमित्यध्याहारेण भाष्यव्याख्या सूचिता राजशब्दस्य यौगिकत्वे ब्राह्मणादेर्गुणस्य प्राप्तत्वेनाविधेयत्वादभेदकत्वोक्त्यर्थं न ब्राह्मणस्येति भाष्यं ब्राह्मणादेः कर्तृसंख्यावाच्याख्यातसामानाधिकरण्यात्कर्तृत्वावगतेः कर्त्तुश्च कर्मस्वरूपानङ्गत्वेन तद्भेदकत्वायोगादयुक्तमाशङ्क्य द्वेधा व्याचष्टे * न कर्मान्तरमिति * व्यवहितान्वयहेतुहेतुमल्लिङ्पक्षयोराख्यातद्वयैकवाक्यत्वावगमादेकेन च वाक्येन ब्राह्मणाभिघारणलक्षणानेकगुणविध्यशक्तेरभिघारणस्य च हविः संस्कारार्थत्वेन कर्मस्वरूपाङ्गत्वात्कर्त्तुरपि च ब्राह्मणादेः प्रयोगद्वारा कर्माङ्गत्वोपपत्तेर्विधेयत्वे ऽनेकगुणोपादानात्कर्मान्तरापत्तेरविधाने तद्नापत्त्युक्तिर्युक्तेति द्वितीयव्याख्याशयः। हेतौ हेतुमति च लिङिति प्रकारद्वयमभिप्रेत्य बहुवचने यौगिकत्वमात्राभ्युपगमे ऽपि क्षत्रियस्य प्रायेण वीर्यातिशयात्प्रजापालनविधानाच्चापालयत्यपि क्षत्रियजातीयत्वेन योग्यत्वाद्राजशब्दप्रयोगोपपत्तेः। सार्वलौकिकेनार्थप्रयोगेणासार्वलौकिकम्लेच्छप्रयोगबाधाद्यौगिकतैव प्रयुक्तेति परिहारान्तरार्थमथ वेत्यादिभाष्यमनेकशक्तिकल्पनापत्तेः पूर्वापरितोषणेत्येवं व्याचष्टे * एवं तावदिति * अप्रमाणमेव प्रमाणीकृत्येति च्विप्रत्ययार्थेनापरितोषः सूचितः।अपि चेति भाष्यं यौगिकप्रयोगस्य सार्वलौकिकत्वेन विप्रगीतत्वात्पुनरुक्तमाशङ्क्य प्रामाण्यरूपविशेषसिद्ध्यै प्राक् सार्वलौकिकात्सार्वलौकिकतोक्ता। इदानीं प्रामाण्यविशेषमभ्युपेत्य विश्वसनीयाविश्वसनीयरूपविशेषसिद्ध्यै सैवोच्यतइत्येवं तावत्परिहृति * अपि चेति * प्रत्ययो विश्वासो ऽस्य सञ्जात इति तदस्य सञ्जातं तारकादिभ्य इतजिति सञ्जातार्थस्मृतेरितच् प्रत्ययान्तेन प्रत्ययितशब्देन विश्वसनीयत्वोक्तेस्तृतीयया च नि-

मित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति कारयितृरूपप्रयोजननाचि-
कारणशब्दोपपदकल्पनया प्रयोजनत्वोक्तेर्विश्वसनीयाविश्वसनीय-
त्वप्रयोजननोक्ता शब्दभेदात्पुनरुपन्यस्तत्वोक्त्यनुपपत्तिमाशङ्क्याह
* न हीति * यद्वा यौगिकप्रसिद्धिर्म्लेच्छदेशे ऽप्यस्ति जातिप्र-
सिद्धिस्तु नार्यदेशे ऽस्तीति प्रागुक्तमिदानीं तु म्लेच्छा न यौगिकप्र-
योगाप्रामाण्ये विप्रतिपद्यन्ते आर्यास्तु तस्माद्धत्परानि जानन्तु पितरं
राजानमिति क्षत्रिये वत्परातावपि राजशब्दप्रयोगदर्शनाज्जातिप्रयो-
गप्रामाण्ये विप्रतिपद्यन्ते इत्यन्यथा पौनरुक्त्यं परिहरति * यद्येति *
तथेति भाष्यं व्याचष्टे * तथेति * ननु यौगिकत्वे ऽपि क्षत्रियस्य
विहितराज्ययोगनिमित्तसम्भवे स्वाच्छन्द्यानुष्ठित(राज्ययोगनिमित्त-
त्वायोगात् ब्राह्मणाद्यप्राप्तिरित्याशङ्क्य हेतुब्राह्मणादौ राजशब्दप्रयो-
गस्य क्षत्रियस्थे) राज्ययोगनिमित्तत्वानुपपत्तेर्नोत्तिष्ठतीति सूचनार्थं
तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * तस्मादिति * अपि
च निःसन्दिग्धं जगत्सामा कर्मान्तरमिति पूर्वाधिकरणपूर्वपक्षभा-
ष्यसूचितं युक्त्यन्तरमाह * अपि चेति * कर्मभेदसूचनायावेष्टि-
शब्देन ब्राह्मणादिवाक्यमुदाहरणत्वेनोक्त्वा ब्राह्मणादिगुणरूपं क्रतुश-
ब्दवाच्यप्रयोगार्थमुच्चार्येत क्षत्रियस्यैवैकस्य राजसूययज्ञसंयोगा-
दिति पूर्वाधिकरणपूर्वपक्षसूत्रस्थगुणशब्दसिद्धान्तसूत्रस्थैकशब्दयो-
रनुषङ्गेण सूत्रव्याख्याभाष्यं व्याचष्टे * एवमिति * यौगिकत्वा-
भ्युपगमे कनिन्युषिवृषितक्षिराजिधन्विद्युप्रतिदिव इति दीप्त्यर्था-
द्राजेर्धातोरौणादिके कनिन्प्रत्यये कृते ककारेकारनकारलोपान्नका-
रान्तराजशब्दव्युत्पत्तेर्धात्वर्थानुसाराद्वरं दीप्तियोगनिमित्तताभ्यु-
पगन्तुं युक्ता राज्ययोगनिमित्तता तु अवयवार्थानुसाराभावादपू-
र्वशक्तिकल्पने च सम्बन्धिनावनुक्ता सम्बन्धोक्त्यशक्तेर्विशिष्टोक्तावप-
पि विशेषणविशेष्योक्त्यापत्तेरनेकशक्तिकल्पनापत्तिपरिहारार्थं जा-
तावेव शक्तिकल्पनस्य न्याय्यत्वादनाशङ्क्येति सूचयितुं यौगिकत्वं
विकल्प्य निरस्यति * क्षत्रियेति * स्वातन्त्र्येण पालयितृत्वस्य
राजशब्दप्रवृत्तिहेतुत्वे मण्डलेश्वरे राजशब्दो न युज्येतेत्याशङ्क्यापू-
र्वमाह * ननु चेति * क्षत्रियजातिरहिते ऽपि ब्राह्मणादावभिषिक्ते
राजशब्दप्रयोगात् बर्हिराजादिन्यायात्तुल्यत्वेनाभिषेकाख्यसंस्कार-
५८९।१ निमित्तत्वमाशङ्कते * तेन तर्हीति * राजानमभिषेचयेदिति राज-
शब्देन राजशब्दवाच्यतया प्रसिद्धस्य क्षत्रियस्यैवाभिषेकविधाना-
द्विधिवेलायामेव राजशब्दसंयोगाद्राजशब्दार्थस्योद्देश्यत्वेन प्राक् प्र-

२ भयं पा० ३ पु० ना० ।

सिद्ध्यपेक्षत्वात् म्लेच्छप्रसिद्धेरप्यादरणीयतया जातिवाचित्वावगतेराभिषेकनिमित्तत्वं न सम्भवतीति परिहरति * नैवमिति * राजशब्देनाभिषेकः क्षत्रियस्यैव विधीयते सहैव राजशब्देन। ननु ब्रह्मचर्यादिशब्दात्प्रागेवोपनयनादिराजशब्दात्प्राग्येन ब्रह्मचारिशब्दप्रवृत्तौ उपनयनवत् राजशब्दप्रवृत्तावभिषेको निमित्तं स्यादिति कृत्वा सौराजशब्दो नाक्षत्रिये धर्मशास्त्रकाराणामभिमत इत्यर्थः । सत्यप्यभिषेकनिमित्तत्वे वृत्ते तस्मिन् राजशब्दप्रवृत्तेः स्वरूपेण निमित्तत्वायोगात्संस्कारद्वारा निमित्तत्वस्याभ्युपगन्तव्यत्वात्तस्य च विहितक्रियाजन्यत्वादक्षत्रियस्यस्याभिषेकस्य निमित्तत्वाभावो ऽपिशब्देन सूचितः । श्लोकं व्याचष्टे * तत इति * येनैव कारणेन विधिवेलायामेव राजशब्देनाभिषेकः संयुज्यते तेनैव कारणेनाभिषेकात्प्राक् प्रयोगेण समुदायव्यभिचाराहतुयजनवरणसमुदायनिमित्तर्त्विक्शब्दवत् जात्यभिषेकसमुदायनिमित्तताप्ययुक्तेति तेनैव चेत्यनेन प्रसङ्गादुक्त्वा यदि हीत्यादिना प्रत्येकव्यभिचाराभावादपि न समुदायवाचितेति व्यतिरेकमुखेन वक्तुं न तु केवलायां जाताविस्येवकारार्थेन जातिव्यभिचारं निरस्याभिषेकव्यभिचारनिरासार्थम् * जात्यन्तरे वेत्युक्तम् * जात्यन्तरे यद्यभिषेको विधीयते राजशब्दश्च न प्रयुज्येतेत्यध्याहारेण योज्यं यूपादिवैषम्येन चेत्यनेनोक्ते यथा वेदशब्दस्य ऋग्वेदादौ मन्त्रब्राह्मणसमूहो निमित्तं वेदेन वेदिं समार्ष्टीत्यादौ च क्रतुत्वाद्याकारदर्भमुष्टिबन्धनसंस्कारस्तथा राजशब्दस्य क चिज्जातिः क चित्संस्कारो निमित्तं भविष्यतीति आशङ्क्य * न चैकस्मिन्नित्युक्तम् * अभिषेकानिमित्तत्वे ऽपि चेत्यादिनापिशब्दसूचितो ऽर्थो व्याख्यातः । शब्दार्थसम्बन्धनित्यत्वसिद्ध्यर्थं च नित्यस्यैव शब्दप्रवृत्तिनिमित्तस्यापेक्षणादभिषेकस्य च वस्तुतो नित्यत्वाभावेन विधिविहितत्वरूपेणैव नित्यत्वस्याभ्युपगन्तव्यत्वादक्षत्रियस्याविहितत्वान्निमित्तत्वं न सम्भवतीत्याह * अपि चेति * श्लोकं व्याचष्टे * नित्यस्य हीति * एवं चाभिषेकस्यापि निमित्तत्वे विहितस्यैव निमित्तत्वात् क्षत्रियजातावेव च विहितत्वाज्जात्यव्यभिचारोपपत्तेर्जातिस्थतैवं निमित्तोपलक्षणमापद्यतइत्युक्ते अस्तु तर्हि क्षत्रियत्वोपलक्षितस्याभिषेकस्यैव निमित्ततेत्याशङ्क्य * ततश्चेत्युक्त- ५९०।१२
म् * साक्षान्निमित्तत्वसम्भवे निमित्तत्वोपलक्षणत्वस्यान्याय्यत्वादित्याशयः । राज्ययोगनिमित्तत्वे ऽप्येतं न्यायमतिदिशति * एतेनेति * नन्वभिषेकस्यादृष्टार्थत्वेन विधिविषयत्वात्तेन रूपेण नि-

त्यस्य क्षत्रियस्थस्य निमित्तत्वसम्भवे वर्णान्तरेण स्वच्छन्दकृतस्यानित्यस्य निमित्तत्वायोगान्नित्यस्य च जात्यव्यभिचाराज्जातेर्निमित्तत्वे संभवत्यन्यानिमित्तत्वं युक्तम् । राज्ये त्वैश्वर्यात्मके लिप्सयैव प्रवृत्तेर्विधिविषयत्वाभावान्नित्यत्वानुपपत्तेरनित्यस्यैवागत्या चोरशब्दप्रवृत्तौ स्तेयस्येव राजशब्दप्रवृत्तौ राज्यस्य निमित्तत्वं भविष्यतीत्याशङ्क्याह * तदपीति * ऐश्वर्ये लिप्सातः प्रवृत्तिसम्भवेऽपि पालने विधिं विना प्रवृत्त्ययोगात् ।

चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥

इत्यादिविधिदर्शनाद्राज्यस्यापि विधिविषयतास्तीत्याशयः । विधानाधीनत्वलक्षणार्थः प्रभृतिशब्दः । अन्वयव्यतिरेकाभ्यामपि जातिवाचित्वैवावसीयतइत्याह * दृष्टश्चेति * अभिषिक्ते ऽन्यजातीये ऽपि प्रयोगस्याभ्युपगच्छन्ति ते हि जनपदिनः प्रयोक्तारः सार्वभौमं प्रयोगमित्यान्ध्रद्राविडादिभिरभ्युपगतत्वेनोक्तत्वादयुक्ता विषयानभिधानोक्तिः । एतदेवोपसंहरति * तस्मादिति * जातिवाचिनश्च राजन्यशब्दस्य राज्ञो ऽपत्यमिति राजशब्दप्रकृतिकत्वान्यथानुपपत्त्या राजशब्दस्य जातिवाचितावसीयतइत्याह * तथा चेति * अन्यथानुपपत्तिं प्रश्नपूर्वमुपपादयति * कुत इति * सर्वएव वर्णाश्चेद्राजानस्ततो ऽपत्यापत्यवद्योगे राजन्यशब्दो ऽन्वाख्यायते क्षत्रियएव नियतइतीदृशं वैषम्यं कथं परिह्रियेतेत्यध्याहारेण योज्यम् । ननु राजशब्दस्य जातिवाचित्वे क्षत्रियापत्यत्वं विना क्षत्रियजातीयत्वायोगाद्राजप्रातिपदिकमात्रेण क्षत्रियापत्यत्वसिद्धेरपत्यवाची यत्प्रत्ययो ऽनर्थकः स्यात् यौगिकत्वे तु क्षत्रियो ऽयं राज्यकारिणो ऽपत्यमित्यस्यार्थस्य प्रातिपदिकमात्रेणासिद्धेरर्थवानिति राजशब्दप्रकृतित्वान्वाख्यानस्य विपरीतसाधनत्वमाशङ्कते * नन्विति * प्रकृतौ पितर्यपत्ये चैकजातीयत्वेन जातिशब्दस्य तुल्यत्वाद्राजापत्यमिति राजशब्देनाभिधीयतां न राजन्यशब्देनेत्यर्थः । दृष्टान्तपूर्वं श्लोकं व्याचष्टे * यथैवेति * अन्वाख्यानप्रकारमात्रमिदम् । ननु राजन्यप्रातिपदिके परमार्थतः प्रकृतिप्रत्ययविभागो ऽपत्यवाचितावास्तीति परिहरति * नैष इति * ननु परमार्थतो राजशब्दस्य राजन्यशब्दप्रकृतित्वाभावे कथं जातिवाचित्वकल्पनेत्याशङ्क्याह * स त्विति * क्षत्रस्यापत्यं क्षत्रिय इति जातिवाचिक्षत्रियशब्दप्रकृतित्वेनान्वाख्यानोपायमात्रतयाप्युक्ते न क्षत्रियशब्दस्य जातिवाचित्वकल्पना युक्तेत्याशयः । ननु राजश्वसु-

शद्यदिति राजन्यशब्दान्वाख्यानसूत्रे कात्यायनेन राज्यकार्यपत्यमात्रे प्रसक्तस्य राजन्यशब्दस्य परिसंख्यानेन जातिविषयत्वनियमोक्तेः क्षत्रियगतराजापत्यत्ववाचित्वावसायाज्जातिवाचित्वाभावे ऽपि पङ्कजादिशब्दवज्जातौ रूढित्वोपपत्तेर्न तदन्यथानुपपत्त्या राजशब्दजातिवाचित्वकल्पना युक्तेत्याशयेन शङ्कते *ननु चेति* जातिग्रहणमित्यत्र क्षत्रियत्वविशेषानुपादानादधिकारतो मनुष्यजातिमात्रावगमाद्राजन्यशब्दस्य मनुष्यमात्रगतराजापत्यत्ववाचित्वापत्तेस्तस्य च जातिविशेषणं विनापि सिद्धेर्जातिग्रहणवार्त्तिकानर्थक्यापत्तिरित्याशयेन परिहरति * नैतदिति * कथं मनुष्यजातिमात्रस्याधिकार इत्यपेक्षायां त्वत्पक्षे राजशब्दस्य राज्यकारिमनुष्यवाचित्वादिति राजशब्ददृष्टान्तेन सूचितम् स्याच्छब्देन। ततश्च जातिग्रहणवार्त्तिकानर्थक्यं स्यादित्यध्याहारः सूचितः। ननु राजा सर्वस्येष्टे ब्राह्मणवर्जमित्यादाविज्याध्ययनं दानमित्यादौ च राजन्यशब्दाभ्यां स्मृतिकारैर्यो राजा विजिती स्यादप्येतत् यजमानआख्यापयते वैतच्छौन शेपमाख्यानमित्यादौ राजन्यो ऽमावास्यायां पौर्णमास्यां चाग्निहोत्रं जुहुयादित्यादौ च कल्पसूत्रकारैः कर्मभेदोपदेशान्न तयोः पर्यायत्वं सम्भवतीत्याशङ्कते * ननु चेति * ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदित्यादौ जातिवाचिनो ऽपि ब्राह्मणशब्दस्य परिव्राजकब्राह्मणविशेषगामित्वात्प्रब्रूयात् ब्राह्मणश्चैषामित्याद्याश्रमान्तरस्थब्राह्मणविहितप्रवचनादिकर्मणः कर्मान्तरोपदेशो यथा न विरुध्यते तथा राजशब्दस्यापि राजन्यविशेषगामित्वात्कर्मभेदोपदेशेन राजराजन्यशब्दयोर्भेदप्रसिद्धिरविरुद्धेति परिहरति * सत्यमिति * कथं सामान्यशब्दत्वे विशेषगामितेत्याशङ्क्य * सामर्थ्येत्युक्तम्* राजन्यानां युद्धमुपादिश्यैव राजा न हन्यादिति निषेधस्य राजा सर्वस्येष्टइति ब्राह्मणव्यतिरिक्तवर्णत्रयेश्वरत्वोक्तेश्च राजशब्दस्य विशेषगामित्वं विना योगात्को विशेष इत्यपेक्षायामभिषेकविध्युत्तरकालं राज्ञः प्रजापालनादिविधानाद्राजेत्येतानभिषिक्तानाचक्षतइत्यादिलिङ्गाच्चाभिषिक्तत्वरूपाविशेषप्रतीतेर्ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणः क्षत्रियं देवयजनं यातीति क्षत्रियशब्दस्वैवान्यथानुपपत्तिलक्षणसामर्थ्यलभ्या राजशब्दस्याभिषिक्तक्षत्रियविशेषगामितेत्याशयः। ननूभयाभिधानइति पूर्वपक्षानुभाषणभाष्यं व्याचष्टे * यस्त्विति * अत्रोति परिहारप्रतिज्ञाभाष्यं व्याचष्टे * तदिति * कुत इत्यादि प्रश्नपूर्वमुपपत्तिभाष्यं राजशब्दस्य

५९३।१ (printed in right margin beside the line "मर्थ्येत्युक्तम्* राजन्यानां…")

१ का सामान्यशब्दत्व इ० २ पु० पा० ।

जातौ राज्यकारिणि च प्रयोगादुभयार्थत्वावगतेः सन्देहे सति प्रकरणानुग्रहादिलक्षणात्सामर्थ्याद्राज्यकारिवाचित्वं निर्णीयतइत्यनुभाषितार्थानिरासादयुक्तमाशङ्क्य राज्यशब्दस्य यौगिकत्वे राजयोगाद्राज्यशब्दो राज्ययोगाच्च राजशब्द इतीतरेतराश्रयप्रसङ्गात् राजशब्दस्य यौगिकत्वमिच्छता राज्यशब्दस्य रूढिताभ्युपगन्तव्येत्यापाद्य राजशब्दस्य यौगिकत्वनिरासार्थं राज्यशब्दस्य रूढित्वनिरास इति तथाहिशब्देन सूचयन्व्याचष्टे * तथा हीति * न ब्रूमो न प्रयुञ्जतइति जातिविषयान्ध्रप्रयोगाभ्युपगमात्कर्मविशेषानिमित्तत्वाद्राज्यशब्दस्येति च राज्यशब्दस्य पालने रूढित्वोक्तिप्रतीतेरुभौ शब्दौ योगानपेक्षौ पूर्वपक्षिणो ऽभिमताविति प्रतिभाति तच्चैकस्यैव शक्तिकल्पनया यौगिकत्वेनेतरप्रयोगासिद्धेरुभयोः शक्तिकल्पनायामर्थापत्त्यनुत्पादादयुक्तमित्याशयः । व्याख्याते ऽर्थे भाष्यं योजयति *तदिति* कथं तर्हि भाष्ये आन्ध्रोक्तिरित्याशङ्क्योपलक्षणार्थत्वं वक्तुमाह *दाक्षिणात्येति * तस्मादित्युपसंहारभाष्यं व्याचष्टे *तस्मादिति* ननु राजशब्दस्य साधुपालनासाधुनिग्रहकारिवाचित्वे ऽपि राज्यशब्दादव्युत्पत्तेस्तस्य यौगिकत्वे ऽपीतरेतराश्रयाप्रसङ्गाद्राजशब्दस्यावयवव्युत्पत्त्यनपेक्षत्वे ऽपि कर्मविशेषयोगनिमित्तत्वात्कुलालनापितादिशब्दवद्यौगिकत्वं राज्यशब्दस्य त्ववयवव्युत्पत्त्यपेक्षत्वादेवेत्युभयोरपि यौगिकतोपपत्स्यतइत्याशङ्क्याह * नापीति * कुलालादिशब्दानां जातिवाचित्वायोगादगत्यानेकशक्तिकल्पनापादिका कर्मविशेषकारिवाचिता युक्ता। राजशब्दस्य तु द्रविडादिप्रयोगाज्जातिवाचित्वावगतेरन्यजातीये च कार्यापत्त्या प्रयोगोपपत्तेः साधुत्वासाधुत्वरूपगुणपालननिग्रहरूपक्रियाविशेषकर्तृत्वात्मकानेकार्थशक्तिकल्पनापादककर्मविशेषकारिवाचित्वाभ्युपगमायोगाद्यौगिकत्वाभ्युपगमे राज्यशब्दवाच्यत्वरूपेण साधुपालनादेरेकरूपत्वमभ्युपेत्य तत्कर्तृत्ववाचितायाः कल्पनापत्तेरितरेतराश्रयस्यापरिहार्यत्वान्नोभयोर्यौगिकता युक्तेत्याशयः । को न्वित्यादि प्रश्नपूर्वस्य भाष्यस्य तात्पर्यमाह *अन्यतरेति* एतदेव प्रश्नपूर्वमुपपादयति *कुत इति* सम्वादापरपर्यायसङ्गतिवाचिसम्बन्धशब्दयोगिना नञा तद्विरुद्धोक्तेर्विरोधनिमित्तसन्देहे सति सन्निबन्धनत्वेन बलीयस्त्वात्स्मृत्या निर्णयो वाच्यतइत्यर्थः।कथं स्मृत्या निर्णय इत्यपेक्षायामाह*राज्येति* राजशब्दस्य ब्राह्मणादिषु पाठात् ष्यञ्प्रत्ययः पुरोहितादिषु पाठाद्यक्प्रत्ययो भवतीत्यनियमसूचनार्थम् *सामान्यतः प्रत्ययविधेरित्युक्तम्* ष्यञ्प्रत्यय इति भाष्याद्यक्प्रत्ययव्यावृत्तिशङ्कां निवर्त्तयितुमाह *

तत्रेति * प्रत्ययद्वयाभ्युपगमं विनोभयत्र पाठस्यानर्थक्यापत्तेर्लौकिकस्य च राज्यशब्दस्य स्वरनियमानुपलब्धेस्ततो निर्णेतुमशक्यत्वाद्यकापीत्यपिशब्दो ऽध्याहार्यः । यदा राज्यायैव ते ऽभिषिच्यन्ते राजेत्येतानभिषिक्तानाचक्षतइत्यादिलिङ्गाद्राज्ययोगनिमित्तत्वं राजशब्दस्याशङ्क्यते तदा तस्मिन् राज्यशब्दे प्रत्ययस्थस्याकारस्योदात्तस्वरत्वोपालम्भात् यक्प्रत्ययान्ततैव निश्चीयतइत्याह*तथा चेति * कर्षात्वतो घञो ऽन्त उदात्त इतिसूत्रादन्त उदात्त इत्यनुवर्त्तमाने तद्धितस्येति वानुवर्त्तमाने कित इत्यनेन यकाराकारस्याद्यन्तवदेकस्मिन्नित्यन्तवद्भावेनोदात्तत्वविधानाद्यगन्तत्वे प्रत्ययोदात्तस्वरत्वं युक्तं ष्यञन्तत्वे तु ञ्नित्यादिर्नित्यमित्यनेनाद्युदात्तविधानात्प्रकृतिस्थरेफाकारोदात्तत्वं स्यादित्यर्थः । अतो न यक्प्रत्ययव्यावृत्त्यर्था ष्यञ्प्रत्ययविध्युपपत्तिरित्याह * तस्मादिति * नन्विति भाष्यमवयवव्युत्पत्त्यनपेक्षस्य राजशब्दस्य पालनकर्तृवाचित्वे प्रत्ययलोपादिस्मरणानापत्तेरयुक्तमाशङ्क्यावयवव्युत्पत्त्यपेक्षत्वापादनाशयेन व्याचष्टे *राज्यशब्दाद्धीति* तस्मादित्युपसंहारभाष्यं व्याचष्टे *तस्मादिति * द्रविडदेशे राजशब्दार्थस्य क्षत्रियस्वरूपेण विज्ञातत्वादीदमेधिन्यायानुपपत्तेर्न राजकर्मवाचिराज्यशब्दान्यथानुपपत्तिलक्षणयार्थापत्त्या राज्यस्य कर्त्ता राजेति वचनव्यक्तिः कल्पनीयेत्यर्थः । ५९२।२
नित्याः शब्दार्थसम्बन्धा यथावस्थितगामिन इत्यनेन च न्यायेन नित्यानित्यसंयोगविरोधपरिहारार्थं राज्यशब्दस्य राजविहितकर्मवाचितयाभ्युपगन्तव्यत्वाद्राज्यस्य कर्त्ता राजेत्यर्थापत्तिगम्यायां वचनव्यक्तौ कल्पितायामपि क्षत्रिय एव राजा विज्ञायतइति राजशब्दस्य यौगिकत्वकल्पनानर्थक्यं स्यादित्याशयेनाभ्युपेत्य वादेन दूषणमाह * कल्पितायामपि चेति * राजशब्दे च राज्यशब्दरूपावयवाप्रत्यभिज्ञानान्न राज्यशब्दाद्राजशब्दव्युत्पत्तिः सम्भवतीत्याह * सकलश्चेति * राज्यशब्दे ऽपि तर्हि राजशब्दस्य नकारान्तस्य सकलस्याभावाद्राज्यशब्दस्यापि राजशब्दात् व्युत्पत्तिर्न स्यादिदित्याशङ्क्य व्याकरणप्रक्रियया नकारान्तत्वे ऽन्वयव्यतिरेकाभ्यां नकारान्तस्याप्यर्थाभिधानशक्त्यविघातावसायाद्व्याकरणे ऽपि च एकदेशविकृतमनन्यवद्भवतीति वचनात्सकलप्राविरोधसूचनार्थम् * सकलश्चेत्युक्तम् * राज्यशब्दस्य यौगिकत्वे ऽपि राजशब्दस्याक्षत्रिये ऽपि पालयितरि प्रयोगादव्युत्पन्नस्यैव पालयितृवाचित्वं कल्पयिष्यन्त इत्याशङ्कार्थं नन्विति भाष्यं तात्पर्यतो व्याचष्टे * सत्यमिति * नञ्द्वयप्रयोगेणार्यावर्त्तनिवासिप्रयोगविरोधपरिहारं

विना न म्लेच्छप्रयोगाज्जातिवाचितावसातुं शक्येति सूचितम् । न केवलं राजशब्दस्य यौगिकत्वाभावे लौकिकप्रयोग विरोधः । किं तु मन्वादिप्रयोगविरोधो ऽपीति दर्शयितुम् * तथेत्युक्तम् * राज्यशब्देन राज्ञः कर्मणीत्युक्ते शूद्रस्य राज्ञ इति सामानाधिकरण्यप्रत्ययाच्छूद्रे राजप्रयोगो ऽवसीयतइत्याशयः । पालयितृत्वनिमित्तत्वे राजशब्दस्य ब्राह्मणादिषु प्रयोगस्य वैधपालयितृत्वनिमित्तत्वायोगात्स्वच्छन्दककृते च पालयितृत्वे सर्वेषां योग्यताविशेषाद्योग्यत्वमात्रेणापालयितरि क्षत्रिये प्रयोगानुपपत्तेर्जातिवाचित्वस्यावश्यकल्पनीयत्वादक्षत्रिये च गौणत्वेनापि प्रयोगोपपत्तेरनेकशक्तिकल्पनापादकपालयितृत्ववाचित्वकल्पनानुपपत्तेर्न जातिवाचित्वे ऽपि शास्त्रस्थप्रयोगविरोधापत्तिरिति परिहारार्थमुच्यते इत्यादिभाष्यमवतारणपूर्वं व्याचष्टे * अत आहेति * शङ्कापूर्वं गौणत्वाशयं प्रकटयति * नन्विति * अग्न्यादिकार्यापत्तेः सूर्यादावूहस्य वक्ष्यमाणत्वान्न कार्यापत्तिमात्रेण गौण्या वृत्त्या मुख्यशब्दप्रयोगोपपत्तिरित्याशङ्क्य * प्रतिनिधीत्युक्तम् * राजकार्यापत्तेः पत्तिगणादौ राजशब्दप्रयोगवत् ब्राह्मणादावपि प्रयोगस्य दृष्टत्वाद् गौणतैवोचिता नातिदेशकल्प्याग्न्यादिशब्दप्रयोगवदपह्नव इत्यर्थः । अयुक्तः पत्तिगणको वा प्रतिनिधिशब्देनोक्तः । मुख्यत्वानभ्युपगमे भाष्यसम्मतिमाह * तथा चेति * नन्वदृष्टापि स्मृतिः प्रयोगदाढ्र्यात्कल्प्यतइत्येवमपि भाष्यार्थोपपत्तेर्न स्मृत्यभावोक्तिमात्रेण गौणत्वसम्मतिः कल्प्येत्याशङ्क्याह * तच्चेति * प्रयोगस्याचारत्वेन राज्ञः प्रजापालनं कर्मेति प्राक् सिद्धे राजानुवादेन तत्कार्यतया पालनस्य स्मृत्या पालयितृत्वानपेक्षराजशब्दार्थावधारणात् बाधेन गौणत्वावगतेर्गौणत्वाशयेन भाष्यं व्याख्येयमित्यर्थः । पाणिनिस्मृत्या राजकर्मवाचितयोक्तस्य राज्यशब्दस्य लोके पालने प्रयोगात्पालयितुरौद्मेधिन्यायेन राज्यशब्दप्रकृतिभूतराजशब्दवाच्यत्वानुमानस्यानुभाषणार्थं यस्त्विति भाष्यं व्याचष्टे * यस्त्विति * अनुमानादित्यादिपरिहारभाष्यं व्याचष्टे * तदिति * तथेत्यादिबलीयस्मीत्यन्तं भाष्यम् । आन्ध्रप्रयोगाज्जातिवाचित्वशक्त्यवगतेरनेकशक्तिकल्पनापादकावयवव्युत्पत्त्यनपेक्षपालयितृवाचित्वशक्त्ययोगे ऽपि राज्यस्य कर्त्तेत्यवयवयोगेन समुदायशक्त्यनपेक्षस्यैव राजशब्दस्य राज्यकर्तृवाचित्वं भविष्यतीत्याशङ्कानिरासार्थत्वेन व्याचष्टे * अथेति * राज्यमस्य कर्मेत्येवमवयवव्युत्पत्त्या ब्राह्मणादि राजशब्दे ऽभिधीयते न रूढ्याध्वर्युकुलालादिशब्दवदित्याशङ्कार्थः । ब्राह्मणादौ राजशब्द-

प्रवृत्तेर्निमित्तभूतो यः कर्मकर्त्रोरवयवार्थयोः सम्बन्धः स राजशब्दे प्रत्यभिज्ञानासम्भवादनुमातव्य इति विपरिणतानुमातव्यपदान्वयेन तथेति भाष्यावयवो राज्यस्य कर्त्तेत्यवयवव्युत्पत्त्यपेक्षत्वे सत्यवयवयोगो प्रतीयमानः कल्प्यः स्यादित्येवं व्याख्यातः। तस्य चेत्यनेनानुमिमानश्चेत्यवयवः प्रत्ययलोपप्रातिपदिकं प्रत्यन्यतमस्मृतिं विनाऽवयवयोगानुमानायोगात् योगमनुमिता स्मृतिरनुमातव्येत्येवं व्याख्यातः । राज्ञस्तु स्मरन्तस्त्वित्यवयवौ राज्ञ इत्यनेन व्याख्यातौ तेनेत्यवयवस्तस्मादित्यनेन व्याख्यातः । वाच्यवाचकसम्बन्धस्य वृद्धप्रयोगगम्यत्वेन साध्वसाधुविभागव्यापृतव्याकरणस्मृत्यविषयत्वात्स्मृतिबलीयस्त्वायोगाशङ्कार्थमाहेति भाष्यं व्याचष्टे * पर इति * अत्र ब्रूम इति भाष्यं स्मृतेर्वाच्यावाच्यविवेकपरत्वाभावाद्राज्यकारिणि च राजशब्दप्रयोगव्यभिचारादयुक्तमाशङ्क्य वाच्यविशेषत्वात्साधुत्वस्य तन्निरपेक्षसाधुविवेकासिद्धेर्वाच्यावाच्यविवेकस्यापि स्मृतितोऽर्थादवगमाद् बलीयस्त्वोक्तिर्युक्तेत्याशयेन व्याचष्टे * तत्रेति * कथं राजशब्दस्य ५९३।५
राज्ययोगनिमित्तत्वं राज्ञः कर्म राज्यमिति स्मृत्या बाध्यतइत्याशङ्क्य * राज इत्युक्तम् * अपि चेति भाष्यं व्याचष्टे * प्रयोगो ऽपि चेति * नन्विति भाष्येण राज्यशब्दस्य राजयोगनिमित्तत्वव्यभिचारमनुभाष्य प्रयोगव्यभिचारे ऽपि स्मृत्या राजयोगनिमित्ततावसीयतइति परिहारार्थं यदीति भाष्यं व्याचष्टे *अस्मत्पक्षे त्विति* राज्ञ एव कर्मेत्यसाधारण्येन चिन्तितादे राज्ञा विशेष्टुमशक्यत्वात्प्रयोगो ऽपि न व्यभिचरतीति परिहारान्तरार्थं तेनेति भाष्यम् अश्वमेधादावसाधारण्ये ऽपि राज्यशब्दप्रयोगादयुक्तमाशङ्क्य किं च शब्देनाभ्युच्चयार्थत्वं सूचयन् व्याचष्टे * किं चेति * श्लोकं व्याचष्टे * जनपदेति * यत्त्विति भाष्येणाथ वेति पूर्वपक्षभाष्योक्तं सार्वलौकिकराजशब्दप्रयोगेणासार्वलौकिकजातिप्रयोगबाधमनुभाष्यते न तत्र स्मृतिर्बलीयसीति पाणिनिस्मृत्या सार्वलौकिकप्रयोगबाधोक्त्या * परिहृतमित्युक्तम् * तद्व्याचष्टे * तेनेति * सार्वलौकिकमपि प्रयोगे बाधित्वेति ल्यप्लोपे पञ्चमी यदुक्तमिति भाष्येण तथेति पूर्वपक्षभाष्योक्तं म्लेच्छाचाराप्रामाण्यमनुभाष्याचारेषु मध्ये शब्दप्रयोगरूपस्याचारस्यार्यम्लेच्छयोस्तुल्यत्वोक्त्या परिहृतं तद्व्याचष्टे * तुल्यश्चेति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तस्मादिति * नन्वधिकरणोपक्रमे ऽन्नाद्यकामवाक्योक्तस्यापि फलस्य राजसूयमध्यस्थावेष्टिप्रयोगाविषयत्वोक्त्यभिधानात्तु

बहिःप्रयोगस्य फलान्तरकल्पनायामदृष्टकल्पनागौरवापत्तेः। प्रकरणाद्वा राजसूयाङ्गत्वकल्पने राजशब्दादक्षत्रियस्य राजसूयाप्राप्तावप्यङ्गप्रधानयोरेककर्तृत्वनियमाद् राजसूयस्य ब्राह्मणादिकर्तृकत्वं विना तदङ्गभूतावेष्टिप्रयोगस्य ब्राह्मणादिकर्तृकत्वानुपपत्तेर्ब्राह्मणादिविशिष्टावेष्टिप्रयोगान्तरविध्यन्यथानुपपत्त्या ब्राह्मणादेरपि राजसूयप्राप्तेर्यज्ञसंयोगात् क्षत्रियस्येति भाष्यावयवव्याख्यानार्थः । क्षत्रियस्यैव राजसूयो ऽस्तीति वार्त्तिकावयवो न युक्त इत्याशङ्क्य ब्राह्मणादिवाक्यैः प्रयोगान्तरविधावन्नाद्यकामवाक्योक्तस्य फलस्य बहिःप्रयोगविषयतैव युक्तेत्याह * ततश्चेति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * नन्वेतयेति सर्वनामश्रुत्या साक्षाद्विशेषरूपेण चावेष्टौ प्रवृत्तेः क्रतुमध्यस्थस्याप्यवेष्टिप्रयोगस्य दुर्बलशास्त्रावगतस्वाराज्यफलत्वबाधेनान्नाद्यफलत्वावगमान्नान्नाद्यकामश्रुतेर्बहिःप्रयोगविषयता युक्तेत्याशङ्कते * ननु चेति * सत्यपि बलाबलविशेषे प्रयोगभेदेन स्वाराज्यान्नाद्ययोः समुच्चयसम्भवे बाधो न युक्त इति परिहरति *नैतदिति* एतदेव विवृणोति *तथा हीति* यत्र विरोधित्वं तत्र बाधानभ्युपगमे व्रीह्यादौ गुणभूते विकल्पः प्रधानभूते सर्वेभ्यो ज्योतिष्टोम इत्यादौ प्रयोगावृत्तिकल्पना येन कारणेन प्रसज्यते तेन कारणेन तत्परिहारार्थं बाधो ऽभ्युपेयते स्वाराज्यान्नाद्ययोस्तु भिन्नप्रयोगविषयत्वाद्व्यवस्थोपपत्तेर्विरोधाभावाद् बलाबलत्वविशेषे सत्यपि बाधो नास्तीत्यर्थः । श्लोकं व्याचष्टे * न हीति * ब्राह्मणादिसम्बन्धात्प्रयोगभेदावगतेरवश्यं भाविन्यावृत्तिरित्युक्तं नन्वविरोधे सत्यबाधितया राजसूयचोदनयाऽवेष्टिग्रहणात् क्षत्रियकर्तृकत्वावगमे सति तद्विरुद्धब्राह्मणादिकर्तृसम्बन्धात्प्रयोगभेदः । प्रयोगभेदे च सत्यविरोध इतीतरेतराश्रयं स्यादित्याशङ्क्य * राजसूयेत्युक्तम् * ब्राह्मणादिवाक्येष्वेतच्छब्दाभावेन तदपेक्षया राजसूयचोदनाया दौर्बल्याभावात्तदुक्तक्षत्रियकर्तृकता न बाधितुं शक्येत्याशयः । सम्प्रत्यन्नाद्यकामवाक्यादपि राजसूयाद्वाक्यस्य दौर्बल्यं नास्तीत्याह * यदि चेति * अगृह्यमाणविशेषत्वमेवोपपादयति * यथैव हीति * या तु सामान्यप्रवृत्तत्वाद्राजसूयश्रुतेर्दुर्बलतोक्ता सा नास्तीत्याह * न चेति * साधारणशब्दताप्येतच्छब्दस्याप्यवेष्टिशब्दवाच्यानेकाग्नेयादियागसाधारण्यात्तुल्येत्यर्थान्तरन्यासेनाह * इयांस्त्विति * नन्वेतच्छ्रुतेर्विशेषवाचित्वनिबन्धनबलीयस्त्वाभावे ऽपि प्रत्यक्षशब्दोक्तसाक्षात्प्रकृतावेष्टिवाचित्वाद् बलीयस्त्वोपपत्तेर्बलाबलविशेषो भविष्यतीत्या-

शङ्कते * नन्विति * प्रकृतयज्यालोचनानपेक्षालक्षणः साक्षाद्भावः प्रत्यक्षशब्देन विवक्षितः फलान्वये वैतच्छब्दस्य प्रस्तूयमानवाचित्वे वा प्रकृतयाज्यालोचनानपेक्षा स्यान्नन्वेतदुभयमप्यस्तीति परिहरति * स्यादिति * फलानन्वयोपपादनार्थम् *प्रत्ययेत्युक्तम्* यजिशब्दगृहीतावेष्टिरेतावच्छब्देनोक्ता।नन्वेतच्छब्दस्य फलान्वये प्रस्तूयमानवाचित्वे वा सत्यपि सर्वनामत्वेन साक्षात्प्रकृतवाचितया प्रकृतप्रत्यभिज्ञानपेक्षप्रकृतालम्बनत्वाद्राजसूययजितो बलीयस्त्वं भविष्यतीत्याशङ्क्याह * प्रकृतमपि चेति * सर्वनाम्नो ऽपि सन्निहितालम्बनत्वात्प्रत्यभिज्ञां च विना सन्निध्ययोगात्प्रकृतवाक्यालोचनाधीनप्रत्यभिज्ञापेक्षा तुल्येत्याशयः । ननु महाप्रकरणादवान्तरप्रकरणबलीयस्त्वस्याभिक्रमणाधिकरणे वक्ष्यमाणत्वादन्नाद्यकामवाक्यस्थस्य यजेरवान्तराधिकारलक्षणेनावान्तरप्रकरणेन प्रकृतग्राहित्वाद् बलीयस्त्वं भविष्यतीत्याशङ्कते * नन्विति * कथम्भावात्मकस्य प्रकरणस्य वाक्यैकवाक्यत्वकल्पनेन तादर्थ्यबोधकत्वादवान्तरप्रकरणे च सन्देशेन शीघ्रमेकवाक्यत्वावगमात् महाप्रकरणे तु सन्देशाभावाच्छीघ्रमेकवाक्यत्वानवगतेः सन्निकर्षविप्रकर्षाभ्यां बलाबलविशेषो युक्तो ऽधिकारात्मकस्य तु प्रकरणस्य प्रकृतत्वमात्रापेक्षित्वात् बहूनामल्पानां च प्रकृतत्वाविशेषात्तुल्यकालं ग्रहणावगतेर्नावान्तरमहाधिकारयोर्बलाबलविशेषो ऽस्तीत्याशयेन परिहरति * उच्यतइति * स्वमतेन ब्राह्मणादिवाक्यानां कर्मान्तराविधायित्वे ऽपि प्रयोगान्तरविधायित्वात्स्वाराज्यान्नाद्ययोर्भिन्नप्रयोगविषयत्वेनाप्यविरोधमुक्त्वा प्रौढ्या कर्मान्तरविधायित्वाभ्युपगमेनाविरोधमाह * यदि चेति * कर्मान्तरत्वे बार्हस्पत्यादिलिङ्गात्प्रकृतावेष्टिप्रकृतिकत्वे ऽपि सकृद् वृत्त्यैकयागप्रतीतेर्यागान्तराणामनङ्गत्वेनातिदेशतो ऽप्यप्राप्तेर्मध्यनिधानविध्यन्यथानुपपत्त्याचाभितो ऽभिधेयद्रव्यान्तरकल्पने ऽतिक्लेशापत्तेस्तद्विशेषानवधारणाच्चानवस्थितशास्त्रार्थापत्तेः प्रौढिमात्रार्थत्वसूचनार्थो ऽपिशब्दः । ननु कर्मान्तरत्वे द्रव्यदेवतादीतिकर्त्तव्यतानवगतेः सकृद् वृत्त्या च यागैक्यावगमान्मध्यनिधानानुपपत्तेस्तद्विशिष्टानुष्ठानासिद्धिरित्याशङ्क्याह * कर्मान्तरत्वे चेति * अतिदेशेनावेष्टीष्वितिकर्त्तव्यतालाभान्मध्यनिधानान्यथानुपपत्त्या च कल्पितेषु द्रव्यान्तरेषु तुल्यत्वाद्यागीयत्वप्रतीतेः क्लृप्तानां च यागान्तराणामितिकर्त्तव्यतापेक्षायां श्रुतयागप्रकृतित्वेनावगताया अवष्टेरेव बुद्धिस्थत्वात्तेषामपि तत्प्रकृतिकत्वावगतेस्तदीयेतिकर्त्तव्यतालाभादभितो

५९५।१

निधेयद्रव्यविशेषप्रतीतेर्निर्द्धारितशास्त्रार्थानुष्ठानसिद्धिरित्याशयः । नन्वेवमपि राजन्यवाक्यस्य निमित्तार्थत्वोपपत्तेर्ब्राह्मणादीनां प्रापकाणीति बहुवचनमयुक्तमित्याशङ्क्याह * राजन्यस्यापि चेति * यदिशब्दोपबन्धेनानित्यत्वावगमात् ब्राह्मणादिवाक्यतुल्यप्रवृत्तेः क्रतुमध्यप्रयोगे च राजन्यस्य नित्यत्वाद्यदिशब्दानुपपत्तेर्ब्राह्मणवाक्यस्थस्याख्यातस्य राजन्यवाक्ये ऽनुषक्तस्य विध्यनुवादवैरूप्यपरिहारार्थं ब्राह्मणवैश्यवाक्यवत् राजन्यवाक्ये ऽपि विधितया तुल्यप्रवृत्तेः ब्राह्मणवैश्यवत् राजन्यस्यापि कर्मान्तरेण प्रयोगान्तरेण वा सम्बन्ध इत्युक्ते ब्राह्मणवैश्ययोः क्षत्रियकर्तृके प्रयोगे निवेशायोगात् युक्तं भेदकत्वम्।राजन्यस्य तु क्रतुमध्यस्थप्रयोगे निवेशोपपत्तेर्न भेदकता युक्तेत्याशङ्क्य कर्तृभेदस्य भेदहेतोरभावे ऽपि योगसिद्ध्यधिकरणन्यायेन फलभेदस्य भेदकत्वसूचनार्थम् * फलपदेत्युक्तम् * अन्नाद्यकामवाक्यैकवाक्यत्वलभ्यस्य राजन्यो ऽन्नाद्यकामो यजेतेति फलपदानुषङ्गस्य ब्राह्मणो ऽन्नाद्यकामो वैश्यो ऽन्नाद्यकाम इति वत् राजन्यस्याप्यविशेषात्तत्प्रयोगस्यापि फलभेदाद्भेदावगतिरित्याशयः । यदि राजन्य ऐन्द्रं मध्ये निधायाहुतिं हुत्वा ऽभिघारयेदित्यनुषङ्गलभ्यस्य राजन्यकर्तृकप्रयोगविषयैन्द्रमध्यनिधानपूर्वकाभिघारणविधिवाक्यस्य तन्त्रप्रयोगं विनानुपपत्तेरपि प्रयोगभेदो ऽवसीयतइत्याह * एवं चेति * ननु क्रतुमध्यस्थे ऽपि प्रयोगे मध्यनिधानलिङ्गादग्नेरिष्टिरित्येकवचनश्रुतेश्च तन्त्रत्वं भविष्यतीत्याशङ्क्याह * राजसूयेति * आग्नेयो ऽष्टाकपालो हिरण्यं दक्षिणैन्द्र एकादशकपाल ऋषभो दक्षिणा वैश्वदेवश्चरुः पिशङ्गी पृष्ठौही दक्षिणा मैत्रावरुण्यामिक्षा वशा दक्षिणा बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणेति दक्षिणाभेदाद्दक्षिणायाश्च कर्त्रानत्यर्थत्वात्कर्तृत्वाधिष्ठानद्रव्यैक्ये ऽपि प्रयोगाङ्गभूतकर्तृरूपभेदद्वारा प्रतियागं प्रयोगभेदावगतेः क्रतुमध्यप्रयोगे मध्यानिधानविधिर्विरुध्येतेत्यर्थः । अतस्तस्मात् क्षत्रियस्यैवेत्युपसंहारवार्त्तिकं युक्तमेवेत्याह * तस्मादिति *

॥ आधानस्य विधेयत्वाधिकरणम् ॥ ३ ॥

## आधाने सर्वशेषत्वात् ॥ ४ ॥

यदिति भाष्येण वचनव्यक्तिभेदस्य सन्देहहेतुत्वेनोक्तस्याख्यातानपेक्षपदान्तरान्योन्यान्वयायोगेनायुक्तत्वात् पूर्वपक्षवचनव्यक्त्ययोगापत्तेर्ब्राह्मणादिप्राप्त्यप्राप्तिसन्देहे विध्यविधिसन्देहहेतुं वक्तुमाह * वसन्त इति * ननु सत्यामपि प्राप्तौ निमित्तवाचियज्यादिश-

ब्दाभावान्निमित्तार्थता न युक्तेत्याशङ्क्याह * तत्रेति * प्राप्तस्य ब्राह्मणादेर्निमित्तत्वं विनान्वयायोगात्तद्वाचिशब्दाभावे ऽपि निमित्ततावसीयत इत्याशयः। भाष्यस्य तर्हि का गतिरित्याशङ्क्याह * तदा चेति * ब्राह्मणो यद्यादधीत ततो वसन्तइति वचनव्यक्त्यावप्याधाने वसन्तविधौ ब्राह्मणान्वयस्य निमित्तत्वोक्त्यर्थत्वं ब्राह्मणश्रुतेः सूचयितुं वचनव्यक्त्यन्तरोक्तिरित्याशयः। नन्वाधानस्यावेष्टिवन्नियतैकवर्णसंयोगात्पूर्वन्यायातुल्यत्वेन निमित्तार्थत्वमाशङ्क्य वर्णविशेषासंयोगे ऽपि स्वरूपेणैवाप्राप्तौ निमित्तार्थत्वासम्भवातिदेशार्थत्वेनास्य विचारस्यानन्तरसङ्गतावपि कथं गुणप्रकरणसङ्गतिः किं च प्रयोजनमित्याशङ्क्याह * तदा चेति * ब्राह्मणादेर्गुणस्य विधेयत्वे भेदकता ऽविधेयत्वे त्वभेदकतेति सन्दिग्धविधेयत्वस्य गुणस्य भेदकाभेदकत्वनिर्णयार्थं विधेयाविधेयत्वविचारादवान्तरसङ्गतिरपि तदा चेति प्रापकत्वे भेदोक्त्या निमित्तार्थत्वे च तद्वैपरीत्योक्त्या सूचिता। स्वार्था एव चेत्यनेनाद्यपूर्वपक्षनिरासप्रयोजनमुक्त्वा द्वितीयपूर्वपक्षनिरासप्रयोजनम् * शूद्रस्येत्यनेनोक्तम् * ननु शूद्रस्यानुपनीतत्वान्न ब्रह्माभिव्याहारेदित्यनुपनीतवेदाध्ययननिषेधनाविधित्वात्पूर्वपक्षे ऽप्याधानाप्राप्तिरविशिष्टेत्याशङ्क्याह * एतेनेति * उपनयनस्याप्याधानवत्पूर्वपक्षे कर्मविधिभिस्तत्ज्ञानसाधनं वेदाध्ययनमाक्षिपद्भिरनुपनीताध्ययनायोगेनाक्षेपादविशेषाच्छूद्रस्याप्युपनयनमध्ययनं च प्राप्नोतीत्याशयः। सुखप्रतिपत्त्यर्थमधिकरणार्थं संग्रहीतुमाह * तत्रेति * सङ्क्षेपतो ऽधिकरणार्थ इत्यर्थः। द्विविधमपि पूर्वपक्षं सङ्गृह्णाति * सामर्थ्येति * आहवनीयादिसाध्याग्निहोत्रादिविधिभिः सामान्यतः कस्य चिदाहवनीयादिसाधनस्याक्षेपे ऽपि किं तदिति विशेषाज्ञानादग्निमादधीतेति द्वितीयाश्रवणे ऽप्यविहितस्याधानस्य साध्यानाकाङ्क्षत्वात् द्वितीयायाश्चोत्पाद्याप्यविकार्यसंस्कार्यात्मकचतुर्विधकर्मसाधारण्येनोत्पाद्यैकान्तिकत्वाभावादग्निमुपनिधाय स्तुवीत अग्निं संमार्ष्टीत्यादिवदुत्पाद्यत्वानवगतेरुद्धोदिते सूर्ये आहवनीयमादधातीत्यादौ चाहवनीयादेर्यूपादिवत् असिद्धत्वाच्च आधीयते स आहवनीय इत्यवगमे ऽपि अविधीयमानस्याहवनीयोत्पादकत्वे प्रमाणाभावादाहवनीयादिवाक्यैराधानविध्यभ्युपगमे कामश्रुतिभिः प्राप्तेरवाच्यत्वात्प्रत्यग्नि वाधानभेदापत्तेर्विधिनिरपेक्षोत्पत्तिमात्रेण च साध्यसाधनत्वे सत्यौदुम्बरत्वादेरप्युगवरोधादिसाधनत्वापत्तेर्याज्ञिकानां चाहिते ऽग्नौ आहवनीयादिशब्दप्रयोगस्याधानविध्यभावे निर्मूल-

त्वेनाप्रामाण्यान्मूलवैदिकप्रयोगकल्पने ऽप्यादित्यादौ यूपादिशब्द-प्रयोगशब्दार्थाधिगमहेतुत्वाभावाद्धंसमुख्यः स्रुचो ऽग्रास्त्वक्का बि-ला इति स्रुचां हंसमुखप्रसेकत्वादिविधिवदाहितो ऽग्निराहव-नीय इति प्रयोगादाधानविधिकल्पने ऽतिक्लेशापत्तेः कामश्रुति-भिश्च विधिकल्पनवैयर्थ्यस्यापरिहार्यत्वादविधाने चाधानस्य प्रक-रणायोगाद्वसन्तादिवाक्येषु ब्राह्मणादौ निमित्ते कालविधौ प्रकर-णप्राप्ताधानानुवादानुपपत्तेर्ब्राह्मणादिविशिष्टाधानानुवाददोषस्याप-रिहार्यत्वात्स्वविध्युत्पादितस्याप्याधानस्याग्निहोत्रादिविधिभिरनु-ष्ठापनमाद्यपूर्वपक्षार्थ इति सूचनायाक्षिप्तशब्दः । टुप्टीकायां सम्भारे-ष्वादधातीति यो ऽस्मिन्नादधाति तेनाधाने प्राप्ते वसन्ते ब्राह्मणो ऽग्निमादधीतेत्यनूद्य वसन्तब्राह्मणसम्बन्धो विधीयतइत्यभिधाना-त्सम्भाराणां च वाक्षपार्थिवानां वाक्यान्तरविहितत्वात्तदधिकर-णाधानमात्रविधिलाघवसम्भवे कर्तृकालरूपानेकार्थविशिष्टाधान-विधिगौरवस्यानङ्गीकार्यत्वात्सम्भारवाक्योत्पादितस्याधानस्य कैम-र्थ्यापेक्षायामाहवनीयादिवाक्यालोचनयाहवनीयादिसाधनत्वायग-तेरग्निहोत्रादिभिः फलवत्त्वात्प्रयुक्तिशक्तेः प्रयुक्तिसम्भवे ब्राह्मणादि-वाक्येन प्रयोगाङ्गभूतकर्तृसंयोगे ऽपि निमित्तार्थे तत्संयोगोपपत्तेर्ना-धानप्रयोजकत्वकल्पना युक्तेत्याशयः । फलवतः प्रयुक्तिद्योतनायैव कामश्रुत्युपन्यासो भाष्ये अन्यथाहवनीयादिसाध्यकर्मविधिमात्रेण प्राप्त्युपपत्तेः कामविशेषणानर्थक्यापत्तेः यदि रथन्तरसामेति च स-यदिके वाक्ये चिन्तिते सयदिकत्वसाम्येन बुद्धिस्थानां यदि ब्राह्मणो यजेतेत्यादिवाक्यानां पूर्वाधिकरणे निमित्तार्थत्वापवादेन प्रयोगवि-धित्वव्युत्पादनादिहापि ब्राह्मणादिसंयुक्तत्वसाम्येन बुद्धिस्थानां व-सन्तादिवाक्यानां प्रयोगविधित्वव्युत्पादनादनन्तरसङ्गतिः सुल-भा प्रयोजनं चाग्निहोत्रादिविधिप्रयुक्तत्वे ऽग्निहोत्रादिफलार्थिनैवा-धानमनुष्ठेयं स्वविधिप्रयुक्तत्वे तु ब्राह्मणत्वादेः कर्तृविशेषणत्वे ऽपि जातेरनुपादेयत्वाद् ब्राह्मणादिकर्तृकस्य प्रयोगस्याब्राह्मणादिना कर्त्तुमशक्तेरशक्तस्य चानधिकारादर्थादधिकारविशेषणत्वावगतेः सिद्धत्वेन च जातेः काम्यतयाधिकारविशेषणत्वायोगादाधानस्य च काम्यत्वाभावेन राजसूयवन्निमित्तान्वयाविरोधाभावान्निमित्त-त्वप्रतीतेर्निमित्ते सति नैमित्तिकावश्यम्भावाज्जातपुत्रवाक्यात्पुत्रज-न्मनो निमित्तविशेषणत्वप्रतीतेर्जातपुत्रेण ब्राह्मणादिना निष्कामे-नावश्यानुष्ठेयं ततश्च कृष्णकेशवाक्याद्वयो ऽवस्थानतिक्रमणप्रतीते-र्ब्राह्मणादेर्जातपुत्रस्यानाहिताग्नेर्वयोऽवस्थातिक्रमे ऽवश्यं विहिताग्नि

होत्राद्यननुष्ठाननिमित्तप्रत्यवायवदाधानाननुष्ठाननिमित्तो ऽप्यपरः प्रत्यवायो भवति अत एवानाहिताग्निताप्युपपातकत्वेन स्मर्यते नानाहिताग्निर्म्रियेतेति च श्रुत्याधानस्यावश्यकतावसीयते सा च स्वविधिप्रयुक्तत्वं विना न सिद्ध्यतीति सङ्गतत्वात्सप्रयोजनत्वाच्च युक्तैव प्रयुक्तैवे प्रयुक्तिचिन्ताश्लोकं व्याचष्टे * एकस्तावदिति* सिद्धान्तं संगृह्णाति * सिद्धान्तेति * सम्भाराहवनीयादिवाक्यालोचनयाहवनीयादीनामाधानजन्यत्वावगमेनाग्निहोत्रादिविधिभिराधानप्रयुक्तिसम्भवे प्रत्यक्षवाक्यानर्थक्यमाशङ्क्य नियमेनाग्निहोत्रादिवाक्यानामाधानप्रयोजकत्वायोगान्नियमार्थत्वेनार्थवत्त्वं दर्शयन् श्लोकं व्याचष्टे * न तावदिति * ननु विद्वद्वाक्यस्याधानविधायित्वं विनानर्थक्यं स्यादित्याशङ्क्याह * अस्ति चेति * अप उपसृजतीत्यादिप्रत्यक्षविधियुक्तानामुदकस्थापनादिरूपाणां सम्भाराणाम् अथ सम्भरन्तीतिवत्सामान्यतो विधानं तत्प्रशंसार्थत्वम्। एवं कृतान्सम्भारान्सम्भार्याण्येकत्र देशे स्थाप्यान्युदकादीनि विद्वानेवमुक्तप्रकारसम्भरणपूर्वमग्निमाधत्ते सहायसम्पन्नमपि समानस्वाम्यं स्पर्द्धमानशत्रुं यथावर्त्तनरहितो भवति तथा यजतीत्येतदुपन्यासस्य प्रयोजनमस्तीति नानर्थक्यापत्तिरित्याशयः। सिद्धान्तमुपसंहरतीति * किमिति * प्रश्नभाष्याशयमाह * किमिति * ब्राह्मणादीनामित्युत्तरभाष्यं निमित्तवाचिशब्दानुपन्या- ५९७।१
सादयुक्तमाशङ्क्य ब्राह्मणादेराधाने प्राप्तत्वाद्विधेयवसन्तादिनिमित्तत्वं विनान्वयायोगान्निमित्तत्वावगत्याशयत्वेन व्याचष्टे * ब्राह्मणादीनामिति * नन्वित्याशङ्काभाष्याशयमाह * नन्विति * बाढमिति परिहारभाष्याशयमाह * इतरस्त्विति * उक्ते ऽर्थे भाष्यसम्मतिप्रदर्शनार्थैकदेशपाठः केनेति प्रश्नभाष्यं सम्भाराहवनीयादिवाक्यालोचनयाधानस्याहवनीयादिसाधनत्वे ऽवगते कामश्रुतिभिः प्राप्तिप्रतीतेर्विद्वद्वाक्यस्य च साक्षात्प्रापकस्य प्रत्यक्षत्वादयुक्तमाशङ्क्य प्रत्यक्षविधिसद्भावे कामश्रुतीनां यच्छब्दोपबन्धाच्च विद्वद्वाक्यस्य प्रापकत्वं न सम्भवतीत्याशयेन व्याचष्टे * केनेति *कामेत्युत्तरभाष्यं प्रश्नाशयापरिहारादयुक्तमाशङ्क्य कथं चित्प्राप्तिसम्भवे विशिष्टविधिगौरवस्यानङ्गीकार्यत्वात्प्रत्यक्षविधिसद्भावमात्रेण कामश्रुतीनां प्रापकत्वनिराकरणं न सम्भवतीत्याशयेन व्याचष्टे * इतरस्त्विति * साक्षात्प्रापकविद्वद्वाक्यत्यागेन कामश्रुत्युपन्यासानौचित्यशङ्कानिरासार्थम् * बलीयांसं चेत्युक्तम् *

१ प्रयुक्तैवेति २ पु० ना०।

विद्वद्वाक्यस्याधानोत्पादकत्वसम्भवे ऽपि वसन्तादिवाक्यवत्प्रयोगविधिचिन्हप्रयोगाङ्गकर्तृकालादिसंयोगाभावात्स्वर्गकामादिवाक्यवच्च प्रयुक्तिशक्तिफलसंयोगाभावात्प्रयोजकत्वानुपपत्तेः तत्प्रयोजकत्वाय कामश्रुतीनामवश्योपन्यसनीयत्वाद् बलवति च प्रापके प्रागुपन्यस्य निरस्ते दुर्बलोपन्यासानवकाशापत्तेरात्मनेपदर्शितेन वाक्येनाधानोत्पादने कामश्रुतीनां तत्प्रयोजकत्वस्य पाक्षिकत्वेन विद्वद्वाक्योत्पादिताधानप्रयोजकत्वापेक्षया दौर्बल्यात्प्रागुपन्यास इत्याशयः।कामश्रुतीनां प्रयोजकत्वे ऽस्य पाक्षिकत्वेन विद्वद्वाक्यस्य चोत्पादकत्वेन विवक्षितत्वाद्भिन्नविषयतया ऽनालोचनीये ऽपि बलाबले ऽग्निहोत्राद्यनङ्गत्वेनाधानस्याग्निहोत्रादिविधिप्रयुक्तत्वासम्भवे ऽपि विद्वद्वाक्येन द्वितीयावगताग्न्याख्यफलसंयोगात्प्रयुक्तिमता प्रयुक्तिसम्भवे वसन्तादिवाक्यानां विशिष्टविधिगौरवापादकप्रयोजकत्वकल्पनानुपपत्तेर्विद्वद्वाक्यस्यैव प्रयोजकताप्यापद्यतइति सूचनार्था बलीयस्त्वोक्तिः। का इति प्रश्नभाष्यं कामश्रुतीनां प्रत्यक्षत्वाद्युक्तमाशङ्क्याहवनीयादिसाधनत्वेनाधानस्य विध्यन्तरतो ऽवगतस्याप्यग्निहोत्राद्यनङ्गत्वात्तद्विधिप्रयुक्तत्वासम्भवाशयत्वेन व्याख्यातुमाह * का इति * प्रापणेत्यनेन क्रोधहेतुं वदताग्निहोत्रादिश्रुतीनामाधानं प्रत्यशेषित्वात्प्रयोजकत्वाशक्तेस्तद्व्यतिरिक्त आधानशेषित्रिविषयत्वात्तत्प्रयुक्तिशक्तकाः कामश्रुतय इत्येवं भाष्यं व्याख्यातं प्रापणशक्त्याक्षेपस्यासर्वशेषत्वादिति सूत्रावयवोक्तत्वसूचनार्थो भूतनिर्देशः प्रापणशक्तेराक्षिप्तत्वात्सक्रोधं दर्शयतीति वक्ष्यमाणानुषङ्गेण समापनीयम् । अग्निहोत्रमित्युत्तरभाष्यमाक्षेपापरिहारादयुक्तपराशङ्काज्ञातप्रश्नत्वारोपोत्तरत्वेन व्याचष्टे *स्वरूपमेवेति* फलवत्त्वात्प्रयुक्तिशक्तिसूचनार्थम् * फलेत्युक्तम् * प्रत्यक्षवचनाभावे ऽपि कामश्रुतीनामनङ्गभूताधानप्रयोजकशक्त्यभावसूचनार्थे सक्रोधमित्यस्याक्षेपक्रियाविशेषणत्वाभ्युपगमे त्वेकग्रन्थतया योज्यम् । कथमिति भाष्यं का इति प्रश्नाशयविवरणार्थत्वेन व्याचष्टे * कथमिति * अग्निहोत्रादिभावनाकरणेतिकर्त्तव्यतांशातिरिक्तत्वादाधानस्य तद्विधिप्रयुक्तत्वासम्भवो ऽन्यपरत्वोक्त्योक्तः करणेतिकर्त्तव्यतांशप्रयोजकेन विधिना[1] तत्साधनमकरणेतिकर्त्तव्यताभूतमप्यन्यथानुपपत्त्या प्रयुज्यतइत्याशयेनोच्यतइत्यादिपरिहारभाष्यं व्याचष्टे * इतीति * ननु यथाग्निहोत्रादि निष्पद्यते तथा कुर्यादिति विषयसिद्ध्याक्षेपकत्वे ऽपि प्रयोगविधेरविषयभूतकरणेतिकर्त्तव्यताव्यतिरिक्ता-

१ तत्साधनमकरणेतिकर्तव्यताप्रयोजकेन विधि मे।त २ पु० आधकम् ।

र्थाक्षेपकत्वं न सम्भवतीत्याशङ्कानिरासार्थं तेनेत्याद्यवगम्यतइत्यन्तं भाष्यं व्याचष्टे * तेनेति * यथाग्निहोत्रमिति भाष्योक्तो विध्यर्थस्तच्छब्देनाधानाक्षेपहेतुतया परामृष्टः । अनङ्गस्यापि विधिनाक्षेपे वासो ददात्यनो ददातीति वस्त्रशकटदानविधिना वस्त्रशकटोत्पादकयोर्वा तक्षणयोराक्षेपः सप्तमाधिकरणपूर्वपक्षसूत्रे वक्ष्यमाणो दृष्टान्तितवानिति तक्षणाख्यकर्मजन्ये वस्त्रशकटे च विहिते तदुत्पादकं कर्माक्षिप्यते यथा यूपे विहिते तदुत्पादकछेदनादीति सूत्रार्थः कामश्रुतिप्राप्त्युक्तिसम्प्राप्तिसूचनायेतिकरणकामश्रुतिप्राप्त्युक्तिप्रयोजनोक्त्यर्थं तत्केनेत्यादिभाष्यं स्पष्टत्वादव्याख्यायापि चेति भाष्यं विशिष्टविधौ वाक्यभेदाभावादयुक्तमाशङ्क्य सत्यां गतावेकस्य वाक्यस्य विशिष्टविधिगौरवाक्षमत्वाद्वाक्यभेदोक्तिरित्याह * सर्वप्रकारेति * क्रतुप्रधानमुच्यतेति पूर्वसूत्रोक्तप्रतिज्ञानुषङ्गेणाधानइति सूत्रावयवव्याख्यानार्थमेवमिति भाष्यं व्याचष्टे * एवमिति * सर्वकर्मणामिति भाष्येणोत्तरावयवं यथाश्रुतं दूषयित्वा किं तर्हीत्यनेन सर्वकर्मशेषभूताग्निशेषत्वेनाधानस्यौपचारिकी सर्वकर्मशेषतोक्तेति भाति तच्चाङ्गाङ्गत्वेनैवाधानाक्षेपस्य पूर्वपक्षिणो ऽभिहितत्वादयुक्तमिति मत्वा सर्वकर्मणामिति भाष्यमकारप्रश्लेषेणोत्तरावयवव्याख्यार्थतया व्याख्यातुमाह * कथमिति * शेषत्वनिरासस्यानाक्षेपहेतुमुपपादयितुमाह * यदि हीति * शेषत्वे ऽपि स्वतन्त्रकालविधानेन कर्मप्रयोगाद् बहिरनुष्ठानस्यावगतस्य कर्मविधिप्रयुक्तत्वे ऽनुपपत्तेराक्षेपानावश्यकतानवक्लृप्त्योक्ता आहवनीयादिशब्दानामाधानलक्षणसंस्कारनिमित्तत्वादाहवनीये जुहुतीत्याद्याहवनीयादिश्रुत्यैवाधानस्य कर्माङ्गत्वोक्तेः सर्वकर्मणामिति शेषत्वनिरासभाष्यमयुक्तमाशङ्क्योपपादयति * तेषामिति * आधानजन्यस्य संस्कारस्याहवनीयादिशब्दनिमित्तत्वे ऽप्याधानस्य स्वरूपेण संस्कारत्वाभावादाहवनीयादिशब्देनानुक्तेरग्निहोत्रादिकर्मणामाहवनीयादिग्रहणमात्रपर्यवसानाञ्च कश्चिदाधानस्य कर्माङ्गत्वज्ञापनहेतुरस्तीत्यर्थः । संस्कारनिमित्तत्वेनाहवनीयादिशब्दानां जातिनिमित्तानोवास शब्दविषयसप्तमाधिकरणासिद्धान्तसूत्रविषयत्वे ऽपि यथा कर्मजे ऽनसि वाससि वानोवासोरूपमेव प्राप्यते न तदुत्पादकं कर्मानोवासःशब्दयोः संस्कारनिमित्तत्वाभावेन कर्मणो शेषत्वात्तथाहवनीयादिशब्दानां संस्कारजनकस्याधानस्याग्निहोत्राद्यशेषतयाहवनीयादिश्रुत्या कर्मजे ऽप्याहवनीयादौ विहिते जन्यमाहवनीयादिरूपमेवाप्यते नोत्पादकमाधानमित्येतावता साम्येन तन्न्या-

योदाहरणं यद्याधानस्य कर्मार्थत्वं नास्ति किं तर्हि तृतीये तत्प्रकृत्यर्थे
यथान्ये ऽनारभ्यवादा इत्याधानस्य प्रकृत्यर्थत्वे पूर्वपक्षिते सर्वार्थे
वाधानस्य स्वकालत्वादिति सिद्धान्तसूत्रेणोच्यते न हि तत्सर्वेषां त्रै-
वर्णिकानामाधानस्य विहितत्वेन रथकारस्यैवाधानविधिर्नियोज्य-
तया परिशिष्टत्वादिति वचनाद्रथकारस्याधानस्य सर्वशेषत्वादिति
षष्ठाधिकरणोपकरणोपक्रमसिद्धान्तसूत्रवदन्यथा व्याख्यातुं शक्यं
नापि द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वा-
दित्येकादशाधिकरणसूत्रवत् कृत्वाचिन्तान्यायेन सर्वार्थत्वाङ्गीका-
रेण चिन्तान्तराभावादिति किं तर्हीति भाष्येणाशङ्क्य पारम्पर्येण
सर्वार्थत्वोक्त्यर्थतया तार्त्तीयसूत्रव्याख्यानार्थमग्नीनामिति भाष्यं
व्याख्यातुमाह *यत्त्विति* किमित्याशङ्काभाष्याशयमाह *किमिति*
अग्नयइति परिहारभाष्याशयमाह * सिद्धान्तेति * नन्वित्याशङ्का-
भाष्याशयमाह * नन्विति * उच्यतइत्यादधीतेत्यन्तं परिहारभा-
ष्यं व्याचष्टे * उच्यतइति * उत्पादनोक्त्याशयमाशङ्कापूर्वमाह *
५१८।८ तत्रेति * श्लोकं व्याचष्टे * यथैवेति * भाष्यार्थमुपसंहरति *
इत्यस्तीति * नन्विह प्रयुक्ते विचार्यत्वादाधानोत्पत्तिमप्राप्तिपक्षः
प्रयोजयिष्यतीति ब्राह्मणादिवाक्यानामुत्पत्तिविधित्वज्ञापनार्थस्योत्पत्ति-
शब्दस्यानर्थक्यं स्यादित्याशङ्क्य ब्राह्मणादिवाक्यानां प्रयोजकत्वाभ्यु-
पगमे कर्मविषयत्वेन क्लृप्तत्वात्तेषामेवोत्पादकतापि युक्ता न गुणसं-
चरितशक्तीनां सम्भारादिवाक्यानामिति सूचयितुं तदुपपादनार्थं
पक्षे ऽप्युपायान्तराप्राप्तिं वक्ष्यमाणामाह * पक्षे ऽपि चेति * केव-
लप्रयोजकत्वे ह्यात्मनेपदयुक्तस्य तद्रहितविध्युत्पादितस्याधानस्या-
धातृगम्याहवनीयादिसाधनत्वानियमात्साध्यसाधनेतिकर्त्तव्यताऽवि-
शिष्टभावनावगमोत्तरकालं प्रवृत्तस्य प्रयोगविधेः साध्यसाधनत्वा-
नियामकत्वात् प्रत्यक्षे ऽपि प्रयोगविधौ सत्युपायान्तरप्राप्त्यविरो-
धात्तदर्थाप्राप्तेर्युक्तात्मनेपदयुक्तोत्पत्तिविधित्वोपपादनार्थतेत्याशयः ।
क्रमादेः प्राप्त्युपायादाधानात् भिन्नविषयस्य प्रत्यक्षविधिविहितेना-
प्याधानेन निवृत्त्ययोगाशङ्कानिरासार्थं यदित्यादिभाष्यं व्याचष्टे
* प्रत्यक्षेति * आत्मनेपदादनाधातारं प्रत्याहवनीयत्वाद्यभावाव-
गतेरर्थादाधानस्य च प्राप्त्युपायत्वनियमादेकविषयत्वेनोपायान्तर-
निवर्त्तकता युक्तेत्याशयः । उद्गातारः स्तुवतइत्यात्मनेपदस्यानात्म-
गामिन्यपि क्रियाफले दर्शनान्नात्मनेपदादात्मार्थतावगन्तुं शक्येत्या-
शयेन कथं चेत्याशङ्क्य स्वरितञितः कर्त्रभिप्राये क्रियाफलइति
स्मृतेर्ञकारे दधातिपदस्यात्मनेपदस्यात्मगामिक्रियाफलवाचितावग-

ता नान्यत्र व्यभिचारमात्रेणापह्नोतुं युक्तेत्याशयेन परिहारार्थं कर्त्र-भिप्राये हीति भाष्यमादधीतेति।धातुप्रयोगेण व्याख्यातम्।नन्वात्मने-पदाभावे ऽप्यग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिवत् विधिसामर्थ्या-त्कामश्रुतिपरिग्रहेण तदेकवाक्यत्वावगतेः स्वर्गकामादिसाङ्गं कुर्या-दिति सामानाधिकरण्याच्चात्मार्थतावगमयिष्यते इत्याशङ्क्यान्यथा-नुपपत्त्या कामश्रुत्याक्षेपे ऽनङ्गत्वेनैकवाक्यत्वाप्रतीतेः पश्वादिव-च्चात्मार्थमुत्पन्नस्याहवनीयादेर्दानादिनान्यसम्बन्धकरणे ऽपि वि-ध्यविरोधान्नात्मनेपदं विना ऽनाधातारं प्रत्याहवनीयादितावगम्यत-इत्याशयेन परिहारार्थमसतीति भाष्यं व्याचष्टे * अर्थेति * श्रु-तिकल्पनेन सामर्थ्यस्य प्रापकत्वात्प्रत्यक्षश्रुतिसद्भावे च कल्पना-योगात्पक्षे ऽपि प्राप्तिर्न सम्भवतीत्यभिधानार्थमपि चेति भाष्यं ता-त्पर्यतस्तावद्व्याचष्टे * अपि चेति * नियमस्यादिशब्दोक्तायाश्च परिसंख्याया यावल्लिङ्गानुमिताः श्रुतयः प्रतिमन्त्रं कल्पयितुमार-भ्यन्तइत्यादिमन्त्राधिकरणवार्त्तिके शुद्धविधिवदप्राप्तविधित्वोक्तेर्न पक्षे ऽपि प्राप्तिः सम्भवतीत्यर्थः । स्वरूपतो व्याचष्टे * सति चे-ति * नन्वाधानस्याग्निहोत्राद्यङ्गत्वे सत्याङ्गानां प्रधानविधिप्रयुक्त-त्वात्प्रयाजादिवत्प्रत्यक्षविधिसद्भावे ऽपि कामश्रुतिप्रयुक्तत्वापत्तेर-नङ्गत्वे वा प्रत्यक्षविध्यभावेन ऽपि कामश्रुतिभिः प्रयुक्त्यशक्तेः स-तीष्विति विशेषणानर्थक्यमित्याशङ्क्यानङ्गत्वे ऽप्यन्यथानुपपत्त्या-धानविधिकल्पनद्वारा प्रयुक्त्युपपत्त्याशयेन परिहारार्थमसतीष्विति भाष्यं व्याचष्टे * यदि त्विति * ननु सतीष्वपि ब्राह्मणादिश्रुतिषु शूद्रस्याप्राप्तेः कामश्रुतिभिः प्राप्तिर्युक्तेत्याशङ्कानिरासार्थं सतीति भाष्यं व्याचष्टे * सतीषु त्विति * अत्राहेति द्वितीयपूर्वपक्षभा-ष्ययाशयपूर्वं व्याचष्टे * पूर्वोक्तेति * तन्निरासार्थमुच्यतइति ५९९।१ भाष्यं व्याचष्टे * तत्रेति * विधेयस्य स्तावकत्वेन शेषभूतेत्यर्थः नेतीत्याशङ्काभाष्यमेवंशब्देन सम्भारपरामर्शात्सम्भारविध्येकवाक्य-त्वप्रतीतेरयुक्तमाशङ्क्य भिन्नवाक्यत्वे ऽपि प्रकरणप्राप्तसम्भारपरा-मर्शोपपत्तेर्न तावन्मात्रेणैकवाक्यतावगतिरित्येवमुपपादयन् व्याचष्टे * परः पुनरिति * उच्यतइति परिहारभाष्यं व्याचष्टे * भवेदि-ति * गुणार्थमेवेति स्तुतिवाचिना गुणशब्देनापामुपसर्जनं तु वि-धीयतइति भाष्यस्थो विदधातिः स्तुतिलक्षणार्थतया व्याख्यातः । नन्वित्याशङ्काभाष्यं विद्वद्वाक्यस्याधानविधित्वे ब्राह्मणादिश्रुतेश्च व-सन्तादिलक्षणगुणार्थत्वे हेत्वनुपन्यासादयुक्तमाशङ्क्य निर्णयहेतुप्र-श्नार्थत्वेन व्याचष्टे * कुतो न्विति * निर्णयहेतूक्त्यर्थं नेत्याद्याहे-

त्यन्तं भाष्यं व्याचष्टे * तदिति * प्रत्यक्षकल्पनीयत्वलक्षणो वि-शेषो निर्णयहेतुरित्याशयः । तस्मात्प्रशस्ततामितिभाष्यं तात्पर्यतो व्याचष्टे * नैतदिति * भाष्यं व्याचष्टे * न चेति * यदि त्वि-त्याद्युपरुध्येतेत्यन्तं भाष्यं व्याचष्टे * यदि त्विति * नन्वित्याद्यव-कल्प्यतएवेत्यन्तं भाष्यं व्याचष्टे * लिङ्ग त्विति * लिङ्ग विहि तस्याधानस्य सम्बन्धि यत्सम्भरणं तस्य यो विधिरथ सम्भारान् सम्भरतीत्यादिसामान्यरूपो विशेषरूपश्च तत्प्ररोचनार्थं स्तुतिस-हितस्याधानस्य पुनः श्रवणमित्यर्थः । अपि चेति भाष्यं व्याचष्टे * लिङ्गा चेति * नन्वित्याशङ्काभाष्यं व्याचष्टे * नन्विति * उ-च्यतइति परिहारभाष्यं व्याचष्टे * सिद्धान्तेति * पदान्तरसम्ब-न्धात्मकेन वाक्येन ब्राह्मणादिविधाने ऽप्याधानस्य श्रुत्या विधा-
६००।१ नाद् बलीयस्त्वोपपादनार्थं परेति भाष्यं व्याचष्टे * स्वपदेति * द्वि-षच्छब्दः सपत्नशब्दव्याख्यार्थः ।शाखान्तरीयपाठप्रदर्शनार्थो वा न-न्विति भाष्येण विशिष्टविधिगौरवाद्दौर्बल्यमाशङ्कितं नैष इत्यनेन विशिष्टविध्यन्यथानुपपत्तिकल्पे विध्यन्तरैर्विशेषणविधिसिद्धेः श्रौ-तविधिव्यापारनानात्वाभावात्परिहृत्य द्वितीयपूर्वपक्षनिरासे तस्मा-दित्यनेनोपसंहृते ऽपि चेति पूर्वपक्षभाष्योक्तं वाक्यभेदं गौरवाश-येन परिहृतमपि ब्राह्मणादिजातेरनुपादेयतया निमित्तत्वेनेष्टत्वा-त्कालनिमित्तयोर्द्वयोरुद्देश्यत्वापत्तेः प्रत्युद्देश्यवाक्यसमाप्तिलक्षण-वाक्यभेदाशयेन यस्त्वित्यनेनानुभाष्य यदीत्यनेन चानुपादेयत्वाज्जा-तेर्ब्राह्मणादिश्चेदादधीतेत्येवत्यर्थान्निमित्तत्वावगमे ऽप्यप्रवृत्तप्रवर्त्तना-त्मकत्वेनेदानीं कुर्वीतेत्यस्य विध्यर्थस्य कादाचित्कत्वात्कादाचित्के-नैव निमित्तेनान्वयावगतेर्नित्यत्वेन जातेर्निमित्तत्वायोगात्कर्तृसं-ख्यासामानाधिकरण्यात्कर्तृतयैवान्वयावगतेः कर्तुश्चानुद्देश्यत्वात् प्रत्युद्देश्यं वाक्यसमाप्तिर्न प्रत्युद्देश्यवाक्यपरिसमाप्तिलक्षणवाक्य-भेदापत्तिरित्याशयेन परिहृत्याधिकरणार्थोपसंहारार्थम् * तस्मा-दित्युक्तम् * तत्सर्वं सङ्क्षिप्य व्याचष्टे * कर्त्रिति * ब्राह्मणादि-जातिनिमित्ततया कर्तृत्वापादनार्थत्वेनाप्राधान्यद्योतनार्थं कर्तृशब्द विशिष्टशब्दो नैकार्थत्वनिरासार्थः । निमित्ताभावे ऽनुष्ठितस्यापि क-र्मणो नैष्फल्यापत्तेस्तस्यापि क्रियोपकारित्वात् भाष्ये गुणत्वोक्त्यर्थ-विरोधः निमित्तस्याविधेयत्वे ऽप्यवच्छेदकत्वात्फलसंस्कार्यवद्विधे-यविशेषणत्वाविरोधः ।

॥ दाक्षायणादीनां गुणताधिकरणम् ॥ ४॥

## अयनेषु चोदनान्तरं सञ्ज्ञोपबन्धात् ॥ ५ ॥

सन्दिग्धविधेयत्वार्थस्य रथन्तरसामादिशब्दस्य कस्य निमित्तार्थत्वेनाविधेयार्थत्वादभेदकत्वं कस्य वा तदयोगेन विधेयार्थत्वात् भेदकतेति चिन्तिते ऽधुना दाक्षायणादिशब्दस्य गुणविधिनामधेयत्वं सन्देहाद्विधेयाविधेयार्थतया सन्दिग्धस्याविधेयार्थत्वे ऽपि संज्ञातो ऽभ्यासात्प्रकरणान्तराद्वा भेदमाशङ्क्य विधेयार्थत्वाद् गुणफलान्वयावगतेरभेदाभिधानात्सङ्गतिसन्देहतद्धेतूंस्पष्टत्वादुपेक्ष्य दध्नेन्द्रियकामाधिकरणेनैव दाक्षायणादीनामपि गुणानां फलान्वयेनाभेदकत्वसिद्धेः पौनरुक्त्या शङ्कां परिहरन्संज्ञया भेदशङ्कार्थमाद्यसूत्रं व्याचष्टे * युक्तमिति * तृतीयान्तत्वाविशेषे ऽपि निरूढानिरूढत्वविशेषात्सामानाधिकरण्यवैयधिकरण्यविशेषोपपादनार्थम् * न चेत्युक्तम् * कर्मान्तरमित्यनेन चोदनाशब्दश्चोद्यतइति व्युत्पत्त्या कर्मवाचितया व्याख्यातः। साकम्प्रस्थाय्यादीनामयनत्वाभावे ऽपि तुल्यन्यायत्वादुदाहरणत्वविरोधः।

## अगुणाच्च कर्मचोदना ॥ ६ ॥

न चेति भाष्येणाभ्यासेन भेदशङ्कार्थतया एतत्सूत्रं व्याख्यायापि चेत्यनेन गुणोपबन्धे ऽपि दाक्षायणसंक्रमणलक्षणयोर्गुणयोर्यज्ञविशेषणत्वेन समासपदोपात्तयोः निष्कृष्य विध्ययोगादाग्नेयमष्टाकपालं निर्वपेद्रुक्काम इतिवत्फले गुणविशिष्टकर्मविध्यापत्तेः * कर्मान्तरत्वसिद्धिरित्युक्तम् * तत्सूत्रानारूढत्वादयुक्तमाशङ्क्य चशब्दसूचिताभ्युपेत्यवादार्थत्वेनोपपादयितुमाह * विधीति * गुणाननुबन्धे विधिशक्त्युत्तारणस्याशङ्क्यत्वात् गुणोपबन्धे ऽपीत्यध्याहारेण योज्यम्।

## समासे च फले वाक्यम् ॥ ७ ॥

अनुपादेयान्वयात्प्रत्यभिज्ञायाश्च संज्ञान्तरान्वयेन गुणान्तरान्वयेन वा तिरोधानात् प्रकरणान्तरेण भेदशङ्कार्थतयैतत्सूत्रं व्याचष्टे * फलस्येति *

## विकारो वा प्रकरणात् ॥ ८ ॥

प्रयोगान्यथात्वलक्षणो गुणोपनयनादिवाक्येषु[1] विधीयते न कर्मान्तरमिति विकारशब्देन सिद्धान्ते प्रतिज्ञाते दाक्षायणसंक्रमणरूपयोर्गुणयोर्निष्कृष्य विध्ययोगात्तद्विशिष्टकर्मविध्यापत्तेः। कर्मान्तरत्वापरिहारमाशङ्क्य कर्मविध्यभ्युपगमे ऽपि विधिश्रुतेः स्व-

१ गुणायानादिवाक्येष्विति २ पु० पा०

रूपतात्पर्यभावेनाभेदकत्वाच्छ्रुत्यविरोधेन सन्निधानेनाभेदावगत्य-
भिधानार्थतया प्रकरणादिति सूत्रावयवं व्याख्यातुमाह * सत्यपी-
ति * विधिश्रुतेः स्वरूपतात्पर्याभावेनाविरोधमेवोपपादयति *
६०१।१ दध्यादिवच्चेति * दध्यादिवत्कर्मव्यतिरिक्तस्य दाक्षायणादिसंज्ञ-
कस्य गुणस्याप्रसिद्धत्वादविधेयत्वाशङ्कानिरासार्थतयैतमेव सूत्राव-
यवं न चेतिवार्त्तिकावयवोक्तशङ्कानुभाषणपूर्वकं व्याचष्टे * य-
त्त्विति * यथोक्त्याद्रेर्गुणस्यालौकिकस्यापि प्राकरणिकवाक्यान्त-
रालोचनात्सोमयागाभ्यासविशेषरूपतया प्रसिद्धेः फले विध्युपप-
त्तिस्तथा पौर्णमास्यौ यजेत द्वे अमावास्ये सह कुम्भीभिरभिक्रामन्
इत्यादिप्राकरणिकवाक्यान्तरालोचनेनावृत्तिः सहप्रस्थानादिरूपतया
दाक्षायणसाकम्प्रस्थाय्यादिगुणप्रसिद्धेः फले विध्युपपत्तिरित्यर्थः।
एतदेव विवृणोति * एवमिति * वाक्यान्तराच्च साकम्प्रस्थाय्या-
दिशब्दस्य गुणवाचित्वप्रसिद्धौ दध्यादिवद्यागप्रयोगं परिच्छिन्दता
सह प्रस्थानादिना फलं भावयेदिति वैयधिकरण्येन धात्वन्वया-
त्फलान्वयोपपत्तिरित्याह * दध्यादिवच्चेति * नन्वेवमपि दाक्षा-
यणादेः समासाद्यज्ञसामानाधिकरण्यावगतेर्दध्यादिवैलक्षण्यं भवि-
ष्यतीत्याशङ्क्याह * किं चेति * ये ऽपि दाक्षायणादयः सामाना-
धिकरण्येनैव प्रतीयन्ते ते ऽपि दाक्षायणादिना गुणेन यागप्रयोगं
परिच्छिन्दता फलं भावयेदिति वैयधिकरण्येन धात्वन्वयाद्दध्यादे-
रविलक्षणा इत्यप्यर्थसूचनार्थः किं च शब्दः। कथं सामानाधिकर-
ण्येन प्रतीयमानानां दध्याद्यवैलक्षण्यमित्याशङ्क्य यज्ञावस्थाविशेष-
रूपत्वलक्षणयज्ञप्रत्यासत्तिनिमित्तौपचारिकता दाक्षायणेन यजेतेति
सामानाधिकरण्यप्रतीतेरुक्तसिद्धान्तमुपसंहरति * तस्मादिति *
एवं हीति भाष्योक्तं प्रकरणादिति सूत्रावयवव्याख्यातुमनुसन्धत्ते *
एवं चेति * ननु गुणस्य फलवत्त्वं कथं भावनाग्रहात्प्रकरणानुग्रहो-
क्तिरयुक्तेत्याशङ्क्याह * यद्यपीति *

लिङ्गदर्शनाच्च ॥ ९ ॥

शब्दर्षपक्षस्याप्यावश्यकत्वाक्षेपकत्वेन नियमरूपत्वात्तस्य च कर्म-
णस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वादि-
त्यष्टमाधिकरणे ऽतिदेशानिषेधान्न कर्मान्तरे सम्पत्पूरणोपपत्तिरि-
त्याशयः । ननु कर्मान्तरे सम्पत्पूरणानुपपत्तावपि दाक्षायणाख्यक-
र्मान्तरयाजित्वेन निमित्तेन दर्शपूर्णमासयोरेव पञ्चदशवर्षत्वविधा-
नात्त्रिंशत्पूरणोक्तिरुपपत्स्यतइत्याशङ्क्याह * न चेति * कर्मान्त-
रत्वे दाक्षायणयाजित्वस्य दर्शपूर्णमाससम्बन्धाभावेनावर्त्तमानयो-
र्दर्शपूर्णमासयोः पञ्चदशभिस्त्रिंशत्सम्पत्त्ययोगात्पञ्चदशैव वर्षाणि
दर्शपूर्णमासाभ्यां यजेतेति वाक्यार्थो न युज्येतेत्यर्थः । पौर्णमास्यमा-
वास्यासङ्कीर्त्तनस्य लिङ्गत्वमुपपादयति * द्वे हीति *

## गुणात्सञ्ज्ञोपबन्धः ॥ १० ॥

यः सञ्ज्ञोपबन्धो भेदहेतुत्वेनोक्तः सगुणवाचित्वेन कर्मस-
ञ्ज्ञात्वाभावान्न कर्मभेदक इतिसूत्रेणोक्ते पयसा प्रवर्ग्ये चरन्ति पय-
सा दाक्षायणयज्ञइत्यादौ कर्मनामप्रवर्ग्यादिसाहचर्याद्दाक्षायणस्यापि
कर्मनामत्वमाशङ्क्यान्यत्र कर्मसञ्ज्ञात्वे व्युत्पत्तिसंयोगाभावान्न भे-
दकतास्तीत्याह * उत्पत्तीति * कथमुत्पत्तिः संयोगावगतिरित्या- ६०२।१
शङ्क्य पूर्वकर्मानन्वयो ज्ञापकत्वेनोक्तः । प्रस्तूयमानवाच्यर्थैपशब्द-
प्रकारस्य प्रक्रमस्य पूर्वानन्वयहेतोरभावात्पयसा दाक्षायणयज्ञ इत्या-
दिसञ्ज्ञा नोत्पत्तियुक्तेत्यर्थः । गुणवाचिनो ऽपि दाक्षायणादिशब्दस्य
पशुसोमादिशब्दवत् लक्षणया क्वचित्कर्मसञ्ज्ञात्वाविरोधः दाक्षा-
यणयज्ञेन यजेतेत्यादौ तु दाक्षायणादिशब्दो गुणवाचित्वेन सञ्ज्ञा-
त्वाभावादेव न भिनत्तीति सूत्रार्थमनुसन्धत्ते * सम्भवति चेति *
एतदेवोपपादयति * दाक्षायणेति * द्वे हि पौर्णमास्यौ यजेतेति
वाक्यान्तरादावृत्तिवाच्ययनशब्दयोगाच्च दाक्षायणशब्दस्याभ्यास-
वाचित्वप्रतीतेस्तस्य च यज्ञाश्रितत्वादौपचारिकयज्ञशब्दसामाना-
धिकरण्योपपत्तेर्न सञ्ज्ञात्वं कल्पनीयमित्याशयः । दक्षस्येति भाष्यो-
क्तामवयवप्रसिद्धिं विवृणोति * दक्ष इति चेति * ऋत्विक्कर्तृ-
का प्रयोगावृत्तिरयनशब्दवाच्या नर्त्विजामेवावृत्तिरितिसूचनार्थः प्र-
योगशब्दः तथेति भाष्योक्तां साकम्प्रस्थाय्यशब्दस्य गुणवाचितां वि-
वृणोति * साकम्प्रस्थाय्ये ऽपीति * साकम्प्रस्थाय्यसञ्ज्ञके प्रयोगे
सायम्प्रातर्दोहकुम्भीभ्यां सह प्रस्थानात्सहप्रस्थानलक्षणगुणयोगा-
त्साकम्प्रस्थाय्यशब्देनासौ प्रयोगो ऽभिधीयतइत्यर्थः । शक्यते चेदि-
ति भाष्योक्तं गुणादिति सूत्रावयवतात्पर्यं विवृणोति *तस्मादिति*

## समाप्तिरविशिष्टा ॥ ११ ॥

फले वाक्यस्य पर्यवसानाख्या समाप्तिर्यानुपादेयफलान्वयेन कर्मणो विधेयत्वाद्भेदसिद्ध्यर्थमुक्ता सा गुणफलान्वयविधाने ऽप्यविशिष्टत्वेन कर्मविध्यनापादकत्वान्न भेदं साधयतीति सूत्रतात्पर्यमाह * यद्यपीति * अविशिष्टत्वं विवृणोति * यथैव हीति * नन्वविशेषे सति कथं गुणस्यैव विधिर्न कर्मण इति निश्चीयते ऽत आह * इति सन्देह इति * प्रयोजनं पूर्वपक्षे सौर्येष्ट्यादिवद्दर्शपूर्णमासप्रयोगाद् बहिर्दाक्षायणयज्ञप्रयोगः सिद्धान्ते दर्शपूर्णमासयोरेवावृत्त्या प्रयोगः ॥

॥ अथ द्रव्यदेवतायुक्तानां यागान्तरताधिकरणम् ॥ ५ ॥

## संस्कारश्चाप्रकरणे अकर्मशब्दत्वात् ॥ १२ ॥

विषयाविवेकार्थं प्रकरणशब्दव्याख्यार्थमनारभ्येति भाष्यं किंचिदनारभ्येत्यन्वयं दर्शयन् व्याचष्टे * न कस्य चिदपीति * इह संस्कारश्चेति चशब्देन विकारो वेति पूर्वाधिकरणासिद्धान्तसूत्रस्थवाशब्दोक्ता कर्मान्तरत्वानुकर्षणात् यावदुक्तं चेति वाशब्देन तन्निवृत्त्या कर्मान्तरत्वाभिधानात् भेदाभेदविचारो यावदुक्तं यजतिस्त्विति सूत्रावयवाभ्यां च यावच्छ्रुतयजिमत्त्वविचार इति यावदुक्तसूत्रेणाद्यविचारे सिद्धान्तस्य द्वितीये च पूर्वपक्षस्यावृत्त्याभिधानाद्विचारद्वयं कृतं तत्राद्यवत् द्वितीयविचारे ऽपि देवतापदवत्फलपदमनपेक्ष्यापि सिद्धान्तस्य वक्तुं शक्यत्वादकर्मान्तरत्वोपपादितयोक्तसंस्कारत्वनिरासार्थं प्रधानकर्मत्वसूचना यजतिसूत्रे फलग्रहणे न कर्मान्तरत्वसिद्ध्यर्थं यागत्वसिद्ध्यर्थं वेति सूचयितुं पदद्वयमात्रोदाहरणं किं दार्शपौर्णमासिके यदा न प्रकृतिमिति भाष्याभ्यां विचारद्वयं क्रमेणोक्तमप्याद्यविचारे ऽनुवादायोगात्कर्मणो विधेयत्वेन भेदोक्तेर्लक्षणसङ्गतावपि द्रव्यदेवतासंयोगलक्षणस्य गुणस्य पूर्वकर्मसंयोगानर्हत्वाभावेनाभेदकत्वाद् गुणप्रकरणासङ्गतेर्द्वितीयविचारे द्रव्यदेवतासंयोगलक्षणस्य गुणस्य यागरूपे कर्मण्यनिवेशेन तद्भिन्नयागरूपबोधकत्वाद् गुणप्रकरणसङ्गत्युपपत्तेस्तच्छ्रुपतयाद्यस्य सङ्गतिसूचनायैकहेलया विचारद्वयमाह * तत्रेति * यदा कर्मान्तरे तदा किं यावच्छ्रुते निर्वापालम्भनमात्ररूपे यागरूपे वेत्यर्थः । शब्दवाच्यत्वं विना यागस्यान्वयासिद्धेः यजेरपि कल्पनीयत्वसूचनार्थं यजिवाच्यत्वविवक्षया * यजिमती इत्युक्तम् *

र्मान्तरं विधिशब्दस्य गुणसञ्चरितत्वेन कर्मविषयत्वाभावादित्येवं योजयितुमाह * किं तावदिति * अनन्तरसङ्गतिरप्यपवादतयानेन सूचिता । निर्वापालम्भयोश्च संस्कारत्वेन प्रसिद्धत्वात्कर्मान्तरत्वे चान्यत्र विनियुक्तसंस्कार्याप्रतीतेः संस्कारत्वायोगादकर्मान्तरताव-सीयतइति हेत्वन्तरोक्त्यर्थः संस्कारशब्दो प्रकरणे तु नञ्कर्मस्ततो विशेषादिति तृतीयाधिकरणे सुवर्णं हिरण्यं धार्यमित्येतत्तुल्यनया-लम्भनिर्वापयोरपि संस्कारत्वनिषेधनासिद्धत्वं मत्वा न व्याख्यातः निर्वापालम्भोपलक्षणार्थताद्वारा[1] संस्कारशब्दस्य तदुदाहरणेनैव व्याख्या सूचिता । क्व वाक्ये श्रूयमाणो ऽसौ निर्वापालम्भात्मकः संस्कारो गुणविधिरित्यधिकरणविषयभूतालम्भनिर्वापविशेषापेक्षा-यां तदवधारणार्थत्वेनाप्रकरणशब्दं व्याचष्टे * क्व चेति * यद्वा अनारभ्याधीतत्वेनायनवैलक्षण्यात्कथं निर्वापालम्भश्रुत्योर्गुणार्थते-त्याशङ्कानिरासार्थो प्रकरणशब्द इत्यन्यथा व्याचष्टे * अथ वेति * यद्यप्यप्रकरणे श्रूयतइत्येतावता कारणेनालम्भो निर्वापश्चायनवै-लक्षण्येन युक्तस्तथापि निर्वापालम्भाख्येन कर्मणा विधायकस्य गु-णसञ्चरितत्वेनानवरोधाद् गुणार्थैवालम्भनिर्वापश्रुतिरित्यर्थः । यथा सिद्धशकटेष्वालम्भे प्राप्ते कथं श्वैत्यानुष्ठानमित्याशङ्क्य सिद्धाया अपीषायाश्चूर्णादिना श्वेतीकरणं शक्यमित्याह * दर्शीति * व्री-हिनिर्वापे कथमोदनाख्यस्य चरोर्निवेश इत्याशङ्क्य स्थालीवचनं च-रुशब्दमङ्गीकृत्य मुख्यत्वाच्छ्रुतिवृत्तप्रातिपदिकाभ्युपगमेन द्वितीया सप्तम्यर्थे कल्प्या पञ्चशरावमोदनं निर्वपेदित्यादौ वा शरावादिश-ब्दस्य तत्परिमिते प्रयोगदर्शनाच्चरुशब्दस्यापि तत्परिमितलक्षणा-र्थत्वोपपत्तेर्यथा चरुपरिमिता व्रीहयो भवन्ति तथा चत्वारो मुष्टयः कार्या इत्यर्थाभ्युपगमाच्चोत्पत्तिशिष्टचतुर्मुष्टिपरिमाणाविरोधोपपत्तेः परिमितलक्षणार्थतया चरुश्रुत्यर्थस्यापि वाक्यार्थान्वयेनात्यन्ता-बाधात्सप्तम्यर्थकल्पनायां तु द्वितीयार्थात्यन्तबाधापत्तेः प्रातिपदि-कमेव लक्षणया व्याख्येयमिति द्वेधा परिहरति * निर्वापश्चेति * प्राप्ते कर्मण्यनेकार्थविधौ वाक्यभेदापत्तेः फले देवतापदानन्वयमा-शङ्क्याह*भूतीति*ओषधिवनस्पतयो ऽन्नं प्राणभृतो ऽन्नादमिति प्रा-णभृतां च वनस्पतीन् प्रति भोक्तृत्वे श्रुते भोक्तृत्वरूपदेवतात्वावग-मात्प्राणाख्यस्य वायोर्देवतात्वमुपचर्य वनस्पतीनां वायुदेवत्यत्वात्त-त्प्रभवत्वेनेषाया वायुदेवत्यत्वानुवाद इत्यर्थः । वायुगुणस्पर्शवत्त्वाद्वा वनस्पतीनां वायुदेवत्यताभिप्रेत्य पूर्वपक्षमुपसंहरति*तस्मादिति*

१ उपलक्षणार्थत्वात् संस्कारशब्दस्येति २ पु० पा० ।

## यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥

यावदुक्तशब्देन प्रकृत्यनपेक्षोक्तेः प्राकृतालम्भनिर्वापविषयगुणविधित्वनिरासार्थतया न चेति भाष्येण सूत्रपूर्वार्द्धं व्याख्यायोत्तरार्द्धव्याख्यार्थं यदीत्यादिचरुश्चेत्यन्तं भाष्यं तात्पर्यतो व्याचष्टे * यदि हीति * यद्यालम्भनिर्वापाविति यदि शब्दं हेत्वर्थे ऽभ्युपेत्य यस्मादालम्भनिर्वापौ विधीयेते न तु प्राकृतौ तौ विहिताविति ६०४।२
भाष्यावयवेन कर्मणः श्रुतिमूलत्वादिति सूत्रावयवं व्याख्याय गुणसञ्चरितत्वाद्विध्योः कर्मविषयता न युक्तेत्याशङ्क्योत्सर्गतः समानपदोपादानेनालम्भनिर्वापयोर्विधेयत्वावगमाद्यदि तौ प्रत्यभिज्ञानाद्विधेयत्वं न सहेते ततो यावालम्भनिर्वापौ कर्त्तव्यावित्येवं प्राकृतौ लक्ष्येते ततश्च तौ लक्षयित्वा श्वेतश्चरुश्च गुणो विधातव्यो भवति प्रत्यभिज्ञानाभावात्त्वत्र तौ विधेयावेवेत्यध्याहारेण यदि न विधीयेत इत्यादिभाष्यं व्याख्येयमित्याशयः । प्राप्ते कर्मणि गुणफलरूपानेकार्थविधौ वाक्यभेदापत्तेरपि गुणविधिता न युक्तेत्यभिधानार्थं तौ चेत्यादिभिद्येतेत्यन्ते भाष्यमुत्तरसूत्रस्थफलशब्दसूचितार्थप्रतिपादकं व्याख्यातुमाह*वायव्येति*तेन विनापि वाक्यभेदोपपत्तिरुपेक्षाहेतुः । कर्मान्तरत्वे तु वाक्यभेदो नास्तीति व्यतिरेकमाह*गुणेति* अथ वेत्यादिभाष्यं वैदिकत्वसाम्येन बुद्धिस्थत्वस्य वैदिकालम्भनिर्वापानुवादहेतुतया पूर्वपक्षिणेष्टत्वेन विधायकस्य तल्लक्षणार्थतयानिष्टत्वादापाद्योत्तरार्थमिति सूचयितुमुपेक्ष्य तावद्व्याख्याते ऽर्थे सूत्रोत्तरार्द्धं योजयति * तेनेति * यावदुक्तमिति भाष्येणैतदेव सूत्रमावृत्त्योत्तरविचारपूर्वपक्षे योजितं तदनुसन्धत्ते * अथ वेति * ननु फलान्वयेनेह प्रधानकर्मणोर्विधेयत्वावसायान्निर्वापालम्भयोश्च संस्कारत्वप्रसिद्धेः प्राधान्यायोगात्प्राधान्यसिद्ध्यर्थं तत्र्योग्यं यज्यर्थाध्यवसानं भविष्यतीत्याशङ्क्याह * न चेति * अनेन चोत्तरसूत्रस्थस्य फलशब्दस्य संस्कारनिरासार्थतापि सूचिता । ननु प्राधान्यस्य यज्यर्थाकल्पकत्वे ऽपि वायव्यादिशब्दोक्तस्य देवतान्वयस्य यागं विनानुपपत्तेस्तत्कल्पकत्वं भविष्यतीत्याशङ्क्याह*वायव्यादीति * आलम्भस्य स्पर्शवाचकविषयत्वात्सर्वेषामालभ्यद्रव्याणां स्पर्शगुणकवायुदेवत्यत्वे सवितुः प्रसवे निर्वपामीति च मन्त्रलिङ्गात्सर्वेषां निर्वापद्रव्याणां सवित्राख्यसूर्यदेवत्यता वक्तुं शक्येत्याशयः । एवं त्वग्नीषोमीयं पशुमालभेतेत्यादावपि वायव्यत्वापत्तेः सारस्वतं चरुं निर्वपेदित्यादौ च सौर्यत्वाग्नीषोमीयत्वा-

द्यनुवादायोगेनाव्यापकत्वादशक्तेरपरितोषात्केन चिद्यजमानेन वा- यवे सङ्कल्पितस्य श्वेतस्यालम्भः सूर्याय च सङ्कल्पितस्य चरोर्निर्वा- पः फलार्थं विधीयतइत्यन्यथा परिहरति * अथ वेति * आग्नेय- मुपाकरोतीत्यादीनामपि यजिवाच्यकर्मवाचित्वान्नैव व्युत्पाद्येति सूच- नायालम्भादिभिरिति बहुवचनम्। ननु देवतान्वयस्यापि श्वेत्यादिव- द्विधेयत्वपरिग्रहे ऽतिगौरवं स्यादित्याशङ्क्याह * विशिष्टेति * परकीयस्य द्रव्यस्य क्रतौ विनियुक्तस्यान्यार्थे कर्मणि विनियोगानौ- चित्येनात्राप्यपरितोषाद्वाय्वाद्युपदेशेन श्वेतादेर्भूत्याद्यर्थमालम्भा- दिकार्यमिति पूर्वपक्षिणो ऽभिमतं परिहारमाह * अथ वेति * ननु
६०५।१ यागं विना तद्भिन्नोक्तं देवतात्वं न सिद्ध्येदित्याशङ्क्याह * न चाव- श्यमिति * यागं विना देवतात्वानुपपत्तेरेतदधिकरणव्युत्पाद्यत्वा- दुद्देश्यत्वमात्रेण देवतात्वमत्रत्यः पूर्वपक्षी मन्यतइत्याशयः । एत- देवोपसंहरति * तस्मादिति * यजमानान्तरसङ्कल्पितव्यावृत्त्य- र्थम् * यत्किं चिदित्युक्तम् * इति वाक्यार्थः यावदुक्तनोदना- नुसारादवसीयतइत्यध्याहारेणेतिकरणो योज्यः। उपेक्षितं भाष्यं पूर्वपक्षभाष्यसङ्गतिपूर्वं व्याख्यातुमवतारयति * गुणेति * फलप- दत्यागाभ्युपगमाद् गुणफलरूपानेकार्थान्वयाविधिलक्षणवाक्याभेदा- भावे ऽपि सकृदुच्चरितस्य विधायकस्य विध्यनुवादवैरूप्यलक्षण- वाक्यभेदापत्तिरपिशब्देन सूचिता।नन्वनारभ्यवादानां प्रकृत्यर्थत्व- स्य तृतीये वक्ष्यमाणत्वाद्विहितत्वोपलक्षणं विनापि प्रकृत्यर्थत्वसि- द्धेर्विधायकस्योपलक्षणोपक्षीणत्वादाविधायकत्वोक्तिरयुक्तेत्याशङ्क्या- ह* तस्येति * यदि तु य आलम्भः कार्यः स श्वेतविशिष्टः कार्य इत्युपलक्षणार्थत्वं विधानार्थत्वं चेष्यते ततो वैरूप्यं स्यादित्यभि- धानार्थमथेति भाष्यं व्याचष्टे * न हीति* यावतो ऽश्वान्प्रतिगृह्णी- यात्तावतो वारुणांश्चतुःकपालान्निर्वपेदित्यत्र प्रतिगृह्णीयादित्यस्य विहितदानलक्षणार्थत्वं निर्वपेदित्यस्य च यागविद्ध्यर्थत्वं भेदोपा- दानाद्युक्तमिति वैलक्षण्यसूचनार्थं मिथःशब्दव्याख्यानार्थम् * सकृदित्युक्तम् * अथ धात्वर्थ इति भाष्येण धात्वर्थमात्रानुवादे ऽपि वैदिकत्वसामान्येन बुद्धिस्थत्वाद्विहितविषयत्वावगमे सत्यना- रभ्यवादत्वात्प्रकृत्यर्थत्वसिद्धिरित्याशङ्क्य तथेत्यनेन यदाहवनीये जुहोतीत्यत्र होमस्य द्रव्यदेवतासाध्यत्वाद्देवतान्वयस्य चालौकिक- त्वेन विध्येकगम्यत्वाद् द्रव्यदेवतयोश्चेहानुपदेशात्प्रकृतिविशेषान- वगतेश्चातिदेशतो ऽप्यलाभादरूपत्वेन विधातुमशक्यत्वादनुवाद्य- त्वावगतेरदृष्टार्थत्वेनाचालौकिकत्वाद् दूरस्थवैदिकहोमानुवादो यु-

कः। आलम्भस्य तु लोकवेदसाधारण्याल्लौकिके ऽपि च भोजनादौ वैदिकप्राङ्मुखत्वादिनियमदर्शनात्सामान्यश्रुत्या चालम्भमात्रस्य बुद्धिस्थस्यावैदिकत्वमात्रेण व्यावृत्त्यनुपपत्तेर्वैदिकाविषयत्वानवगमाच्च तद्वशेन प्रकृत्यर्थत्वासिद्धिरिति परिहृतं तद्व्याचष्टे * केवलेति * आनर्थक्यपरिहारार्थं लौकिकव्यावृत्तिर्भविष्यतीत्याशङ्कानिरासार्थत्वे प्रत्ययार्थ इति भाष्यं प्रत्ययार्थानुवादपक्षे एव प्राकृतालम्भानुवादो लभ्यते नान्यथेत्येवं साधारणत्वेन व्याख्यातुमाह * न चेति * अत इत्युपसंहारभाष्यं व्याचष्टे * तस्मादिति *

यजातिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥

यावदुक्तसूत्रस्याद्यपक्षनिरासार्थत्वात्तत्रैव प्राप्ते कर्मणि गुणफलान्वयविधौ वाक्यभेदसूचनार्थं संस्कारत्वनिरासस्सूचनार्थं च फलपदे फलसंयोगाच्चेति प्रयोक्तव्ये द्रव्यदेवतयोर्यागकर्मणि सति सम्बन्धोपपत्तेः फलस्य च कर्मान्तरे प्रधानभूते सति सम्बन्धोपपत्तेर्यागो ऽयमपूर्वः प्रधानभूतो विधीयते न तु प्रकृते कर्मणि संस्कारके गुणविधिरित्यर्थत्रयस्य लघुना सूत्रेणोक्तिसम्भवे सूत्रगौरवस्यानाश्रयणीयत्वादिह सूत्रे फलपदं प्रयुक्तं फलसंयोगमात्रेण वाक्यभेदानापत्तेर्द्रव्यफलसंयोगस्य वाक्यभेदहेतुत्वसूचनार्थं मध्ये फलपदप्रयोगः सूक्तादेर्देवतासंयोगे ऽपि यागाकल्पनात् द्रव्यस्यैव देवतासंयोगो यागकल्पको नान्यस्येति सूचनार्थं फलशब्दव्यवहितस्यापि द्रव्यशब्दस्य भोक्तृशब्दान्वयो विवक्षितः देवतायाश्च भोक्तृत्वाभावे ऽपि स्तुतिभोक्तृलक्षणस्य देवतात्वस्य यागकल्पकत्वात्तद्व्यावृत्त्या त्यज्यमानहविरुद्देश्यत्वात्मकहविर्भोक्तृलक्षणस्य देवतात्वस्य यागकल्पकत्वसूचनार्थं भोक्तृशब्दः। अत्र भाष्यकृता द्रव्येति भाष्येण द्रव्यभोक्तृसंयोगं व्याख्याय फलसंयोगव्याख्यार्थम् * भूतीत्युक्तम् * ततस्तौ चेति भाष्येणानागतावेक्षणेन प्रागेव व्याख्यातत्वात्पुनरुक्तमाशङ्क्य दृष्टान्ततया व्याचष्टे * यथेति * समानपदोपात्तालम्भत्यागेन पदान्तरोपात्तद्रव्यदेवतान्वयविधानं न युक्तमित्याशयेन कथमिति भाष्येण पृष्ट्वा यदि हीत्यादिना प्रमादसमाम्नाय इति गम्येतेत्यन्तेन द्रव्यदेवतान्वयविधिरुपपादितस्तत्तात्पर्यतो व्याचष्टे * विधिस्तावदिति * नन्विति भाष्येण द्रव्यस्य देवतान्वयविधावपि धात्वर्थान्वयस्यापि प्रतीतस्य

स्यागायोगाद्विधेयत्वावश्यम्भावेन वाक्यभेदमाशङ्क्य न द्रव्यस्य देवतया धात्वर्थेन चान्वयो विधेयो येन वाक्यभेदः स्यात्किं तु भावनैव द्रव्यदेवताभ्यां धात्वर्थेन च विशिष्टा विधेया तस्याश्च श्रुत्या धात्वर्थविशिष्टत्वावगतेः पदान्तरसमभिव्याहाराद् द्रव्यदेवतासम्बन्धविषयत्वावगतेरनेककारकान्वयसहत्वाच्च सम्बन्धश्चेति सम्बन्धशक्ताया भावनाया वैशिष्ट्यं विनानुष्ठेयत्वायोगात्तद्विशिष्टाया एव बहुपदप्रतिपाद्यत्वेनैकपदमात्रेण नैराकाङ्क्ष्यायोगात् वाक्यभेदानापत्तिरित्यभिधानार्थं नेतीत्याद्युपपन्नमेकवाक्यत्वमित्यन्तं भाष्यमुपेक्ष्य एतेषामिति सूत्रावयवव्याख्यानार्थं न चेति भाष्यं
६०६।१ व्याचष्टे * स चेति * त्यागं विनाप्युद्देशमात्रेण देवतान्वयोपपत्तेर्नान्यथानुपपत्त्या यागकल्पनेत्याशङ्कां नावश्यामिति पूर्वपक्षवार्त्तिकोक्तां परिहरति * न हीति * ब्राह्मणोद्देशेन पक्वे ऽप्यन्ने तदुद्देशेन त्यागं विना ब्राह्मणसम्बन्धाप्रसिद्धेरव्याप्रियमाणे ऽपि च तुभ्यमिदं न ममेति तदुद्देशेन त्यागे कृते तत्सम्बन्धप्रसिद्धेरन्वयव्यतिरेकाभ्यामुद्देशत्यागलक्षणैव क्रिया सम्बन्धापादिकावसीयत इत्याशयः । एतदेव विवृणोति * यदीति * यदपि केन चिद्यजमाने वाय्वाद्युद्देशेन त्यक्तस्यालम्भानुष्ठानं शङ्कितं तदप्यालम्भादेः फलान्वयेन प्रधानकर्मत्वावसायात्तदन्वयिनो वाय्वादिपदस्योपादेयार्थत्वावगतेर्देवतान्वयस्यानुष्ठानापाद्यत्वावगमादयुक्तमित्याह * न चेति * एतदेवोपसंहरति * तेनेति * तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे * अतश्चेति * कथं देवतात्वस्यानुष्ठानं सम्पाद्यते इत्यपेक्षायामाह * तथा चेति* द्रव्यविषया त्यागक्रिया देवताविषया चोद्देशक्रिया तयोः समुदायद्वन्द्वैकवद्भावानिर्दिष्टं यजतिचोदनानुष्ठापयति देवतोद्देशद्रव्यत्यागसमुदाये तस्या लोके कृतार्थत्वप्रसिद्धेरिति चतुर्थाध्यायसूत्रार्थस्य टुप्टीकायां स्वयं वक्ष्यमाणत्वाद्देवतात्वस्य यूपादिवत्प्रागसिद्धेस्त्यज्यमानं द्रव्यं प्रत्युद्देशेनाग्न्यादिदेवतां कृत्वा द्रव्यं त्यजेदिति देवतोद्देशपूर्वकं द्रव्यत्यागात्मकयागप्रयोगस्वरूपकथनार्थेनानेन सूत्रेणानुष्ठानापाद्यता देवतात्वस्योक्तेत्याशयः । लक्षणार्थत्वस्य बृहन्मध्यमटीकयोर्टुप्टीकायां च निषेधात्प्रयोगलक्षणाभिप्रायस्तत्रत्यभाष्ये लक्षणशब्द इति सूचनार्थम् *लक्षणं करिष्यतीत्युक्तम् * विधिशब्दादरो ऽप्यनुष्ठानापाद्यत्वहेतुक एवान्यथा पर्यायेणाप्यग्न्याद्युद्देशेन द्रव्यस्याग्न्यादिदेवत्वसिद्धेस्तावन्मात्रस्य चाग्नेयादिशास्त्रार्थत्वात्तदादरो निष्प्रमाणकः स्यात्। ननु द्रव्यदेवताविशिष्टयागविध्यभ्यु-

पगमे ऽपि श्रुतस्यालम्भादेरप्राप्तत्वेनानुवादायोगात्तस्यापि विधेयत्वावगतेर्धातुसम्बन्धाधिकारविहितप्रत्ययाभावाच्च क्रियाद्वयान्वयाप्रतीतेरनेकार्थविधिलक्षणो वाक्यभेदः स्यादित्याशङ्क्याह *तत्श्चेति * कथं तर्हि भाष्यकृता पुरुषप्रयत्नस्यालम्भविशिष्टतायाः समानपदोपादानलक्षणया श्रुत्यावगतेर्वाक्याच्च द्रव्यदेवताविषयत्वावगतेर्वाक्यभेदं विनापि क्रियाद्वयविध्युपपत्तिरुक्तेत्याशङ्क्याह * तत्रेति * सकृदुच्चारितस्य विधायकस्यानेकार्थविधिशक्त्यभ्युपगमादावृत्तिलक्षणवाक्यभेदपरिहारे ऽप्येकस्यानेकार्थे तात्पर्यात् गौरवेण लक्षणवाक्यभेदो ऽपरिहार्य इति सूचनार्थो गौरवशब्दः ।

## लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गत्वमुपपादयति * सौमारौद्रमिति * यजतिशब्देन विनाप्युक्ते गुणविधिपरे वाक्ये यजतिनानुवादः सौमारौद्रवाक्ये यागविध्यभावे न युज्यतइत्याशयः । ननु पशुसोमाधिकरणव्युत्पादितयजिवाच्यकर्मविधावप्यग्नीषोमीयवाक्यन्यायेनेहापि यजिवाच्यकर्मविधायित्वसिद्धेः पुनरुक्तमेतदधिकरणमित्याशङ्क्याह * अग्नीषोमीये ऽपि चेति *

## विशये प्रायदर्शनात् ॥ १६ ॥

अपरिपूर्णार्थस्यापि सूत्रस्य पटुव्याख्यानात्परिपूर्णार्थत्वोपपत्तेरगमकत्वाशङ्का न युक्तेत्याशङ्क्य सूत्रार्थस्य वृत्तिकारादिभिर्व्याख्येयत्वात्सूत्रानुक्तो ऽर्थो वृत्तिकारादिभिर्व्याख्यातो ऽप्यग्राह्य इति ये वदन्ति तान्प्रत्यस्य सूत्रस्यागमकतापत्तिरुच्यतइत्याह * सूत्रेष्वेव हीति * वृत्तिवार्त्तिकयोर्यत्सर्वमुच्यते तत्सर्वं सूत्रारूढं चेत्ततो ग्राह्यं नान्यथेति श्लोकार्थः किमुच्यतइत्यपेक्षायामाह * न किं चिदिति * विषयशब्देनोदाहरणसाध्ययोर्द्वयोरपि परिग्रहान्न विजानीम इत्यन्तं भाष्यमनेन व्याख्यातं पूर्वाधिकरणस्थसंस्कारशब्दानुषङ्गेण वत्सालम्भस्योदाहरणत्वज्ञानं यावदुक्तशब्दानुषङ्गेण च साध्यज्ञानं भविष्यतीत्याशङ्क्य वत्सालम्भस्याग्निहोत्रप्रकरणाधीतत्वेनानारभ्याधीतसंस्कारविषयेण संस्कारशब्देनोपादानायोगाद्यजिमत्त्वसाध्यव्यवहितस्य च यावदुक्तत्वसाध्यस्यानुषङ्गायोगात्तत्परिहारार्थं प्रकृतमिति भाष्यमुपलक्षणार्थत्वेन व्याचष्टे * न चेति * तदेतदित्यागमकत्वोपसंहारभाष्यमगमकत्वोपन्यासस्य वृत्तिकाराद्युक्तार्थाग्राह्यत्वशङ्कानिवृत्त्यर्थत्वाविवरणार्थं सूत्रानुक्तमपि प्रतिज्ञाद्य-

वश्यं वृत्तिकारादिभिर्वाच्यमित्यभिधानार्थेनैतावादिति भाष्येण सह व्याचष्टे *तस्मादिति*श्रुतार्थापत्त्या प्रतिज्ञाद्यध्याहारस्य सूत्रकाराभिप्रेततावसेयितइत्याशयः।नन्वध्याहारादिभिः सूत्रव्याख्या(जिज्ञासा सूत्रारम्भभाष्ये)शास्त्रादौ निषिद्धेत्याशङ्क्याह*सत्येव चेति* ननु सामान्यतः किंचित्प्रतिज्ञाद्यध्याहार्यमित्यर्थापत्त्यावगमे सूत्रकाराभिप्रेतस्य तद्विशेषस्य निर्द्धारयितुमशक्यत्वादुत्सूत्रत्वंस्यादित्याशङ्कानिरासार्थं वृत्तिकारेति भाष्यं व्याचष्टे*सर्वथेति*युक्तिगम्ये ऽर्थे पुरुषविशेषस्यानादरणीयत्वाद्युक्तियुक्तं यद्वृत्तिकारादिभिरुक्तं तत्सूत्रकारानुपात्तत्वान्न ग्राह्यमित्यसदाग्रहो न कार्य इत्याशयः । एवमेव वार्त्तिककाराद्युक्तमपि वृत्तिकारानुपात्तत्वमात्रेणाग्राह्यं न भवतीत्यतिदेशार्थमिदम् * वृत्तिकारणेत्युक्तम् * सूत्रकारानुक्तस्याप्यर्थस्य वृत्तिकाराद्युक्तस्य ग्राह्यत्वप्रदर्शनार्थेतत्भाष्यमित्यस्माभिर्यदुक्तं तत्पूर्वे ऽपि व्याख्यातारो वर्णयन्ति न त्वस्माभिः स्वोत्प्रेक्षामात्रेणोक्तमित्याह * एतत्प्रदर्शनार्थमिति * वर्णयतीत्येकवचनपाठे ऽपि एतत्प्रदर्शनार्थं भाष्यकृत्सूत्रस्यागमवत्त्वं वृत्तिकारव्याख्यानं च वर्णयतीत्युपसंहारार्थत्वेन व्याख्येयम् । वृत्तिकारोक्तोदाहरणसन्देहप्रदर्शनार्थमत्रेति भाष्यं व्याचष्टे * तदिति * न केवलं वृत्तिकारवचनादिमावुदाहरणसन्देहौ ज्ञायेते किं तु पूषासीति वत्समुपासृजतीति वत्सालम्भे पूषशब्दवन्मन्त्रविधानाद्यागकल्पकदेवतासंयोगसन्देहवाचिविषयशब्दपर्यालोचनयापीत्यभिधानार्थेनोपपद्यते चेति भाष्येणोक्तस्य युक्तियुक्तत्वस्य सूचनार्थः किलशब्दः । ननु वृत्तिकारेण द्वेधा सन्देहस्योपन्यस्तत्वे कस्मात् भाष्यकृता ऽग्नीषोमीयवत्सविधिपक्षः सन्देहकाले नोपन्यस्त इत्याशङ्क्यातितुच्छत्वमनुपन्यासकारणमाह * तत्रेति * लिङः प्राकृताग्नीषोमीयपश्वालम्भविशेषणत्वाभ्युपगमे विधायकाभावापत्तेरित्याशयः । नन्वेवं सति यागकल्पकदेवतासंयोगाभावेन यजिमदभिधानपक्षो ऽपि तुच्छत्वान्नोपन्यसनीय इत्याशङ्क्याह * तेनैव त्विति * सूक्तवाकन्यायेन पूषासीति मन्त्रस्य श्रुत्या करणत्वेन विनियुक्तस्य देवताकल्पनद्वारा यागकल्पकत्वबुद्धिर्भविष्यतीति तेनैकद्रव्यदेवतासंयोगप्रक्रमेणेति प्रकारवाचिना प्रक्रमशब्देनोक्तं तत्र चेति भाष्येण वृत्तिकारोक्तं पूर्वपक्षमुपन्यस्य समीपधारणवाचिनोपासृजतिना तदाक्षिप्तालम्भलक्षणहेत्वभावात्सन्निहितवाच्यसिशब्दसामानाधिकरण्याच्च पूषशब्दस्य पुष्टियोगेन वत्सवाचित्वप्रतीतेर्वै-

१ श्रयं पा० २ पु० ना० ।

वताकल्पकत्वाभावाद्धेत्वभावमाशङ्क्येदं त्वित्यनेन देवतासंयोगप्रत्युदाहरणार्थत्वात्सूत्रस्य न पूर्वपक्षोपपादने यतितव्यमित्युक्ते पूर्वपक्षोपन्यासस्तर्ह्यनर्थक इत्याशङ्क्य तथापीत्यादिनोपन्यस्यति स्मेत्यन्तेन मन्दाशङ्कानिवृत्त्यर्थतोपन्यासस्योक्ता तत्सर्वं व्याचष्टे * तत्रेति * निरासमात्रं तर्हि कार्यं नोपन्यास इत्याशङ्कानिरासार्थत्वेनातस्तामिति भाष्यावयवं व्याचष्टे * यो नामेति * सामान्यतो दृष्टोक्त्यर्थमालभतिरितिभाष्यम्।अग्नीषोमीयं पशुमालभेतेत्यादिवाक्यस्थस्याप्यालभतेर्यजिवाच्यकर्मवाचित्वाभावात्साध्यविकलदृष्टान्तत्वापत्तेरयुक्तमाशङ्क्य द्वेधा समाधत्ते * तत्रेति * धातूनामनेकार्थत्वात्स्त्रीसंयुक्तस्य गमेर्मैथुनवाचित्ववत्स्पर्शवाचिनोऽप्यालभतेः प्राणिसंयुक्तस्य यागवाचित्वकल्पना न विरुद्धेति यथाश्रुतभाष्यसमर्थनार्थं केचिदाहुः स्त्रियं गच्छेदित्यत्र मैथुनप्रत्यायकहेत्वन्तराभावाद् गमेरेव तद्वाचित्वकल्पनं युक्तं यागप्रतीतेस्तु द्रव्यदेवतान्वयानुपपत्त्यैव सम्भवात्तदन्वयसिद्ध्यै च तद्वाचिनो यजेरप्यन्यथानुपपत्त्यैव कल्पनोपपत्तेर्लोके चालभतेर्यागे प्रयोगादर्शनाद्भाष्यस्य चाभिदधातेर्वेत्तेश्च लक्षणया ज्ञानवाचित्वोपपत्तेर्नालभतेर्यागवाचित्वकल्पना युक्तेति स्वमतम्।आलभतेः पूर्वाधिकरणे यागानुमापकत्वानभिधानात्प्राणिसंयुक्तो यत्रालभतिस्तत्र यागानुमानमिति व्याप्तेर्यज्यनुमानानुमानत्वेनेत्यनुमानशब्दावृत्त्या व्याख्येयम्।तथैवेत्यालभतिना यागानुमानातिदेशाद्यागानुमानहेतुः पूषासीति मन्त्रवर्णकल्पदेवतान्वयः सूचितः।कीदृगनेन सामान्यतो दृष्टेन पूर्वपक्षः कृत इत्यपेक्षायामाह * तत्रेति * उपपदाक्रान्तशक्तित्वेन विधायकस्य कर्मविधायित्वायोगाद्धातोरनुवादार्थत्वावगतेः कुतोऽनुवाद्यप्राप्तिरित्यपेक्षायां प्राणिसंयुक्तत्वेनाग्नीषोमीयालभतेर्दूरस्थस्यापि बुद्धिस्थत्वात्तस्य च देवतान्वयद्वारा यजिवाच्यकर्मज्ञापकत्वदर्शनाद्वत्समालभेतेत्यालभतिरग्नीषोमीयवाक्यविहितस्य यजिवाच्यकर्मणोऽनुवादो वत्सविध्यर्थ इति पूर्वपक्षान्तरोक्त्यर्थमथ वेति भाष्यं व्याचष्टे * प्राप्ते वेति * द्विविधं पूर्वपक्षमुपसंहरति * इतीति * पूषासीति मन्त्रो वत्सालम्भे विनियुज्यते न वेति सन्देहात्पूषशब्दो देवतावाची न वेति सन्देहाच्च वत्सालम्भे देवतासंयोगसन्देहो योग्यत्वाद्व्यवहितानुषक्तथावदुक्तस्वरूपसाध्यसिद्ध्यै विषयशब्देन हेतुतयोक्त इत्येवं सूत्रव्याख्यां सूचयन् सिद्धान्तमाह * सिद्धान्तास्त्विति * नालभतिना यागाभिधानमभिप्रेत्य पूर्वाधिकरणे यागः कल्पित इत्युक्ते कस्मादित्यपेक्षायां यागाभिधाने तस्य लोके शक्त्यदर्शनादिति हेतुगर्भं विशेषणं सामा-

न्यतो . इष्टस्याभासत्वे ऽध्वर्युमालभेतेत्यादौ व्यभिचारो हेतुगर्भे वि- शेषणं देवतासम्बन्धाभावादिति भाष्येण विषयशब्दस्य मृदूक्त्या देवतान्वयाभावोक्त्यर्थता सूचितेति * न चेत्यनेनोक्तम् * आल- म्भमात्रसंस्कार इति भाष्यसंस्कारशब्देन संस्कारश्चाप्रकरणइति सं- स्कारशब्दस्योदाहरणोक्तये ऽनुषङ्गः सूचित * इतीहशब्देनोक्तम् * आलम्भमात्रशब्देन च यावदुक्तं वेति यावदुक्तशब्दस्य प्रतिज्ञोक्तये ऽनुषङ्गः सूचित इति * यावदुक्तमित्यनेनोक्तम् * प्रायदर्शनस्यं लि- ङ्गमात्रत्वं भाष्योक्तं विवृणोति * तथा चेति * अभिप्रायशब्दस्या- भीष्टत्वे प्रयोगात्प्रायशब्दस्य इष्टप्रयोजनवाचित्वमङ्गीकृत्य प्रायद- र्शनशब्दस्य इष्टार्थत्वलक्षणहेतूक्त्यर्थत्वं इष्टार्थत्वाच्चेति भाष्योक्तं विवृणोति * इष्टार्थत्वं चेति * यथा चोपपत्स्यतइत्यनुषङ्गेण योज्यम् ।

## अर्थवादोपपत्तेश्च ॥ १७ ॥

अर्थवादश्चेत्याद्यन्वयतः सूत्रव्याख्यार्थं भाष्यं व्याचष्टे * वत्सेति * व्यतिरेकतो व्याख्यार्थमर्थंति भाष्यं व्याचष्टे * मार- णार्थे त्विति * कथं वत्सालम्भस्य गोप्रस्नवनार्थतेत्याशङ्क्याह * इतरत्र पुनरिति * चाटुकरणात्प्राक् गोर्वत्सस्नेहानुत्पत्तौ चाटुकर- णे प्रवृत्त्ययोगादुत्पत्तौ वा चाटुकरणस्य स्नेहोत्पादकत्वायोगात्पू- र्वापरितोषेण पक्षान्तरोक्तिः स्नेहातिशयोत्पादकत्वोपपत्तेस्तु पूर्वो ऽपि पक्षो युक्त एव साध्यहेतुयोजनार्थं तस्मादपीति भाष्यं व्या- चष्टे * तस्मादपीति *

॥ नैवारचरोराधानार्थताधिकरणम् ॥ ७ ॥

## संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

आर्थवादिकस्य देवतान्वयस्य विध्युद्देशानाकाङ्क्षितत्वेना- ग्रहणात्पूर्ववदिहापि यागकल्पकदेवतान्वयाभावेन यावदुक्तत्वसि- द्धेरनारभ्यमिदमधिकरणमित्याशङ्क्याह * पूर्वमिति * निर्वा- पस्येहाश्रुतत्वात्तत्प्रत्युदाहरणता न युक्तेत्याशङ्क्य चरोर्यागार्थत्वे ऽतिदेशप्राप्तस्य निर्वापस्यापि चरुद्वारा यागार्थत्वापत्तेश्चरोर्यागार्थ- त्वनिरासे निर्वापस्यापि यागार्थता निरस्ता भवतीत्युक्ते यजत्यधिकरणे द्रव्यदेवतासंयोगयुक्तवाक्यमात्रस्योदाहरणत्वा- दन्यथाग्नेयं सवनीयमुपाकरोतीत्यादौ यागविध्यासिद्धेर्निर्वापा- लम्भयोरनुदाहरणत्वात्तत्प्रत्युदाहरणानुपपत्तेरपरितोषादधिकाश-

ङ्गारम्भहेतुतयोक्ता। नन्वर्थवादोक्ताया अपि देवताया विध्युद्देशेनानाकाङ्क्षितत्वाद्ग्रहणानुपपत्तेरयुक्ता देवताशङ्केत्याशङ्क्य देवताकाङ्क्षासिद्ध्यर्थं चरोर्यागार्थत्वमुपपादयति *तत्रेति* चर्वादेर्हविःशब्दवाच्यत्वप्रसिद्धेर्जुहोतेश्चार्चिशुचिहुसृपिछदिछृदिभ्य इसिरितीसि प्रत्यये कृते हविःशब्दव्युत्पत्तेः। सौर्यं चरुमित्यादौ च यागार्थत्वदर्शनाद्धविःशब्दसामान्यतोदृष्टाभ्यां यागार्थतावसीयतइत्याशयः। यजिश्रुतिदेवतान्वयनैरपेक्ष्यसूचनायौत्पत्तिकशब्देन स्वाभाविकतोक्ता चरौ हीति पूर्वपक्षभाष्यं चानेन व्याख्यातं यथेष्टविनियोगार्थत्वे च चरोः स्वतस्तत्र प्रवृत्तिसिद्धेर्विध्यानर्थक्यप्रसङ्गाद्यथेष्टविनियोज्यत्वलक्षणस्वत्वत्यागस्यावश्यकत्वावगतेस्तस्य च देवतोद्देशपूर्वकद्रव्यत्यागात्मकयागैकदेशत्वाच्चरुकैमर्थ्याकाङ्क्षायामेकदेशेन बुद्धिस्थीकृतस्य यागस्य प्रयोजनत्वप्रतीतिः शीघ्रं भवतीत्येतदाशयं वा चरौ हीति भाष्यमिति सूचयितुमाह *सर्वथा चेति* चरोरुपधानार्थत्वावगत्या नैराकाङ्क्ष्याद्यागार्थत्वकल्पना न युक्तेत्याशङ्कानिरासार्थं चैतद्भाष्यं नोपधानं कार्यं किं तु प्रतिपत्तिस्तस्याश्चान्यत्रोपयोगं विनानुपपत्तेरुपधानान्वयस्य कैमर्थ्याकाङ्क्षानुकूलत्वात्प्रसिद्धेर्यागार्थत्वकल्पनोचितेत्येवं व्याख्येयमिति सूचयितुमाह *चरुमिति* यागार्थत्वसम्भावनायामपि वचनशब्दोक्ते विध्युद्देशे देवतासम्बन्धाभावाद्यज्यश्रवणाच्च यागार्थत्वनिश्चयानुपपत्तेर्देवतानाकाङ्क्षत्वादर्थवादस्य च विध्युद्देशानाकाङ्क्षितदेवतासमर्पणाशक्तेर्न यागार्थता युक्तेत्युच्यतइति भाष्येणाशङ्क्य तदुच्यतइत्यनेनानर्थक्यपरिहारायानाकाङ्क्षितापि देवता विध्युद्देशेन *नान्वीयतइत्युक्तम्* तद्व्याचष्टे *वाक्यशेषे चेति* विधिपर्यवसानायैकदेवत्यत्वौषधद्रव्यत्वसामान्ये चाग्नेयविध्यन्तान्वयं दर्शयन् पूर्वपक्षमुपसंहरति *तस्मादिति* उपधानस्यापि द्वितीयया शेषकार्यत्वावगतेरेककार्यत्वादौपदेशिकशेषकार्यबाधकता युक्तेति सूचनायान्तरशब्दः। चरुस्वाभाव्योत्स्वत्राक्यएव यागार्थत्वावगतेः प्रयोजनाकाङ्क्षत्वाद्वाक्यान्तरश्रुतोपधानार्थत्वेन यागार्थत्वनिरासो न युक्त इत्याशङ्कां निरस्यन् सिद्धान्तमाह *एवमिति* भोजनार्थे तरूष्मपक्वोदने चरुशब्दवाच्ये लोके हविःशब्दाप्रयोगाद्यागार्थव्यभिचाराच्च शब्दसामान्यतोदृष्टाभ्यां यागार्थत्वानवगतेः प्रयोजनाकाङ्क्षत्वाद्वाक्यान्तरश्रुतोपधानार्थता युक्तेत्याशयः। श्लोकतात्पर्यं व्याचष्टे *नैवार इति* विध्यानर्थक्यपरिहाराय स्वत्वनिवृत्त्यावश्यकत्वावगमे ऽपि यागा-

वगतिर्नास्तीति सूचनार्थम् * यागेनेत्युक्तम् * या च प्रतिपत्ति-त्वाद्यागोपकल्पनोक्ता साप्ययुक्तेत्याह * न चेति * प्रतिपत्तिरिति यदुक्तं तत्र चेतीतिकरणार्थः । स्थलार्थस्यापि चोपधानकर्मणः स्थलनिवर्त्तकचरुद्वारा स्थलनिवर्त्तकत्वेनोपधानं प्रति चरोः प्राधान्यात्तद्द्वितीयोपपत्तेर्न द्वितीयया प्रतिपत्तित्वावगतिरित्याह * अर्थकर्मण्यपि चेति * श्रुतिसंयोगव्याख्यानार्थमुपदधातिनेत्यादिभाष्येणोपधानान्वयश्चरोः प्रत्यक्षो देवतान्वयस्तु * आनुमानिक इत्युक्तम् * तद्व्याचष्टे * त्रेधा चेति * श्लोकं व्याचष्टे * नीवारेति * अन्नशब्दोक्तस्यादनीयत्वस्यापक्वेषु नीवारेषु प्रयोगाच्चरुभूतेषु देवतान्वयानुमानं विष्णुं यजतीत्यादौ द्वितीययापि देवतात्वकल्पनादादिशब्दः प्रयुक्तः । कृदन्तान्नशब्दयोगात्कर्तृवाचिन्या षष्ठ्या भोक्तृत्वावगतिर्देवतात्वकल्पनाहेतुः तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * श्रुत्या समस्तस्य चरोरुपधानयोगादित्येवं श्रुतिसंयोगव्याख्यानार्थं ततश्चेत्युत्तरभाष्यावतारणार्थं कृत्स्नशब्दव्याख्यानायैवकारं यत्त्विति भाष्यं बार्हस्पत्या नीवारा इत्येवंविध्यर्थवादाश्रवणादयुक्तमाशङ्क्य तैत्तिरीयशाखास्थस्य बार्हस्पत्यो भवतीत्येतद्वै खलु वै साक्षादन्नं य एष चरुरिति पूर्वनिर्दिष्टचरुसमानाधिकरणबार्हस्पत्यशब्दवतो वाक्यस्य बृहस्पतेर्वा एतदन्नं यन्नीवारा इति शाखान्तरीयवाक्यतुल्यार्थत्वसूचनायानेन प्रकारेणोपलक्षणार्थैतत्-भाष्यमिति सूचयितुमाह * येषां त्विति * वाक्यशेषे देवताकीर्त्तनानर्थक्यपरिहारायानाकाङ्क्षितापि देवता विध्युद्देशेन ग्रहीष्यतइत्याशङ्क्य प्रशंसार्थत्वेनार्थवत्त्वोक्त्यर्थम् * यादृशमित्युक्तम् * बृहच्छब्दस्य बृहतिधात्वर्थानुसारेण ब्रह्मशब्दवदवाचित्वात्पतिशब्दस्य पालयितृवाचित्वात् ब्राह्मणानां च तपस्तपत्वासृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तयइतिवेदपालयितृत्वस्मरणात् बृहस्पतिशब्दस्य ब्राह्मणवाचित्वप्रतीतेर्मुन्यन्नं ब्राह्मणस्योक्तमिति च ब्राह्मणश्राद्धं वानप्रस्थाख्यमुन्यदनीयारण्यनीवारप्राशस्त्यस्मृतेर्ब्राह्मणसम्बन्धित्वरूपं बार्हस्पत्यत्वं कीर्त्तितमित्याशयः । यच्चेति भाष्यं चर्वादीनामिति वार्त्तिकेन व्याख्यातत्वादुपेक्ष्य तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

त्वाष्ट्रपात्नीवतस्य पर्यग्निकरणगुणकत्वाधिकरणम् ॥ ८ ॥

## पात्नीवते तु पूर्वत्वादवच्छेदः ॥ १९ ॥

वाक्यशेषस्थस्य देवतान्वयस्य विधेयत्वाभावाद्यागकल्पकत्वे

निरस्ते पर्यग्निकृतं पात्नीवतमित्यत्र विध्युद्देशस्थत्वाद्विधेयत्वमाशङ्क्य विध्युद्देशस्थस्यापि प्रत्यभिज्ञानेनाविधेयत्वापादकतेहोच्यतइत्यनन्तरसङ्गतिं पात्नीवद्देवतासंयोगलक्षणो गुणस्त्वाष्ट्रपत्नीवद्देवत्यपशुयागाद्भेदको न वेति गुणनिमित्तभेदाभेदविचाराच्च गुणप्रकरणसङ्गतिं स्पष्टत्वादनुक्त्वा तदवान्तरसङ्गतिमाह *एतेनैवेति* यत्रोत्सृजतिस्तत्र यागानुमानमिति व्याप्त्यदर्शनेनोत्सृजतेरालभतिवत् यागानुमापकत्वलक्षणयाजिमद्याचित्वशङ्कायोगादुत्सृजतिशब्दस्तत्परविधायकप्रत्ययलक्षणार्थः । एवं गृह्णातिचिनोतिशब्दावपि[1] त्वाष्ट्रमित्युदाहरणभाष्यं व्याचष्टे * पात्नीवतमिति * तत्रेति सन्देहभाष्यं देवतोद्देशपूर्वकद्रव्यत्यागात्मकस्य यागाख्यस्योत्सर्गस्य त्वाष्ट्रवाक्यादेव प्राप्तेर्विधेयत्वाद्देवतोद्देशनिरपेक्षद्रव्यत्यागात्मकस्य तूत्सर्गस्य नवमोपान्त्ये पर्यग्निकृतानारण्यानुत्सृजन्तीत्युदाहृत्य किमनेनेशानाय परस्वत आलभेत वसन्ताय कपिञ्जलानालभतइत्यादेर्वाक्यस्य विहितस्यारण्यालम्भस्य कैमर्थ्याकाङ्क्षायां यदेनं चरुमुपदधातीतिवत्प्रयोजनत्वेन देवतोद्देशनिरपेक्षो द्रव्योत्सर्गो विधीयते किं वेशानायेति चतुर्थ्युक्तदेवतासंयोगेन विहितं यागमुत्सृजतिनानूद्य पर्यग्निकरणान्ताङ्गरीतिविधानात् कर्मशेषः प्रतिषिध्यतइति सन्दिग्धे पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवदिति सूत्रेण द्रव्योत्सर्गविधिं पूर्वपक्षयित्वा शेषप्रतिषेधो वार्थाभावादिपडान्तवदित्यनेन देवतोद्देशनैरपेक्ष्ये देवतासंयोगरूपार्थाभावापत्त्या निषेत्स्यमानत्वात्सिद्धान्तवचनव्यक्त्यनुपपत्तेरयुक्तमाङ्क्य यदुत्सृजन्ति तत् पर्यग्निकृतमित्युत्सर्गस्य पर्यग्निकृतशब्दोक्तपर्यग्निकरणान्ताङ्गरीतिलक्षणगुणविशिष्टत्वरूपेण विधिर्विवक्षितो न स्वरूपेणेत्येवं व्याख्यासूचनपूर्वकं पूर्व इति भाष्योक्तस्य पात्नीवतानुवादसम्भवस्य पूर्वपक्षहेतोः पात्नीवतशब्दार्थस्य विधेयत्वेन विहिते ऽनवतारात्तदवतारार्थं स्वयं पूर्वपक्षहेतुमाह * तत्रेति * पर्यग्निकरणान्ताङ्गरीतिविधिर्गुणशब्देन सूचितः। तद्विवक्षितत्वोपपादनार्थं वचनव्यक्तिद्वयप्रतिभानस्य सन्देहहेतुत्वं भाष्योक्तं दर्शितम्। नवमोपान्त्यन्यायेन ह्यत्राङ्गरीतिविधेः सिद्धत्वात्पौनरुक्त्यमाशङ्क्य तत्रारण्यशब्दार्थस्य प्राप्तत्वाद्विधेयत्वाशङ्कानुपपत्तेः पर्यग्निकृतानुत्सृजन्तीत्येवान्वये पर्यग्निकृतानुवादेनोत्सर्गविधिरुत्सर्गानुवादेन वा पर्यग्निकृतविधिरिति चिन्तयिष्यतइह तु किं पात्नीवतमुत्सृजतीत्यन्वयाद्यागव्यन्वयेन यागविधिः पर्यग्निकृतमुत्सृजन्तीत्यन्वयात्

१ अव्दाव्यभिचारित्वमित्युदाहरणभाष्यं व्याचष्ट इ० २ पु० पा० ।

पर्यग्निकरणान्ताङ्करीतिविधिरित्यपौनरुक्त्यसूचनार्थं वचनव्यक्तिद्वयप्रतिभानस्य सन्देहहेतुत्वोक्तिर्युक्ता उत्सर्गविधौ तु पर्यग्निकृतमुत्सृजन्तीत्यन्वये त्वाष्ट्रवाक्यात्प्राप्तस्योत्सर्गस्य विधेयत्वायोगात् उत्सर्गान्तरविधानात् सिद्धान्ते ऽपि कर्मान्तरत्वापत्तेर्वचनव्यक्तिद्वयप्रतिभानस्य सन्देहहेतुता न युक्तेत्याशयः। पात्नीवतशब्दस्योत्सृजतिपराख्यातान्वये ऽपि प्रत्यभिज्ञायमानार्थत्वेनाविधेयार्थत्वाद्यागकल्पनानुपपत्तेः किं यागान्तरत्वे कारणमित्येवं कुत इति प्रश्नं व्याचष्टे * किं चेति * पूर्वइत्युत्तरभाष्यं व्याचष्टे *न चेति* न ह्यत्र स त्वाष्ट्रवाक्यविहितः पत्नीवान् प्रत्यभिज्ञायतइति हिशब्दार्थौ चशब्दः। अपि चेति भाष्यं व्याचष्टे * पर्यग्निकृतेति * त्वाष्ट्रस्योत्सर्गविधिं वदता पात्नीवतशब्देन त्वाष्ट्रमुद्दिश्योत्सर्गविधिर्वाच्यस्तस्य च पर्यग्निकृतत्वविशेषणे विशिष्टानुवादलक्षणो वाक्यभेदः स्यादित्याशयः। ननु पत्नी विद्यते ऽस्येत्यन्यपदार्थे मतुबन्तपत्नीवच्छब्दप्रवृत्तेः को ऽन्यपदार्थ इत्यपेक्षायां पूर्ववाक्ये श्रुतस्य त्वष्टुः पात्नीवन्तं गृह्णातीत्यत्राग्नेरिव स्ववाक्याश्रुतस्याप्यन्यपदार्थावसायात्प्रत्यभिज्ञोपपत्स्यतइत्याशङ्कानिरासं सूचयन् श्लोकपूर्वार्द्धं व्याचष्टे * यदि हीति * पात्नीवतं गृह्णातीत्यत्राग्नीपत्नीवाञ्चिति मन्त्रवर्णादग्नेरन्यपदार्थत्वावगतिर्युक्ता इह तु कर्मान्तरस्थस्य त्वष्टुः कर्मान्तरे ऽन्वयप्रमाणाभावात् अश्विशब्दवच्चान्यपदार्थवृत्तेरपि पत्नीवच्छब्दस्य तदलाभे स्वातन्त्र्याभ्युपगमोपपत्तेः शुद्धः पत्नीवान्देवता न तु पत्नीवान्त्वष्टा येन प्रत्यभिज्ञा स्यादिति इन्द्रमहेन्द्रदृष्टान्तेन सूचितम्। प्रत्यभिज्ञाने ऽपीन्द्रमहेन्द्रवद्देवतान्तरयोगादित्यपिशब्दार्थः। उत्तरार्द्धं व्याचष्टे * पात्नीवतेति * नन्वतन्त्रत्वात्पात्नीवतशब्दस्य न विशिष्टानुवादापत्तिरित्याशङ्क्याह * व्यवहितेति * किं च स्वार्थे वेहोत्सर्गो विधीयते पर्यग्निकृतशब्दार्थविध्यर्थं वा तत्राद्ये पक्षे देवतोद्देशपूर्वकद्रव्यत्यागरूपस्योत्सर्गस्य त्वाष्ट्रवाक्यादेव प्राप्तेः पुनःश्रुत्यानर्थक्यमाह * प्राप्तएव चेति * द्वितीयपक्षे तु लोहितोष्णीषादिवत् पर्यग्निकृतशब्दस्य विशेषणपरत्वावगतेस्तस्याप्यतिदेशेन प्राप्तत्वाद्विध्यानर्थक्यमित्याह * न चेति * ननु पात्नीवतमुत्सृजन्तीत्यप्यन्वये पूर्वस्मिन्यागे त्वष्ट्रा पत्नीवता सह वैकल्पिकः शुद्धः पत्नीवान् विधास्यतइत्याशङ्क्याह *न चेति* एतश्चासम्बद्धपदव्यवायापत्तेस्तत्र त्रिदोषत्वमुक्तमेवेत्यतः पश्चाद्वाक्यमपि न च प्राकृतक्लृप्तोपकारेत्याद्युक्तमेवेत्यन्तं वार्त्तिकं नवमोपान्त्यभाष्यवक्ष्यमाणार्थकथनायेति सूचनार्थम् * प्रागुक्तम् * ननु

यथाज्यभागपुनः श्रुतिर्गृहमेधीयस्यापूर्वत्वज्ञापनार्थेति दशमे वक्ष्यति तथेह केवलपर्यग्निकरणपुनःश्रुतिपात्नीवतपशुयागस्यापूर्वत्वज्ञापनार्था भविष्यतीत्याशङ्क्याह * न चेति * पर्यग्निकरणस्याप्राकृतत्वे चेत्क्लृप्तोपकारत्वायोगात्प्राकृतत्वे वा प्राप्तत्वेन विधेयत्वायोगात्कथमपूर्वज्ञापकतेत्याशङ्क्य * प्राकृतेत्युक्तम् * स्वरूपेण प्राप्तस्यापि पात्नीवतयागाङ्गत्वेन विधानान्नैराकाङ्क्ष्यद्योतकत्वेनापूर्वज्ञापकता युक्तेत्याशयः। पर्यग्निकरणस्य पशुविशेषत्वेन निर्देशात्प्रसिद्धिं च विना विशेषणत्वायोगात्प्रसिद्धत्वेनाविधेयत्वादङ्गत्वासिद्धेर्नैराकाङ्क्ष्यद्योतनान्नापूर्वज्ञापकतेति परिहाराशयः। ननु पर्यग्निकरणान्ताङ्गकलापविध्यर्थनिर्वृत्तपर्यग्निकरणत्वोक्त्यर्थत्वेन पर्यग्निकृतशब्दस्योपसर्जनत्वस्याविवक्षितत्वाद्विधेयत्वोपपत्तिरित्याशङ्क्याह * न चेति * पर्यग्निकरणनिर्वृत्त्युक्तावपि अङ्गान्तरनिर्वृत्त्यप्रतीतेर्न पर्यग्निकरणान्ततावसीयतइत्यर्थः। ननु पर्यग्निकरणान्ताङ्गैरित्यनभिधानेऽपि क्तप्रत्ययस्य निष्ठासञ्ज्ञत्वेन भूतकालवाचित्वात् पर्यग्निकरणानन्तरकालोत्सर्गप्रतीतेरुत्सर्गोत्तरकालीनपदार्थानिषेधेऽप्युत्सर्गपर्यग्निकरणमध्यवर्त्तिपदार्थनिषेधावगमात्पर्यग्निकरणोत्तरकालाङ्गभूतकर्मावच्छेदो विज्ञास्यतइत्याशङ्क्याह * न चासाविति * पदार्थान्तरव्यवधानेऽपि भूतकालत्वोपपत्तेरानन्तर्यं नावसीयतइत्याशयः। पर्यग्निकरणकालोक्त्यानन्तर्यं सूचितम्। ननु भूतकालत्वमात्रस्यातिदेशतः प्राप्तेर्विध्यानर्थक्यपरिहारार्थं तान् पर्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्न्यालभतइत्यत्रानन्तर्यलक्षणा यथा सङ्कर्षकाण्डे वक्ष्यते तथेहाप्यानन्तर्यलक्षणा भविष्यतीत्याशङ्क्याह * न चेति * प्राजापत्यपशुष्वेकादशे कर्मशेषप्रतिषेधं पूर्वपक्षेऽपि ब्रह्मसाम्न्यालभतइति पर्यग्निकरणोत्तरकालीनानां संस्काराणां कालान्तरेऽनुष्ठेयत्वश्रुतेः सर्वथा प्रतिषेधायोगेन पर्यग्निकरणोत्तरकालीनत्वमात्रनिषेधस्य वक्ष्यमाणत्वात्तत्सिद्ध्यर्थमानन्तर्यलक्षणा युक्ता इह तु कर्मान्तरविधानेऽतिदेशप्राप्तपर्यग्निकरणानुवादत्वेनापि पर्यग्निकृतशब्दस्य वाक्येऽन्वयोपपत्तेर्नानन्तर्यलक्षणा युक्तेत्याशयः। सर्वाङ्गानां च पर्यग्निकरणानन्तर्यसम्पादनाशक्तेरानन्तर्यलक्षणार्थाविरोधः स्यादित्याह * सर्वाङ्गेषु चेति * ननु पर्यग्निकृतावस्थस्योत्सर्गविधावर्थादानन्तर्यावगतिर्भविष्यतीत्याशङ्क्याह * एतेनेति * नावस्थापि श्रुत्योच्यते इत्याशयः। पर्यग्निकरणावस्थायाश्च स्वरूपेण प्राप्तत्वादुत्तरावस्थापरिसंख्यार्थत्वे त्रिदोषत्वापत्तेर्वि-

धेयत्वं न सम्भवतीत्याह * चोदकेनैव तावदिति * पूर्वपक्षमुप-संहरति * तस्मादिति * विधिसमाप्त्यर्थामिति कर्त्तव्यतापेक्षायां पत्नीवता लक्षणागुणसामान्येन त्वाष्ट्रप्रकृतिकत्वे ऽभिहिते पूर्वपक्ष-त्वादनास्थयाग्नीषोमीयप्रकृतिकत्वे * अप्यविरोध इत्युक्तम् * सि-द्धान्तमाह * इतीति * न कर्मान्तरामिति भाष्यावयवः पूर्वार्द्धेन व्याख्या-तः । पूर्वस्यैवेत्युत्तरार्द्धेन प्रकृतस्य त्वाष्ट्रत्वपात्नीवतत्वलक्षणवि-शेषणद्वयविशिष्टत्वात्प्रत्यभिज्ञानं न सम्भवतीत्याशङ्क्याह * पात्नी-वतेति * द्वन्द्वनिर्देशे ऽप्येकदेशेन समुदायलक्षणयानुवादत्वा-त्प्रकृतोक्तिर्युक्ता त्वाष्ट्रं पात्नीवतमिति च भेदेन निर्देशा-द्विशेषत इति मनोताद्दृष्टान्तेन सूचितं पर्यग्निकरणान्ता-ङ्गगणस्य विधेयत्वसिद्ध्यर्थं सामान्यतस्तावद् गुणस्य विधेयत्वमाह * पर्यग्निकृतमिति * शङ्कापूर्वं पर्यग्निकरणान्ताङ्गगणस्य विधेय-त्वमुपपादयितुमारभते * ननु चेति * या तु तदन्तवाचिशब्दाभावा-दविधेयतोक्ता तां परिहरति * यद्यपीति * नाज्यभागवत् पर्यग्नि-करणमनुष्ठेयतया विधीयते येन तन्मात्रग्रहणं स्यात् किं तु निष्पन्न-पर्यग्निकरणत्वं पशोर्यागान्वयितया विधीयते तस्य च यथाप्राप्त-स्योपादानात्पूर्वाङ्गेष्वप्रकृतेषु पर्यग्निकरणानुपपत्तेस्तदन्ततावसी-यतइत्याशयः । नन्वेवमप्युत्तरेषामप्यङ्गानामतिदेशात्प्राप्तेः पर्यग्नि-करणान्तत्वासिद्धिरित्याशङ्क्य गृहमेधीयन्यायेनापूर्वत्वावसायात्तद-न्तर्गतत्वसिद्धिमाह * कथम्भावेति * पर्यग्निकरणान्तस्याङ्गगणस्य प्रकृतावितरेतरनिरपेक्षोत्पत्तित्वात्प्रयोगवाक्यात्साहित्यावगमे ऽपि प्रत्येकं क्रतूपकारसाधनत्वशक्त्यवगतेस्त्वाष्ट्रपशुयागे प्रत्यक्षवाक्ये-नाङ्गतया विधानात्तदुपकारसाधनत्वेनावगतस्यातिक्रमकारणाभा-वात्प्राकृताङ्गान्तरानपेक्षत्वादपूर्वत्वावगतेर्नातिदेशो ऽस्तीत्याशयः । अतिदेशाभावे ऽपि सादृश्येन बुद्धिस्थतया धर्मदानोन्मुखत्वात्प्रकृ-तित्वव्यपदेशविरोधः । नन्वस्य वाक्यस्य पर्यग्निकरणान्ताङ्गरीति-विधायित्वे निवृत्त्यर्थो ऽवच्छेदशब्दो न युज्यतेत्याशङ्क्य फलेनो-त्तराङ्गनिवृत्त्यर्थत्वोक्तिमुपपादयति * ततश्चेति * पात्नीवतमुत्सृज-न्तीतिसन्निहितान्वयत्यागेन पर्यग्निकृतमुत्सृजन्तीति व्यवहितान्वया-भ्युपगमे को गुणो भविष्यतीति किमिति भाष्येण गुणोक्त्यर्थं य-जिमत्ता तावदिति भाष्यमुपलक्षणार्थत्वेन व्याचष्टे * एवं चेति * आदिशब्देनाश्रुताङ्गातिदेशकल्पनोक्ता गुणान्तरोक्त्यर्थमुत्सृजति * शब्दश्चेति * भाष्यं सिद्धान्ते ऽपि पर्यग्निकरणान्तत्वविशिष्ट-रूपेणोत्सर्गविध्युपगमेन वाक्यार्थविध्यविशेषायुक्तमाशङ्क्यापि चेति

वक्ष्यमाणभाष्यालोचनया पूर्वपक्षे पर्यग्निकृतं पात्नीवतमिति पद-
द्वयान्वयापादनाशयेन व्याचष्टे * न चेति * ननु देवतोद्देशपू-
र्वकद्रव्यत्यागाख्यस्योत्सर्गस्य त्वाष्ट्रवाक्येनैव प्राप्तेरुत्सर्गविध्युक्ति-
रयुक्तेत्याशङ्क्याघाराग्निहोत्राधिकरणोक्तेन मार्गेण गुणविधावपि
धात्वर्थावच्छिन्नभावनाविधिं मत्वोत्सर्गविध्युक्तिरित्याशयेन परिह-
रति *पर्यग्निकरणान्तेति* शङ्कानिरासार्थस्तुशब्दः अनत्यन्तविप्र-
कर्षादित्यनेनोत्सर्गसम्बन्धित्वेनाङ्गगणविधानादुत्सर्गस्य * विधेय-
तोक्तिरित्युक्तम् * तदुपपादनार्थम् * तदुद्देशेनेत्युक्तम् * कर्मा-
न्तरेतिभाष्यं सिद्धान्ते ऽप्युत्सर्गानुवादाविशेषादयुक्तमाशङ्क्योत्स-
र्गसम्बन्धित्वेनापि पूर्वपक्षे ऽर्थान्तरविध्यभावाशयेन व्याचष्टे *
त्वत्पक्षे त्विति * तद्गुणास्तु विधीयेरन्नित्यनेन च न्यायेन देव- ६१२।१
ताताद्धितेनैव देवतोद्देशपूर्वं द्रव्यत्यागरूपोत्सर्गविधिसिद्धेः पर्य-
ग्निकृतशब्दार्थो विधौ च तद्वृत्त्यानर्थक्यापत्तेः पर्यग्निकृतं पात्नीवतं
कुर्वन्तीति पूर्वपक्षे पर्यग्निकरणविशिष्टपात्नीवतविधिमापाद्यापि
चेति भाष्येण त्वाष्ट्रस्य पात्नीवततायास्त्वाष्ट्रवाक्यात्प्राप्तेः पर्यग्नि-
करणविशिष्टतायाश्चातिदेशात्प्राप्तेर्दूषणमुक्तं तदापादनाशयस्य न
च परपदेति वार्त्तिकेन व्याख्यातत्वाद् दूषणाशयस्य च प्रकृत्य-
भिज्ञानादित्यनेन व्याख्यातत्वादव्याख्याय तस्मादिति सिद्धा-
न्तोपसंहारभाष्यं व्याचष्टे * तस्मादपीति * कल्पनाक्लेशप-
रपदान्वयविधिविप्रकर्षधात्वर्थात्यन्तपारार्थ्याभावप्रकृतप्रत्यभिज्ञाल-
क्षणहेतुचतुष्टयपरामर्शार्थत्वं तस्माच्छब्दस्य सूचयितुमपिशब्दः ।
अपि चेति पूर्वपक्षभाष्योक्तं दोषं यत्त्विति भाष्येणानुभाष्य नैष
दोष इत्यनेन परिहृत्यात एवेत्यनेन पात्नीवच्छब्देन त्वाष्ट्रपात्नीवता-
नुवादायोगदोषः पूर्वः त्वाष्ट्रः पात्नीवतश्चेति भाष्योक्तः परिहृतः।
तद्गतामेकहेलया व्याचष्टे * प्रकरणादेव चेति * पर्यग्निकरणाव-
स्थाविशिष्टपात्नीवतानुवादलक्षणस्य पात्नीवतत्वरूपेण चैकेनांशेन
त्वाष्ट्रपात्नीवतव्यपदेशलक्षणस्य चोपालम्भस्य परिहार इति समा-
सार्थः। तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे* तस्मादिति*

॥ अदाभ्यादीनां ग्रहनामताधिकरणम् ॥ ९ ॥

## अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

न कस्य चिदपीत्यनारभ्याधीतत्वोक्तेः सन्देहत्रैविध्यसूचना-
र्थत्वं वक्तुमाह * अनारभ्येति * उतेति सिद्धान्तवचनव्यक्ति-
भाष्यशेषेण ग्रहविधिरित्येतावता वर्त्तमानेन यावदुक्तत्वपूर्वपक्षा-

न्तरोक्तिरित्याशयः । आलभत्यादिवद् गृह्णातिरपि यजिमदभि- धानो न वेति प्रासङ्गिकत्वेन सङ्गतिदृष्टान्तेन सूचिता पूर्वस्मिन् ज्योतिष्टोमाख्ये क्रतावंशवदाभ्यनामधेयसंयोगाभावादित्युत्तरपदस- मासपूर्वकनञ्समासाङ्गीकरणेनापूर्वनामधेयसंयोगादिति हेतुः पा- रिशेष्याद्यागविधिसिद्धौ प्रकृतावेतन्नामकस्य ग्रहस्य वा कस्य चिदभावाद्यागाभ्यासात्मकस्य ग्रहाभ्यासस्य वा गुणस्य विधिर्न सम्भवतीति प्रकृतौ गुणविधिनिरासार्थौ नैतन्नामधेयकः कश्चित् ग्रहोऽस्तीत्येतावद्भाष्यपदावृत्त्या च यावदुक्तनिरासार्थ इत्येवं ताव- त्पूर्वपक्षभाष्यं व्याख्यातुमाह * तद्वदेव चेति * निराकरणमालो- च्येत्यध्याहारेण पक्षद्वयनिराकरणस्य यागान्तरशब्दोक्तयागविधिप्र- तिज्ञायां हेतुत्वं सूचितम् । उक्थ्यादिवच्चांशवदाभ्यशब्दयोर्यागनामत्वे ग्रहनामत्वे वा सति प्रकृतौ यागाभ्यासलक्षणस्य ग्रहाभ्यासलक्ष- णस्य वा गुणस्य विधिः स्यात् वत्सादिवद्वांशवदाभ्यनामकग्रहप्र- सिद्धौ सत्यां यावदुक्तांशवदाभ्यग्रहणमात्रविधिः स्यात्त्वभयाभा- वात्पारिशेष्याद्यागविधित्वावगतेर्यागान्तरमेवांशवदाभ्यसंज्ञकं विधी- यतइत्याशयः । अपूर्वेण नामधेयेन संयोगादिति नञ्समासपूर्वकोत्त- रपदसमासाङ्गीकरणेन वा संज्ञालक्षणयागान्तरत्वपूर्वपक्षहेतूक्त्यर्थ- तयेदं भाष्यं व्याख्येयमित्याह *किं चेति* अंशुवाक्ये यज्यश्रुतेरदा भ्यवाक्ये ऽपि व्यवहितयज्यन्वयायोगेन यजिसामानाधिकरण्यानु- पपत्तेर्यागनामत्वायोगादुपचयहेतुत्वसूचनार्थः किं च शब्दः । अस्मि- न्पक्षे गृह्णात्यन्वयेन ग्रहणनामत्वाद्यागनामत्वायोगाशङ्कानिरासा- र्थत्वेन न ग्रहः कश्चिदेतन्नामको ऽस्तीति व्याख्येयम् । ग्रहणस्य सं- स्कारत्वेन संज्ञानर्हत्वाद्व्यवधाने ऽप्यदाभ्यसंज्ञकयागं करोतीत्यन्व- यप्रतीतेरंशुवाक्ये ऽपि अंशुसंज्ञकं कर्म करोतीत्युक्ते किं तदित्यपे- क्षायां गृह्णातिर्चोदनासामान्यात् गृह्णातेश्च यागीयद्रव्यप्रकल्प- नार्थत्वावगतेरव्यक्तचोदनाचोदितत्वाच्च ज्योतिष्टोमधर्मप्राप्तेर्द्रव्यदे- वतालाभाद्यागरूपत्वप्रतीतेर्यागत्वावसायात् करोत्यर्थोक्त्यै च प्र- योज्यस्य प्रत्ययस्यानुग्रहायातिदेशप्राप्तज्योतिष्टोमिकग्रहणानुवाद- भूतप्रकृतिविशेषद्योतनार्थं गृह्णातिप्रयोगोपपत्तेः संज्ञया यागान्तर- त्वावगतिरित्याशयः।किमित्यादि तस्माद्यागान्तरमित्यन्तं पूर्वपक्षभा- ष्यन्तात्पर्यतो व्याख्याय न प्रकृतावित्यवयवं स्वरूपतो व्याचष्टे * न हीति * विध्यन्तभावाद्यागान्तरविध्यपर्यवसानमाशङ्क्याह * तस्मा- दिति * न त्विति भाष्येण द्रव्यदेवतान्वयाश्रुतेर्यच्छब्दोपबन्धेन च यागविधिप्रतिबन्धात्सोमदेवत्ययागाङ्गत्वेन यावदुक्तादाभ्याख्यद्र-

ऽथग्रहणमात्रविधिमंशुवाक्ये च यज्यश्रुतेः स्वतन्त्रांश्वाख्यद्रव्यग्रहणमात्रविधिमाशङ्क्य माभूदित्यनेन अच्छब्दोपबन्धे ऽपि प्रत्यभिज्ञानाभावेनानुवादायोगाद्विधित्वप्रतीतेर्निरस्तं तदंशुवाक्यं व्यापकत्वादयुक्तमाशङ्क्य गृह्णातिचोदनोपस्थापितज्योतिष्टोमधर्मातिदेशप्राप्तद्रव्यदेवतान्वयकल्प्ययागप्राप्तिलक्षणोभयसाधारणहेत्वध्याहारेण पूरयन् व्याचष्टे * न चेति * वत्सालम्भतुल्यत्वशङ्कोक्त्या द्रव्यश्रवणे ऽपि देवतान्वयमात्रे श्रुतिसूचनात् द्रव्यदेवतामिति द्वन्द्वैकवद्भावस्येतरेतरयोगात् श्रुत्युक्त्यर्थत्वं व्याख्यातम्।तस्मादिति यागान्तरत्वपूर्वपक्षोपसंहारभाष्यं व्याचष्टे*अतो ऽपीति*सूत्रं व्याचक्षाणः सिद्धान्तमाह * इतीति *ग्रहणस्यापि श्रुतत्वाद्भाष्ये नामधेयमात्रविषयतया केवलशब्दव्याख्या न युक्तेत्याशङ्क्य नामधेयशब्दस्य ग्रहणोपलक्षणार्थत्वं सूचयितुम् * ग्रहणमित्युक्तम् * द्रव्यदेवताभावनिमित्तस्य कैवल्यस्याद्रव्यत्वोक्त्यैव सिद्धे केवलशब्दानर्थक्यमाशङ्क्य यावदुक्तत्वस्यापि निरासं केवलशब्दप्रयोजनं सूचयितुम् * वत्सेत्युक्तम् * वत्सालम्भएव तावद्देवताराहित्येन यागाभावाद्वायव्यश्वेतालम्भादेर्न्यूनम्।अंश्वदाभ्यग्रहणं तु द्रव्यस्याप्यभावेन द्रव्यविशिष्टविध्ययोगाद्वत्सालम्भादपि न्यूनमिष्यतइत्यर्थः। ततश्च पूर्वपक्षद्वयस्याप्ययोगाज्ज्योतिष्टोमाख्यस्य कर्मणो ऽभ्यासात्मको ऽवयवो ऽत्र विधीयते इत्यर्थादुक्तम्।अद्रव्येति भाष्यादुदाहरणपरिग्रहार्थकेवलशब्दापेक्षितकैवल्यनिमित्तोक्त्यर्थौ द्रव्यत्वादिति सूत्रावयव इति भ्रान्तिनिवृत्तये कर्मशेषः स्यादिति सूत्रावयवोक्ताभ्यासाख्यकर्मावयवत्वप्रतिज्ञाया हेतूक्त्यर्थं वक्तुम् * अद्रव्यतयेत्युक्तम् * भाष्ये देवतोक्तेरसौत्रत्वमाशङ्क्य देवताकत्वस्याभिप्रेतस्यापि स्पष्टत्वात्सूत्रे ऽनुक्तिः अंश्वदाभ्यशब्दयोस्तु द्रव्यवाचित्वशङ्कानिरासायाद्रव्यतोक्तेति सूचयितुमाह * देवता तावदिति* सोमायेत्यस्यानुवाद्ययागविशेषणत्वायोगात्पश्चाच्छ्रुतत्वाच्च सोमाय गृहीत्वेत्यन्वयाप्रतीतेर्यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति मन्त्रवर्णप्राप्तदेवतानुवादोपपत्तेश्च देवताविधित्वायोगाद् दूरभ्रष्टतोक्ता। अदाभ्यशब्देनावयवव्युत्पत्त्या हिंसाख्यदम्भानर्हद्रव्यस्यांशुशब्देन च निर्यासस्योपादानोपपत्तेरनुपात्तत्वोक्तिरयुक्तेत्याशङ्क्य * न हीत्युक्तम् * एवमप्यदाभ्यशब्दवाच्यद्रव्यविशेषाप्रतीतेर्निर्यासस्य च प्रकृतिद्रव्यविशेषाप्रतीतेर्न वत्सालम्भवद्यावदुक्तद्रव्यविशिष्टग्रहणविधिः सम्भवतीत्याशयः । ननु ज्योतिष्टोमधर्मातिदेशाद् द्रव्यदेवतालाभो भविष्यतीत्याशङ्क्याह * न

६।३।१ (margin, beside line ending "केवलशब्दानर्थ-")

चेति * ननु यागत्वानवधारणे ऽप्यैन्द्रवायवं गृह्णातीत्यादावनिर्दिष्टद्रव्यविशेषस्य गृह्णातेर्योगीयसोमप्रकल्पनार्थत्वदर्शनेनास्यापि तादर्थ्यानुमानात्प्रकृतिभूतज्योतिष्टोमोपस्थापकत्वोपपत्तेस्तदीयद्रव्यदेवतालाभो भविष्यतीत्याशङ्क्याह * न च गृह्णातिरिति * व्यभिचाराच्चानुमानं न सम्भवतीत्याशयः । केवलनामधेयश्रवणे ऽपि तस्मादेव यागभेदावगतेः कुतो ज्योतिष्टोमे ऽभ्यासविधिरिति पृष्ट्वा यागनामत्वाभावाद्यागभेदकत्वनिरासार्थमेतावदिति भाष्यं व्याचष्टे * न चैत इति * ऐन्द्रवायवं गृह्णातीत्यादिवत् ग्रहणेनादाभ्यमंशुं च कुर्यादिति शास्त्रार्थावधारणात् वैयधिकरण्यान्वये ऽपि ऐकाधिकरण्यं विनान्वयायोगात्सर्वत्र राज्ञः पुरुष इत्यादावपि राजसम्बन्धी पुरुष इत्यादिसामानाधिकरण्यान्वयमभिप्रेत्य ग्रहणाकरणकवदाभ्यमंशुमिति च सामानाधिकरण्यं मत्वा ग्रहणसामानाधिकरण्योक्तिः गृह्यमाणग्रहद्रव्यनाम्नो ऽपि ग्रहणनिमित्तत्वोक्तये ग्रहणनामधेयत्वोक्तिः ग्रहणभेदस्तर्हि सञ्ज्ञातः स्यादित्याशङ्क्याह * इष्यत एव चेति * अंशुशब्दस्य यज्यन्वयाशङ्कायोगात् ग्रहनामत्वस्य मुक्तसंशयत्वं स्पष्टत्वादव्याख्याय ग्रहणसंस्कार्यत्वान्यथानुपपत्त्या ग्रहस्य यागार्थत्वावगतेर्ग्रहभेदाद्यागभेदो भविष्यतीत्याशङ्कानिरासार्थं न चेति भाष्यं व्याचष्टे * न चेति तद्भेदात्कर्मणो ऽभ्यास इत्यनेन न्यायेन यागाभ्यासमात्राद्ग्रहभेदोपपत्तिरित्याशयः । न च द्रव्येतिभाष्यम् । ऐन्द्रवायवं गृह्णातीत्यादौ द्रव्यदेवताश्रवणे ऽपि यजिमत्त्वस्य निरस्तत्वादनर्थकमाशङ्कयातिशयोक्त्यर्थत्वेन व्याचष्टे * द्रव्येति * यद्पीत्यादिभाष्यं व्याचष्टे * यो ऽपीति * गृहीत्वा शब्दार्थे संक्रान्ता विधौ शक्तिः प्रत्ययस्येति समासार्थः । तस्मादित्याधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तस्मादिति * अंशुवाक्ये यज्यश्रुतेः अंश्वदाभ्यशब्दाभ्यामपीति द्विवचनायोगं शङ्कते * अंशोरिति * परमतेन तावत्परिहरति * गृह्णातीति * गृह्णातेर्लोकवेदसाधारण्येन ज्योतिष्टोमोपस्थापकत्वायोगात्स्वमतेनान्यथा परिहरति * अस्त्येव त्विति * अदाभ्यवाक्ये ऽपि यजिनानुवादे यागमात्रानुवादापत्तेः सोमेन तु विशेषणे विशिष्टानुवाददोषापत्तेः प्रकरणेनैव ज्योतिष्टोमान्वयं वक्तुम् अनयोरिति द्विवचनम् । एवं सत्यनारभ्य विधिरनर्थकः स्यादित्याशङ्क्याह * यथेति * कः पुनः पक्षत्रयमध्ये ऽत्र सिद्धान्तवचनं इत्यपेक्षायामाह * तेनेति *

---

१ वचनेति २ पु० पा० ।

॥ अग्निचयनस्य संस्कारताधिकरणम् ॥ १० ॥

## अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥२१॥

अस्यापि प्रासङ्गिकत्वेन प्रकृतयजिमद्वचनावचनत्वाचिन्तासङ्गतिमपिशब्देन सूचयितुं सन्देहत्रैविध्यमुदाहरणाविवेकपूर्वकमाह * अग्निमिति * यजिमत्त्वसंस्कारकर्मनिरासार्थो मात्रशब्दः चिनोतिवाक्येन प्रकृतिविकृत्यङ्गत्वाविधाने ऽपि अनेन वाक्येनाग्निसंस्कारत्वेन चयने विहिते संस्कृतस्याग्नेः कैमर्थ्यापेक्षायामुत्तरवाक्ये: प्रकृतिविकृत्यर्थत्वे विहिते संस्कारविधिपर्यालोचनमभिप्रेत्य * प्रकृतीत्युक्तम् * तदर्थमेव भाष्यकृता पूर्वपक्षोपपादनार्थं चोत्तरवाक्यान्युदाहृतानि कर्मान्तरं चिनुतइत्याख्यातेन विधीयतइत्येतावता चावृत्तेन भाष्येण यावदुक्तपक्षोक्तेस्त्रैविध्यस्य भाष्यारूढत्वं किमिति पूर्वपक्षभाष्यं गुणविधियावदुक्तत्वाख्यपक्षद्वयप्रतियोगित्वेन व्याचष्ट * तत्रेति * अश्वदाभ्यवैषम्योक्त्याधिकाशङ्का दर्शिता चयनस्य स्वभावतः संस्कारमात्रत्वप्रासिद्धेः संस्कारे च फलश्रुतेरर्थवादस्य वक्ष्यमाणत्वाच्छ्रुतस्यापि फलस्यान्वयानुपपत्तेर्निष्प्रयोजनत्वप्रसङ्गात्कैवल्यं यावदुक्तत्वं न युक्तमित्यर्थः। अतः परिशेषाच्चिनोतेर्यजिमद्वचनतेति क्रतुशब्देनोक्तं तथापि कथं कर्मान्तरतेत्यपेक्षायाम् * सञ्ज्ञैवेत्युक्तम् * पूर्वाधिकरणपूर्वपक्षवदिहाप्यपूर्वनामधेयसंयोगो भेदहेतुरभिप्रेत इति सूचनार्थं एवकारः। अग्निसञ्ज्ञकं कर्म करोतीति इष्टकाभिरग्निं चिनुतइति वाक्यान्तरविहितवचनानुवादिप्रत्ययानुग्रहार्थं चिनोतिधातुपरेण प्रत्ययेन विहिते किन्तदित्यपेक्षिते ऽग्निमनुयजतीत्युत्तरवाक्ये यजिसामानाधिकरण्यात् यागरूपतावसीयतइत्याशयः। गुणविधित्वनिरासेन यजिमद्वचनत्वोपपादनार्थं स्वयं तावल्लिङ्गदर्शनमाह * तथा चेति * ननु गुणविधित्वे ऽपि चयनसंस्कृताग्निलक्षणस्य फलश्रुतिर्युक्तेत्याशङ्क्याह * न चेति * भाष्योक्तं लिङ्गदर्शनं व्याचष्टे * तथा चेति * नन्विति भाष्येणाग्निशब्दस्य यागनामत्वे प्रापकं पृष्ट्वा ऽथातो ऽग्निमग्निष्टोमेनैवानुयजाति तमुक्थ्येन तं षोडशिना तमतिरात्रेण तं त्रिरात्रेण तं चतूरात्रेण तं पञ्चरात्रेण तं षड्रात्रेण तं सप्तरात्रेण तमष्टरात्रेण तं नवरात्रेण तं दशरात्रेण तमेकादशरात्रेणेति वाक्यस्य प्रापकत्वोक्त्यर्थमत्रेति भाष्यं व्याचष्टे * तथेति * अस्य प्रापकत्वोपपादनार्थं यागमिति भाष्यं द्वेधा व्याचष्टे * तत्रेति * अथेत्यादिना एकादशरात्रेत्यन्तेनैकेन वाक्येन ६१४।१

विनियोक्तृभूतलक्षणतृतीयायुक्तयजतिशब्दानुषङ्गेण वैकल्पिकाग्निष्टोमादिसंस्था द्विरात्रादिकालविशिष्टत्वविधावग्नियागं करोतीति सामानाधिकरण्याद्यदाहवनीये जुह्वतीति तत्प्रख्यान्यशास्त्राच्चाग्निशब्दस्य गुणविधित्वानुपपत्तेर्यागनामत्वावसायात् । अग्निसञ्ज्ञकं यागं करोतीति चिनोतिवाक्यार्थो ऽवगम्यत इत्याद्यव्याख्याने भाष्यार्थः । वाक्यान्तरेणैव नामादिविशिष्टयागविधौ चयनवाक्यानर्थक्यापत्तेर्वाक्यप्रवृत्तिवेलायां चाग्निश्चितार्थस्यापि चयनवाक्यस्यार्थैष ज्योतिरित्यादिवदन्यतो ऽर्थनिश्चयसम्भवे विधायकत्वोपपत्तेराद्यव्याख्याने ऽपरितोषात् द्वितीयव्याख्याने ऽर्थे इत्यादिषु संस्थार्थत्वविधिपरेषु भिन्नेषु वाक्येषु अग्नियागं करोतीति अग्निशब्दसमानाधिकरणयज्यनुवादान्यथानुपपत्त्याग्निसञ्ज्ञकयागविधायित्वं चिनोतिवाक्यस्यावसीयतइति भाष्यार्थः । एकस्मिन् गुणपरे वाक्ये ऽनेकार्थविध्ययोगात्संस्थादिविधिपरे वाक्यभेद इति एकवचनसामान्याभिप्रायं तस्मादित्युपपाद्योक्तयर्थं भाष्यं व्याचष्टे * तस्मादिति * अनुशब्दादप्यग्निशब्दस्य यागवाचितावगम्यतइत्युक्तयर्थमनुशब्दो ऽपीति भाष्यमपि द्वेधा व्याचष्टे *अनुशब्दश्चेति*संस्थादिविधिपरे अनुशब्दोक्तस्य पश्चाद्भावस्य विध्ययोगेनानुवाद्यत्वावगतेरयागत्वे च पश्चाद्भावाप्राप्तावनुवादायोगाद्यागताग्नेर्ज्ञायतइत्याद्यव्याख्याने भाष्यार्थः । द्वितीये त्वग्निष्टोमादिसंस्थैरेकाहैर्द्विरात्रादिभिश्चाहीनैरग्नेः पश्चात्करिष्यमाणैरग्निरनुयष्टव्य इति अग्नेर्यागप्राग्भावविधानस्य तुल्यरूपत्वगमकत्वाद्यागत्वावगतिरिति अस्मिंश्च व्याख्याने चिनोतिवाक्यविहितस्य यागस्योत्तरवाक्यैः संस्थाद्यर्थत्वविध्युपगमादग्निष्टोमसंस्थायाश्च निष्फलत्वेन शेषित्वायोगादग्निष्टोमशब्दस्य तत्स्थयागवाचित्वात्सर्वार्थतासिद्ध्यै चानुशब्दस्य सर्वत्रानुषङ्गसिद्धान्तवत्सूचयितुम् * यागैरित्युक्तम् * द्रव्यदेवतादीतिकर्त्तव्यतानाम्नानाद्यागविध्यनिर्वाहाशङ्कां निरस्यंस्तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * तस्मादिति * एतच्छब्देन चिनोतिवाक्यं परामृष्टम् । ननु चिनोतिवाक्येन यागविधौ उत्तरवाक्यानां संस्थाद्यर्थत्वविधिपरत्वाभ्युपगमात्पौर्वापर्यविधायित्वानुपपत्तेर्द्वितीयव्याख्या न युक्तेत्याशङ्क्याग्नेर्ज्योतिष्टोमाद्यङ्गत्वप्रसिद्धिनिर्वाहार्थत्वं द्वितीयव्याख्यायाः विधित इति सूचयितुमाह * पश्चिमे त्विति * शङ्कानिरासार्थस्तुशब्दः अग्निष्टोमाद्यर्थे क्रियमाणत्वेनाग्नेरग्निष्टोमाद्यङ्गत्वे ऽभिहिते तदर्थे क्रियमाण-

१ संज्ञया वाक्येषु विधायित्वमिति २ पु० पा० ।

तैव कथमित्यपेक्षिते ऽग्नेः कैमर्थ्यापेक्षायामग्निष्टोमादिनाग्नेरनुयष्टव्यत्वं विधितो देवदत्तो यज्ञदत्तेनानुगन्तव्य इति विधितो यज्ञदत्तस्य पश्चाद् गमनप्रतीतिवत्फलवतो ऽग्निष्टोमादेः पश्चाद्भावितथा प्रतीतस्यातिक्रमकारणाभावात्तदर्थतैवोचितेति सूचयितुम् * पश्चादित्युक्तम् * पूर्वव्याख्याने तु पौर्वापर्यस्याविधेयत्वात्तद्वशेन ज्योतिष्टोमाङ्गत्वाप्रतीतेः स्वतन्त्रतेत्याशयः।

## द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥

द्रव्यं वेत्यादिप्रसिद्धइत्यन्तभाष्यं तात्पर्यतस्तावद्व्याचष्टे * अत्यन्तेति * श्लोकं व्याचष्टे* न हीति * पूर्वपक्षोक्तं तत्प्रख्यत्वमनुभाषणपूर्वं परिहरति * यत्त्विति * यदि यदाहवनीये जुह्वतीतिवच्छुद्धो ऽग्निः क्रत्वङ्गत्वेनाथेत्यादिवाक्यैर्विधीयते ततस्तत्प्रख्यत्वं भवेत् स त्वाहवनीयवाक्याच्छुद्धः प्राप्तक्रत्वङ्गभावएव चिनोतिवाक्यात् चयनसंस्कार्यतया श्रुतो ऽथेत्यादिवाक्यैस्तादृगेव क्रत्वङ्गत्वेन विधीयते ताद्रूप्येण चान्यतो ऽप्राप्तेर्न तत्प्रख्यतेत्यर्थः।श्लोकार्थमुपसंहरति * तस्मादिति * एतदेवं भाष्यमवयवशो व्याचिख्यासुः कतमदिति प्रश्नभाष्यमग्निशब्दार्थस्य सर्वलोकप्रसिद्धेरयुक्तमाशङ्क्योपपादयति * कतमदिति * यागनामत्वे ऽग्निशब्दस्येष्टकाभिरग्निं चिनुतइति वाक्यान्तरेण तदङ्गतया चयनविधेरङ्गाङ्गिनोरभेदोपचारेणाग्निचयनं करोतीति सामानाधिकरण्यमपि सम्भविष्यतीत्याशयः। यदित्युत्तरभाष्याशयमाह * सिद्धान्तेति * चोदनाया इति सूत्रावयवव्याख्यानार्थं चिनुतइति भाष्यमुपपादयति*तस्मादिति * वायव्यं श्वेतमालभेतेत्यादेर्यागाभिधानाशक्तावपि यागचोदनाभ्युपगमात्तद्वैषम्यार्थम् * द्रव्येत्युक्तम् * उपपत्त्यन्तरमाह * तथा चेति * या त्वनुयजातिशब्दादग्नेर्यागतोक्ता तत्परिहारार्थमनुशब्दमनुशब्दश्चेति भाष्यमाशङ्क्यानुभाषणपूर्वं व्याचष्टे * अन्विति * नानुयजातिशब्देनाग्नेरग्निष्टोमादिभिरनुयष्टव्यतोच्यते किं त्वग्निष्टोमादिशब्दसामानाधिकरण्यादेकाहग्राही द्विरात्रादिशब्दसामानाधिकरण्याच्चाहीनग्राही यजिः सत्रवाचिशब्दाभावादग्निष्टोमादिसंस्थासद्भावमात्रेण च सत्रग्रहणे ऽहीनानामपि तथैव ग्रहणसिद्धेर्द्विरात्रादिवाक्यानर्थक्यापत्तेः मन्त्रग्राहित्वं कथमिति न विद्मः। चयनसंस्कृतस्याग्नेरेकाहाद्यङ्गत्वोक्तये ऽनुशब्द इत्युत्तरार्द्धार्थः श्लोकार्थमुपपादयितुमाह * यदि हीति * यदग्निष्टोमादिभिर्यागैः कुर्यात्तदग्निमन्विति व्यधिकरणत्वेनाग्निशब्दस्य यजिसामानाधिक-

रण्याभावान्न दुःखेन यागवाचित्वकल्पना युक्तेत्युक्ते सामानाधि-करण्याभावे ऽपि द्वितीयोक्तानुयजनकर्मत्वान्यथानुपपत्त्याग्नेर्यागत्वं कल्पयिष्यतइत्याशङ्क्य * यदि चेत्युक्तम् * अग्निचयनस्याग्निष्टो-मादिकाललक्षणोत्त्यर्थत्वेनानुशब्दस्यानुर्लक्षणइति कर्मप्रवचनीय-सञ्ज्ञत्वात्कर्मप्रवचनीययुक्ते द्वितीयेति स्मृतेस्तद्योगनिमित्तत्वाद्धेयं द्वितीया कर्मणीत्यर्थः । लक्षणार्थतानुशब्दस्य तत्रेत्यनेनोक्ता चिनो-त्यश्रुतेरग्निचयनमन्वित्यर्थालाभमाशङ्क्याग्नि * शब्दश्चेत्युक्तम् * श्लोकार्थमुपसंहरति * तेन ऋत्वङ्गभावेति * तृतीयेत्थम्भूतलक्षणे ऽग्निष्टोमेनैवानुयजतीत्यग्निष्टोमाख्यप्रकृत्यङ्गत्वे विहिते ऽतिदेशेनैवो-क्थ्यादिषु प्राप्तेस्तमुक्थ्येनेत्यादेस्तुत्यर्थानुवादत्वेनैकवाक्यत्वावगमा-द् बहुवचनानुपपत्तिमाशङ्कते * चोदकेनैवेति * दशमे य एवं वि-द्वानग्निं चिनुतइति वाक्यविहितमाग्निमुपष्टम्भनं वा एतद्यज्ञस्य यद-तिग्राह्या इति वाक्यविहितानतिग्राह्यानुदाहृत्याग्न्यतिग्राह्यं विकृ-तावतिदिश्यते न वेति सन्दिग्धे अग्न्यतिग्राह्यस्य विकृतावुपदेशा-दप्रवृत्तिः स्यादिति सूत्रेणाग्नेस्तमुक्थ्येनेत्यादिनातिग्राह्याणां च यदु-क्थ्ये ऽतिगृह्णीयादित्यादिना कासु चिद्विकृतिषूपदेशादातिदेशाप्र-वृत्तिं पूर्वपक्षयित्वा निर्देशस्यापर्यायप्रवृत्तेः सर्वाङ्गं तुल्यत्वादग्न्य-तिग्राह्यस्यापि ग्रहणमितिग्रहणं तुल्यत्वादित्यनेन सिद्धान्तिते वि-कृतौ तदुपदेशः किमर्थ इत्याशङ्क्यातिदेशागृहीतस्यापि कासु चि-द्विकृतिषूपदेशेन ग्रहणे गुणकामप्रवृत्त्यर्थं समानविधानत्वं प्रयोजन-मिति ग्रहणे समानविधानं स्यादित्यनेन वक्ष्यमाणत्वेनाप्रतीयमान-स्तुत्यर्थत्वकल्पनायोगाद्वचनानीति बहुवचनोपपत्तिरिति परिहरति * दशम इति * कर्मण्यपि द्वितीयायां तत्क्रियात्वजात्यपेक्षयानुश-ब्दस्य यजिविशेषणत्वोपपत्तेरवान्तरजातितुल्यत्वानावश्यकत्वान्ना-नुयजनकर्मत्वमात्रेणाग्नेर्यागरूपत्वावगतिरित्याह *न चेति * पूर्व-पक्षोक्तदृष्टान्तानुभाषणपूर्वं वैधर्म्यमाह * यस्त्विति * किं चिदकु-र्वतो देवदत्तस्य यज्ञदत्तकर्मकर्तृकानुगमनकर्मत्वायोगात् द्वितीयोक्त-कर्मत्वान्यथानुपपत्त्या कर्तृत्वमात्रोपादाने सति क्रियान्तरानुपादा-नात्तुल्यक्रियाकल्पनं युक्तं चयनसंस्कृताग्निवाचिना त्वग्निशब्देन चयनाख्यक्रियान्तरोपादानान्न तुल्यक्रियाकल्पना युक्तेत्यर्थः ।

तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्म-

विधानानि ॥ २३ ॥

अग्नेः स्तोत्रमित्यादावग्निशब्दवाच्यचयनसंस्कृतज्वलना-

व्यद्रव्यसंयोगाल्लक्षणयाग्न्याख्यः क्रतुः स्यात्तेन कारणेनाग्नेस्तोत्रादिधर्मविधानान्युपपद्यन्तइत्येवं पूर्वपक्षोक्तलिङ्गपरिहारार्थत्वेन सूत्रव्याख्यानार्थं यत्त्वित्यादिभाष्यं तात्पर्यतो व्याचष्टे * अग्नेरिति * अग्निसंयोगाद्यागलक्षणायां यागमात्रप्रसक्तिमाशङ्क्य चित्यविशेषणं तद्भाष्ये कृतं तद्व्याचष्टे *ज्वलनेनेति* व्याख्येयभाष्यानुसारादग्निशब्दश्चेति पूर्वसूत्रस्थवार्त्तिकालोचनया च ज्वलनसामान्येन स्थापनसंस्कृतविशेषो लक्ष्यतइत्यर्थः । वैतसशाखयावकाभिश्चाग्निं विकर्षतीत्यादौ त्वग्निस्थापनात्प्राक् प्रयोगादग्निशब्दस्य स्थललक्षणार्थत्वमुक्तं तत्तेष्वेवेत्येवकारार्थमाह * न चेति * भाष्यकारान्तरकृतानि तु चिन्तान्तराणि कस्मान्नानेन भाष्यकृता दर्शितानीत्याशङ्क्याह * यस्त्विति * फलवदफलवन्नित्यानित्यत्वं[1]विचारणमग्न्याद्युदाहरणेषु पर्णमय्यधिकरणसिद्धो प्राकृतवैकृतत्वविचारश्चास्मिन्नेवोदाहरणे ऽग्न्यतिग्राह्याधिकरणसिद्धविचारस्तु[2] गोदोहनोदाहरणे उत्तरवेदिविकाराविकारकाम्यो गुणो नित्यमर्थं करोतीति व्युत्पादनान्नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषादिति तृतीयाधिकरणसिद्धः सङ्कर्षे द्वितीये ऽध्याये मध्यमायामुपसद्यग्निश्चीयते प्रकृत्युपकृतत्वादित्यत्राधिकरणे मध्यमायामुपसद्यग्निचयनं सिद्ध्येत् । किं चितावौत्तरवेदिका धर्माः कार्या न वेति सन्दिह्याग्न्युत्तरवेद्योः समुच्चयात् भिन्नकार्यत्वावगमेनाग्नेरुत्तरवेदिकार्यापत्त्यभावावगतेरौत्तरवेदिकधर्मानतिदेशं पूर्वपक्षयित्वा सोत्तरवेदिस्तु क्रतुं चित्वा नोत्तरवेद्या अग्निश्चीयतइति वचनालोचनया समुच्चयावगमे ऽपि चयननिष्पादितस्थलस्याग्निं चिनुतइति द्वितीयोक्ताग्निसंस्कारार्थत्वे ऽस्य योग्यतयाग्निधारणात्मकसंस्कारार्थत्वावगमेनोत्तरवेद्यामग्निं निदधातीत्यग्निधारणाख्योत्तरवेदिकार्यापत्त्यवगमात् कार्यैक्ये ऽपि च वेद्योर्हविष्यासादयतीति वेदिबर्हिषोरिव स्थलोत्तरवेद्योरपि पाक्षिकप्राप्त्यभावेन नियमविध्यभावादन्योन्यनैरपेक्ष्यानवगतेः समुच्चयाविरोधादुत्तरवेदिकार्यापत्त्या स्थलाख्यस्याग्नेस्तद्धर्मातिदेशं सिद्धान्तयितुम् उत्तरवेद्या समुच्चीयमाने ऽपि चयने उत्तरवेदिकार्यापन्ने उत्तरवेदिधर्मा भवेयुरिति वदता तत्रत्यभाष्यकृतौत्तरवैदिकधर्मग्राहित्वलक्षणस्य तद्विकारत्वस्यातद्विकारत्वपूर्वपक्षनिरासपूर्वमुपपादयिष्यमाणत्वात् सिद्धवच्च समुच्चयोक्त्या बाधरूपतद्विकारत्वानिरासेन बाधरूपस्यातद्विकारत्वस्य तत्र वक्ष्यमाणत्वात्तद्-

१ नित्यानित्यत्वेति २ पु० ना० ।

२ अग्न्यतिग्राह्याधिकरणसिद्धो नित्यानित्यत्वविचारस्त्विति २ पु० पा० ।

धिकरणसिद्धः न केवलं गतार्थत्वादुपेक्ष्यं किं त्वप्रसक्तत्वादपीति इहेत्यनेनोक्तं कस्मात्तर्हि तेन कृत इत्यपेक्षायामुपहासार्थम् * स्मरणेत्युक्तम् * प्रासङ्गिकमधिकरणद्वयं समाप्य प्रकरणार्थमुपसंहरति * तस्मादिति * पूर्वत्र सम्भवाद्ध्यादिर्न भेदक इत्यर्थः ।

॥ मासाग्निहोत्रादीनां कर्मान्तरताधिकरणम् ॥ ११ ॥

## प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

प्रकरणान्तरविचारस्यानन्तरासङ्गतिमाशङ्क्याह * गतिमिति * प्रासङ्गिकचिन्तावदपवादचिन्तापि प्रकृताव्यवधायिकेति सू-
६।१७।१ चयितुमपवादः प्रसक्तत्वेनोपचरितः गुणचिन्तयापि प्रकरणान्तरचिन्तायाः सङ्गत्यभावमाशङ्क्य भेदकान्तरस्यावाच्यत्वात्पारिशेषिकी सङ्गतिः पञ्चस्वित्यनेनोक्ता । पूर्वपक्षमाह * तत्र तावदिति * दर्शपूर्णमासवैश्वदेववरुणप्रघाससाकमेधसुनासीरीयाग्न्यादिशब्देन गृहीतानि । श्लोकार्थमुपपादयति *यथैवेति* भाष्ये कालविध्युक्तेः प्रयोजनमाह * न चेति * ननु नित्ये ऽग्निहोत्रे दर्शपूर्णमासयोश्च जीवनस्य निमित्ततयाप्यन्वये तावत्कालमनुष्ठेयत्वावगतेर्जीवनावधिकालावरोधान्मासविधिर्न भवतीत्याशङ्क्याह *न चेति* अप्रकरणाधीतस्यापि मासस्य साक्षात्कर्मान्वयविधेः प्रकरणाधीतेन कालेन तुल्यबलत्वाविरोधमभ्युपगम्यातुल्यकल्पत्वेनातुल्यबलत्वाशङ्कानिरासायातुल्यकल्पजरावधित्रिंशद्वर्षपरिमितकालान्तरपरामर्शादिशब्दः जीर्णस्यापि सहायोपादानेनानुष्ठातुं शक्तस्य जीवनावधिकालो ऽसहायस्य जरावधिः प्रविव्रजिषोः त्रिंशद्वर्षपरिमित इति जीवनादिकालानां व्यवस्थितविकल्पवदत्यन्तविरक्तस्य शीघ्रं प्रविव्रजिषोर्मासो ऽपि वा व्यवस्थितविषयतया विधातुं शक्य इत्याशयः काम्यप्रयोगस्य वा सायं प्रातःकालत्वावगमे ऽपि सायं प्रातर्मासं जुहुयादित्यन्वयोपपत्तेर्विरोधिकालान्तरानवगमान्मासविधिर्भविष्यतीत्यन्यथा परिहरति * यो वेति * नन्विति भाष्येण मासविधेर्नित्याग्निहोत्रादिविषयत्वे प्रकरणबाधदोषाण्याशङ्क्य काममित्यनेन परिहृतं तद्व्याचष्टे * प्रकरणस्य चेति * प्रकरणानुग्रहार्थं दीक्षितो न ददाति न जुहोति न पचतीत्यग्निहोत्रादीनां पर्युदस्तानां प्रतिप्रसवो ऽयमिति पक्षान्तरमाह * अथ वेति * दीक्षितस्य दानहोमपाकप्रतिषेधे ऽविशेषात्सर्वपाकदानहोमप्रतिषेधः स्यादिति दशमाधिकरणे ऽपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यादिति सिद्धान्तसूत्रेण पर्युदासत्वस्य वक्ष्य-

माणत्वात्प्रतिषेधोक्तिः पर्युदासलक्षणार्था । एवमपि प्रकरणानुग्रहः कथमित्याशङ्क्याह * स त्विति * कौण्डपायिनप्रयोगमध्ये. प्रतिप्रसवकरणात्प्रकरणपाठो युक्त इत्याशयः । अस्मिन्पक्षे प्रकरणपाठोपपत्तावपि तद्व्यापाराभावात्प्रकरणाननुग्रहेणापरितोषात्सिद्धान्ते चाग्निहोत्रादिसंज्ञानां षण्मासपरिमितानां षण्णां षण्मासपरिमितसोमयागसहितानां सम्वत्सरपरिमितमत्र प्रयोगवचनेन फलविधिसूचनार्थं स्वगतमाह * अथ वेति * न चान्यसाहित्यमात्रेणान्यत्वापत्तिरित्याह * न हीति * नन्वगतफलस्याग्निहोत्रादेर्नैराकाङ्क्ष्यात्फलान्तरान्वयानुपपत्तेः फलान्तरान्वयादेवान्यतापत्त्यतइत्याशङ्क्याह * न चेति * ननु कर्मणस्त्वप्रवृत्तित्वादित्यत्र करणस्य क्रत्वन्तरगमनविधिनिषेधान्न पूर्वस्याग्निहोत्रादेः कौण्डपायिनान्तःपातो युक्त इत्याशङ्क्याह * न चेति * अतिदेशः क्रत्वन्तरान्वयासम्भवे ऽप्युपदेशतो ऽन्वयाविरोधः स्वशब्दगिरोक्तः। पूर्वपक्षमुपसंहरति * तस्मादिति * यथाभाष्यं सिद्धान्तं दूषयितुमुपन्यस्यतीति पूर्वत्रासम्भव्युपसल्लक्षणगुणरूपेण हेतुना भिन्नतेत्यर्थः । श्लोकं व्याचष्टे * यदि हीति * स्वार्थोपसद्भावे ऽपि पश्वङ्गपरिधिप्रहरणस्य हारियोजनकाललक्षकत्ववत् परार्थानामप्युपसदामग्निहोत्रादिकाललक्षणकृतोपपत्तिमाशङ्क्य * परार्था वेत्युक्तम् * हारियोजनस्य ज्योतिष्टोमावयवत्वात्परिधिप्रहरणस्य पशुद्वारा ज्योतिष्टोमाङ्गत्वात्*एकप्रयोगवचनग्रहणाद्युक्तम्*काललक्षकत्वं न त्विहैव प्रयोगवचनग्रहणमस्तीत्याशयः । एकप्रयोगवचनग्रहणाभावे ऽपि दर्शपूर्णमासयोः सोमकाललक्षणकत्ववदुपपत्त्याशङ्कानिराससूचनार्थो वाशब्दकृतः । दर्शपूर्णमासस्य सोमाधिकरणप्रतिपत्त्या काललक्षणा युक्ता उपसदां तु क्रत्वन्तरमध्यपातित्वाक्रत्वन्तरप्रयोगमध्ये च क्रत्वन्तरानिषेधादग्निहोत्राद्यधिकारप्रतिपत्त्यर्थत्वेन काललक्षणार्थत्वानुपपत्तेः क्रमप्रतिपत्त्यर्था लक्षणा वाच्या न च भिन्नप्रयोगवचनगृहीतानां क्रमो ऽस्तीत्याशयः । ता इत्यनेनाग्निहोत्राद्यङ्गत्वेनोपसद्विधिरभिप्रेतः।प्रति प्रसवे ऽग्निहोत्राद्यङ्गत्वाद्विधेः सत्रैकदेशत्वे चोपसदुत्तरकालत्वस्यापि सोमयागवत्प्राप्तेरविधानान्न वाक्यभेदो ऽस्तीत्याशङ्क्याह * तस्मादेवेति * अङ्गत्वाविधाने ऽप्युपसदुत्तरकालत्वस्य प्रतिप्रसवे ऽवश्यविधेयत्वान्निर्ज्ञातसायमादिकालत्वेन च सत्रत्वोपाधिककालाग्रहणात्सत्रैकदेशत्वे ऽपि विधेयत्वावगतेर्वाक्यभेदो ऽपरिहार्य इत्याशयः । कर्मान्तरत्वे ऽपि तर्हि नामातिदेशतो निर्ज्ञातकालत्वात्तस्य च प्रयोगवचनाद् बलीयस्त्वो-

६।१८।१

दकादपि बलीयस्त्वेन सत्रप्रयोगवचनेनोपसदुत्तरकालत्वाग्रहणाद् नेकार्थविधिः स्यादित्याशङ्क्याह * कर्मान्तरेति * उपसंहरति * तस्मादिति * दूषयितुम् * आरभते इदं त्विति * वाक्यभेदाख्यप्रसिद्धभेदकान्तरापत्तिदोषे ऽभिहिते वाक्यभेदोक्त्या चोदिते हि तदर्थत्वात्तस्य तस्योपादिश्यतेत्यनेन गुणस्यानेकात्मकत्वनिमित्तपूर्वत्रासम्भवलक्षणभेदकत्वहेतूक्तेर्न भेदकान्तरापत्तिरित्याशङ्का * अथ वेत्युक्तम् * प्रकरणान्तरानवकाशमुपपादयति * तथा हीति * दर्शपूर्णमासाद्युदाहरणाव्यापकत्वादपि न वाक्यभेदो भेदहेतुरित्याह * किं चेति * सत्रैकदेशत्वेनाग्निहोत्रादिविधावुपसदुत्तरकालसोमरूपयागसत्रैकदेशसाहचर्येणाग्निहोत्रादेरपि सत्रैकदेशस्य तदुत्तरकालत्वप्राप्तेरग्निहोत्रे ऽपि वाक्यभेदस्य शक्यपरिहारत्वं शक्त्या सूचितम् । श्लोकं व्याचष्टे * मासमिति * न चोपसदो ऽग्निहोत्रस्य दर्शपूर्णमासयोश्चेति भाष्यपर्यालोचनमात्रेणानुषङ्गमा-
६१९।१ शङ्कते * तत्रेति * निरस्यति * तदिति * श्लोकं व्याचष्टे * मासमिति * न चोपसदो ऽग्निहोत्रस्य दर्शपूर्णमासयोश्चेति भाष्यपर्यालोचनमात्रेणानुषङ्गमाशङ्कते * तत्रेति * श्लोकं व्याचष्टे * तत्रेति * अनुषङ्गवादिनमुपहसति * यस्त्विति * उपहासाङ्गं प्रति वेदाननुज्ञातोपसदावृत्त्यनौचित्यत्वादनिष्टापत्तिमाह * तत्र त्विति * क्त्वाप्रत्ययस्य पूर्वकालमात्रवाचित्वादग्निहोत्रात्प्राक् कृतानामुपसदां दर्शपूर्णमासादिपूर्वकालत्वोपपत्तेर्नानुषङ्गेण वृत्त्यापत्तिरिति शङ्कते * तथेति * सर्वत्रानुषङ्गस्य यत्प्रयोजनं सर्वेभ्यः प्रागनुष्ठानं तत्संपादनमित्यर्थः। शब्दोच्चारणमपि तद्ध्युपसद्वत्सकृदेव स्थितं सदनुषङ्गलभ्यं सर्वेषामग्निहोत्रादीनामुपसदुत्तरकालत्वबोधलक्षणमुपकारं करिष्यतीत्यनुषङ्गानर्थक्यमिति परिहरति * तथा सतीति * कथमित्यपेक्षायां पाठक्रमानुरोधेनेतरेषामग्निहोत्रोत्तरकालतोक्ता यथाभाष्यं सिद्धान्तव्याख्यादूषणमुपसंहरति * तस्मादिति * स्वमतेन सिद्धान्तमुपक्रमते * इतीति * श्लोकं व्याख्यास्यन्प्रकरणान्तरोक्तिं तावत्प्रकृतबुद्धिविच्छेदाशयत्वेन व्याख्यातुमाह * इह तावदिति * अनुपादेयान्वये कर्मणो विधेयताभेदहेतुत्वस्यासिद्धावस्थत्वात्केनापीत्यनवक्लृप्तिः अतिरात्रइत्यादौ विपरिवृत्तिसद्भावे प्रकरणान्तरस्य धात्वर्थभेदकत्वाभावात्प्रकरणान्तरं सदप्यनुपयोगीत्यर्थः। प्रकरणान्तरोक्तेश्च प्रकृतबुद्धिविच्छेदाशयतोत्तरसूत्रे स्पष्टयिष्यत इत्याह * तथा चेति * श्लोकं व्याख्यातुमुपक्रमते * सर्वत्र चेति * व्याचष्टे * तत्रेति *

प्रदेशान्तरस्थे कर्मणि प्राप्तिबुद्ध्यभावादुपादेयस्यापि गुणस्याश-क्यविधित्वाशङ्कोद्देशोक्त्या निरस्ता । स्वभावतः प्राप्तिबुद्ध्यभावे ऽपि एकोद्देशेनेतरोपादानं विनान्वयायोगादुपपदश्रुतौ च कर्मानु-वादाकाङ्क्षणात् यत् जुव्हति[1] तदाहवनीयइत्युद्देशात्प्राप्तिबुद्धिः सम्भव-तीत्याशयः । यस्मिन्देशे काले वा कर्म चिकीर्ष्यते तस्मिन्देशाद्यनु-पादेयपञ्चकस्यापादयितुमशक्यत्वाद्देशाद्यन्वये तदुद्देशेनैव कर्म-विधेयमित्युक्ते तथाप्यन्यार्थेन विधेयत्वात्समादिविधिवन्न कर्मभेदा-पत्तिरित्याशङ्क्य*परोद्देशेन चेत्याद्युक्तम्* समादावपि विधिसाम- ६२०।५
र्थ्यात्कर्मान्तरे बुद्धिर्भवन्ती बलीयस्या विपरिवृत्त्या वार्यते तदभावे विशिष्टविध्युपपत्तेर्न भेदबुद्धिर्बाधितुं युक्तेत्याशयः । एतदेवरूपको-क्त्या विवृणोति * एवं हीति * सामान्यन्यायमुक्त्वा प्रकृते योजय-ति * तदिहेति * ननु सन्निधेर्यद्वृत्तयोगलक्षणस्य चोद्देशस्य प्रा-प्तिबुद्धिहेतोरभावे ऽपि नामधेयात्प्राप्तिबुद्धिर्भविष्यतीत्याशङ्कते * ननु चेति * ननु नाम्ना पूर्वकर्मणि बुद्धिस्थीकृते ऽपि नामैक्य-स्यानैकान्तिकत्वेन तदेवेदमिति तत्त्वप्रत्यभिज्ञाभावान्नोत्पत्तिः प्रति-बद्धुं शक्येत्याशङ्क्याह * ततश्चेति * बुद्धिस्थत्वे ऽपि ६२१।१
प्रत्यभिज्ञानाभ्युपगमे सन्निधाने ऽप्यप्रत्यभिज्ञापत्तेर्बुद्धिस्थत्वमा-त्रेण प्रत्यभिज्ञाया वक्तव्यत्वात् नामापि प्रत्यभिज्ञाहेतुत्वा-दुत्पत्तिं प्रतिबध्नातीत्याशयः । यतश्च नाम्नो ऽप्युपनयन-शक्तिरस्तीति ततश्चेत्यनेन परामृष्टान्तरार्थं विवृणोति * यत्रेति * सन्निधेस्तावद्दौर्बल्ये ऽप्यविलक्षणकर्मोपस्थापकत्वात्प्रत्यभिज्ञाहेतुता युक्तेति परिहर्त्तुमारभते * उच्यतइति * श्लोकं व्याचष्टे * स-न्निधाने हीति * नाम्नस्तु पूर्वकर्मोपस्थापकत्वस्य पूर्वकर्मवाचि-त्वनिमित्तकत्वादाख्यातस्य च पूर्वकर्मविषयत्वं विना नाम्नः पूर्वक-र्मवाचित्वानवधारणात्पूर्वकर्मोपस्थापकत्वानुपपत्तेर्नोत्पत्तिप्रतिबन्ध-कत्वं सम्भवतीति परिहरति*नामधेयं पुनरिति*अभ्युपेत्याप्युपस्था-पकत्वं भावनावाचित्वाभावात्तदुपस्थापकत्वं न सम्भवतीत्याह*किं चेति * श्लोकं व्याचष्टे *सामानाधिकरण्येन हीति*वाक्यार्थत्वात् प्रधानभूता भावना * प्रयोजनशब्देनोक्तेति सूचनायेतीत्युक्त-म् * परमार्थतस्तु वैलक्षण्याद्धात्वर्थो ऽपि नोपस्थाप्यतइत्याह * अथ वेति * नन्वाख्यातोक्तरूपानुपस्थापने ऽपि नित्याग्निहोत्रविधि-स्थनामोक्तस्य स्वरूपस्योपस्थापनं भविष्यतीत्याशङ्क्य विधिविषयी-कृतस्य रूपस्योपस्थापनीयत्वात् भावार्थाधिकरणन्यायेन च धात्वर्थ-

[1] जुहुयादिति २ पु० पा० ।

स्य धातुना विधिविषयीकरणान्न नाम्नोपस्थापनं सम्भवतीत्येवं निरस्यन् श्लोकं व्याचष्टे*असत्त्वेति * द्रव्यशब्देन सत्त्वशब्दं निष्प-
६२२।१ न्नरूपवाचितया व्याख्याय तदुपपादनार्थम् * लिङ्गेत्युक्तम् * लिङ्गसंख्यवाचिन्याः सुपः प्रातिपदिकपरत्वस्मृतेस्तस्य च प्रातिपदिकार्थः सत्तेति सत्त्ववाचित्वस्मृतेर्लिङ्गसंख्यान्वयार्हत्वेन प्रातिपदिकत्वात्सत्त्ववाचितेत्याशयः । नन्वसत्वभूतस्य धात्वर्थस्य धातुना विधिविषयीकृतस्य नाम्नानुपस्थापनाद्भेदे ऽभ्युपगम्यमाने ऽति रात्रश्चतुर्विंश इत्यादावाख्याताश्रुतेरसत्त्वभूतधात्वर्थानुपादानात् सत्त्वभूतस्यैव धात्वर्थस्यातिरात्रः कार्यश्चतुर्विंशः कार्य इत्यादिविधिपदाध्याहारेण नाम्ना विधिविषयीकृतस्य प्रकरणान्तरे ऽपि नाम्नोपस्थापनसम्भवादकर्मान्तरत्वापत्तेः प्रकरणान्तरोक्तिरनर्थिका स्यादित्याशङ्काभ्युपगमेन तावत्परिहरति * यत्र त्विति * अवभृथं यन्तीत्यादावाख्यातश्रुतावसत्त्वभूताया भावनाया विधिविषयीकृताया नाम्नानुपस्थापनात्प्रकरणान्तरेण भेदसिद्ध्यर्थत्वात्प्रकरणान्तरोक्त्यर्थवत्त्वशङ्कानिरासार्थम् * भावना वेत्युक्तम् * शुद्धाया भावनाया विधिविषयत्वायोगात्तदनुरञ्जकस्य च यागाख्यधात्वर्थस्य वारुणेनैककपालेनावभृथं यन्तीति वारुणशब्दोक्तद्रव्यदेवतान्वयप्रकल्पितेन याजिना भावनानुरूपेणोक्तावपि प्रकरणान्तरे यज्यभावेनासत्त्वभूतधात्वर्थानुरक्तात्मना भावनानुक्तेर्धात्वर्थाधीननिरूपणत्वाच्च भावनायास्तद्भेदं विना भेदो न युक्त इत्याशयः । पूर्वकर्मोपस्थापनसम्भवे ऽनुपादेयान्वयसहकृतस्यापि प्रकरणान्तरस्य भेदकत्वं नास्तीत्येकेनेत्यनेनोक्तम्। असत्त्वभूतधात्वर्थानुपादाने तावदुदाहरणमाह * तद्यथेति * गवामयने प्रायणीयसञ्ज्ञमतिरात्रसंस्थं प्रथममहश्चतुर्विंशसञ्ज्ञं च द्वितीयं पृष्ठाभिप्लवसञ्ज्ञाश्च षडहा विहिताः प्रकरणान्तरे ऽतिरात्रइत्यादिवचनेनोपस्थाप्य यं कामयन्ते तमेतेनाप्नुवन्तीत्यादिवचनान्तरेण फले विधीयन्तइत्यर्थः । एकस्य शब्दस्य पूर्वकर्मोपस्थापने ऽन्यत्र च विधौ व्यापारायोगादेकेनोपस्थाप्य * अपरेण विधीयतइत्युक्तम् * असत्वभूतधात्वर्थानुरक्तात्मना भावनानुरक्तावुदाहरणमाह * यथा चेति * वारुणया निष्कासेन तुषैश्चावभृथं यन्तीति वरुणप्रघासप्रकरणस्थेनावभृथशब्देन सौमिकमवभृथाख्यं कर्मोपस्थाप्य निष्कासाख्यं ऽङ्गसंस्कार्यं फलोक्त्युपलक्षिते यन्तीत्यवभृथानुष्ठानार्थप्राप्तगमनानुवादिप्रत्ययानुग्रहार्थधातुपरेण विधीयतइत्यर्थः । तृतीयया तु निष्कासस्य साधनत्वोक्तावपि निष्कासस्य

वारुणयामिक्षायागोपयुक्तद्रव्यशेषत्वात्तुषाणां चाग्नेययागाङ्गद्रव्यशेषत्वात् यत्किं चित्सोमलिप्तं तेनावभृथं यन्तीतिवत्प्रयाजशेषेण हवींष्यभिघारयतीतिवच्च प्रतिपाद्यस्वरूपसंस्कार्यत्वाविरोधः । प्रकरणान्तरोक्त्यर्थत्वाय भेदपक्षमाह * यदा त्विति * संस्कार्योपलक्षणायादिशब्दः नाम्ना पूर्वकर्मोपस्थानादुत्पत्तिप्रतिबन्धमाशङ्क्यो * त्पत्तीत्युक्तम् * विधिविपरिवृत्तिरेवोत्पत्तिं प्रतिबध्नाति न स्वरूपविपरिवृत्तिः स्वरूपप्राप्तावपि दध्यादिवत् विधेयत्वोपपत्तिरित्याशयः । नाम्नोत्पत्तिविधिसहचरितेनोत्पत्तिविधिविपरिवृत्तिमाशङ्क्य साक्षाद्विधिविपरिवृत्तिः प्रतिबन्धिका नान्यद्वारेति सूचयितुम् * बलीयस्येत्युक्तम् * यावद्विधित्वमनिवार्यमाणं तावत्सर्वं भिनत्ति न त्वस्वभूतधात्वर्थावच्छिन्नभावनामेव केवलमिति यावच्छब्दार्थः । भाव्यनिष्ठत्वाद्भावनाया धात्वर्थभेदं विनापि प्रत्यभिज्ञानाभावे भाष्यभेदाद्भेदोपपत्तेर्धात्वर्थप्रत्यभिज्ञामात्रेणोभयाभेदायोगाद्दध्यादिवच्च विधेयत्वानपेक्षयागादिस्वरूपाप्राप्तेर्विधिविषयत्वविपरिवृत्तिनिरपेक्षस्वरूपविषयविपरिवृत्त्ययोगान्नाम्ना विधिविषयभूतधात्वर्थविपरिवृत्तेरेव कृतत्वेनोभयभेदस्याप्ययोगात्पक्षद्वयापरितोषेण भावनामात्रभेदं धात्वर्थभेदं च स्वमतेनाह * परमार्थतस्त्विति * आसनमुपवेशनमुपायश्चोपगमनं तौ वाच्यतया विद्येते ययोर्धात्वोस्तत्परप्रत्ययचोदिते कर्मणि तस्यैव पूर्वविहितस्य धात्वर्थस्य नाम्नोपादानाद्धात्वर्थे विभिद्यत इत्युक्ते ऽग्निहोत्रादिवन्नाम्नानुपस्थापनमाशङ्क्य तद्वैषम्याय धात्वर्थश्रुत्युक्तिः । श्लोकं व्याचष्टे * नामेति * विधिपदानपेक्षस्यापि नाम्नो विधिविषयभूतधात्वर्थोपस्थापनोपपत्तिसूचनार्थो मात्रशब्दः प्रकरणान्तरस्थस्यापि यागस्य प्राग्विधिविषयीकृतत्वं विवक्षित्वा प्राकृतत्वोक्तिः । सत्रशब्दस्योपलक्षणार्थत्वादवभृथाख्ययागाभेदे ऽपि च भावनाभेदात्तथावभृथः साम्यादिति सप्तमाधिकरणे वक्ष्यमाणसौमिकावभृथभावनाधर्मातिदेशाविरोधात्करणत्वेन वावभृथस्यातिदेशायोगे ऽपि स्वशब्देनोपदिष्टस्य स्वधर्मसन्निधापकत्वात्काम्यगुणाश्रयभूताग्निहोत्रादिवदतिदेशनिमित्तमभिप्रेत्यावभृथनाम्नो ऽतिदेशकत्वोक्त्युपपत्तेरवभृथे ऽप्ययमेव प्रकारः अतो नाम्नोपस्थापनाद्धात्वर्थाभेदे ऽपि भावनाभेदस्य प्रकरणान्तरहेतुकत्वात्प्रकरणान्तरोक्तिरर्थवतीत्याह * तस्मादिति * भाष्यमपि गमयति * भाष्येति * नन्वनुपादेयान्वयसहकृतस्यासन्निधेर्भेदहेतुत्वे ऽथोच्यतेत्यादिभाष्येण वाक्यभेदहेतुत्वोक्तिरयुक्ता स्यादित्याशङ्क्याह * अथेति * न च यत्स-

मित्सम्बन्धेन क्रियतइत्यभ्यासाधिकरणभाष्यं समिदादिपदस्य देवतानभिधायित्वाद् गुणहेतुकभेदाभावे ऽप्यभ्युपेत्यवादत्वेन यथा समर्थितं तथेदमपि समर्थनीयमित्यर्थः ।

॥ आग्नेयादिकाम्येष्ट्यधिकरणम् ॥ १२ ॥

## फलं चाकर्म सन्निधौ ॥ २५ ॥

ननु तदिह षड्विधः कर्मभेदो वर्त्तिष्यतइति भाष्ये षण्णामेव भेदहेतुत्वप्रतिज्ञानात्तेषां च पर्यवसितत्वात्किमर्थमेतत्सूत्रमित्याशङ्क्याह * एवमिति * सर्वभेदहेतुसमाप्तावपि करणान्तरस्यैवानुपादेयान्वयसहकृतासन्निधिलक्षणप्रकारविशेषोक्त्यर्थमेतत्सूत्रमित्यर्थः । अन्तरशब्दस्य भेदवाचित्वाद्भेदशब्दस्य च विशेषवाचित्वात्प्रकारान्तरशब्देन प्रकारविशेषोक्तिः । एतदेव विवृणोति * स-
६२३।६ र्वेति * कालान्वयवाक्योदाहरणानभिव्यक्तावपि कालस्य कथंचित्कर्मानुरोधेनापादनाशक्तेरनुपादेयतया निःशङ्कत्वान्निमित्तस्य तु साम्युत्थानादेरापादयितुमपि शक्यत्वाद्देशस्यापि सरस्वतीदक्षिणतीरादेरुत्तरतः सरस्वतीप्रवाहनयनापादनशक्तेः फलसंस्कार्ययोस्तूपादेयत्वाशङ्काया वार्त्तिकएव वक्ष्यमाणत्वात्कालान्वयवाक्योदाहरणभ्रान्तिः फलं च भेदकमिति भाष्यात् कारणान्तरव्युत्पादनाशङ्कां निराकर्त्तुमाह * तत्रेति * प्रकरणान्तरस्यानुपादेयान्वयानपेक्षस्य द्वाशाहीनस्येत्यादौ भेदकत्वादर्शनात्कथं भेदकत्वेनेत्याशङ्कानिरासार्थत्वेन प्रकरणान्तरस्य भेदकत्वे फलाद्यनुपादेयमपि सहकारि न तन्निरपेक्षं प्रकरणान्तरं भेदकमित्युक्ते कथं तस्य सहकारितेत्यपेक्षायामहीनादिवत्सन्निधिहेतुभूतस्यादृश्यत्वादेव कथं शब्दोपबन्धस्यानुपादेयान्वये कर्मणो ऽसत्त्वादित्यकर्मसन्निधिशब्देनोक्तमित्येवं सूत्रव्याख्यानार्थं तद्भाष्यमित्याशयः । एवं चासन्निधेरेव भेदहेतुत्वावधारणान्नाम्ना धात्वर्थोपस्थापने ऽप्यनुपादेयान्वये भावनोपस्थापनहेतोः कस्य चिदभावाद्भावनाभेदं सूचयितुं तदुदाहरणस्यानारभ्याधीतस्याभावात्प्रकरणान्तरशब्देनासन्निधिलक्षणयोच्यतइति गम्यते । नन्वनुपादेयमात्रान्वयकृतभेदोक्त्यर्थत्वे ऽस्य सूत्रस्य फलवद्देशनिमित्तयोरप्युपादेयतोदाहरणपूर्वं कस्मान्नोपपादितेत्याशङ्क्याह * तत्रेति * दक्षिणात्वस्य स्वभावसिद्धदेशविशेषोपलक्षणार्थत्वादापाद्यस्य चोपलक्षणत्वायोगाद्देशस्योपादेयत्वाशङ्कानुपपत्तेः । प्राक् सिद्धिं च विना निमित्तत्वायोगान्निमित्तस्यापि कर्मतन्त्रापाद्यत्वलक्षणोपादेयत्वशङ्कानुपपत्तेर्नेह देशनिमित्त उदाहृत इत्यर्थः ।

पूर्वसूत्रार्थस्पष्टीकरणार्थत्वे ऽस्य सूत्रस्याधिकरणभेदायोगात्पूर्वाधिकरणे ऽनुपादेयान्वयस्य भेदकत्वे व्युत्पादिते फलादेरुपादेयत्वात्पूर्वाधिकरणविषयत्वं नास्त्यनुपादेयत्वाद्वास्तीति पूर्वाधिकरणविषयाविवेकायैतत्सूत्रमिति व्याख्यान्तरं भाष्यानुसारार्थं सूचयितुमधिकरणशब्दः । पूर्वाधिकरणे तर्हि कस्माद्देशादिवाक्यं नोदाहृतमित्याशङ्क्य कालवाक्योदाहरणस्योपलक्षणार्थत्वाद्व्याख्यातृभिर्दर्शनीयमित्याह ॥ पूर्वत्रैव त्विति ॥ दर्शयति ॥ तद्यथेति ॥ एकेन सङ्कल्पितसत्त्रानारम्भस्य निमित्ततोच्यते परेणाध्यारब्धसमाप्तेरिति दर्शनायोदाहरणद्वयं सासिशब्दो ऽर्द्धवाची शम्याया दूरे प्रक्षेपो यस्मिन्देशे स शम्यापरासः । न चाग्नेयवाक्ये ऽतिरात्रादिवाक्यवद्यज्यश्रुतेरसत्त्वभूतधात्वर्थानुपादानादाग्नेयशब्देन प्रकृतिभूतदार्शपौर्णमासिकाग्नेययागोपस्थापनोपपत्तेर्भावनाभेदे ऽपि धात्वर्थभेदो नास्तीत्याशङ्कां निराकर्त्तुम् । आग्नेयशब्दस्य नामधेयत्वाभावात्तत्प्रकृतयागोपस्थापकत्वं सम्भवतीति परिहारसम्भवे ऽपि प्रौढ्या नामधेयत्वे ऽप्यनुपस्थापकत्वं वक्तुं यजिं विना वाक्यासमाप्तेरसमाप्तस्य च वाक्यान्तरानन्वयात् वाक्यान्तरस्थयज्यपेक्षानुपपत्तेरवश्यकल्प्येन यजिना नामार्थविलक्षणसत्त्वभूतधात्वर्थप्रतीतेर्नोपस्थापनं भवतीति परिहारमाशङ्कापूर्वमाह ॥ यद्यपि चेति ॥ धात्वर्थावच्छिन्नभावनाभेदोक्त्यर्थं कर्मान्तरशब्दः । संस्कार्यत्वाधिकरणे विचार्यमित्यपेक्षायामाह ॥ फलेति ॥ प्राधान्यलक्षणस्योपादेयत्वशङ्कानिरासहेतोर्द्वयोस्तुल्यबलत्वात्फलोदाहरणेन संस्कार्योदाहरणमप्युपलक्षितमित्याशयः । किं तर्हि तयोरुदाहरणमित्यपेक्षायामाह ॥ तत्रेति ॥ त्रैधातव्यवाक्ये संस्कार्यवाचिशब्दाभावात्कथं संस्कार्योदाहरणतेत्याशङ्क्याह ॥ यजमानेति ॥ दीक्षणीयाकार्यं यजमानसंस्कारलक्षणार्थेन दीक्षणीयाशब्देन विशेषणभूतसंस्कार्ययजमानलक्षणे ऽप्यवसीयतइत्याशयः । प्रकरणान्तरशब्दव्याख्यार्थत्वेनाकर्मसन्निधिशब्दव्याख्यानार्थतयानारभ्येतिभाष्यं व्याचष्टे ॥ अनारभ्येति ॥ किं प्राप्तमिति पूर्वपक्षभाष्याशयमाह ॥ तत्रेति ॥ उपनयनादिवच्चाकर्मकालस्यापि संस्कारस्योपपत्तेः स्वतन्त्रविहितयापि त्रैधातव्यया ज्योतिष्टोमादियजमानैः संस्कर्त्तुं शक्य इति अनेनोपलक्षिते स्वारसिकप्रवृत्तिसम्भवे ऽपि अप्रवर्त्तमानं प्रत्यृतौ भार्यामुपेयादित्यादिनियमविधिदर्शनाद्यदाग्नेयं कुर्यात्तद्रुक्काम इति च

१ नामार्थैलचणेति २ पु० पा० ।

२ ज्योतिष्टोमादिरिति २ पु० ना० स्वयमेव यजमान इति पा० ।

विधायकस्य फलविषयत्वव्याख्योपपन्नेर्विधायकोपपत्तेर्विधायकसद्भावस्य वक्तुं शक्यत्वान्न शक्यतइति सिद्धान्तभाष्यमयुक्तमाशङ्क्योपपादयति * सिद्धान्तेति * असाधकं तु तादर्थ्यादिति षष्ठाद्यसिद्धान्तसूत्रेण विध्यन्यथानुपपत्त्या कामनोपबन्धाच्च स्वर्गादेः साध्यत्वप्रतीतेस्तादर्थ्येन कर्मविधावुक्ते प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसम्बन्धस्तस्मात्कर्मोपदेशः स्यादित्यनेनार्थ्यमानं स्वर्गादि प्रतीत्य लक्षणीकृत्योद्दिश्य तदाभिमुख्येन तत्तन्त्रतया कर्मणः समीहितस्वर्गाद्यन्वयावगतेरिति वदता फलस्योद्देश्यत्वादपि तादर्थ्येन कर्मविधिरिति वक्ष्यमाणत्वान्न कर्मतन्त्ररूपोपादेयत्वेन विधिः सम्भवतीत्याशयः । ननूद्देश्ययोरपि देशकालयोर्विधेयत्वदर्शनान्नोद्देश्यत्वमात्रेण विधेयता निराकर्त्तुं शक्येत्याशङ्क्याह * विधीयमानं हीति * देशकालयोः सिद्धवत्काररूपोद्देश्यत्वे ऽपि स्वारसिकप्रवृत्तिविषयत्वापादकप्रयोजनाकाररूपेणोद्देश्यत्वाभावात्स्वरूपतश्च सिद्धवत्कृत्य निर्देशे ऽपि कर्माङ्गत्वेनाप्राप्तत्वाद्विधेयत्वोपपत्तिः । फलस्य तु प्रयोजनाकाररूपेणोद्देश्यत्वात् न विधेयत्वोपपत्तिरित्याशयः । विधायकस्य च फलविषयत्वाभ्युपगमे कर्मविषयत्वायोगात्तस्य निष्फलत्वं स्यादित्यभिधानार्थं न हीति भाष्यं व्याचष्टे * क्रियापि चेति * द्वयं तर्हि विधीयतामित्याशङ्क्याह * न चेति * यस्य पिता पितामहः सोमं न पिबेदित्युद्दिश्यमानयोरिव विधीयमानयोरप्यन्योन्यानाकाङ्क्षत्वेनान्वयापत्तेरवश्यमेकोद्देशेनेतरस्मिन् विधेः फलस्योक्तेन न्यायेनोद्देश्यत्वावधारणात्कर्मणो विधेयतावसीयतइत्याशयः । फलोद्देशेन कर्मविध्युक्तेः प्रकृतोपयोगमाह * ततश्चेति * ननु फलस्योद्देश्यतायाः स्वर्गकामाधिकरणसूत्रोक्तत्वाद्भेदहेतुत्वसम्भवे ऽपि संस्कार्यस्योद्देश्यतायाः क्व चिदनुक्तत्वान्न सम्भवतीत्याशङ्क्य तथापि फलवत्संस्कारकर्मप्रतिप्राधान्याभ्युपगमाद्विधेयत्वे ऽप्राधान्यापत्तेरुद्देश्यत्वावगमाद्भेदहेतुत्वमतिदिशति * एतेनेति * फलस्य चानुपादेयत्वानभ्युपगमे नित्यप्रयोगव्यतिरिक्ते फलकामनातन्त्रप्रयोगकल्पनानुपपत्तेर्नित्यएव प्रयोगे फलकामनाप्रसङ्गात्कामयेदिति वा श्रुतेः कर्माङ्गत्वेन कामनाविध्ययोगान्नित्यानित्यसंयोगविरोधः स्यादित्यभिधानार्थमपि चेति भाष्यं व्याचष्टे *
६२४।२ किं चेति * प्रथमार्थे तसिः तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

॥ अवेष्टेरन्नाद्यफलकत्वाधिकरणम् ॥ १३ ॥

## सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ॥ २६ ॥

अनुपादेयान्वयमात्रस्यासन्निधिसहकृतस्य भेदकत्वे फलमात्रे प्रत्युदाहरणानुपपत्तिमाशङ्क्याह * सर्वेषामेवेति * स्विष्टकृतं यजतीति विहितस्विष्टकृद्यागसन्निधौ शेषादिति वाक्यान्तरे शेषसंस्कारार्थत्वेन स्विष्टकृद्यागविधानात्संस्कार्योदाहरणत्वं भाष्यालोचनयैतच्छब्दएव फलवाक्यं विपरिवृत्तिहेतुरिति कस्य चिच्छङ्कां निवर्त्तयितुं भाष्योदाहृतफलसद्भावे ऽपि उदाहरणान्तरं न्यायशास्त्रे पूर्वपक्षाशङ्कां विना प्रत्युदाहरणानर्थक्यापत्तेस्तत्प्रदर्शनार्थं किं प्राप्तमिति भाष्यं व्याचष्टे * सर्वत्रेति * स्वरूपतः प्राप्तस्यान्यसम्बन्धित्वेन विध्युपपत्तेर्न विधीयमानत्वमात्रेण कर्मान्तरापत्तिरित्याशङ्क्य वृद्धवाक्येनोपपादयति*आह चेति * पूर्वस्मात्कर्मणो ऽस्याभेदाभ्युपगमे विहितविध्ययोगादनुवादापत्तेरनुवादस्य च यच्छब्दोपबन्धलक्षणोद्देश्यव्यङ्ग्यत्वादनूद्यमानस्योद्देश्यत्वापत्तेर्देशाद्युद्देशे च कर्मोद्देशासम्भवात् भेद इत्यर्थः। उत्तरार्द्धं व्याचष्टे * अनूद्यमानानि हीति * ननूद्देशान्वयित्वेन विधाने ऽपि स्वरूपानुवादे कर्मान्तरत्वं भविष्यतीत्याशङ्क्याह * देशादीति * पूर्वपक्षमुपसंहरति * तस्मादिति * उत्पत्तिविनियोगविधिव्यापारभेदादुत्पत्त्यनुवादविनियोगविध्योर्यौगपद्यदोषं परिहरन् सिद्धान्तमाह * इतीति * उत्तरार्द्धं व्याचष्टे * अगत्या हीति * ननु देशादीनामुद्देश्यत्वावगतेः कर्मणस्तानि प्रत्युपादेयत्वेन विधेयत्वाद्भेदापत्तिरित्याशङ्क्याह * न चापीति * विध्यनुवादशब्दौ त्वप्रत्ययान्तत्वात्कर्मव्युत्पत्त्या वा विधेयानुवाद्यवाचिनौ। श्लोकं व्याचष्टे * यद्यपीति * सिद्धान्तमुपसंहरति * तस्मादिति * भाष्यादिविभागशब्दस्य सन्निहितप्रतिनिर्देशविषयत्वमाभासमानं निराकर्त्तुं स्वयं व्याख्यां करोति * विपरिवृत्तिरेव चेति * भाष्यकृद्व्याख्या त्ववेष्टौ विशेषोक्त्यर्थेति दर्शयितुमाह * विशेषेण त्विति*एतच्छब्दस्याग्निहोत्रशब्दवत् धर्मलक्षणार्थत्वेनातिदेशिकत्वात्कर्मान्तरे विश्वजिदादिवदव्यक्तचोदितत्वात्सोमहविष्कत्वं पूर्वपक्षप्रयोजनमाक्षिपति * प्रयोजने त्विति * समाधत्ते * तत्त्विति * वृत्त्यन्तरोक्तं भेदकारणचतुष्टयमुपन्यासपूर्वं दूषयितुं भाष्योक्तं षड्विधत्वं तावदुपसंहरति * एवमिति * उपन्यस्यति * वृत्त्यन्तरे त्विति * फलाद्यनुग्रहमात्रार्थत्वात् इत्यादिशब्ददर्शनात्फलशब्दो ऽनुपादेयमात्रविषयो विज्ञायते आन्यभाव्यं तु कालशब्दव्यवायादित्युच्चारणभेदे शब्दभेदस्मृतेः सरूपाणामेकशेष इति स्मृत्यालोचनया शेषशब्दभेदावगतेरेकस्मिंश्च शब्दे शतकृत्वो ऽप्युच्चरिते ऽप्यर्थभेदाप्रतीतेरभ्यासस्य भेदकत्वायोगात्संख्यायाश्चा-

र्थगतायाः कर्मण्येकस्मिन्नसम्भवाद्भेदकत्वे गुणान्तर्भावापत्तेः शब्दगो-
ताया एकशेषस्मृत्यवगताया भेदकत्वस्य वाच्यत्वात्तस्याश्च शब्दभेद-
कत्वात् द्वयोः शब्दान्तर्भावात्प्रकरणान्तरत्वाभावे ऽपि चाग्नेयम-
ष्टाकपालं निर्वपद्रुक्काम इत्यादावनुपादेयान्वयस्य विधेयत्वापादक-
त्वाद्भेदकत्वावगतेस्तत्प्रतिबन्धकप्रत्यभिज्ञापनयनमात्रे प्रकरणान्तर-
स्य व्यापारादित्यर्थः । शाखान्तराधिकरणसिद्धान्तसूत्रे च भेदच-
तुष्टयपरामर्शादिति हेत्वन्तरं चशब्देन सूचितं दूषयति* तत्त्विति*
आन्यभाव्यमिति कात्यायनस्मृतिं दूषयितुं सूत्रान्तरं च यौगपद्यादि-
तिशब्दाधिकरणपूर्वपक्षहेतोरनैकान्तिकत्वोक्त्यर्थसूत्रं पठति* तथा
चेति*यथादित्यस्य नानादेशेषु युगपदुपलम्भे ऽपि न भेदस्तथा शब्द-
स्यापीति सूत्रार्थः।एकशेषस्मृत्यालोचनात् भेदावगतिं दूषयितुं तत्र-
त्यं सिद्धान्तसूत्रं पठति* संख्येति* अष्टौ गोशब्दा इति संख्याव्य-
वहाराभावादेक एव नित्यः शब्द इति सूत्रार्थः। तच्च प्रत्यभिज्ञाने
च सत्युपाधिभेदाद्भेदाभावं वक्तुं षष्ठाधिकरणसिद्धान्तसूत्रैकदेशं
पठति * वक्ष्यति चेति * विहितद्रव्यापचारे द्रव्यान्तरेण कृतस्य
यागस्य व्यतिरेकादष्टाकपालद्रव्यकत्वाग्निदेवत्यत्वरूपाविभागाग्नेय-
शब्दाविभागाभ्यां प्रत्यभिज्ञानात् गोत्ववदैककर्म्यमिति वदन्सूत्रकृ-
त्प्रत्यभिज्ञायमानानामभेदं वक्ष्यतीत्येवंजातीयकशब्देनोक्तम् । संख्या-
भ्यासयोः शब्दान्तरान्तर्भावदूषणमुपहासपूर्वकमुपसंहरति * त-
स्मादिति * प्रकरणान्तरस्य भेदकत्वाभावमुपहासपूर्वं दूषयितुमाह
६२६।१ * प्रकरणान्तरत्वाच्चेति * अनुपादेयान्वया(दु)पादेयत्वावगमे
ऽप्यप्राप्तविषयत्वाद्विधेः प्रकरणान्तरशब्दोक्तं प्रकृतबुद्धिविच्छेदं वि-
ना विधेयत्वापादकत्वान्मुख्यं भेदकारणमित्याशयः । किमर्थं त-
र्ह्यनुपादेयान्वयापेक्षेत्याशङ्क्याह * तेनेति * येन कारणेन प्रकर-
णान्तरशब्दोक्तेन प्रत्यभिज्ञानं विना भेदो न भवति तेन कारणेन
भेदस्याप्रत्यभिज्ञानहेतुकत्वात्प्रत्यभिज्ञापादकानुपादेयत्वद्योतकशब्दोप-
बन्धवारणायानुपादेयापेक्षेत्याशयः । यच्चैकं चेति सूत्रे फलान्वय-
गुणशब्दान्तरसंख्याभेदप्रमाणाभावचतुष्टयमेकत्वहेतुत्वेनोच्यमानं फ-
लादिचतुष्टयं भेदकमित्यस्यार्थस्य ज्ञापकमिति । वृत्त्यन्तरकृतोक्तं तु
शाखान्तराधिकरणे ऽभ्याससंख्याप्रकरणान्तराभावानामसम्भवाच्च
तु फलादिचतुष्टयस्य भेदकहेतुत्वादित्युपहासपूर्वमाह * यदपीति*
एकत्वहेतुभूतं च तद्विपरीतचतुष्टयं चेति विग्रहः। वृत्त्यन्तरदूषणमु-

१ भेदादिति ३ पु० ना० ।

२ अविभागाग्नेयशब्दे इति ३ पु० ना० ।

पसंहरति * तस्मादिति * फलस्य भेदहेतुत्वनिरासार्थम् * यथोक्ता इत्युक्तम् * चतुष्टयनिरासायैवकारः । ननु भाष्यसिद्धान्तेऽपि सञ्ज्ञाया वाच्यधात्वर्थभेदद्वारा भावनाभेदकत्वेन शब्दान्तरान्तर्भावात्संख्यायाश्च कर्मभेदं विना विध्यसम्भवाद्भेदकत्वेन गुणान्तर्भावाच्चत्वार एव भेदहेतवः स्युरित्याशङ्क्य भेदाभिधानं प्रतिजानीते * तत्रापि त्विति * सञ्ज्ञायाः शब्दान्तरात्संख्यायाश्च गुणात् भेदो विधीयतइत्युक्ते ऽध्यायोपक्रमे तयोः स्वावसरे भेदं वक्ष्याम इत्युक्तत्वात्सञ्ज्ञाधिकरणयोरेवानयोर्भेदो वाच्य इत्याशङ्क्य तत्र वाच्यस्याप्यवसरालाभेनानुक्तत्वादिदानीमवसरलाभादभिधानमिति वक्तव्यः * सन्नित्यनेनोक्तम् * अभिधत्ते * स्वरूपेति * शब्दान्तरस्यानुरञ्जकधात्वर्थाभेदेन भावानां भेदकत्वायागादिशब्दाच्च सिद्धरूपतयोक्तस्य धात्वर्थस्य भावनानुरञ्जकत्वाप्रतीतेः स्वेन पूर्वापरीभावरूपेणानुरञ्जकत्वावगमात्सञ्ज्ञायाश्च पूर्वापरीभावरूपानभिधायित्वात् धात्वर्थैक्ये चानेकसञ्ज्ञानर्थक्यापत्तेर्धात्वर्थभेदागमकत्वेऽपि देवतोद्देशद्रव्यत्यागादिधात्वर्थान्तराविलक्षणरूपानभिधायित्वाद्यजत्यादेस्तु विलक्षणरूपे सम्बन्धग्रहणात्तद्वाचित्वोपपत्तेः । सञ्ज्ञायाः शब्दान्तराद्भेदः विधेयरूपभेदे शब्दान्तरादिव्यापाराद्युत्पत्तिज्ञापनेन भेदकत्वावगतेः संख्यायाश्च व्यासज्यकर्मणि समवायादेकसंख्ये ऽपि कर्मणि ( विध्यन्तरोत्पादितकर्मान्तरोपजनापेक्षया समवायोपपत्तेर्गुणवत्पूर्वोत्पन्नकर्मसंयोगासम्भवेनापूर्वकर्मोत्पत्तिज्ञापकतया भेदकत्वायोगादू गुणाद्भेद इत्यर्थः। श्लोकं व्याचष्टे * सञ्ज्ञा हीति * एकसंख्ये ऽपि कर्मणि[1]) कर्मान्तरापेक्षया संख्यान्तरसमवायसम्भवे कथं भेदकतेत्याशङ्क्य प्रमाणान्तरेणोत्पत्तिविषयत्वेनावगतस्य विधेरनेकविषयत्वमात्रं संख्ययावगम्यतइति परिहारसूचनार्थम्*युगपदित्युक्तम् * पूर्वस्मिन्कर्मण्यसम्भवो यस्य तत्पूर्वासम्भवं वाजिनादिन्यायाभावे ऽपि अङ्गत्वाविशेषात्संख्याया अप्यङ्गापरपर्यायगुणत्वापन्हवायोगात्कथं गुणाद्भेद इत्याशङ्कानिरासायान्तरशब्दः ॥

॥ आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम् ॥ १४ ॥

## आग्नेयस्तक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥

उदाहरणं विवेक्तुमाह * आग्नेयइति * तत्र सन्देहभाष्यं सकृदनुष्ठानचिन्तायास्तत्रावृत्तिचिन्तासारूप्याल्लक्षणासङ्गतेरयुक्त-

१ अयं पा०.३ पु० ना० ।

माशङ्क्य भेदाभेदफलोक्तिद्वारा भेदाशयत्वेन व्याचष्टे * किमिति * अच्युतवाक्येनैककर्मासम्भवो पौर्णमास्यमावास्याकाललक्षणगुणद्वययोगादाग्नेयद्वयविध्यवगतेः एकस्य कालद्वयानन्वयात्कालद्वयविशिष्टस्य वा ऽमावास्यावाक्ये पुनःश्रुतत्वायोगाद्यो ऽमावास्याकालक आग्नेय उभयत्र सोमयागात्प्रागूर्ध्वं वाच्युतो न सान्नाय्यवत्कदाचित् च्युत इत्येवं प्रतियोग्युपलक्षणार्थो वार्त्तिकावयवो व्याख्येयः । प्रयोजनासम्भवे ऽपि कर्मान्तरत्वानुपपत्तिसूचनायानर्थक्लृप्तिः। फलार्थेनेत्यस्माद्विधेरनुपादेयत्वसम्भवएव सन्निधेः प्रत्युदाहृ-
१२७। णत्वशङ्कानिरासार्थत्वेन पूर्वपक्षसूत्रं व्याचष्टे * इतीति * अभ्यासोक्तिं व्याख्यातुम् * द्विरित्युक्तम् * अभ्यासोक्त्या वृत्तिविध्यर्थताऽस्य वाक्यस्योक्तेति शङ्कां निवर्त्तयितुमाह * प्रयोगेति * पूर्वपक्षप्रयोजनमभ्यास इत्याशयः । अविभागात्तु कर्मणो द्विरुक्तेन विधीयतइति सिद्धान्तसूत्रमवतारयति * तत्रेति * कर्मैक्यस्य सिद्धान्तत्वे ऽपि वाक्यद्वयस्य विधायकत्वोक्तेर्प्रौढिमात्रत्वसूचनार्थः पक्षान्तरशब्दः ।

## अविभागात्तु कर्मणो द्विरुक्तेन विधीयेत ॥२८॥

अभ्यासाधिकरणन्यायवैषम्योक्त्यर्थत्वेन तुशब्दव्याख्यानार्थं पूर्वं कर्मणो विभागादिति हेत्वर्थं व्याचष्टे * युक्तमिति * द्रव्यदेवतान्यत्वशङ्कानिरासार्थत्वेनाप्यविभागोक्तिं व्याचष्टे * द्रव्येति * ननु कर्मणः क्षणिकत्वेनाविभागशब्दोक्तायाः प्रत्यभिज्ञायाः सामान्यविषयत्वान्नाभेदबोधकत्वोपपत्तिरित्याशङ्क्याह * यदि त्विति * स्वरूपभेदस्य प्रयोगान्तरे ऽच्युतवाक्यविहितस्याप्याग्नेयस्याविशेषाद्विधेयरूपभेदो ऽत्र विवक्षितः । स च प्रत्यभिज्ञया निरस्त इत्याशयः। नन्विति भाष्येण पुनःश्रुत्या कर्मभेदमाशङ्क्य तन्निरासार्थत्वेन द्विर्वचनेनैकमेव कर्म विधीयतइत्येवं भावनिष्ठाभ्युपगमेन द्विरुक्तेनेति सूत्रावयवव्याख्यानार्थं नेतीति भाष्यं द्वेधा व्याचष्टे * तस्मादिति * विकल्पस्याष्टदोषत्वेनापरितोषादथ वेति समुच्चयं वक्तुमेकेन वाक्येन विहिते वाक्यान्तरानर्थक्यमाशङ्क्य * युगपदित्युक्तम् * क्रमेण वाक्यद्वयप्रवृत्तौ पूर्वेण विहिते परानर्थक्यं स्यान्नित्यत्वात्तु द्वयोर्युगपत्प्रवृत्तेर्नान्यतरानर्थक्यमित्याशयः । युगपत्प्रवृत्तावन्यतरानर्थक्याभावो ऽपि चोत्पत्तिसंयोगाद्यथा स्यात्सत्त्वदर्शनं तथा भावविभागे स्यादिति षष्ठाधिकरणसूत्रावयववक्ष्यमाणेन दृष्टान्तेनोपपादितः । ऋद्धिकामाः सत्रमासीरन्निति कामिपद-

* सहेत्युक्तम् * पुनः शब्दस्याग्नेयपरामर्शार्थत्वादिन्द्रसहितेनाग्निनाग्नेयस्येति प्रतीतेरैन्द्राग्नस्येत्यर्थः । यदाग्नेय इति वाक्यान्तरेणाग्नेयस्य केवलदेवतात्वावधारणात्कथन्तेनैन्द्राग्नप्रशंसेत्यपेक्षायाम् * प्रशस्तेत्युक्तम् * प्राशस्त्यवाचिभिराङ्गिरसो वा इति उत्तमः स्वर्गं लोकमायन्नित्याद्यर्थवादशब्दैः सहितवाक्यान्तरावधारितत्वेनाग्नेयस्य प्रशस्तत्वावगमादाग्नेय एव तावदग्निदेवत्यत्वात्प्रशस्तः ऐन्द्राग्नस्त्विन्द्रसहिताग्निदेवत्यत्वात्ततो ऽपि प्रशस्त इत्याग्नेयोक्तेरैन्द्राग्नप्रशंसार्थतोपपन्नेत्याशयः ।

इति श्रीमत्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरकृतायां तन्त्रवार्त्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां द्वितीयाध्यायस्य तृतीयः पादः ।



# न्यायसुधायाम् ।

## द्वितीयाध्यायस्य चतुर्थः पादः

॥ अथ यावज्जीविकाग्निहोत्राधिकरणम् ॥ १ ॥

यावज्जीविको ऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥

भाष्ये बह्वृचविशेषणस्य चिन्तानौपयिकत्वाद्यथावस्थितार्थानुवादमात्रार्थत्वं सूचयितुमाह * बह्वृचेति * चिन्ताया लक्षणासङ्गतिमाशङ्कते * ननु चेति * परमतेन परिहरति * केचिदिति * दूषयति * तत्त्विति * स्वमतेन प्रयोगभेदाभेदफलतया सङ्गतिं वक्तुं प्रक्रमते * अत इति * ननु शब्दान्तरादिप्रमाणकस्य भेदस्य लक्षणार्थत्वात् तेषां चोत्पत्तिज्ञापनेन भेदकत्वात् स्वरूपभेदएव व्यापारावगतेः प्रयोगभेदाभेदचिन्तापि न लक्षणसङ्गतेत्याशङ्क्याह * यथैवेति * प्रयोगाङ्गभूतस्य गुणस्य पूर्वप्रयोगसंयोगासम्भवे प्रयोगविधित्वज्ञापनेन प्रयोगभेदकत्वस्याविष्ट्यधिकरणे व्युत्पादितत्वात्प्रयोगभेदे ऽपि व्यापारो ऽस्तीत्याशयः । लक्षणसङ्गतां चिन्तामाह * तदिहेति * यावज्जीवशब्दस्य पूर्वपक्षे काललक्षणानुपादेयगुणपरत्वात् सिद्धान्ते च निमित्तपरत्वात्तस्यापि चावच्छेदकत्वलक्षणगुणत्वोपपत्तेरनुपादेयगुणान्वयस्य भेदकत्वाभेदकत्वस्य विचारात् कर्मविपरीवृत्तेः प्रकरणान्तरन्यायायोगे ऽप्यनुपादेयान्वयनिमित्तभेदचिन्तानन्तरं बुद्धिस्थत्वोपपत्तेः प्रकरणान्तरचिन्तया ऽपि सङ्गतिः सम्भवतीति सूचयितुं यावज्जीवशब्दः । कालपरत्वे ऽपि काम्यप्रयोगे सायम्प्रातःकालावरुद्धे ऽप्यमावास्यामपराह्णे पिण्डपितृयज्ञेन चरन्तीतिवदवच्छेद्यावच्छेदकत्वेन कालद्वयसमावेशोपपत्तेर्जीवनपरिमितस्य कालस्य निवेशसम्भवादभेदकत्वं निमित्तपरत्वे तु तस्यावश्यकत्वापादकत्वेन काम्यप्रयोगे निवेशायोगाद्भेदकतेति गुणनिमित्तभेदाभेदचिन्तार्थं काललक्षणगुणपरो यावज्जीवशब्दो निमित्तलक्षणगुणपरो वेति विचारस्वरूपं सूचयितुं

गुणशब्दः कस्मात्तर्हि भाष्ये कर्मधर्मः कर्तृधर्मो वेति चिन्तेत्याशङ्क्य प्रयोगभेदाभेदफलासौ चिन्तेति दर्शयितुमाह * तत्रेति * काललक्षणस्य गुणस्य काम्यप्रयोगे निवेशसम्भवादभेदकत्वसिद्ध्यै कर्मधर्मत्वोक्तिरिति सूचनार्थः कालशब्दः। काम्यप्रयोगस्य सायम्प्रातःकालसमापनीयत्वेन तस्मिन्यावज्जीवकालस्य निवेशायोगाद्भेदकत्वं भविष्यतीत्याशङ्कानिरासार्थताभ्यासोक्तेः सायमित्यादिना सूचिता निमित्तलक्षणस्य गुणस्यावश्यकत्वापादकत्वेन काम्यप्रयोगे निवेशायोगाद्भेदकत्वसिद्ध्यै नियमाख्यस्यावश्यकत्वस्य कर्तृधर्मत्वान्नियमलक्षणार्था कर्तृधर्मोक्तिरिति सूचनार्थं निमयविधिभाष्योक्तमुपपादयितुम् * यावत्कर्तृभाविनीत्याद्युक्तम् * नियमस्य कर्तृधर्मत्वोपपादनार्थं स्वार्थेत्युक्ते स्वकाले विहिताकरणादुत्पन्नस्य दोषस्य नाशायातिक्रान्ते ऽपि काले कर्त्तव्यत्वज्ञापनार्थं जन्यत्वान्नाशस्यात्मप्रयत्नरूपभावनाभाव्यत्वोपपत्तिसूचनाय स्वार्थशब्देनोक्तस्य * सिद्ध्यर्थमित्युक्तम् * निषिद्धाचरणजन्यदोषनाशार्थत्वाभ्युपगमे त्वनाचरितनिषिद्धस्याकर्त्तव्यत्वापत्तेर्नावश्यकत्वसिद्धिः प्रायश्चित्तत्वेन चाविधानान्नोपात्तदुरितक्षयार्थत्वे ऽग्निहोत्रादेः किंचित्प्रमाणमस्ति विस्तरेण चोपात्तदुरितक्षयार्थताग्निहोत्रादेस्तन्त्रसारे ऽस्माभिर्निरस्ता उपात्तदुरितक्षयार्थत्वोद्घोषस्तु विहिताकरणजन्यमेव दुरितं विहितकालसमीपे प्राप्तत्वादाङ्पूर्वस्य ददातेर्गृह्णात्यर्थवाचित्वेन ग्रहणफलप्राप्तिलक्षणत्वोपपत्तेरुपात्तदुरितमभिप्रेत्य व्याख्येयः। अकरणे दोषप्रसक्तेरिति हेत्वभिधानादव्ययमेव वार्त्तिककृतो ऽभिप्रायो लक्ष्यते अनर्थपरिहारार्थत्वमात्रहेतुत्वम् * तु व्यवधानादयुक्तम् * पूर्वां सन्ध्यां जपन् विप्रो नैशमेनो व्यपोहतीत्यादिस्मृतिस्तु निशान्तविहितकर्माननुष्ठानजन्यमेनो नैशमित्येवं व्याख्येया यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्नेत्यादिमन्त्रवर्णो ऽपि मनःप्रभृतीनामन्यासक्तत्वाद्रात्र्यन्तविहितकर्माननुष्ठानेन यत्पापमकार्षमित्येवं व्याख्येयः।

सन्ध्योपासनमात्राद्धि सर्वपापक्षये सति ।
अग्निहोत्राद्यनुष्ठाने कः प्रवर्त्तेत बुद्धिमान् ॥ १ ॥
कस्य तु क्षमता कस्येत्यवगन्तुं न शक्यते ।
अतो मदुक्तरीत्यैव पापनाशार्थतोचिता ॥ २ ॥

एतच्च स्वकाले कुतश्चित् कारणात्कर्मण्यकृते कालान्तरे नैष्फल्यापत्तेः काम्यवन्नित्यस्यापि लोपशङ्कानिरासायोक्तं शास्त्रेण त्वकरणजन्यदोषाभावायैवाग्निहोत्रादेः कर्त्तव्यतोच्यतइति वक्तुं दो-

षप्रागभावस्याजन्यत्वाद्भाव्यत्वायोगमाशङ्क्य प्रागसतो ऽपि दोषस्योत्पत्तिप्रतिबन्धः प्रागभावप्रतिपालनाख्यो भावयितुं शक्यते इति परिहारसूचनायानर्थरूपस्यावस्तुरूपस्यासद्रूपस्य दोषस्य परिहाराय * प्रतिबन्धायेत्युक्तम् * अग्निहोत्रादेर्विहितत्वात्तदकरणस्य प्रत्यवायोत्पादकत्वं तदकरणस्य च प्रत्यवायोत्पादकत्वात्परिहारार्थविधिरित्यन्योन्याश्रयाशङ्का तु विधिकर्मशक्त्योरनादित्वात्परिहरणीया अन्यथा विहितत्वात्फलसाधनत्वं फलसाधनत्वाच्च तादर्थ्येन विधिरित्यन्योन्याश्रयमपरिहार्यं स्याज्जीवननिमित्तकस्यापि प्रयोगस्य निमित्तैक्यादैक्यमेव स्यादित्याशङ्क्य सायम्प्रातःकालावच्छिन्नस्य जीवनस्य निमित्तत्वात्तस्य च प्रतिदिवसं भेदात्प्रयोगभेदोपपत्तिं वक्तुं कालजीवनसमुदायस्य निमित्ततोक्ता कालस्याङ्गत्वे ऽप्यनुपादेयत्वादन्यकालीनजीवनसद्भावे ऽपि कालापादनाशक्तेरनुष्ठानायोगात्तत्कालीनएव जीवने सत्यनुष्ठेयत्वावगतेरर्थात्कालविशिष्टस्यैव जीवनस्य निमित्ततावसीयतइत्याशयः । फलतः सङ्गतिमुपपादितामुपसंहरति * तेनेति * यदीति सन्देहहेतुभाष्यालोचनया चैतदवगम्यतइति सूचनार्थम् * भाष्येत्युक्तम् * यावज्जीवशब्दस्य निमित्तपरत्वे विधित्वायोगाद्विध्युक्त्या कालपरत्वसूचनाद् यावज्जीवशब्दः कालपरो निमित्तपरो वेति विचारार्थो गम्यते विपरीतशब्देन च सिद्धान्ते जुहोतेर्विधित्वोक्त्या भेदं विना विध्ययोगात्कर्मस्वरूपभेदस्य च सन्निधौ त्वविभागादित्यत्र निरस्तत्वात्प्रयोगभेदाभेदविचारस्यापि सूचनात्तस्य योग्यतया फलतावगम्यतइत्याशयः । सूत्रव्याख्यानार्थं किं तावदिति भाष्यं व्याचष्टे *किं तावदिति* अभ्यासशब्देनाभ्यासापादककालपरता यावज्जीवशब्दस्य सूचितेति दर्शयितुम् *कालेत्युक्तम्* पूर्वपक्षभाष्यस्थयदिशब्दव्याख्यानार्थः पक्षशब्दः । कालविधिपक्षे च कालान्तरनिमित्ताभ्यासविधिपक्षे च तत्कालरूपमभ्यासरूपं च यथैव कर्माङ्गत्वेन वाञ्छितं तथैवोपपद्यतइत्यर्थः । उत्तरार्द्धं व्याचष्टे * कालो हीति * सन्निधानापरपर्यायाधिकारलक्षणप्रकरणानुग्रहसम्भवाशयेनाशङ्कते * ननु चेति * तथापि कथम्भावात्मकप्रकरणबाधो दुर्वार इति परिहरति * सत्यमिति * ननु कालत्वस्याप्यनुपादेयत्वात् यच्छब्दोपबन्धलक्षणत्वेन वानुपादेयत्वस्य विधिप्रतिबन्धकत्वाद्विधेयत्वानुपपत्तेः यावज्जीवशब्दोक्तत्वे ऽपि अङ्गत्वायोगेन प्रकरणानुग्रहासम्भवात्प्रकरणानुग्रहार्थं यावज्जीवोक्तेः कालपरत्वसूचनार्थो विधिशब्दो न प्रयुक्त इत्याशङ्क्याह * यद्यपि चेति * यावज्जीवनं तस्मिन् सति

यजेतेति कालनिमित्तपक्षयोः समानायामपि वचनव्यक्तावप्राप्तप्रा- प्तिफलत्वाद्विधेयच्छब्दोपबन्धाच्च स्वरूपस्य सिद्धत्वप्रतीतावपि अ- ङ्गत्वविषयाविधिप्रतिबन्धायोगादनुपादेयत्वेन यच्छब्दोपबन्धादनुवा- द्यतया भासमानस्यापि कालस्यानुवादाविपरीतं विधानं यागस्य चो- पादेयत्वाद्विधेयतया भासमानस्य विधिविपरीतो ऽनुवादः कथ्यत- इत्यर्थः । यावज्जीवशब्दोक्तकालान्वयान्यथानुपपत्तिकल्पिता- भ्यासविध्याशयत्वे तु विध्युक्तेरभ्यासस्योपादेयत्वाद्विधेयत्वं स्वर- सादेव प्रतीयतइत्याह * अथ वेति * अभ्यासस्योपादेयत्वेनो- पादेयकर्मान्वयायोगमाशङ्क्य स्वरसेनोपादेयत्वे ऽपि कर्मणो विध्यन्तरप्राप्तत्वेनोद्देश्यत्वोपपत्तेस्तद्रूपेणान्वयोपपादनार्थम् * स चेत्युक्तम् * ननु कर्मणः प्राप्तत्वेनोद्देशसम्भवे यावज्जीवोक्तेर्निमि- त्तपरत्वे ऽपि निमित्तान्वयान्यथानुपपत्तिकल्पितस्यावश्यकत्वस्यो- पादेयत्वात्कर्मोद्देशेन विध्युपपत्तेर्न विध्युक्त्या कालपरत्वं सूचयितुं शक्यमित्याशङ्क्य कर्मानङ्गत्वेनावश्यकत्वस्य विधेयत्वे ऽपि न कर्मो- द्देशापेक्षेत्याह * कार्त्रीति * निमित्तान्वयस्यावश्यकत्वापादकत्वसूच- नार्थं कर्तृधर्मशब्देन लक्षणया निमित्तपरतोक्ता एवं चेति लिङ्गदर्श- नभाष्यं व्याचष्टे * एवं चेति * तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

## कर्त्तुर्वा श्रुतिसंयोगात् ॥ २ ॥

यावज्जीविक इति भाष्येण वाशब्दं व्याख्याय कर्तृशब्दव्या- ख्यानार्थं कर्त्तुरिति भाष्यं धर्मशब्दाश्रुतेरयुक्तमाशङ्क्योपपादयितुमा- ह * धर्मइति * अत्र च कर्तृधर्मश्चोद्यतइत्येतावता प्रतिज्ञासूत्रावय- वव्याख्या कर्तृधर्मोक्तेश्च यावज्जीवशब्दस्य निमित्तपरत्वसूचनार्थ- त्वान्निमित्तान्वयापादितस्य चावश्यकत्वस्य काम्यप्रयोगे ऽनुपपत्तेः प्रयोगान्यत्वसिद्धिसूचनार्थो नियमशब्द इति तेनेत्यादिना सूचितम्। हेतुप्रश्नपूर्वं श्रुतिसंयोगव्याख्यानार्थं कुत इत्यादिभाष्यं व्याचष्टे * कुत इति * ननु जीवतः श्रुतिवृत्तत्वोपपत्तावपि यावच्छब्दस्य निमित्तानभिधायित्वात्कथं निमित्तपरत्वपक्षे यावज्जीवशब्दस्य श्रु- तिवृत्तित्वं कर्त्तव्यतावाचिनश्चाख्यातप्रत्ययस्य पक्षद्वये ऽपि श्रौतत्वा- विशेषान्निमित्तपक्षएवाख्यातस्य श्रुतिवृत्तत्वोक्तिरयुक्तेत्याशङ्क्य नि- रस्यन् श्लोकं व्याचष्टे * इहेति * व्याप्तिवाचिना यावच्छब्देन जी- वनस्य यावत्कर्तृभावित्वरूपेण सामस्त्येन श्रुत्यैव विशेषणात्सर्वे- षां सायम्प्रातःकालभेदभिन्नानां जीवनानामनुष्ठानान्वयप्रतीतेः

कर्मणि च जीवनविधौ स्वप्रयोजनप्रयुक्तस्य कर्मानुष्ठानस्य कादाचित्कत्वाद्यावच्छब्दोक्तायाः सर्वजीवनव्याप्तेः प्राप्त्यभावेनानुवादायोगादयुगपत्कालीनत्वाच्च जीवनानामेकस्मिन्प्रयोगे साहित्यानुपपत्तेः प्रयोगभेदाक्षेपकाभावाच्चाशङ्क्य सम्पादनत्वेन व्याप्तेर्विध्ययोगाद् यावच्छब्दानर्थक्यापत्तेः निमित्तपरत्वे तु यावन्निमित्तं नैमित्तिकस्यानुष्ठेयत्वाद्यावच्छब्दोक्तव्याप्त्यनुवादोपपत्तेर्यावच्छ्रुतिसामर्थ्यान्निमित्तत्वावगतेर्यावज्जीवपदस्य श्रुतिवृत्तत्वं सिद्धान्तएव सम्भवतीत्यर्थः। यश्चाख्यातप्रत्ययस्य प्रकृतिभूतोऽप्रशस्तस्य श्रुत्यैव प्रत्ययवाच्यभावनानुरञ्जकधात्वर्थवाचित्वादाख्यातस्य श्रुतिवृत्तत्वं सिद्धान्तएव सम्भवतीत्यर्थः। कालपरयावज्जीवपदान्वयनिबन्धनत्वादभ्यासलक्षणायाः धातोश्च प्रत्ययोपसर्जनत्वेनान्वयायोगात्तदन्वितप्रत्ययवाच्यभावनानुरञ्जकत्वेन स्वार्थवाचित्वादाख्यातप्रत्ययद्वारा धातोरपि यावज्जीवपदान्वयात्पूर्वपक्षे ऽभ्यासलक्षणार्थत्वापत्तिसूचनार्थम् * धातोर्भावनावाचित्वं तात्पर्याशयेनोक्तम् * मात्रशब्दो ऽभ्यासव्यावृत्त्यर्थः। ननु यावज्जीवोक्तेर्निमित्तपरत्वे ऽपि सायं च प्रातश्च जुहोतीति चशब्दोक्तकालद्वयसमुच्चयान्यथानुपपत्त्याभ्यासलक्षणा तुल्येत्याशङ्कानिराससूचनायैवकारः आग्नेयी सायमाहुतिस्तद्रेतः सिक्तं रात्र्यां गर्भं दधाति तत्सौर्या प्रातः प्रजनयतीति रेतःप्रजनसंस्तवान्यथानुपपत्त्या तेषां यस्त्रिरजुहोत्तमपृच्छत् कस्मिंस्त्वं जुहोषीति सो ऽब्रवीत् त्रेधेत्यग्नये प्रजापतये सूर्यायेति यो द्विस्तमपृच्छत् सो ऽब्रवीद् द्विधेति अग्नये च प्रजापतये च सायं सूर्याय प्रजापतये च प्रातरिति य एकस्तमपृच्छत् सो ऽब्रवीदेकधेति प्रजापतयएवेति तेषां यो द्विरजुहोत् स आर्ध्नोत्तस्य नेतरे सातत्यमुपायंस्तद्य एवं विद्वान् द्विर्जुहोति आर्ध्नोत्येवेत्यभ्यासवाचिना द्विरिति सुच्प्रत्ययेनैव कालद्वये ऽभ्यासस्योक्तत्वान्न सिद्धान्ते लक्षणापत्तिरित्याशयः । श्लोकं व्याख्यातुम् * तदित्युक्तम् * ननु जीवनधात्वर्थान्वयविध्यन्यथानुपपत्त्या कालाभ्यासलक्षणा पक्ष्यमाना साध्यसाधनान्वयविध्यन्यथानुपपत्त्या पूर्वकल्पनावन्न दोषमावहतीत्याशङ्क्याह * यत्र हीति * निमित्तत्वानभ्युपगमे जीवनधात्वर्थविध्ययोगाल्लाक्षणिकार्थविध्यापत्तेर्दोषापत्तिरित्याशयः। यावच्छब्दस्य काले प्रयोगदर्शनात्तद्वाचित्वं शङ्कते * तत्रेति * स्वापस्यात्रानुष्ठेयत्वाश्रुतेर्निमित्तानपेक्षत्वाद्दोहनस्य निमित्तत्वेनान्यथायोगात् यावच्छब्दोपबन्धान्यथानुपपत्तेर्लक्षणया कालग्रहणं न तु श्रुत्या तद्वाचकतया युक्तम् अनुष्ठेयत्वश्रुतौ तु निमित्तत्वे-

न श्रुत्यर्थस्यैवान्वयोपपत्तेर्न युक्ता लक्षणेति परिहरति * शु-
क्तमिति * कस्माद्यावच्छब्दस्य कालवाचित्वं नेष्यतइत्याश-
६२१।५ ङ्क्याह * न चेति * लक्षणयापि कालप्रतीत्युपपत्तेर्न वाच-
कशक्तिकल्पना युक्तेत्याशयः । ननु नाडिकामुहूर्त्तप्रहरादिप्रत्ययानां
परत्वापरत्वयौगपद्यायौगपद्यचिरत्वक्षिप्रत्वविशिष्टपदार्थप्रत्ययानां
च कालकृतत्वेनाङ्गीकृतानां विभक्तत्वादाकाशवदविभक्तेन काल-
द्रव्येण करणाशक्तेः सूर्यादिगतिक्रियावच्छेदाद्विभक्तस्य कालस्य
विभक्तप्रत्ययहेतुत्वाभ्युपगमे तु सूर्यादिगतिक्रियाणामेव नभः षष्ठि-
तमभागातिलङ्घनफलः सूर्यादिगतिक्षणप्रचयो नाडिकानभस्त्रिंशत्त-
मभागातिलङ्घनफलो मुहूर्त्तो नभोऽष्टमभागातिलङ्घनफलः प्रहर
इत्येवं नाडिकादिप्रत्ययहेतुत्वोपपत्तेः प्रतियोगिपदार्थापेक्षया बह्व-
ल्पतमसूर्यादिगतिलक्षणावच्छेदयोः परत्वापरत्वविशिष्टपदार्थप्रत्यय-
हेतुत्वोपपत्तेरेकभिन्नक्षणावच्छेदयोर्यौगपद्यायौगपद्यविशिष्टपदार्थप्र-
त्ययहेतुत्वोपपत्तेरुत्पत्त्यादिभावविकारान्तर्गतबह्वल्पसूर्यादिगतिल-
क्षणावच्छेदयोश्चिरत्वक्षिप्रत्वविशिष्टपदार्थप्रत्ययहेतुत्वोपपत्तेः क्रि-
याव्यतिरिक्तकालाभावाज्जीवनक्रियाया एव कालत्वावगतेर्न लक्षणा-
पत्तिरित्याशङ्कते *क्रियेति* सूर्यादिस्थाया गतिक्रियाया युवस्थविरा-
दिपदार्थसम्बन्धाभावेन तदवच्छेदकत्वायोगात्कालस्य तु सर्वगत-
त्वात् स्वसंयुक्तसूर्यादिसमवेतक्रियावच्छेदलब्धविभागस्य युवस्थवि-
रादिपदार्थावच्छेदकत्वोपपत्तेर्युवस्थविरादिषु परापरादिप्रत्ययैः क्रि-
यातिरिक्तकालानुमानादपरिहार्या लक्षणेति परिहरति * अत्रेति *
पदार्थासम्बद्धायाः क्रियायास्तेषु परादिप्रत्ययहेतुत्वायोगात्कालस्या-
नुमेयत्वेऽपि क्रियाव्यतिरेकसिद्धिरिति प्रौढ्योक्तम् । परमार्थतस्तु
प्रत्यक्षत्वानभ्युपगमे कालस्यासिद्धिरेव स्यादिति सूचनार्थम् * वै-
शेषिकानित्युक्तम् * परापरादिप्रत्ययानां हि सार्वत्रिकत्वात् स-
र्वगतहेत्वपेक्षत्वेऽप्याकाशादेरेवान्यतः सिद्धात्कालवत्स्वरूपेणाभि-
न्नादपि सहकारिभेदापादितविलक्षणसामर्थ्यादुपपत्तेर्न कालक-
ल्पकत्वं भवति प्रत्यक्षत्वे तु सूर्योदयो वर्त्ततइति क्रियाविषयोदयप्र-
त्ययविलक्षणा वर्त्ततइत्यक्षजप्रत्ययवेद्यत्वाद्व्यतिरिक्तकालसिद्धिः
भूतः सूर्योदयो भविष्यति वेति भूतभविष्यत्कालावच्छिन्नोदयस-
त्ताग्राहिणि प्रत्यये वर्त्तमानत्वाप्रतीतेश्च न वर्त्ततइति बुद्धेः सत्ता-
लम्बनत्वं शङ्कनीयं ह्यो भूतोऽद्य नश्यति श्वो भविष्यत्यद्य नोत्पद्य-
तइति प्रध्वंसप्रागभावग्राहिनाशानुत्पत्तिबुद्धिवैलक्षण्याच्च भूतभवि-
ष्यद्बुद्ध्योः प्रध्वंसप्रागभावालम्बनानुपपत्तेः भूतभविष्यत्कालाव-

च्छिन्नसत्तालम्बनत्वं धातुप्रत्ययार्थालोचनयाभासमानं नापह्नोतुं शक्यं कालानवच्छेदे च सूर्योदयादिसदसत्त्वयोराकाशशशविषाणवत्सर्वदा सदसत्त्वापत्तेः कादाचित्कत्वप्रतीतिरोधः स्वतश्च कालस्यैकरूप्ये ऽप्युपाधिभेदाद्भूतभाविष्यद्वर्त्तमानत्वव्यपदेशोपपत्तिः। एकफलावच्छिन्ना हि क्रियाक्षणा यावन्तं कालं व्याप्नुवन्ति तावत्कालो वर्त्तमानकालत्वेन व्यपदिश्यते क्रियाक्षणानां च यौगपद्ये ऽप्येकफलोद्देशेनानुष्ठीयमानानामाद्यक्षणादारभ्य फलोत्पत्तिक्षणपर्यन्तं क्रियैक्यव्यपदेशाद्विद्यमानक्रियावच्छेदौपाधिकं कालस्य वर्त्तमानत्वं विनष्टक्रियावच्छेदौपाधिकं भूतत्वं भाविक्रियावच्छेदौपाधिकं भविष्यत्वम् उपपन्नं सूर्यादिक्रियावच्छेदस्य च कालस्याक्षिपक्ष्मादिक्रिययावच्छेदाभ्युपगमान्नान्योन्याश्रयापत्तिः। अतश्च सूर्यादिक्रियाणामपि भूतभविष्यद्वर्त्तमानकालावच्छेदाक्रियाव्यतिरिक्तस्याकाशादिव्यतिरिक्तस्य च कालस्य प्रत्यक्षकालवादिमते विलक्षणप्रतीतिबलादेव सिद्धेस्तेषां तावत्पराजयो ऽनाशङ्क्य एव। अनुमेयकालवादिनो ऽपि त्वाकाशादिव्यतिरेकासिद्धावपि क्रियातस्तावद्व्यतिरेकसिद्धेरशक्याः पराजेतुमित्याशयः। सूर्यादिगतिक्रियाणां कालत्वमभ्युपेत्यापि गणनापरपर्यायसंख्यानवाचित्वेन स्मृतात्कालयतेर्धातोर्घञि कृते कालशब्दव्युत्पत्तेः क्रियामात्रे च कालत्वाप्रसिद्धेः परिच्छेदकत्वप्रयुक्तत्वात्कालत्वस्य जीवनस्य चानियतपरिमाणत्वेन परिच्छेदकत्वायोगात्कालत्वानुपपत्तेरपरिहार्यैह लक्षणेति वक्तुमारभते * अपि चेति * कासु तर्हि कालत्वप्रसिद्धिरित्यपेक्षायामाह * तत्रेति * यावद्गोदोहं स्वपिति इत्यादौ गोदोहनादिक्रियस्यापि स्वापादिक्रियान्तरपरिच्छेदकत्वात्कालत्वप्रसिद्धिरस्तीत्याशङ्क्य क्रियान्तरपरिच्छेदकचन्द्रादित्यपरिवर्त्तनक्रियोपलक्षणत्वद्वारा गोदोहनादेः परिच्छेदकत्वं न साक्षादिति क्रियेत्यनेनोक्ते जीवनवदनियतपरिमाणत्वादुपलक्षणत्वायोगमाशङ्क्य पयःप्राप्त्यादिफललाभात्मव्यवहारशेषत्वोक्त्या फललाभपर्यन्तत्वान्नियतं परिमाणत्वं सूचितम्। ननु परिवर्त्तनक्रियाणां प्रहरचतुष्टयव्यापित्वेन महापरिमाणत्वान्नाल्पपरिमाणाभिर्गोदोहनादिक्रियाभिरुपलक्षणं सम्भवतीत्याशङ्क्याह * ता एवेति * उदयास्तमयलक्षणपरिवर्त्तनक्रियाणां यदवान्तरमुहूर्त्तादिक्रियापरिमाणं तेन गोदोहनादिक्रियाभिरुपलक्ष्यमाणेन द्वारभूतेन परिवर्त्तनक्रिया उपलक्ष्यन्तइति वदता गोदोहनादिक्रियाणां साक्षाद्विपरिवर्त्तनोपलक्षकत्वायोगे ऽपि तदवयवभूतमुहूर्त्ताद्युपलक्षणद्वारोपलक्षणत्वे ऽभिहिते मुहूर्तादेव तर्हि उपलक्ष्यता क-

स्मान्नोक्तेत्याशङ्कानिरासाय * अन्येत्युक्तम् * परिवर्त्तनोपलक्षकगो-दोहनादिपरिच्छेदार्थमुहूर्त्तादेरुपादानाज्ज्वलनादिवदवान्तरव्यापारत्वावगतेर्न प्राधान्येनोपलक्ष्यत्वं सम्भवतीत्याशयः । अनियतपरिमाणाया गोदोहनादिक्रियाया मुहूर्त्तादिना परिच्छेदायोगमाशङ्क्य प्रायिकी परिमाणप्रत्यासत्तिरुक्ता मुहूर्त्तादीनामुपलक्षकत्वसम्भवे ऽन्यपरिच्छेदार्थत्वेनोपादानमयुक्तमित्याशङ्कानिरासस्सूचनायैवकारः अग्निहोत्रादिकालं किमित्यनेनातिक्रान्त इति पृष्टे गोदोहनपर्यन्तस्य स्वापस्यातिक्रमहेतुत्वोक्तये यावद्दोहं स्वपितीत्युच्यमानस्वापावच्छेदकतया गोदोहनमुदयास्तमययोरेव तत्कालत्वात्पूर्वाह्णादीनामप्युदयाद्यपेक्षत्वादुदयास्तमयरूपं परिवर्त्तनमेव प्रयोजनवत्त्वादुपलक्षणीयमित्याशयः । गोदोहनादीनामन्यतः परिच्छेदापेक्षामुपपादयति * तथा हीति * गोदोहनाक्रियासु स्वरूपतो ऽनवस्थितपारिमाणत्वाद्व्यवस्थया प्रयोजनभूतया सूर्यादिचेष्टारूपं मुहूर्त्तादिनियतत्वात्परिच्छेदकं लौकिका इच्छन्तीत्यर्थः । उत्तरार्द्धं व्याचष्टे * कियतेति * नन्वेतावान्नभो भागो ऽस्मिन्क्षणे सूर्यादिनातिलङ्घित इति पुराणतो ज्ञानाशक्तेस्तावद्भागातिलङ्घितफलसूर्यादिगतिक्षणप्रचयात्मकमुहूर्त्तादिपरिच्छेदायोगादपरिच्छिन्नानां मुहूर्त्तादीनां गोदोहनादिपरिच्छेदकत्वं न सम्भवतीत्याशङ्क्याह * तत्परिच्छेदश्चेति * आकाशावयवविशेषातिक्रमफलसूर्यादिगतिक्षणप्रचयात्मकस्य नाडिकादेः मुहूर्त्तादिवदेव नैपुण्येन स्वतः परिच्छेत्तुमशक्यत्वात्षष्ठ्या पानीयपलानां यत्र घटीपूरणफलघटीछिन्नोर्द्ध्वगतिक्षणप्रचयात्मिका नाडिकाभिप्रेता अक्षिपक्ष्मसंयोगविभागफलस्याक्षिपक्ष्मगतिक्षणप्रचयात्मकनिमेषस्य चतुर्थो भागः क्षणद्वयं लवः क्षणत्रयं त्रुटिः क्षणचतुष्टयं निमेषः पञ्चदश निमेषाः काष्ठा त्रिंशत्काष्ठा च कला मुहूर्त्तस्त्रिंशा च यवात्मिकादिशब्देनोक्ता मानुषीणामपि निमेषादिक्रियाणां स्वतः परिच्छेदकसम्भवे गोदोहनादेरपि स्वतः परिच्छेदकत्वापत्तिरित्याशङ्क्य * व्यावहारिकेत्युक्तम् * पयः प्राप्त्याद्यभिमतफलात्मकस्य व्यवहारस्य दोग्धृप्रयत्नशैथिल्याशैथिल्याभ्यां बह्वल्पक्षणसाध्यत्वेनानियतपरिमाणकालव्यापित्वात्तच्छेषभूतानां गोदोहनादिक्रियाणां परिमाणनियामकत्वलक्षणपरिच्छेदकत्वायोगो ऽपि निमेषादिक्रियाणां फलानुद्देशेनैव स्वभावतो ऽनुष्ठीयमानानामप्रयत्नापाद्यत्वेन प्रयत्नशैथिल्यकृतबह्वल्पकालव्यापित्वायोगात्फलपर्यन्तत्वाभावेन च तन्निमित्तानियतकालव्यापित्वायोगान्नियतपरिमाणत्वोपपत्तेः परिच्छेदकत्व-

सम्भवतीत्याशयः। कथं तर्हि यावद्दोहं स्वपितीति गोदोहनक्रियायाः परिच्छेदकत्वव्यवहार इत्याशङ्क्याह * तदभ्यासेति * सकृदनुष्ठाने प्रायिकत्वायोगात्तस्मिन्मुहूर्त्तादिपरिमिते काले व्यवहारोपयोगिनीनां दोहनादिक्रियाणां यो * अभ्यासस्तद्वशेनेत्युक्तम् * जीवनस्य तु कथं चित्परिच्छेदकत्वायोगान्न कालत्वं सम्भवतीत्याह * न चेति * काललक्षणापरिहारायोगमुपसंहरति * तस्मादिति * अभ्यासलक्षणामुपपादयितुमारभते * पुनरिति * प्रश्नपूर्वमुपपादयति * कथमिति * वैतत्येन कदा चित्स्तोकानुष्ठानाद्विक्षिप्तत्वेन प्रयोगे क्रियानुजीवनकाल इत्यपरिज्ञानाद्वैतत्यं वैपरीत्येन त्वेकहेलया कृत्स्नप्रयोगे यावज्जीवश्रुतिर्वृथा स्याद्यत इति अध्याहारेण योज्यम्। वैतत्येनापरिज्ञानादित्येतद्व्याचष्टे * अनभ्यस्तामिति * अमृतेन समाप्येतइति परिसंख्यारूपेणासमाप्य म्रियतइत्यर्थविवक्षया * अथेत्युक्तम् * मृते ऽपि समापने सर्वस्वाराख्यक्रतुवद्दोषमाशङ्क्याभेवपवमाने प्रस्तूयमाने ब्राह्मणाः समापयत मे यज्ञमिति सम्प्रेष्य संविशतीति वचनात्तत्रादोष इति वैषम्यं * न चेत्यनेनोक्तम् * वितत्यप्रयोगपक्षे च यावज्जीवकालस्य सायम्प्रातः कालसमाप्ये काम्यप्रयोगे निवेशायोगात्। यावज्जीवचोदनायाः पूर्वपक्षे ऽनिष्टस्यापि प्रयोगान्तविधायित्वस्यापत्तेः सायम्प्रातश्चोदनयोश्चोदनाद्वयसन्निध्यविशेषे ऽपि काम्यप्रयोगमात्रविषयत्वकल्पना निष्प्रमाणिकाप्यापद्येतेति दूषणान्तरमाह * सायमिति * सती इति पाठे चोदने इति नपुंसकद्विवचनं प्रयोगान्तरापत्तिसूचनाय * अस्मिन्नित्युक्तम् * पक्षान्तरार्थमन्यथेति श्लोकावयवं व्याचष्टे * यदि त्विति * सायम्प्रातश्चोदनानुरोधेनैकदैव कृत्स्नप्रयोगात्सायम्प्रातश्चोदनार्थं यावज्जीवचोदनार्थयोर्द्वयोरपि सम्पादनं यदि मन्येतेत्युक्ते कृत्स्नजीवनकालाव्याप्तौ कथं तच्चोदनार्थसम्पत्तिरित्याशङ्कानिरासार्थो दृष्टान्तः। अस्मिन्पक्षे दोषोक्त्यर्थं वृथेत्यवयवं व्याचष्टे * तत्रेति * तिथिवाच्यहः शब्दः इह यावज्जीवश्रुतौ व्याप्तितो ऽन्यत्फलं न प्रतीयतइत्यर्थः। श्लोकं व्याचष्टे * यदीति * पूर्वाह्णो वै देवानामित्यन्यार्थदर्शनमेवान्यतः प्राप्तत्वभावेन प्रापकत्वाच्चोदनाभिप्रेतम्। अजीवतो ऽनुष्ठानाशक्तेः कर्मणो जीवनव्यतिरिक्तकालाप्राप्तावपि सायम्प्रातःकालयोर्जीवनव्यतिरेकेणापि भावात्सायम्प्रातश्चोदनावशेनाजीवतः स्वयमशक्तावप्यृत्विग्द्वारा सर्वस्वारवत्प्राप्तानुष्ठाननिवृत्त्यर्थं सायम्प्रातश्चोदनयोर्जीवनकालान्तर्गतसायम्प्रातःकालाविषयत्वोपसंहारार्थत्वेनार्थवद्यावज्जीववाक्यमित्याशङ्क्य

*सायमित्युक्तम्* आहत्य वचनं विनार्त्विग्द्वारानुष्ठानकल्पनस्याप्य-
युक्तत्वाच्छक्त्यालोचनयैव जीवनान्तर्गतसायम्प्रातःकालविषयत्वं
तच्चोदनायाः सेत्स्यतीत्याशयः। जीवनान्तर्गतसायंप्रातःकालविषय-
तान्तर्गत्युक्त्या विवक्षिता अनेन च यदपीत्याशङ्कापरिहारभाष्यं
व्याख्यातम् *यावच्छ्रुतिविरोधश्च* अस्मिन्पक्षे स्यादिति दूषणा-
न्तरोक्त्यर्थत्वेन शब्देन त्विति भाष्यं चशब्दार्थो तुशब्दाभ्युपगमेन
व्याचष्टे *यावच्छब्दश्चेति* इत्यर्थादित्यभ्यासलक्षणोपसंहारभाष्यं
व्याचष्टे *अत इति* सायम्प्रातश्चोदनामिश्रत्वोक्त्या कृत्स्नप्रयो-
गाङ्गत्वेन कालविधानात्तद्विरोधादपि वितत्य प्रयोगो न युक्त इति
सूचितम्। ननु जीवनपरिमिते काले जुहुयादिति विहिते ऽर्थादभ्या-
सापत्तावपि विधेरभ्यासविषयत्वाभावान्नाभ्यासलक्षणापत्तिरित्या-
शङ्कानिरासार्थत्वेन स हीति भाष्यं व्यख्यातुमाशङ्कते तावत् *न-
नु चेति* एतदेव विवृणोति *तथा हीति* शब्दस्य होमाभ्या-
सापादने यः श्रमः स सामर्थ्यहोमेनारोपितो यत इत्यध्याहारेण
भारानुपादने हेतुतया योज्यम्। शब्दोक्तजीवनपरिमितकालान्वयसा-
मर्थ्यस्याश्रुताभ्यासापादकत्वमात्रेण तुशब्दस्य दुष्टत्वाभ्युपगमे
सिद्धान्ते ऽपि सायम्प्रातःकालावच्छिन्नजीवनलक्षणनिमित्तान्वयसा-
मर्थ्यस्याश्रुताभ्यासापादकत्वादविशेष इत्याह *अथेति* सिद्धान्ते
प्रत्यहं प्रयोगविध्यर्थसमाप्तेः प्रत्यहमभ्यस्तप्रयोगाभावात्प्रयोगाभ्या-
सस्य च विधिव्यापारं विनापि सामर्थ्यादेव सिद्धेर्नाभ्यासलक्ष-
णापत्तिः पूर्वपक्षे त्वभ्यस्तस्य कर्मणः प्रयोगे न प्रयोगाभ्यासः प्रयो-
गस्य च विध्यधीनत्वादभ्यासलक्षणं च विनाभ्यस्तप्रयोगाविध्ययो-
गाल्लक्षणापत्तिरिति वैषम्येणाशङ्कानिरासार्थतया व्याख्यातुमाह *
उच्यते इति* प्रत्यहं विध्यर्थसमाप्तौ द्वितीयादिष्वहःस्वनुष्ठाना-
नर्थक्यमाशङ्क्य पृथक्प्रयोगतोक्ता श्लोकं व्याचष्टे *ममेति* प्र-
तिदिनं कर्मसमाप्तेर्नैकस्मिन्प्रयोगे कर्माभ्यास इत्यर्थः। न त्वभ्य-
स्तप्रयोगस्यापि सामर्थ्यालभ्यत्वेनाशाब्दत्वात् न दोषापत्तिरित्याश-
ङ्क्याह *तच्चेति* अभ्यस्तप्रयोगचोदनां विनाभ्यस्तप्रयोगासिद्धेर-
भ्यस्तस्वरूपत्वे विधिर्व्यापारयितव्य इत्यर्थः। ननु विधेयत्वे ऽप्य-
भ्यासस्य जीवनपरिमितकालान्वयान्यथानुपपत्तितः प्रतीतेर्धातोर-
भ्यासलक्षणायां व्यापाराभावाददोष इत्याशङ्कते *नन्विति* शा-
ब्दत्वं विनाभ्यासस्य विधान्वयायोगेनान्यथानुपपत्तितः प्रतीतिस-
म्भवे ऽपि धातुव्यापारस्यावश्याभ्युपगन्तव्यत्वादपरिहार्या लक्षणे-
त्याशयेन परिहारं न चेत्यादिभाष्यसूचितमाह *सत्यमिति* श्रु-

तिश्चेत्यादिसूत्रार्थोपसंहारभाष्यमेकहेलया व्याख्यातुमाह * तदिति * पञ्चम्यर्थे तदित्यव्ययम् उभयशब्देनाख्यातयावज्जीवपदविषयतया श्रुतिशब्दो व्याख्यातः । अनुवादोक्तेरुद्देशाशयतोद्दिश्येत्यनेनोक्ता ।

## लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात् ॥ ३ ॥

अप्रतिपातनलक्षणलिङ्गदर्शनादपि कर्तृधर्मो यावज्जीविकतेति प्रतिज्ञाय कर्मधर्मे हि यावज्जीवकत्वे सति जीवनपरिमितदर्शपूर्णमासकालैक्याद्दर्शपूर्णमासयाजित्वानुपक्रमरूपातिपातनयोः कालभेदेन विरोधपरिहारानुपपत्तेर्यो दर्शपूर्णमासयाजी स तदुपक्रामेदेवेत्युपक्रमेण दर्शपूर्णमासयाजी तदुपक्रामित्वरूपेण वन्हिनेव धूमो नियम्येतेत्यनुपक्रमरूपातिपातनानुपपत्तिरित्येवं तदुपपादनार्थत्वेन कर्मधर्मे हि प्रक्रान्तमित्येतावता भाष्येण प्रक्रान्तमेवेत्यवधारणया प्रक्रान्तं सदिति पाठे तु सच्छब्देनावधारणसूचनया मध्यमसूत्रावयवं व्याख्याय यावज्जीवेत्यादिना कर्मधर्मपक्षे उपक्रमरूपातिपातनायोगादसमापनरूपमातिपातनं वाच्यं तत्र च यावज्जीवकालेन समापनावगतेस्तावति काले ऽतिपन्ने कर्मणो ऽतिपत्तिः स्यात्तत्र च मृतस्य प्रायश्चित्तानुष्ठानाशक्तेर्निमित्तभूतातिपातनवचनादन्यन्नैमित्तिकप्रायश्चित्तविधानमनर्थकं स्यादित्येवम् अन्यावयवो व्याख्यातः । तत्र जीवनान्त्यकालात्प्रागप्यसमाप्तिरूपातिपत्त्युपपत्तेः काले ऽतिपन्ने कर्मातिपत्त्युक्तिरयुक्तेत्याशङ्कानिरासपूर्वं सर्वं भाष्यं तात्पर्यतो व्याचष्टे * अतिपत्तिरिति * स्वधर्मभूतकालातिक्रमः कर्मकर्तृकः प्रयोज्यव्यापारे ऽतिपत्तिर्नानुपक्रमो समाप्तिर्वा तत्प्रयोजकस्तु पुंव्यापारो ऽनुक्रमणासमापनोपलक्षितो विध्यविज्ञानाख्यो ऽतिपातनमित्याशङ्कानिरासाशयः । सिद्धान्ते तु कालभेदादेकस्मिन्मासे दर्शपूर्णमासानुष्ठानाल्लब्धदर्शपूर्णमासयाजिव्यपदेशस्य मासान्तरे ऽनुपक्रमणरूपमसमापनरूपं वातिपातनं प्रायश्चित्तविधिश्च सम्भवतीत्याह * मत्पक्षे त्विति * प्रायश्चित्तविषयत्वेन सम्भवतीत्यनुषङ्गः । ननु जीवनपरिमितदर्शपूर्णमासकालैक्याद्दर्शपूर्णमासयाजिनो ऽतिपातनप्रायश्चित्तविध्ययोगे ऽप्यभ्यासकालभेदाद्दादुभयं सम्भवतीत्याशङ्कते * ननु चेति * पौर्णमास्यमावास्याशब्दयोरभ्यासलक्षणार्थत्वे प्रमाणाभावादभ्यासातिपातनस्य निमित्तत्वानवगतेर्नाभ्यासकालभेदाभ्युपगमेन विरोधपरिहारः सम्भव-

तीत्याशयेन परिहरति * न शक्यमिति * ननु पौर्णमास्यमावा- स्याशब्दयोः कालवाचित्वात्तस्य च जीवनपरिमितदर्शपूर्णमासप्र- योगविषयत्वायोगादनभ्यासविषयत्वावगतेरभ्यासविषयकालाति- पातनस्य निमित्तत्वं प्रतीयतइत्याशङ्कते * ननु चेति * अवयववि- षयः कालकर्तृकः प्रयोज्यव्यापारो ऽतिपत्ताख्यो ऽतिक्रमो निमित्त- भूतातिपाताख्यपुङ्कर्तृकप्रयोजकव्यापारविषयत्वान्निमित्तत्वेनोक्तः। प- रमार्थतस्त्वतिपातनं नामेति परिहारग्रन्थालोचनया कालातिपा- तनान्यनिमित्तत्वशङ्कार्थो लक्ष्यते कालस्यातिपत्त्याख्यं प्रयोज्यव्या- पारं प्रतिकर्तृत्वाभावात्कालातिपातनस्य निमित्तत्वं न सम्भवतीति परिहरति * नैतदिति * कालेन कर्मणातिक्रमणीयमिति काल- कर्तृकर्मविषया ऽनतिपत्त्यविधेः कालस्यातिपत्त्ययोगमिति हेतुत्वमु- क्तमुपपादयितुम् * यस्य हीत्याद्युक्तम् * प्रधानस्याङ्गमनतिक्रमणीयं नाङ्गस्य प्रधानमित्येतदेव कुत इत्यपेक्षायाम् * तदेव चेत्युक्तम् * स- गुणत्वायानतिक्रमविधानात्प्रधानस्य च सगुणत्वापेक्षणात्प्रधान- स्यैवाङ्गमनतिक्रमणीयमित्याशयः । अनुष्ठानाननुष्ठानरूपत्वाच्चा-
६३५।२ तिक्रमानतिक्रमयोरनुष्ठेयकर्मधर्मतैव युक्तेत्याह * तदेव चेति * अनुष्ठानमात्मा स्वभावो धर्मो यस्येति विग्रहः अतः पौर्णमास्यमा- वास्याशब्दवाच्यकर्मातिपातनस्य निमित्तत्वादभ्यासस्य च पौर्ण- मास्यमावास्याशब्दवाच्यत्वाभावादतिपातनप्रायश्चित्तविध्योर्लिङ्गता युक्ता इत्युपसंहरति * तस्मादिति *

व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेदः स्यात्॥४॥

दर्शपूर्णमाससमाप्त्युत्तरकालत्वदर्शनाच्च कर्मधर्मपक्षे दर्श- पूर्णमाससमाप्त्युत्तरकालं कर्मकालाभावादनर्थकमन्यत् सोमया- गविधानं स्यात्तदर्थवत्त्वाय तु सोमयागस्य दर्शपूर्णमाससमाप्त्युत्त- रकालं कालो ऽस्तीत्यभ्युपगमे यावज्जीवकालसमाप्यत्वायोगात्प्रति- मासं दर्शपूर्णमासकर्मप्रयोगाङ्गभेदः स्यात् स च यावज्जीविकत्वस्य कर्तृधर्मत्वपक्षे पौर्णमास्यमावास्याकालावच्छिन्नस्य जीवनस्य प्र- तिमासं भिन्नस्य निमित्तत्वाद्युज्यते न कर्मधर्मपक्षइत्येवं तत्रानर्थ- कमन्यत् स्यादिति पूर्वसूत्रावयवानुषङ्गेण व्याख्यां सूचयितुं कथम- नर्थकमन्यत् सोमयागविधानं स्यादिति प्रश्नपूर्वं कथमित्यादिभाष्ये- ण सूत्रं व्याख्यातं तदभ्याससमाप्त्युत्तरकालत्वस्य कर्मधर्मपक्षे ऽपि सम्भवात् समाप्त्युत्तरकालत्वस्य कर्तृधर्मत्वाल्लिङ्गत्वशङ्कानिरा- सपूर्वं व्याचष्टे * दर्शेति * यथैव पौर्णमास्यमावास्याशब्दयोरभ्या-

सवाचित्वाभावान्न प्रतिमाससमभ्यासापत्तिः प्रायश्चित्तनिमित्तं किंतु यावज्जीविकाभ्यासापत्तिस्तथैव दर्शपूर्णमासशब्दयोरभ्यासवाचित्वाभावाद्यावज्जीविकाभ्याससमाप्त्युत्तरकालतैव स्यात् न प्रतिमासाभ्याससमाप्त्युत्तरकालतेति शङ्कानिरासार्थः। कालश्चेदित्यादिसूत्रावयवं स्वयमन्यथा व्याख्यास्यन् भाष्यव्याख्याते ऽर्थे तावद्योजयति * सूत्रमपीति * अन्यथा व्याख्यातुमाह*कालश्चेदिति * कर्मान्तरेण सोमयागादिना दर्शपूर्णमासकर्मणोरविच्छेदे सत्यपि को दोषइत्यपेक्षायां दर्शपूर्णमाससमाप्त्युत्तरकालविधिविरोधो विचार एतद्यज्ञस्य छिद्यते यदन्यस्य तन्त्रे वितते ऽन्यस्य तन्त्रं प्रतारयते इत्यादिनिन्दोन्नीतनिषेधविरोधश्चेति दोषद्वयमुक्तं लिङ्गदर्शनसाध्यमर्थमुपसंहरति * तस्मादिति * अनुध्यायिनीजरामरणनिर्मोकवचनरूपस्यान्यार्थदर्शनवद्यज्ञस्य व्यपवर्गसूत्रार्थत्वाभावात्तद्व्याख्यावेलायामुपन्यासो न युक्त इत्याशङ्कापवर्गसूत्रार्थत्वाभावे * ऽप्यनित्यत्वात्तु नैवं स्यादित्युत्तर * सूत्रस्थेनैवंशब्देन परामर्शसिद्ध्यर्थं तत्समीपे मुक्तकस्यान्यार्थदर्शनद्वयस्योपन्यास इत्याह * मुक्तकेति * सूत्रानारूढस्योपन्यस्तस्य सौत्रेण शब्देन परामर्शमाशङ्क्य विशेषतः केन चित् सूत्रेणानुक्तत्वे ऽपि सामान्यतो लिङ्गदर्शनसूत्रगोचरतोक्ता। अनुध्यायिनीवचनं व्यास्यास्यत् अतिपातनप्रायश्चित्तादीनां लिङ्गदर्शनानां विधिरूपत्वादस्यापि विधिरूपत्वशङ्कां निवर्त्तयितुमर्थवादत्वं तावदाह * तद्यथेति * लिङ्गदर्शनसूत्रे ऽनुध्यायिनीजरामरणनिर्मोचनवचनयोरपि नियमालिङ्गत्वादुदाहरणत्वसम्भवसूचनार्थस्तद्यथाशब्दः। अर्थवादत्वसिद्ध्यर्थं विध्यन्तरशेषभूतत्वे ऽभिहिते होमादिनिषेधार्थत्वाद्विध्यन्तरशेषत्वायोगमाशङ्क्य दीक्षितो न ददातीत्यादिवाक्यान्तरेणैव होमादेः पर्युदस्तत्वान्नाग्निहोत्रं जुहोतीत्यादेरनुवादत्वं दीक्षितस्येत्यनेनोक्तं व्याचष्टे *एतावन्तं हीति * य आहेत्यादिभाष्येणाभिमुख्यार्थत्वादाहो हकारस्य च निश्चयार्थत्वादात्मार्थत्वरूपेणाभिमुख्येन यो भागो निश्चितो भवति तस्मिन्नदीयमाने ऽनुध्यायिनीवचनं भवतीत्यनुध्यायिनीवचनाद्भागस्य नियतत्वमुक्त्वा यन्नेत्यनेन व्यतिरेकमुखेनोपपाद्य नियतश्चेत्यनेन भागनियतत्वद्वारानुध्यायिनीवचनस्य नियमालिङ्गतोपपादिता तत्सर्वं सङ्क्षिप्य तात्पर्यतो व्याचष्टे * एतदिति * कर्म धर्मपक्षालिङ्गायोगोक्त्यर्थं नेति भाष्यं व्याचष्टे * कालेति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादपीति * जरामरणनिर्मोकोक्तेर्लिङ्गत्वोक्त्यर्थमपि च श्रूयतइति भाष्यं व्याख्यातुं यथाभागस्य नियतत्वं नियमलि-

क्तं तथा जरामृत्युभ्यामेव निर्मुच्यतइति जरामरणयोरपि निर्मोक्ष-कारणयोर्नियतत्वं लिङ्गमित्यतिदिशति * एतेनेति * जराविधेरन्य-तो ऽप्राप्तत्वादनेनैव वाक्येन विधिं सूचयितुं विधानशब्दः । जरेति भाष्यं व्याचष्टे * काम्यत्वेति *

## अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥

जरामरणवाक्यस्य प्रागेवोपन्यस्तत्वात्पुनरुपन्यासो ऽनर्थक इत्याशङ्क्याह * यदेवेति * तत्सूत्रस्थेनैवंशब्देन परामर्शार्थं प्रागुप-न्यस्तं वस्तुतस्त्वेतत्सूत्रार्थएवान्यार्थदर्शनद्वयमुपलक्षणार्थं त्वेकमु-पन्यस्तमित्याशयः । सूत्रं योजयति * नियमेति * यदेतदनुध्यानं जरामरणनिर्मोचनं चोक्तं तद्भवत्पक्षे कर्मणो ऽनित्यत्वायोगाद्यथोक्तं तथा न स्यादित्यर्थः । लक्षणाभ्युपगमे ऽपि जीवनस्यानियतपरिमा-णत्वात्तु यत्काललक्षणार्थत्वमुक्तं तन्नैवं स्यादित्येवं स्वयमन्यथासूत्रं व्याचष्टे *अथ वेति * सूत्रार्थमुपपादयति * तन्नामेति * नित्यशब्द-व्याख्यानार्थम् * कियतापीत्युक्तम् * चन्द्रादर्शनस्य ज्योतिःशा-स्त्रान्नियतपरिमाणेनामावास्याकालेनाविनाभावावगमात्तदुपलक्षणत्वं युक्तं जीवनस्य तु कियता कालेनाविनाभावानवगमान्न युक्तोपलक्षण-तेत्यर्थः ।यस्मादनियतपरिमाणत्वाज्जीवनकालमुपलक्षयितुं न शक्नो-ति तस्मादेतज्जीवनमेवमुपलक्षणमापद्यते यदुतैतज्जीवनमेवंभूत-मनियतपरिमाणं यदा भवेत्तदा जुहुयाद्यजेत वेति ततश्च कादा-चित्कत्वान्निमित्ततैव स्यादित्याह * तदिति * ननु नियतनिमित्त-त्वान्नियतं कर्मेत्याद्यसिद्धान्तसूत्रस्थभाष्ये नियतनिमित्तत्ववशेन कर्म-णो ऽवश्यकर्त्तव्यतोक्तिर्ज्जीवनस्यानित्यत्वान्निमित्तत्वाभ्युपगमे विरु-ध्येतेत्याशङ्कते * कथं तर्हीति * यावदात्माधिष्ठितस्वरूपेण श-रीरमस्ति तावत्प्राणधारणाख्यं जीवनं नियमेनास्तीत्येवमाशयं भाष्ये जीवनानित्यत्वाभिधानमिति परिहरति * यावच्छरीरेति *

## विरोधश्चापि पूर्ववत् ॥ ६ ॥

यावज्जीविकाभ्यासपक्षे च दर्शपूर्णमासवत्तद्विकृतीनामप्य-भ्यासापत्तेः सर्वासां चैकस्मिन्काले ऽभ्यासस्याशक्यत्वाद्विरोधः स्यादित्येवं सूत्रव्याख्यार्थमितश्चेत्यादिभाष्यं नियमपक्षे ऽपि विरो-धसाम्यादयुक्तमाशङ्क्योपपादयति * नियमः सन्निति * नियम-स्यावश्यकर्त्तव्यरूपस्य प्रत्यवायपरिहारार्थत्वेन पुरुषार्थत्वादनतिदेशो ऽष्टमे वक्ष्यतइत्यर्थः । नन्वतिदेशप्राप्तो ऽपि यावज्जीवकालो य

इष्ट्वेति वाक्योपदिष्टेन सद्यस्कालत्वेन बाधिष्यतइत्याशङ्कते * ननु चेति * अविरोधान्न बाध्यतइति परिहरति ।

## नैतदिति कर्त्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

ननु कर्तृधर्मपक्षे ऽपि यावज्जीवशब्देन जीवनपरिमितकालत्वोक्तेस्तुल्यो विरोध इत्याशङ्कानिरासार्थत्वेन यथाभाष्यं सूत्रं योजयति * कर्त्रेति * व्यपवर्गदर्शनानुक्तावपि सूत्रार्थः पर्यवस्यतीति सूचनाय * एतावदित्युक्तम् * निमित्तपक्षे दर्शपूर्णमासाविष्ट्वेत्यपवर्गदर्शनावक्लृप्तेः कालश्चेत्कर्मभेदः स्यादित्यनेनैवोक्तत्वाद्दर्शनान्तरानुदाहरणाच्च व्यपवर्गदर्शनोक्तिरयुक्तेत्याक्षिपति * यत्त्विति * दर्शनशब्दो याज्ञिकास्थितिलक्षणसिद्धान्ताशयो न तु लिङ्गदर्शनाशय इत्येवं समाधत्ते * तत्रेति * व्यपवर्गसिद्धान्तोक्तेरपि पौनरुक्त्यमाशङ्क्य पूर्वसूत्रस्थभाष्यालोचनया विकृतिविषयतोक्ता प्रकृतिन्यायेनैव विकृतीनामपि व्यपवर्गसिद्धान्तत्वोपपत्तिसिद्धेर्मन्दफलत्वेनापरितोषात्स्वयमन्यथासूत्रं व्याचष्टे * अथ वेति * उपसंहारार्थत्वे सूत्रस्यानतिरिक्तार्थत्वात्फलगुत्वापत्तेरत्राप्यपरितोषान्नियमपक्षे कालवाचियावज्जीवशब्दानुपपत्तिमाशङ्क्य नियमवाचितया यावज्जीवशब्दव्याख्यार्थत्वेन व्याचष्टे * अथ वेति * उक्तेन न्यायेन कर्तृधर्मनियमे सिद्धे सति कालशास्त्रतयाभासमानमपि यावज्जीवपदं वस्तुतो निमित्तशास्त्रमेव स्यादित्यर्थः । श्रुतिसंयोगोक्त्यैव कालवाचित्वनिरासेन निमित्तवाचित्वसिद्धेरत्राप्यपरितोषात् स्वमतेन निरूढपश्वादिषु नैयमिकत्वोक्त्यर्थत्वेन व्याचष्टे * अथ वेति * षट्सु षट्सु मासेषु पशुना यजेत चतुर्षु मासेषु चातुर्मास्यैर्यजेतेत्यादिशब्देनोक्तम् । कालशास्त्रत्वेनाभासमानस्य वीप्सायोगमात्रेण कथं निमित्तशास्त्रतावसीयतइत्याशङ्क्याह * न तावदिति * काम्यस्य वा ज्योतिष्टोमप्रयोगस्य वसन्तकाल उपदिश्येत एष वा अनृणो यः पुत्री यज्वा ब्रह्मचर्यवासीत्यनृणवाक्याद्यावगतस्य नैयमिकस्य तत्र काम्यस्य तावद्यावदिच्छयावृत्तौ कालस्याप्यङ्गत्वेन हेतुना वीप्सां विनापि प्रतिप्रधानावृत्तिन्यायादावर्त्यमानतया स्थितत्वाद्वीप्सानर्थक्यापत्तेर्वसन्ते वसन्तइत्येवं वीप्सायुक्तत्वेन कालो न शक्यो वक्तुं नैयमिकस्य च ज्योतिष्टोमप्रयोगस्योपदिश्यते ततश्चौलोपनयनादिवत् सकृत्प्रयोगमात्रेण नैयमिकविध्यर्थसिद्धेर्नि-

फलावृत्त्ययोगात्तद्वाचिका वीप्सानर्थिका स्यात् इत्यर्थः । ननु नैयमिकस्यापि प्रयोगस्य कालोपदेशे द्वित्रादिषु वसन्तेषु प्रयोगविध्यर्था
६३८।२ वीप्सा भविष्यतीत्याशङ्क्यानवस्थितशास्त्रार्थापत्त्या निरस्यति * न चेति * अतः सर्ववसन्तव्याप्त्यर्थत्वाद्वीप्साया निमित्तत्वं च विना व्याप्तेरप्राप्तत्वेनानुवादायोगादेकस्मिंश्च प्रयोगे ऽनेकवसन्तसाहित्यसम्पादनाशक्तेर्विध्ययोगान्निमित्तशास्त्रतावसीयतइत्याह * तस्मादिति * नन्वधिकरणवाचिन्या सप्तम्या कालस्याङ्गत्वावगतेर्निमित्तता न युक्तेत्याशङ्क्याह * सप्तम्यपि चेति * अत्रार्थे सूत्रं योजयति * तेनेति * ज्योतिष्टोमन्यायं पश्वादिष्वतिदिशति * एतेनेति *

॥ अथ सर्वशाखाप्रत्ययैककर्मताधिकरणम् ॥ २ ॥

## नामरूपधर्मविशेषपुनरुक्तनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥

षड्विधस्यापि कर्मभेदस्योक्तत्वादनर्थकमेतदधिकरणमित्याशङ्क्य शाखान्तराख्यकारणान्तरनिरासार्थत्वं तावत्परमतेनाह * उक्तेति * प्रतियोगिज्ञानापेक्षत्वादिदं कर्म शाखान्तरीयकर्मभिन्नमिति बुद्धेः शाखान्तरान्यभेदकत्वशङ्कानुपपत्तेः कारणान्तरनिरासार्थत्वायोगेनापरितोषात् स्वमतेनोक्तषट्कमध्ये एव संज्ञागुणाभ्यासाशङ्कानिरासार्थमाह * तत्रैव चेति * रूपादेः षट्कबाह्यत्वात्कथं तन्मध्यताशङ्केत्याशङ्क्य केनचिदपूर्वसंयोगादिप्रकारेण षट्कान्यतमरूपत्वाशङ्कोक्ता कथं निन्दादेः षट्कान्यतमप्रकारत्वमित्याशङ्क्याह * तदिति * सिद्धान्ते प्रतिषेधार्थं निन्दादेर्गुणप्रकारत्वमुदितानुदितकालसंयोगभेदादित्यत्र शाखान्तरीयाणां गुणानामित्यादौ च पूर्वपक्षवार्त्तिके योजयिष्याम इत्यर्थः । ननु पूर्वत्रासम्भवेन गुणस्य भेदकत्वादुदितानुदितकालस्य चोत्पत्तिशिष्टत्वाभावेनामिक्षादिवत् पूर्वसंयोगासम्भवहेतुत्वायोगाच्छाखान्तरीयस्य च कर्मणोऽनवगतत्वेनाप्रत्यभिज्ञानाच्छाखान्तरीयस्य गुणस्य शाखान्तरीये कर्मणि विध्यसम्भवेन भेदकत्वस्याशङ्कनीयत्वाच्छाखान्तरीयगुणानां चैकशाखास्थे कर्मण्युपसंहाराशक्तेः शाखान्तरीयकर्मानवगमस्यैव हेतुत्वाच्छाखान्तरीयत्वसहकृतस्यैव गुणस्य भेदकत्वेनाशङ्कनीयत्वावगतेः पुनः श्रुतेश्च सिद्धान्ते शाखान्तरीयत्वेनैवाभेदकत्वाभिधानाच्छा-

खान्तरीयाणां यथोदाहरणत्वं तथा वेदान्तरीयस्यापि कर्मणः शाखान्तरीयाध्यायिभिरनवगमाविशेषाद्वेदान्तराणामप्युदाहरणीयत्वावगतेः शाखान्तराणीति भाष्यमयुक्तमित्याशङ्कते * कथं पुनरिति* केषां चिदुपलक्षणत्वेन समर्थनं दूषयितुमुपन्यस्यति * के चिदिति * त्रयीं विना सर्वाङ्गोपेतकर्मानवगतेर्वेदत्रयस्याप्यध्येयत्वाच्छाखान्तरीयन्यायासम्भवेन दूषयति * न त्विति * श्लोकं व्याचष्टे * यत्र हीति * औद्गात्रे वा वेदे यत्कर्म द्रव्यदेवतासंयुक्तमाम्नायते तत्र कथमित्यपेक्षायामाह * यद्विति * अनेकवेदाधीतस्य कर्मणो यत्र द्रव्यदेवाम्नानं तत्रैवोत्पत्तिर्वेदान्तरे गुणमात्रविध्यर्थश्रुतिरित्येतदेव तृतीयाधिकरणसूत्रेण द्रढयति * तथा चेति* तस्माद्युक्तमेव भाष्यमित्याह * तस्मादिति * नामविशेषदर्शनाद्रूपविशेषदर्शनादित्यादिप्रत्येकं दर्शनशब्दान्वयेन सूत्रव्याख्यां दृश्यतेशब्देन सूचयन्नाम्ना भेदोक्तिं व्याचष्टे * तत्रेति * नामरूपयोर्विशेषोक्त्यन्वयो भेदोक्त्या सूचितः। नामभेदो यद्भेदकारणं तत्तावदिह दृश्यतइत्यर्थः ।ननु्विति भाष्येण काठकादिनाम्नोऽवध्यस्मरणेनानादित्वावधारणाद्वैशम्पायनान्तेवासिपुरुषवाचिकठशब्दप्रकृतिकत्वे चादिमत्त्वापत्तेश्चरणाख्यब्राह्मणावान्तरजातिवाचिकठशब्दप्रकृतिकत्त्वावगमात्तस्माच्च परतस्तेन प्रोक्तमिति विहितस्याणप्रत्ययस्य कठशब्दपरतया विध्यभावेन कठचरकाल्लुगिति स्मृतेर्लुगभावात्स्वार्थिककप्रत्ययास्तत्वेन काठकमिति रूपावगतेर्ग्रन्थस्यैव प्रवाच्यतयैतन्नामकत्वावसायात्कर्मनामत्वायोगमाशङ्क्य सत्यमित्यनेन तस्येदमित्यस्मिन्नर्थे गोत्रचरणाद् वुञिति चरणवाचिनः कठशब्दाद् वुञ्प्रत्ययोत्पादनेन तदादेशाक्रान्तत्वात्काठकशब्दव्युत्पत्त्यवगतेस्तस्य च धर्मसमाम्नाययोरिष्यतइति स्मृत्या कठसम्बन्धिसमाम्नायविषयत्ववत्तत्सम्बन्धिधर्मविषयत्वस्याप्यवगत्याविशेषाद्विभक्त्यैक्यहेतुकसामानाधिकरण्याविशेषाच्च धर्मरूपकर्मनामताप्युपपादितेत्येवं व्याख्यातुमाह * तद्यथेति * रूपाद्भेदोक्तिं व्याचष्टे * तथेति * आमिक्षावाजिनदृष्टान्तेनोपपादितेन गुणत्वेन रूपभेदस्य भेत्तृत्वे कपालसंख्याया यागगुणत्वाभावादभेदकत्वमाशङ्क्य गुणस्य तु विधानार्थ इत्यत्र कपालाश्रिताया अपि संख्याया यागं प्रत्यङ्गत्वरूपगुणतोक्ताद्यदृष्टान्तेन स्मारिता धर्मविशेषस्यापि गुणत्वमुपपादयितुमाह * कारीरीति * कारीर्याद्यध्ययनकाले ऽनुष्ठीयमानस्य भूमिभोजनादेः कैमर्थ्याकाङ्क्षायां फलवतः कारीर्यादेर्वाक्याध्ययनद्वारा सन्निहितस्य प्रकरणानाम्नातेतिकर्तव्यताग्राहित्वायोगे ऽप्यध्ययन-

स्य दृष्टार्थत्वेनादृष्टार्थतेति कर्त्तव्यताग्राहित्वायोगात्सन्निधानाख्येन स्थानेन कारीर्यादीतिकर्त्तव्यतावगतेर्गुणत्वे ऽपि कर्माङ्गभूतज्ञानद्वारत्वेन विप्रकृष्टतरत्वाद्भेदेनोपादानमित्यर्थः । साक्षादितिकर्त्तव्यतात्वनिरासार्थः स्थानीयशब्दः । अश्वघासादिग्रहणस्योदाहरणार्थत्वेन धर्मान्तरस्यापि ग्रहणसिद्धेर्विशेषानभिधानाच्चान्यधर्मोक्तेरुदाहरणान्तरार्थत्वायोगादानर्थक्यमाशङ्क्याह * पर इति * अश्वघासादेरिति तन्त्रेणान्ययोगनिमित्तापादानपञ्चमीत्वेन व्याचष्टे * अश्वेति* पुनरुक्तत्वमभ्यासत्वेन व्याचष्टे *पुनरुक्तत्वेनेति* निन्दाया गुणत्वं तावदुपपादयति * निन्दायामपीति * पूर्वपक्षे निन्दाया निषेधमात्रपर्यवसानाभ्युपगमान्निन्दासंयोगेनोदितानुदितकालयोर्निषेध्ययोर्गुणयोर्भेदादित्येवं योज्यम् । अनुदितहोमनिन्दां व्याचष्टे *उदितेति* निन्दाया निन्द्यनिषेधापेक्षत्वादुदित एवेत्यवधारणाभ्युपगमेनानुदितहोमो न कार्य इत्यस्मिन्नर्थे तस्मादिति योज्यम् । उदितहोमनिन्दां व्याचष्टे *इतरे पुनरीति* प्रद्रुतायान्नदानोक्तेर्निन्दात्वाभिव्यक्त्यर्थं यः पूजामित्युक्तम् * प्रद्रुतशब्दव्याख्यानार्थातिक्रान्तोक्तिः अतिक्रान्तायान्नदानाशक्तिमाशङ्क्य * व्याहृत्यै हीत्युक्तेत्युक्तम् * तस्मादित्युदितहोमो न कार्य इत्येवं योज्यम् । निन्दाया निन्द्यन्तरविधिशेषत्वात्सद्वादशैकादशकपालत्ववद्विकल्पनाविरोधमाशङ्क्य वैकल्पिकत्वे सत्युभयथाप्यवैगुण्यान्निन्दानुपपत्तेर्विरोधपरिहारायोगोक्त्यर्थं सर्वेति
६४०।२ भाष्यं व्याचष्टे * तत्रेति* अशक्तेर्गुणत्वमुपपादयति * अशक्तीति * समाप्तिभेदस्याप्येकस्मिन्कर्मणि निवेशासम्भवेन भेदकत्वात् समाप्तिवचनस्यापि गुणतेत्याह * समाप्तीति * अस्माकं यो ऽग्निः सो ऽन्वारोहेषु समाप्यते ऽन्येषामन्यत्रेति समाप्तिभेदाः समाप्त्युक्त्या भेदकत्वेन विवक्षितभेदशब्देन सूचितम् । क्व चिच्छाखायामुदितकालातिक्रम इति प्रायश्चित्तनिमित्तं क चिदनुदितकालातिक्रम इति प्रायश्चित्तनिमित्तभेदस्यापि निन्दावन्निषेधगमकत्वेनैव भेदकत्वात्पृथगुपन्यासानर्थक्यमाशङ्क्याह *निन्दयेति* प्रायश्चित्तनिमित्तो भेदः प्रायश्चित्तभेद इति मध्यमपदलोपी समासः वृद्धिशब्दव्याख्यानार्थं वैगुण्योक्तिः । एकेनैवोदाहरणेनान्यार्थदर्शनव्याख्यासिद्धेरुदाहरणप्रपञ्चकानर्थक्यमाशङ्क्य परिहरति * परिहारेति * यदीत्यन्यार्थदर्शनं व्याचष्टे * यदीति * इष्टवतामिति भाष्यादिष्टप्रथमयज्ञतानिष्टप्रथमयज्ञता च द्वयमपि लिङ्गमिति भ्रान्तिनिरासायानिष्टप्रथमयज्ञत्वस्यैव लिङ्गत्वमाह * द्वादशाह इति * ताण्डुकइत्यादिभाष्यं व्याचष्टे * ताण्डुकेति * ज्योतिष्टोमस्य प्राथम्यनियमे सति यज्ञान्तरेभ्यः प-

श्वात्प्रयोगे प्राथम्याभावान्नैष्फल्यापत्तेः यज्ञान्तराणां च प्रथमप्रयोगे ऽप्यवैगुण्यापत्तेरन्येन यजेतेति चान्यशब्दसमभिव्याहृतस्य यजेर्यज्ञान्तरवाचित्वात्तत्परेण प्रत्ययेन ज्योतिष्टोमस्य प्राथम्यविधावत्यन्तश्रुतिबाधापत्तेः सोमयागान्तराणां ज्योतिष्टोमपश्चाद्भावरूपधर्मविध्यर्थत्वेनास्य वाक्यस्य वार्त्तिककृतैव पञ्चमे व्याख्यास्यमानत्वाद्यजुर्वेदोत्पन्नत्वेन च ज्योतिष्टोमस्य सामवैदिकताण्डुकशाखागतत्वाभावात् सारस्वतसूत्रे च ज्योतिष्टोमपूर्वत्वात् सर्वकर्मणामिति भाष्यदर्शनादेकस्यापि ज्योतिष्टोमस्य प्राथम्यनियमे सति पक्षद्वये ऽप्यदीक्षितदर्शनानुपपत्तिसम्भवात् तत्सिद्ध्यै लिङ्गपरिहारसूत्रे सर्वशेषत्वोक्त्यानर्थक्यापत्तेर्द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावलक्षणार्थं ज्योतिष्टोमान्तरस्य प्राथम्यनियमे सति इत्युक्तिमङ्गीकृत्य प्रकृतशाखगताद् द्वादशाहादन्यताण्डुकशाखागतं द्वादशाहं प्रति ज्योतिष्टोमस्य प्राथम्यनियमे सति प्रकृतशाखागतस्य द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावानियमात्प्रतिशाखं द्वादशाहाख्यकर्मभेदे सत्यनिष्टप्रथमयज्ञत्वं द्वादशाहकर्तृविशेषणं युक्तं भवतीति व्याख्येयम्। ननु सामवेदे ज्योतिष्टोमोत्पत्त्यभावाद्यजुर्वेदोत्पन्नज्योतिष्टोमप्राथम्यप्रतीतेः कर्मभेदे चाविशेषात् सर्वज्योतिष्टोमप्राथम्यापत्तेरेकं च द्वादशाहादियज्ञं प्रति सर्वज्योतिष्टोमप्राथम्यायोगात् सर्वशाखोत्पन्नानां द्वादशाहादियज्ञानां ज्योतिष्टोमः प्रथम इत्यर्थावगतिद्वारा सर्वशाखागतानां द्वादशाहानां ज्योतिष्टोमपश्चाद्भावावगतेरुदाहृतवाक्ययुक्तशाखागतस्यापि द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावानियमात्कर्मभेदे ऽप्यनिष्टप्रथमयज्ञदर्शनानुपपत्तिरित्याशङ्कानिराससूचनार्थोन्तरशब्दः। यज्ञान्तरधर्मभूतपश्चाद्भावावच्छेदकत्वेन ज्योतिष्टोमस्य परार्थतयोपादानात्पारार्थ्ये चैकं इष्यतइत्यनेन न्यायेनैकस्यैव ज्योतिष्टोमस्य प्राथम्यावसायान्नैतद्द्वारेण सर्वशाखास्थानां द्वादशाहानां ज्योतिष्टोमपश्चाद्भावावगतिरित्याशयः। सर्वशाखासु कर्मैक्ये तु सर्वशाखास्थं द्वादशाहं प्रति ज्योतिष्टोमप्राथम्यानियमात्तद्द्वारा सर्वशाखास्थस्य द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावनियमावगतेरदीक्षितदर्शनं द्वादशाहे न स्यादित्याह * एकत्वे त्विति * ज्योतिष्टोमः प्रथमो यस्मात्स ज्योतिष्टोमप्रथमस्तस्य भावो ज्योतिष्टोमप्राथम्यमिति बहुव्रीह्यभ्युपगमेन वा सर्वशाखास्थस्य द्वादशाहस्य ज्योतिष्टोमप्राथम्यानियमादित्येवं योज्यम्। तथा चेति द्वितीयान्यायार्थदर्शनभाष्यं व्याचष्टे * तथेति * अर्द्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति वेद्यग्रे विहितस्य यूपमानस्यातिदेशेन यूपैकादेशिनीं प्राप्तस्य वेदिदेशातिक्रमा योगाद्वेदि-

मानस्य वेद्याधारस्य श्येनादिपक्ष्याकारस्थलावयवभूतपक्षद्वयसंम्मानस्य चार्थप्राप्तत्वेनानुवादोपपत्तेः प्रत्यक्षविधिविरोधे ऽर्थवादकल्प्यविध्ययोगात्पक्षं सम्मानं निन्दित्वा वेदिसंम्मानपरिग्रहः शाखान्तरीयस्य विरोधिनो वचनान्तरस्य तच्छाखीय कर्मत्वप्राप्तिं द्योतयतीत्यर्थः । एतदेवोपपादयति * वचनान्तरे हीति * चतुर्विंशतिप्रक्रमवेद्यग्रदेशे रथाक्षमात्रान्तरालानाम् एकादशानाम् यूपानां मातुमशक्यत्वाद्व्यासमात्राणि पक्षपुच्छानि भवन्तीति च पक्षयोर्वासंमात्रत्वविधानात्पक्षसम्मानपक्षो सुतरामशक्तेर्विरोधं इत्याशयः । तस्मादपीत्युपसंहारभाष्यं व्याचष्टे * ततश्चेति * अपरं चेति तृतीयान्यार्थदर्शनात् भाष्यं व्याचष्टे * द्वे इति * स्तोत्रियावाचिसंस्तुतशब्दपरनिर्द्धारणषष्ठीयोगाद् द्वित्रिसंख्ययोः स्तोत्रियाविषयत्वोक्तिः दशकाख्यत्वेन विराट्शब्दं व्याख्यातुं दशकशब्दः । अतिरेकोक्त्याऽतिरात्रसंस्थज्योतिष्टोमविषयत्वप्रदर्शनायातिरात्रशब्दः अपि चेति चतुर्थान्यार्थदर्शनभाष्यं नासोमयाजी सन्नयतीत्यसोमयाजिनः सान्नाय्यनिषेधो नैन्द्राग्नस्य पुरोडाशस्य तत्स्थाने विधानादनिष्टप्रथमयज्ञानां पुरोडाशित्वेन विवक्षितानां दीक्षितादीक्षितदर्शनेनेव गतत्वादयुक्तमाशङ्क्य समाधत्ते * पुरोडाशीति * पञ्चमान्यार्थदर्शनभाष्यं व्या-
६४१।२ चष्टे * किं चेति * नानाकर्मत्वेति भाष्यं व्याचष्टे * उपहव्येति * तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * तस्मादपीति *

एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥

सूत्रं व्याचष्टे * सर्वत्रेति * रूपशब्दोक्तद्रव्यदेवतव्यतिरिक्ताङ्गाशयो गुणशब्दः संयोगचोदनयोर्ग्रहणायादिशब्दः । शाखास्थानां ब्राह्मणानामेव विधायकत्वात् सर्वशाखाभ्यो ज्ञानं यस्य कर्मणस्तदेकमित्युक्ते सर्वेभ्यो ब्राह्मणमार्गेभ्यो ज्ञानं यस्य तदेकमित्युक्तिः पुनरुक्तेत्याशङ्क्याह * सर्वेति * अत्रोदाहरणमाह * तद्यथेति * गुणमुख्यव्यतिक्रमाधिकरणे ज्योतिष्टोमस्य याजुर्वैदिकतयाः स्वयमेव वक्ष्यमाणत्वादौद्गात्रे ज्योतिष्टोमानुत्पत्तेस्तदङ्गभूतस्तोत्राद्याशया ज्योतिष्टोमोक्तिः । अर्थसंयोगस्येति भाष्यं व्याचष्टे *संयोग इति* संशब्दस्य समीहितवाचित्वात्फलस्यैव च समीहितत्वात् समीहितेन योग इत्यवयवार्थसंयोगात्फलान्वयवाची संयोगशब्द इत्याशयः । रूपमपीति भाष्यं व्याचष्टे * रूपमिति * पुरुषेति भाष्यं व्याचष्टे * चोदनेति * नामधेयं चेति भाष्यं व्याचष्टे * ज्योतिष्टोमादीति * तेनेति सिद्धान्तोपसंहारभाष्यं व्याचष्टे * तस्मादिति*

शाखान्तरस्य भेदकत्वं शङ्कितुमापातनिकां तावत्करोति* न चेति* व्याचष्टे *प्रमाणान्तरवदिति*असन्निधानेनैव कारणेन शाखान्तराध्यायिभाष्यं शाखान्तरीयस्य कर्मणो ऽनवगतेः प्रतियोग्यनवगमे च भेदाप्रतीतेर्न शाखान्तरलक्षणमसन्निधानं भेदहेतुरिति परिहरति * नेति * एतदेव विवृणोति*येन हीति*स्मृतिहेतुसंस्कारोद्बोधसिद्ध्यर्था सदृशोक्तिः। ननु शाखाद्वयाध्यायिनः प्रतियोगिकर्मग्रहणसम्भवाच्छाखान्तरे प्रकरणान्तरन्यायो भविष्यतीत्याशङ्कते * यस्तर्हीति * पञ्चविंशादिषु चैकशाखाङ्कतेषु ब्राह्मणान्तरेष्वेकशाखाध्यायिनो ऽपि प्रकरणान्तरन्यायो भविष्यतीत्याशङ्कान्तरमाह * एकेति * आद्यां शङ्कां निरसितुमुपक्रमते * नैष इति * एतदेव प्रश्नपूर्वमुपपादयति * किमिति * स्वाध्यायोक्तेर्वेदवाचित्वात् समस्तस्वशाखासमूहस्य च वेदत्वात्कथं स्वाध्यायशब्देनैकशाखाग्रहणमित्याशङ्कां निरस्यन् पूर्वार्द्धं व्याचष्टे * यथैवेति * एकशाखाध्यायिनि वेदवित्शब्दप्रयोगान्न शाखासमूहस्य वेदतेत्याशयः। संस्कारकर्माध्ययनपक्षे स्वाध्यायस्य संस्कार्यत्वेनानुपादेयत्वे ऽपि स्वशब्देनात्मीयवाचिना पितृपितामहादिपरम्परागताया एव शाखायाः कर्मव्युत्पत्त्याध्यायशब्दोक्तायाः अध्येतव्यत्वोक्तेरेकशाखाग्रहणसूचनार्थश्च शब्दः वेदान्तरस्यापि तर्ह्यनध्ययनापत्तेस्त्रिवेदीबोध्यज्योतिष्टोमादिकर्मासिद्धिः स्यादित्याशङ्कते * नन्विति * स्वाध्यायाध्ययनविधिनैकवेदाध्ययनविधानाद्वेदान्तरानध्ययनप्रसक्तावपि वचनान्तरेण प्रतिप्रसवाद्वेदान्तराध्ययनसिद्धिरिति परिहरति * नेति * स्मृत्यापि प्रतिप्रसवमाह * तथेति * वेदान्तरवैषम्यप्रदर्शनपूर्वमुत्तरार्द्धं व्याचष्टे * साकाङ्क्षत्वाच्चेति * द्वितीयामपि शङ्कामनेनैव न्यायेन * परिहरति * साकाङ्क्षत्वादेवेति * ननु शाखान्तरानध्ययने प्रतियोगिकर्माग्रहणाद्भेदबुद्धिवत्प्रत्यभिज्ञानस्यापि तदेवेदमिति प्रतियोगिग्रहणसापेक्षत्वेनानुपपत्तेर्विकल्पादेवैककर्माभ्युपगमप्रसङ्गादन्योन्याश्रयः स्यादित्याशङ्कते * नन्विति * विधेयरूपभेदे शब्दान्तरादिप्रमाणव्यापारात्तस्य चोत्पत्तिविध्यधीनत्वादुत्पत्तिबोधनेनोत्पन्नोत्पत्त्ययोगाच्छब्दान्तरादीनां भेदकत्वावगतेः शाखान्तरे चोत्पन्नोत्पत्तावप्यध्येत्रन्तरे प्रत्यर्थवत्त्वोपपत्तेरुत्पत्तिबोधने ऽपि भेदकत्वायोगाच्छाखान्तरीयत्वनिमित्तवैलक्षण्यप्रतीतिमात्रेण भेदो वाच्यः स च प्रतियोगिग्रहणापेक्षत्वाच्छाखान्तराग्रहणे तावन्न शक्यो ग्रहीतुमध्येत्रन्तराग्रहणे ऽपि फलाद्यविशेषेण

१ भङ्क्तेदिति २ पु० पा०

प्रत्यभिज्ञानाद्वस्त्रादिवैलक्षण्येन च देवदत्तवैलक्षण्यवच्छाखावैलक्षण्यमात्रेण कर्मवैलक्षण्यायोगादभेद एवावसीयते न भेद इत्याशयेन परिहरति * नेति * विकल्पावगतिं विनाऽध्यध्येत्रन्तराच्छाखान्तरीयकर्मग्रहणे सति फलाद्यविषयनिमित्तप्रत्यभिज्ञानमात्रेण कर्मैक्यज्ञानाद्विकल्पसिद्धेरन्योन्याश्रयपरिहारमुक्त्वैकशाखाध्ययनात् स्वाध्यायविध्यर्थसम्पत्तावप्यनेकशाखाध्ययननिषेधादनेकशाखाध्यायिनो विहितविध्ययोगाद्विधिभेदेन कर्मभेदबुद्धेर्विधिश्रुतिविरोधात् सन्निधिलक्षणप्रत्यभिज्ञाबाधमाशङ्क्य स्वाध्यायगतयैकत्वसंख्यया ऽनेकशाखाध्ययननिषेधसूचनार्थम् * संख्यावशेनेत्युक्तम्* स्वशब्देन च स्वीयशाखानियमाच्छाखान्तराध्ययननिवृत्तिरिति दृष्टान्तद्वारा सूचयितुमाह*अथेति * शाखान्तरस्य भेदकत्वशङ्कानिरासमुपसंहरति * तस्मादिति *

## न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥

काठकादिनाम्नः कर्माभिधानत्वे ऽव्युत्पत्तिचोदनागतत्वाभावान्न नाम्ना कर्मभेदः स्यादिति स्वयमभ्युपेत्योक्त्याशयहेत्वर्थसूचनापूर्वं चोद्यतइति व्युत्पत्त्या कर्मवाचिचोदनाशब्दाभ्युपगमेन भाष्योक्तं हेत्वर्थं व्याचष्टे*यद्यपि तावदिति*इदं त्वित्यनेन परिहृतमिति भाष्ये व्याख्याते ऽथेति भाष्येण कर्मभिरपीति पूर्वपक्षभाष्योक्तमर्थमनुभाष्य नैष इति परिहारभाष्यं व्याख्यातुम् * अन्यायो
६४३।१ हीत्युक्तम्* कथमिति प्रश्नभाष्यं व्याचष्टे*कथं पुनरिति * यद्यादिति परिहारभाष्यं व्याचष्टे*तदिति*श्लोकं व्याचष्टे* काठकादीति* ज्योतिरादिवल्लाक्षणिक्यपि कर्मसञ्ज्ञा कर्म भेत्स्यतीत्याशयेन किमत इति पृष्ट्वा पञ्चम्यर्थे यदित्यव्ययमङ्गीकृत्य यस्मात्काठकग्रन्थसंयोगात्काठककर्मैक्ये ऽपि काठकादिभिन्नग्रन्थसंयोगात्कर्म काठकादिभिन्नसंज्ञं भविष्यतीति परिहारार्थं यद् ग्रन्थसंयोगादित्यादिभाष्यं व्याचष्टे * ततश्चेति * एतदेवोपपादयति * तस्मादिति *

## सर्वेषां चैककर्म स्यात् ॥ ११ ॥

नामभेदाच्च कर्मभेदे ऽभ्युपगम्यमाने सर्वेषामेकशाखाधीतानामग्निहोत्रदर्शपूर्णमासादीनां काठकादिनामैक्यादेककर्म्यं स्यादिति नाम्ना कर्मभेदे ऽनिष्टापत्त्युक्त्यर्थमेतत्सूत्रं चातुर्मास्यादिनामैक्ये ऽपि वैश्वदेववरुणप्रघासादिकर्मभेददर्शनादयुक्तमाशङ्क्योपपादयति * प्रायेणेति * करोतेर्ज्ञानाख्यक्रियाविशेषलक्षणार्थत्वमभिप्रेत्य सा-

ध्यवाची कार्यशब्दः। नन्वेवमपि सञ्ज्ञैक्यस्य साध्यकर्मैक्ये व्यभिचारान्न हेतुत्वं सम्भवतीत्याशङ्क्याह * साध्येति * सत्यं, साध्यव्यभिचारेण सम्यग्घेतुत्वायोगान्नेदं सम्यगुत्तरं किं तु जात्युत्तरमित्यर्थः। साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाख्यानां चतुर्विंशतिजातीनां मध्ये केयमित्यपेक्षायां नामभेदात्कर्मभेदे ऽभिहिते ऽर्थान्नामैक्ये कर्मैक्यापत्तेरर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसम इति लक्षणयोगात् * अर्थापत्तीत्युक्तम्। जातेरुत्तराभासत्वादुपन्यासानर्थक्यमाशङ्क्य कर्मनामभेदस्य पूर्वपक्षहेतोः काठकादेः कर्मनामत्वे ऽग्निहोत्रदर्शपूर्णमासादीनामेकशाखास्थानां काठकादिनामैक्येनैक्यापत्तेर्न कर्मनामता युक्तेत्यसिद्धत्वलक्षणस्य दोषस्याचोदनाभिधानत्वादित्यनेन दर्शितस्याप्यनिष्टाग्निहोत्रदर्शपूर्णमासाद्यैक्यापादनद्वारा प्रकर्षेण दर्शना * याभिहितेत्युक्तम्। असिद्धत्वलक्षणदोषाविवक्षायामपि यादृशो यक्षस्तादृशो बलिरित्यनेन न्यायेन दुष्टपूर्वपक्षे दुष्टमप्युत्तरं यथा मदीयमुत्तरं दुष्टं तथा त्वदीयः पूर्वपक्षो ऽपि दुष्ट इत्येवं पूर्वपक्षस्य दुष्टत्वद्योतनात्सम्यगुत्तरं भवतीत्याशयेन परिहारान्तरमाह * सर्वत्र चेति * सन्तं दोषमनुक्त्वान्यमसन्तं यो हि जल्पति तस्य द्वे निग्रहस्थाने वाच्यानुक्तीतरोक्तिजे इति बृहट्टीकायां दुष्टे ऽपि पूर्वपक्षे सम्यगेवोत्तरं वाच्यमित्युक्तत्वान्न्यायभाष्ये ऽपि छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनं परवाक्ये च पर्यनुयोग इत्यनेन स्वयमप्रयोगाय परप्रयुक्तस्य च छलादेरुत्तराभासत्वोद्भावनाय परिज्ञानाय न्यायविस्तरे छलादिव्युत्पादनं न तु प्रयोगायेत्युक्तत्वाद् दुष्टे ऽपि पूर्वपक्षे जातेर्नोत्तरता युक्तेत्याशङ्क्य परमतत्वसूचनार्थं केषां चिदिष्टमित्युक्तम्।

## कृतकं चाभिधानम् ॥ १२ ॥

यथाभाष्यं तावत्सूत्रं व्याचष्टे * कृत्रिममिति * कठस्य वैशम्पायनान्तेवासित्वात्कलापिवैशम्पायनान्तेवासिभ्यश्चेति तेन प्रोक्तमित्यस्मिन्नर्थे पाणिनिप्रत्ययस्मृतेस्तस्य कठचरकाल्लुगिति लुक्स्मृतेः छन्दोब्राह्मणानि च तद्विषयाणीति च तदधीते तद्वेदेत्येतदर्थविहितप्रत्ययविषयत्वानियमस्मृतेस्तस्यापि च प्रोक्ताल्लुगिति लुक्स्मृतेः कठेन प्रोक्तं यो ऽधीते स कठ इति स्थिते तस्येदमित्यस्मिन्नर्थे काठकशब्दव्युत्पत्त्यवगमादाख्येति वेदाधिकरणसूत्रे काठकाद्य-

भिधाने· पुरुषविशेषप्रवचनकृतामित्युक्तं ततश्चादिमता सताभिधानेनानादीनि कर्माणि न भिद्यन्तइत्यर्थः । ननु यथा ब्राह्मणादिशब्दो मनुष्यावान्तरवर्णाख्यजातिवाची तथा कठादिशब्दो ब्राह्मणावान्तरचरणाख्यजातिवाची तद्वाचिन एव च कठशब्दाठ्ठञ्प्रत्यय इतिस्मृतेस्तज्जातीयानां च वैशपायनप्राग्भाविनां तदन्तेवासिपुरुषविशेषप्रोक्ताध्येतृत्वायोगात्प्रवक्तृविषयस्यापि कठशब्दस्य चरणविशेषवाचित्वावगतेः शाखाचरणविशेषयोगाच्च प्रवाच्यवक्तृसम्बन्धस्यानादित्वात्प्रवचनकृतापीयमाख्या नित्यैवेति भाष्यकृत्व्याख्यानस्यायुक्तत्वमाशङ्क्य स्वयं प्रवचनकृतत्वात्काठकाद्यभिधानस्याकर्मणश्चाप्रवाच्यत्वान्न कर्मविषयत्वं सम्भवतीति व्याख्यान्तरमाह * यद्यपीति * नाम्नो भेदकत्वायोगमुपसंहरति * तस्मादपीति * कठप्रोक्ताध्येतृसम्बन्धनिमित्तत्वात्प्रवचननिमित्तत्वे ऽपि पूर्वोक्तन्यायात्कर्मविषयत्वासम्भवसूचनार्थो ऽपि शब्दः ।

## एकत्वे ऽपि परम् ॥ १३ ॥

रूपभेदाख्यं यत्परं कर्म भेदकारणमुक्तम् तत्कर्म्यैक्ये ऽपि विकल्पेनानेकाङ्गनिवेशोपपत्तेर्युक्तमित्यभिधानार्थं सूत्रं व्याख्यातुमाह * न चेति * व्रीहियवादिसम्बन्धिद्वारस्य कर्मभेदस्यानभ्युपगमादित्यर्थः । कर्मैक्ये कथं कपालसंख्याभेदनिवेशोपपत्तिरित्याशङ्क्याह * तस्मादिति * न तूत्पत्तिशिष्टगुणावरुद्धे कर्मणि तद्विरोधिगुणान्तरविध्ययोगादिकल्पासम्भवस्योत्पत्तिवाक्यविज्ञातमिति चित्राधिकरणवार्त्तिके ऽभिहितत्वान्नेह विकल्पः सम्भवतीत्याशङ्कते * ननु चेति * गुणान्तरस्याप्युत्पत्तिशिष्टत्वाविशेषात्केन गुणेनावरुद्धे कर्मणि को गुणो ऽशक्यविधिरिति ज्ञातुमशक्यत्वादगृह्यमाणविशेषत्वेनोभयोस्तुल्यबलत्वाद्विकल्पो युक्त इति परिहरति * नैष इति * तर्ह्युत्पन्नोत्पत्त्ययोगात्कर्मभेदः स्यादिति शङ्कते * कथं पुनरिति * अद्विर्वचनं वेत्यत्र सूत्रे चोद्यस्याध्येतृभेदादेकस्मिन्नपि कर्मणि स्वाध्येतॄन् प्रत्यप्रवृत्तप्रवर्त्तकत्वान्नोत्पत्तिविधिभेदे ऽपि कर्मभेदापत्तिरेषेत्येवं परिहारं वक्ष्याम इत्याह * तस्येति * अनेकवाक्योत्पादितत्वोक्त्यापौनरुक्त्यानुभाषणार्थस्याग्नेयवदिति सूत्रस्य बुद्धिस्थत्वात्तदपेक्षयोत्तरत्वं धर्मविशेषस्य भेदकनिरासार्थम् ।

## विद्यायां धर्मशास्त्रमिति ॥ १४ ॥

सूत्रं यद्धर्मशास्त्रं भेदकत्वेनोक्तं तत्कर्माङ्गत्वावेदकश्रुत्यादि-प्रमाणाभावान्न कर्मविषयं किं तु।

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इत्यादिविद्यासंयोगाद्विद्याविषयमित्यभिधानार्थं यथाभाष्यं स्पष्टत्वान्न व्याख्यातम् ।

## आग्नेयवत्पुनर्वचनम् ॥ १५ ॥

यथाग्नेयस्य पुनर्वचनमाग्नेयसूक्तहेतुत्वादित्याग्नेयाधिकरणपूर्वपक्षसूत्रे भेदकमुक्तं तथा प्रतिशाखमग्निहोत्रादिपुनर्वचनं भेदकमित्येवं यथाभाष्यं तावत् सूत्रं व्याचष्टे * अनुभाषणेति * यत्पुनर्वचनं भेदकत्वेनोक्तं तदन्यार्थां वा पुनः श्रुतिरित्याग्नेयाधिकरणसिद्धान्तसूत्रे यथाग्नेयस्य पुनर्वचनम् अन्यार्थत्वान्न भेदकमित्युक्तं तथा प्रतिशाखमग्निहोत्रादिपुनर्वचनमप्यन्यार्थत्वान्न भेदकमित्येवं पौनरुक्त्यस्य भेदकत्वनिरासार्थत्वेन स्वयं व्याचष्टे * अथ वेति * यथासम्भवमर्थवादार्थत्वेन गुणार्थत्वेन वा पुनः श्रुतेरन्यार्थत्वान्न भेदकतेत्याशयः ।

## अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥

आग्नेयवदित्यस्य पौनरुक्त्यपरिहारार्थत्वव्याख्याने तेनैव पूर्वपक्षनिवृत्तेस्तन्निवृत्त्यर्थं वाशब्दानर्थक्यमाशङ्क्यान्यार्थत्वलक्षणपूर्वपरिहारनिवृत्त्यर्थमाह * द्वितीयेति * पूर्वपरिहारनिवृत्तावर्थवादार्थं गुणार्थं वेदं द्विर्वचनं न भवति समस्तेतिकर्त्तव्यतोपेतप्रधानश्रवणलक्षणस्य श्रुतिसंयोगस्य सर्वशाखास्वविशेषादित्येवं सूत्रं योजयितुमाह * तत्रेति * अच्युतवाक्ये पौर्णमास्यतिरेकश्रुतेरप्राप्तार्थत्वेनैकान्तिकविधित्वप्रतीतेरमावास्यामात्रश्रुतेरेव प्राप्तार्थत्वसम्भवेन गृह्यमाणविशेषत्वादर्थवादत्वं यथाङ्गीकृतं तथेह यद्येकस्यां शाखायां समस्तेतिकर्त्तव्यतोपेतप्रधानश्रुतिरस्यां प्रधानमात्रश्रुतिः स्यात्ततो नेतिकर्त्तव्यताकप्रधानश्रुतेर्गृह्यमाणविशेषत्वादर्थवादत्वं स्याद्यदि च शाखान्तरविहितं किं चिदङ्गमेकस्यां शाखायां प्रधानवाक्यगतं विधेयं स्यात्ततो दध्ना जुहोतीतिवत् गुणार्थत्वं स्यादित्याशयः । अत्रैवार्थे श्रुतीतिसूत्रावयवं योजयति * एतमेवेति * भाष्यकृद्व्याख्याते प्रतिशाखं भिन्नानामध्येतॄणां श्रुतिसंयोगस्यापूर्वत्वेनाविशेषान्न कं चिदध्येतारं प्रति द्विर्वचनमित्येवं सूत्रं योजयितुमाह * न चे-

ति * प्रश्नपूर्वं हेत्वर्थं व्याख्यातुमाह * कुत इति * श्लोकं व्याचष्टे * पूर्वोक्तेनेति * इतरस्तैत्तिरीयोऽपीतरत्काठकमग्निहोत्रमनादराच्च शृणोति शृण्वन्नपि च कठप्रतिपत्त्यर्थमेवैतदिति कल्पयित्वा पुनः श्रुतिं न मन्यतइत्यर्थः । यच्च शाखान्तरस्य भेदकत्वनिरासायैकं वेति सूत्रे प्रतियोगिभूतशाखान्तरीयाग्निहोत्राग्रहणात्प्रतियोगिग्रहणसापेक्षभेदग्रहणं न सम्भवतीत्युक्तं तत्रापि प्रतियोगिग्रहणशून्यत्वेन श्रुतिसंयोगस्य सर्वशाखास्वविशेषादित्येवं हेतुयोजनं सूचयितुमाह * इतीति * अभ्युपेत्याप्यनेकशाखाध्ययनं पौर्वापर्याभावात्पुनः श्रुतित्वं नास्तीत्याह * न चेति * अनेन च श्रुतिसंयोगस्य पौर्वापर्यरूपविशेषाभावादिति हेत्वर्थः सूचितः । अत्रैवार्थे वृद्धसम्मतिमाह * आह चेति * यथाभाष्यं सूत्रार्थमुपसंहरति * तस्मादिति * नन्वेकेन पुंसानेकशाखाध्ययनेऽपि शाखानां च पौर्वापर्याभावेऽप्येककर्मविषयत्वे सत्येकयैव शाखया सर्वपुंसां प्रतिपत्तिसिद्धेः शाखान्तरानर्थक्यं स्यादित्याशङ्कते * ननु चेति * प्रतिचरणं व्यवस्थितत्वाच्छाखानां स्वशाखात्यागेन परशाखाध्ययनानुपपत्तेः स्वशाखाध्ययनपूर्वं मेधावितया शाखान्तराध्ययने सत्यानर्थक्यं वाच्यं तच्च स्वाध्यायइत्येकवचनेनानेकशाखाध्ययननिषेधादयुक्तमित्याशयेन परिहरति * नेति * नन्वनधीतस्यापि शाखान्तरस्यानध्येतारं प्रत्यप्रतिपादकत्वादानर्थक्यं स्यादित्याशङ्क्याह * न चेति * यत्पुरुषप्रतिपत्त्यर्था या शाखा तस्यास्तं प्रत्यप्रतिपादकत्वे सत्यानर्थक्यं स्यान्नान्यथेत्याशयः । स्वाध्यायगतेनैकवचनेनैकशाखाध्ययननियमेऽपि शाखाविशेषानियमात्प्रतिचरणं व्यवस्थायाः प्रमाणाभावेनानुपपत्तेः सर्वपुंसामेकयैव शाखया प्रतीपत्तिरित्याशङ्किन्नाशयमुद्भावनपूर्वकं निरस्यति * यस्त्विति * तुच्छत्वद्योतनार्थः किलशब्दः तेऽपीति तच्छब्दोऽन्यात्प्रतीत्यनन्तरानिर्दिष्टान्यपरामर्शी यद्यन्येषामपि शाखिनां पुरुषान्तरगतशाखाध्ययनादेव प्रतिपत्तिसिद्धेः शाखान्तराणि किमर्थं प्रवृत्तानीत्याशयस्ततो नित्यत्वेन वेदस्यापर्यनुयोज्यत्वादयुक्तः । अथ शाखान्तराध्ययनमनर्थकमित्याशयस्तथापि तच्छब्दनिर्दिष्टकाठकादिशाखाध्ययनाध्यापनाभ्यां कठादिचरणानां कर्तृकर्मसम्बन्धलक्षणस्याचारस्यानादित्वेन भ्रान्तिमूलत्वायोगात्कठचरणैः काठकशाखाध्येतव्येत्यादिश्रुतिकल्पनां प्रतिचरणं व्यवस्थावगतेरयुक्त इत्यर्थः ।

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेनागच्छन् तरिष्यतीति ॥

स्मृत्यालोचनया काठकादिसमाख्यालोचनया स्वाध्याय इति स्वशब्दालोचनया च पितृपितामहादिपरम्परात्मकसम्प्रदायागतशाखात्यागेन शाखान्तराध्ययनं न युक्तमित्याह * किं चेति * स्वेनात्मना कठादिना समाख्या काठकशाखेयमित्यादिका निबन्धनमध्ययनव्यवस्थापिका यस्या इत्यर्थाश्रयणेन स्वसमाख्याशब्देन काठकादिसमाख्योक्ता स्वशब्दवती समाख्येत्यर्थाश्रयणे त्वधीयतइति कर्मव्युत्पत्त्या शाखावाच्यध्यायशब्दाभ्युपगमेन स्वश्चासावध्यायश्चेति विग्रहाश्रयणात्स्वाध्यायविधित एव प्रतिचरणं शाखाव्यवस्थासिद्धिः एवं सत्यपि शाखान्तराध्ययनस्याल्पायाससाध्यत्वे सत्यनुकल्पाश्रयणेन शाखान्तरमधीयेत न त्वेतदप्यस्तीति तुल्यश्रमोक्त्या सूचितमासदृशः श्रम इति व्याचक्षाणः सूत्रार्थमुपसंहरति* तस्मादिति * यस्य वेदस्य शाखानां प्रतिचरणं व्यवस्थया यथावस्थितमध्ययनं स तथोक्तः । श्रुतिसंयोगाविशेषोपपादनायैकस्य पुंसोऽनेकशाखाध्ययननिरासार्थं वाक्यासमवायादिति सूत्रं विस्मृतत्वान्न भाष्यकृता व्याख्यातमित्याह*तत्रेति* कथं तर्हि व्याख्येयमित्यपेक्षायामाह * तदिति *

## अर्थासन्निधेश्च ॥ १७ ॥

निन्दादेर्गुणप्रकारत्वात्तत्परिहारार्थत्वेनैकत्वेऽपि परमित्यनेन सामान्यतः परिहारसिद्धेरन्यार्थदर्शनानां च प्राप्त्यपेक्षत्वात्तेष्वपरिहृतेष्वपि पूर्वपक्षे दोषोपन्यासावसरसम्भवाद्वाक्यासमवायादित्यनेन च काठकादिसमाख्याबलेन प्रतिचरणं शाखाध्ययनव्यवस्थायामुक्तायां शाखासमाख्याया बुद्धिस्थत्वात्तद्बलेन पूर्वपक्षनिरासायैतत्सूत्रं कर्मणोऽनुग्राहकतयाऽर्थ्यमानस्याङ्गकाण्डस्य समस्तस्यैकैकस्यां शाखायामनिधानादनिक्षेपादभावादेककर्म्येण शाखासादृश्याच्छाखासमाख्योपपत्तेर्न कर्मभेद इत्येवं यथाभाष्यं व्याख्यातुमाह *एकस्येति * धर्मशब्दस्याङ्गवाचित्वात्फलोक्त्या च पुष्पाणामप्युपलक्षणादेवंशब्देन च कर्मैक्यपरामर्शात्कर्मैक्ये सत्येकस्यैककर्ममूलत्वं विधिस्कन्धरूपस्य वेदाख्यवृक्षस्य कतिपयाङ्गाख्यपुष्पफलान्वयात्काठकाद्याः शाखाः शाखाव्यपदेश्याः प्रसिद्ध्यन्तीत्यर्थः । कथं वेदस्य वृक्षत्वोपचारः शाखानां च शाखात्वोपचार इत्याशङ्क्य * बह्वित्युक्तम् * यथैकस्य वृक्षस्यैकमूलः सर्वशाखाधारभूतः स्कन्धस्तथैकस्यैव कर्म्माख्यमूलोत्पत्तिविध्याख्यस्कन्धरूपत्वाद् वृक्षत्वोपचारः यथा वृक्षस्य पुष्पफलानि नैकैकस्यां

वृक्षशाखायां समस्तानि सन्ति तथा वेदशाखायामप्येकैकस्यामृग्वेदादिप्रतिपाद्यहौत्रादिसमस्ताङ्गाख्यपुष्पफलासत्त्वाच्छाखात्वोपचार इत्याशयः। व्यतिरेकतो ऽन्वयतश्च श्लोकार्थमुपपादयति * यदीति * प्रधानभूतमग्निहोत्रादिकर्म प्रथमं विधेयत्वेन प्रतीतेर्मूलत्वेनोपचरितं कर्माख्यमूलान्तरत्वेनाङ्गाख्यपुष्पफलाद्यन्तरत्वेन च समस्तस्य मूलपुष्पफलस्यान्यत्वादादित एवारभ्य भिद्यमानाः शाखाः वेदान्तराण्येवोच्येरन्नित्यन्वयः।सौत्रस्य सं शब्दस्य सामस्त्यर्थत्वं समस्तशब्देन सूचितम्। अङ्गानां पश्चात्प्रतीतेः पुष्पफलत्वोपचारः वृक्षमूलाश्रितस्य शाखोपक्रमस्य स्कन्धत्वाप्रसिद्धेः प्रधानाश्रितत्वादितिकर्त्तव्यताविध्युपक्रमत्वाच्च प्रधानविधेः स्कन्धत्वेनोपचारः एकमग्निहोत्रादिमूलमधिष्ठानविषयमूर्त्तस्य प्रधानकर्मोत्पत्तिविधेः स सर्वशाखास्थाङ्गविध्यधिष्ठानत्वात्स्कन्धरूपो यस्य वेदस्य तत्त्वे सतीति कर्मधारयगर्भबहुव्रीहिसमासार्थः । यथा क चिद् वृक्षस्य शाखायां पुष्पं क चित्फलमधिकं तथा क चिद्वेदशाखायामितिकर्त्तव्यतायाः। किं चिदधिकमित्येककर्माख्यमूलसम्बन्ध्यङ्गाख्याविलक्षणपुष्पफलयोगित्वरूपधर्मसामान्येन वेदशाखानां वृक्षशाखासादृश्याच्छाखान्तररूपो वेदान्तरव्यपदेशाच्छब्देन व्यपदेशो वेदस्यैककर्ममूलविधिस्कन्धरूपत्वे सत्युपपन्न इत्यर्थः । शाखान्तराध्यायिनः शाखान्तरीयार्थप्रत्यभिज्ञानाच्चाद्विर्वचनमित्येवमेतदपि सूत्रं पौनरुक्त्यपरिहारार्थत्वेन स्वयं व्याचष्टे * अथ वेति *

न चैकं प्रतिशिष्यते ॥ १८ ॥

नन्विहाधिकरणे स्वशाखाविहिताङ्गमात्रोपसंहारः पूर्वपक्षप्रयोजनं सर्वशाखाविहिताङ्गोपसंहारश्च सिद्धान्तप्रयोजनं तत्र चेत्कर्मभेदे ऽपि सर्वशाखाविहितमग्निहोत्रादि प्रत्यङ्गानि विधीयन्ते ततः पूर्वपक्षप्रयोजनाभावादनारभ्यमिदधिकरणं स्यादित्याशङ्क्याह * अभ्युपेत्येति * यथा दर्व्यादेरपि होमसाधनत्वस्य हेत्वधिकरणपूर्वपक्षप्रयोजनस्य यदि च हेतुरवतिष्ठेतेत्यनेन निरासे ऽप्यन्नकरणे ऽसमर्थशूर्पव्यावृत्तेः पूर्वपक्षप्रयोजनत्वसम्भवादधिकरणारम्भोपपत्तिस्तु चोदिते जुहोतीत्यादिवाक्यसंयुक्तानामुदितकालादीनामङ्गानां सर्वाग्निहोत्राद्यर्थत्वे ऽपि प्राकरणिकानामङ्गानां प्रतिशाखमग्निहोत्रादिभेदे ऽन्यप्रकरणस्थानामङ्गानामन्येनाग्रहणाद्व्यवस्थायाः पूर्वपक्षप्रयोजनत्वसम्भवादधिकरणारम्भोपपत्ति-

१ तयोदितइति २ पु० पा० ।

रित्यभ्युपेत्यवादोक्त्या सूचितं, कीदृशो ऽभ्युपेत्यवाद इत्यपेक्षायामाह * सत्यपीति * वाक्यसंयुक्तानामङ्गानां सर्वार्थत्वे ऽपि प्राकरणिकानां व्यवस्थापूर्वपक्षप्रयोजनं भविष्यतीति सूचनार्थस्तावच्छब्दः स्वशाखामात्रेण परितोषात्काठके ऽग्निहोत्रे तच्छाखाविहितमेवाङ्गं नान्यशाखाविहितमिति व्यवस्था लभ्यतइत्येतदेव द्रढयितुं प्रातरुपोदयं व्युषितउदिते वेत्यादौ शाखान्तरविहितैरुपोदयादिभिः स्वशाखाविहितस्योदितत्वादेर्विकल्पाभिधानादाश्वलायनादीनां सूत्रकाराणां मध्ये न कश्चित्स्वशाखाविहिताङ्गोपसंहारमात्रेण * अवस्थितइत्युक्तम् * अनेन चैकमग्निहोत्रादि प्रत्यङ्गं न शिष्यतइत्येवं सूत्रव्याख्यार्थं यच्चाग्निहोत्रस्येति भाष्यं पाश्चात्यमपि प्रधानानामपि प्रतिचरणव्यवस्थया गुणत्वाच्च वेदेन व्यवस्था स्यादिति लोहितोष्णीषाधिकरणवक्ष्यमाणन्यायनिरस्तत्वेन पूर्वपक्षिणो ऽप्यनिष्टत्वात्तदैकफलत्वादित्यादिवार्त्तिकवक्ष्यमाणन्यायेन पौनरुक्त्यपरिहारार्थं तन्निरासो न तु पूर्वपक्षस्य निष्प्रयोजनत्वोक्त्यर्थ इति सूचयितुं प्राग्व्याख्यातं नैकं कठादिकमेव पुरुषं प्रत्याग्निहोत्रादिप्रधानं शिष्यते येन भिन्नविषयत्वात्समुच्चयः स्याद्विकल्पस्तु कर्मणां भवतु शाखानां वेति जिज्ञासायां शाखानां व्यवस्थितपुरुषविषयतया विकल्पे सम्भवत्यव्यवस्थितकर्मविकल्पाश्रयणस्यायुक्तत्वाच्छाखानामेव विकल्पावगतेरद्विर्वचनमित्येवं सूत्रव्याख्यानार्थं न चेत्याद्यं भाष्यमिदानीं व्याख्यातुमाह * प्रधानान्यपीति * स्वर्गकामादिशब्दैरर्थिमात्रमुद्दिश्य विधीयमानत्वात्कर्मभेदपक्षे च भिन्नविषयत्वाच्छाखानां विकल्पानापत्तेस्तस्याष्टदोषत्वपरिहारार्थं प्रतिचरणं शाखाव्यवस्थाकल्पस्यायुक्तत्वात् सर्वशाखास्थानि प्रधानानि सर्वान् पुरुषान्प्रति प्रकाशन्तइत्युक्ते काठकादिसमाख्याभिर्व्यवस्थामाशङ्क्य यजमानानां प्राधान्यात् समाख्यानां च प्रधाननियमं प्रत्यसामर्थ्यात् समाख्यायोगे ऽपि न व्यवतिष्ठन्तइति समाख्याभियुक्तान्यपीति पदद्वयाध्याहारसहितेनोक्तं ननु पूर्वपक्ष्यनिष्टाख्यायाः प्रतिचरणं कर्मव्यवस्थायाः किमर्थो निरास इत्याशङ्क्याह * तदेति * प्रतिचरणमग्निहोत्रादिव्यवस्थानभ्युपगमे निरपेक्षसाधनत्वेन समुच्चयायोगादेकेनैवाग्निहोत्रादिना सर्वपुंसां फलसिद्धेः शाखान्तरीयाग्निहोत्राद्यानर्थक्यापत्तेर्विकल्पेनार्थवत्त्वं वाच्यं तच्च विकल्पेनार्थवत्त्वं कर्मैक्याभ्युपगमेन शाखानामेव व्यवस्थितेः कठादिचरणैः प्रतिपद्यमानत्वेनाष्टदोषत्वनिमित्ताकुलत्वानापादकत्वाच्च कल्पितं वरं ततश्चापौनरुक्त्यमित्यंवे पौनरुक्त्यपरिहारसूचनार्थम् प्रतिचरणं कर्मव्यवस्था निरास

इत्याशयः ।

समाप्तिवच्च सम्प्रेक्षा ॥ १९ ॥

यदा च भिन्नमपि कर्म सर्वान्प्रति विधीयते तदा योऽस्माकमग्निः सोऽत्र समाप्यतइति कर्मभेदापेक्षसमाप्तिव्यपदेशायोगाद्यो ऽग्निः सोऽस्माकमत्र समाप्यतइत्यध्येतृविशेषापेक्षः समाप्तिव्यपदेशो वाच्यः भिन्नकर्मविषयत्वे समाप्त्यसमाप्त्योरध्येतृविशेषापेक्षानर्थक्यापत्तेरस्मानपेक्ष्याग्नेः समाप्तिर्जातेत्येवंरूपापेक्षाबुद्धिरध्येतृविशेषसंमताध्येतृविशेषापेक्षा कर्मैक्यं द्योतयतीत्यभिधानार्थमेतत् सूत्रं समाप्तेरापेक्षिकत्वस्य सिद्धान्तलिङ्गत्वोक्त्यर्थत्वेनात्रेति भाष्येण व्याख्यायासमाप्तेरापेक्षिकत्वस्य सिद्धान्तलिङ्गत्वोक्त्यर्थत्वेनान्वारोहे त्वित्यादिनापेक्षिकत्वोक्त्यर्थं सौत्रसंशब्दव्याख्यानायासमाप्तेर्मैत्रायणीयापेक्षत्वाभावोक्तिपूर्वं व्याख्यातं तत्सूत्राननुगुणमाशङ्क्याकारप्रश्लेषेण पाठान्तरमाह * असमाप्तिवदिति * शिष्यते समाप्तिवदिति सूत्रसंहितायामकारप्रश्लेषणापि विच्छेदसम्भवः छेदोक्त्या सूचितः । सूत्रार्थमुपपादयति * कर्मेति * अन्वारोहशब्दव्याख्यापूर्वं सङ्क्षेपतो भाष्यं व्याचष्टे * अन्वारोहनामेति *

एकत्वेऽपि पराणि निन्दाशक्तिसमाप्ति-
वचनानि ॥ २० ॥

यानि पुनर्वचनात्पराणि निन्दाशक्तिसमाप्तिवचनानि कर्मभेदकारणान्युक्तानि तान्येकत्वेऽप्यविरुद्धानीत्यभिधानार्थमेतत्सूत्रं व्याख्यातुं न हीति निन्दापरिहारभाष्यं तावद्व्याचष्टे * अन्योन्येति * ननूदितानुदितवाक्ययोर्भिन्नविषयत्वेनाविकल्पिकतयाष्टदोषत्वपरिहाराय व्यवस्थानपेक्षत्वात्प्रतिचरणं व्यवस्थाकल्पनानुपपत्तेः सर्वपुरुषान्प्रति प्रामाण्याविशेषादुदितानुहितत्वयोरव्यवस्थितविकल्पापत्तेरपरिहार्याष्टदोषतेत्याशङ्क्याह * त्वत्पक्षे चेति * कर्मभेदपक्षे तद्वाक्यानामपि भिन्नविषयत्वेनावैकल्पिकत्वात् प्रतिचरणं प्रामाण्यकल्पनानुपपत्तेः कर्मणामव्यवस्थिताविकल्पाविशेषादुभयोस्तुल्यो दोषो नैकं प्रत्युद्भावनीय इत्याशयः । तथेत्यशक्तिपरिहारभाष्यं व्याचष्टे * तथेति * एकशाखाविहितेष्वप्यङ्गेष्वन्धादीनामशक्तेः साधनसम्पन्नानां च सर्वशाखाविहितेष्वपि शक्तेः परशाखाविहितानां च कल्पसूत्रादिभ्यो ज्ञानसम्भवादित्याशयः । ननु सर्वशाखाङ्गोपसंहारो बहुतरायाससाध्यत्वादशक्य इत्याशङ्क्याह * स-

वेति * बहूनामङ्गानां सर्वशाखास्वभिन्नत्वात्कातिपयान्यत्वे ऽपि न बह्वायासापत्तिरित्याशयः । शाखान्तरे ऽधिकाङ्गविधावप्येकशाखायाः सकाशात् सर्वशाखास्वङ्गानामन्तरस्य स्तोकत्वाच्छक्त्यशक्त्योरविशेष इत्यर्थः । प्रकरणविनियोज्यानामङ्गानां प्रतिप्रकरणं व्यवस्थितत्वेन तत्तच्छाखाध्यायिभिरेवानुष्ठेयत्वाद्वाक्यविनियोज्यानामेव सर्वशाखानुष्ठेयत्वावगतेः स्तोकान्तरत्वं कैश्चिदुक्तं तद् दूषयितुमुपन्यस्यति * केचिदिति * विध्युक्तिर्विधेयलक्षणार्था प्रधानस्य सर्वशाखास्वभिन्नत्वात्कथं भावरूपस्य प्रकरणस्याप्यभेदावगतेः कथं प्राकरणिकानामप्यङ्गानां व्यवस्थेत्याशयेन प्रश्नपूर्वं व्यवस्थामुपपादयति * कुत इति * कर्मस्वरूपाभेदे ऽपि फलसाधनत्वेन विधीयमानस्यैव कथम्भावोत्पत्तेः कर्मैक्ये ऽपि च तद्विधीनां प्रतिशाखं भेदादेकविषयत्वाच्च विकल्पमानानां प्रतिचरणं व्यवस्थितप्रामाण्यावगतेर्विधेयत्वप्रयुक्तत्वेन कथंभावस्यापि भेदात्पश्चावत्तादिवच्चानुष्ठातृव्यवस्थया व्यवस्थिताङ्गग्राहकत्वोपपत्तेः प्रतिचरणं प्राकरणिकाङ्गव्यवस्था युक्तेत्युत्तराशयः । श्लोकं व्याचष्टे *शाखान्तरेष्विति* प्राकरणिकाङ्गव्यवस्थोक्तेः प्रकृतोपयोगमाह * ततश्चेति * दूषयति * तन्त्विति * कर्मधर्मत्वेनाङ्गानामविशेषात्सर्वपुरुषानुष्ठेयकर्मार्थत्वप्राप्तेः पश्चावत्तादिवत्पुरुषविशेषानुष्ठेयकर्मार्थत्वावेदकश्रुत्यभावेन शाखान्तरानुष्ठेयकर्मार्थत्वानिवारणाद्भिन्नानामपि च प्रकरणानामेककर्मणि विनियोजकत्वेन व्यवस्थापकत्वायोगात्प्राकरणिकानामप्यङ्गानां सङ्कर एव युक्त इत्याशयः । नन्वनेकेषां प्रकरणानामेककर्माङ्गविनियोजकत्वेनैकार्थ्याद्विकल्पापत्तेर्व्यवस्थापेक्षायां विधायकवत्तच्छाखाध्यायिनामेव प्रतिप्रामाण्यावगतेर्व्यवस्थापकत्वं भविष्यतीत्याशङ्कानिरासपूर्वं श्लोकं व्याचष्टे * प्रतिवेदमपि चेति * विधायकवत्प्रकरणानामप्रवृत्तप्रवर्त्तनस्वभावत्वाभावेनैकमपि पुरुषं प्रत्यनेकेषामन्योन्यानपेक्षत्वेनानुवादत्वपरिहारसम्भवात्प्रामाण्योपपत्तेर्व्यवस्थापकत्वायोगं दृष्टान्तेन द्रढयितुं यथा प्रतिवेदं भिन्नं प्रकरणं यद्यपि कर्मधर्मान् पुरुषस्योपदिशति तथापि वेदान्तराध्यायिनं पुरुषं प्रत्यप्रमाणं न भवतीत्युक्तं श्लोकव्याख्यार्थम् * कर्मेत्युक्तम् * फलवत्कर्मविधिसन्निधावफलकर्मविधिपाठस्य प्रकरणत्वात्प्रतिशाखं च विधिभेदेन सन्निधिभेदात्प्रकरणभेदे सति कथमविशेष इत्याशङ्क्य * यद्यपीत्युक्तम् * कथं तर्ह्यशक्तिः परिहर्त्तव्येत्याशङ्क्याह * सर्वास्वपि चेति*तथैकस्मिन्नपीति समाप्तिपरिहारभाष्यं व्याचष्टे * समाप्तिश्चेति *

## प्रायश्चित्तं निमित्तेन ॥ २१ ॥

उदितानुदितकालातिक्रमात्मकेन भिन्नेन निमित्तेन प्रायश्चित्तं विधीयमानं भेदकत्वेन यदुक्तमित्यनुभाषणार्थत्वेन तावद्यथाभाष्यं सूत्रं व्याचष्टे * अनुभाषणेति * उदितानुदितकालयोर्द्वयोरप्यतिक्रमे प्रायश्चित्तं विधीयमानं यद्भेदकत्वेनोक्तं तत्केनचिन्निमित्तेन कर्मैक्ये ऽप्युपपत्तेर्न भेदकमित्येवं सामान्यपरिहारार्थत्वेन स्वयं व्याचष्टे * सामान्येनेति *

## प्रक्रमाद्वा नियोगेन ॥ २२ ॥

६४९।१

सङ्कल्पापरपर्यायप्रक्रमवशेन वैकल्पिकानामप्यङ्गानां यदेव सङ्कल्पितं तदेवानुष्ठेयमिति नियमात्तदतिक्रमे कर्मैक्ये ऽपि प्रायश्चित्तमविरुद्धमित्येवमनुभाषितभेदहेतुपरिहारार्थं सामान्यपरिहारोक्तिजनितविशेषसन्देहव्यावृत्त्या विशेषपरिहारार्थं चैतत्सूत्रं प्रधानवशवर्त्तित्वेनाङ्गानां प्रधानसङ्कल्पेनैवानुष्ठानसिद्धेरङ्गानामसङ्कल्पनीयत्वादयुक्तमाशङ्क्योपपादयन् व्याचष्टे * वैकल्पिकानामिति * नैयमिकाङ्गासङ्कल्पने ऽपि वैकल्पिकाङ्गासङ्कल्पने प्रयोगमध्ये किमिदं कुर्यामिदं वेति दोलायमानमतेः कालविक्षेपापत्तेः कर्मोपक्रमकालएव वैकल्पिकानामङ्गानामिदमेव करिष्यामीत्येवमङ्गीकरणीयत्वादङ्गीकृतसङ्कल्पस्याङ्गस्यातिक्रमे प्रायश्चित्तविधिर्युक्त इत्यर्थः ।

## समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयते ॥ २३ ॥

समाप्तेर्भिन्नस्यामत्वरूपेणाभेदहेतुत्वस्य पूर्वपक्षितस्यैकत्वे ऽपि पराणीत्यनेन दूषितत्वादापेक्षिकत्वरूपेण त्वेकत्वहेतुत्वस्य समाप्तिवच्चेत्यनेन सिद्धान्तितत्वादनर्थकमेतत्सूत्रमित्याशङ्क्याह * एकत्वे ऽपीति * यथैकत्वे ऽग्निसमाप्तिर्लिङ्गत्वेनोक्ता न तदीयकतिपयपदार्थसमाप्तिस्तथाभेदे ऽप्यग्निसमाप्तेरेव लिङ्गत्वेनोक्तत्वात्स्वशाखाधीताग्न्यङ्गभूतपदार्थापेक्षसमाप्त्यभ्युपगमेन दूषणोक्तिरयुक्तेत्याशङ्क्य समाप्तिवचनस्य न्यायानुसारेण व्याख्येयत्वान्न्यायेन चैकत्वावधारणात्तस्यैव समाप्तिः साधिका न भेदस्येत्येतदभिधानायेदं सूत्रमित्याशयः । नन्वग्निशब्दस्याग्न्यङ्गभूतपदार्थवाचित्वाभावात्कथं कर्मैक्ये ऽग्निसमाप्तिवचनोपपत्तिरित्याशङ्क्य पूर्ववत्त्वादित्यवयवेनोपपत्तिरुक्तेत्याह * तद्वचनस्य चेति * एतमेव चावयवं यथाभाष्यं तावत्पूर्वशब्दस्यारम्भवाचित्वाभ्युपगमेन व्याचष्टे * आरम्भेति * स-

माप्तेरारम्भापेक्षत्वान्मैत्रायणीयैश्चान्वारोहान्ताग्न्यङ्गपदार्थकलापमा- त्रस्याध्येतुमारब्धत्वात्तल्लक्षणार्थो ऽग्निशब्दो ऽवसीयतइत्याशयः । स्वयमन्यथा व्याचष्टे *कथं वेति * भाष्यकृता तु प्रक्रमाद्धेति सूत्रे- णारम्भवशाद्वैकल्पिकाङ्गनियमे ऽभिहिते बुद्धिस्थत्वात्समाप्तेरारम्भा- पेक्षत्वात्समाप्तिसमभिव्याहृतस्याग्निशब्दस्य यावदारब्धपदार्थकला- पलक्षणार्थत्वोक्तेरभ्रष्टावसरत्वसिद्ध्यर्थं पूर्वशब्दस्यारम्भवाचित्वं व्याख्यातं पूर्वपक्ष्युक्तविरोधपरिहारसमर्थनार्थत्वं सूत्रस्य च सूचय- न्नुपसंहरति * तस्मादिति *

लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र
कर्मचोदना तस्मात् द्वादशाहस्याहार-
व्यपदेशः स्यात् ॥ २४ ॥

यददीक्षितदर्शनं भेदलिङ्गमुक्तं तद्भेदपक्षे ऽप्ययुक्तत्वान्न प- क्षविशेषसाधकमित्येवमाद्यसूत्रावयवं व्याचष्टे * अदीक्षितेति * सर्वेत्यनेन ज्योतिष्टोमपश्चाद्भावस्य सर्वशाखास्थद्वादशाहशेषत्वमुक्त- मुपपादयितुं प्राथम्यस्य सर्वज्योतिष्टोमधर्मत्वं भाष्यकृतोक्तं विवृणो- ति * ताण्डकइति * न हीति सूत्रावयवव्याख्यानार्थं न हीति भाष्यं व्याचष्टे * न हीति * सामवेदे ज्योतिष्टोमस्योत्पत्त्यभ्युपगमे यजुर्वे- दोत्पन्नाज्ज्योतिष्टोमाद्भेदः स्यान्न चासाविष्ट इति सूचनाय * अपर- स्येत्युक्तम् * तस्मादिति सूत्रावयवव्याख्यानार्थमत इति भाष्यं व्या- चष्टे * तत्रेति * सामवेदे ज्योतिष्टोमोत्पत्त्यभावादध्वर्युवेदोत्प- न्नानां ज्योतिष्टोमानां भेदे सत्यविशेषात्सर्वेषामेव प्राथम्यनियमे सत्येकं द्वादशाहं प्रति सर्वज्योतिष्टोमानां प्राथम्यायोगात्तद्द्वारा सर्वेषां द्वादशाहानां ज्योतिष्टोमपश्चाद्भावनियमापत्तेः पक्षद्वये ऽपि दोषसाम्यात्तत्परिहारार्थं यदि पुरा द्वादशाहेन दिदीक्षाणा यदि पु- रा द्वादशाहेनादिदीक्षाणा इति चाध्याहारेण द्वादशाहस्य पक्षद्व- ये ऽप्युभयथा व्यपदेशः स्यादित्यर्थो ऽनेन दर्शितः । तस्मादिति सू- त्रार्थोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

द्रव्ये वा चोदितत्वात् विधीनामव्यवस्था स्यान्निर्देशाद्
व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २५ ॥

अग्न्याख्ये द्रव्ये यूपैकादशिन्या अचोदितत्वात्सम्मानानपे-

क्षत्वेन सम्मानविधीनां मध्ये न कस्य चित्सम्भवः स्याद्यदि ह्यग्नौ यूपैकादशिन्या निर्देशः स्यात्ततः कश्चित्सम्मानविधिः सम्भवेत्त-स्मान्नान्तरिक्षे न दिवीतिवत्सम्माननिषेधो नित्यानुवादः स्यान्नित्या-नुवादत्वादेव च वाचस्तोमादौ यूपैकादशिनीसद्भावे ऽपि पक्षवेदी-सम्मानयोरप्राप्तेस्तत्र रथाक्षमात्रान्तरालविधिर्न विरुध्यतइत्येवं यथा-भाष्यं तावत्सूत्रम् अनुभाषणपूर्वं व्याख्यातुमाह * अथेति * भेदप-क्षे ऽप्यग्नौ यूपैकादशिन्यभावात्पक्षमानं वेदिमानमादिशब्दोक्ता र-थाक्षमात्रान्तरालता च नास्तीत्युक्ते पश्वेकादशिनीविधानादेवाविहि-तापि यूपैकादशिनी प्रतिप्रधानावृत्तिन्यायात् भविष्यतीत्याशङ्क्य * श्रूयतइत्युक्तम् * यूपैक्यश्रुत्या न्यायप्राप्तैकादशिनीबाधादभाव इ-त्याशयः। नित्यानुवादप्रयोजनोक्त्यर्थं द्वयमपीतिं भाष्यं सम्मानानि-षेधानुवादस्य पश्वेकादशिनीविधानशेषत्वायोगादयुक्तमाशङ्क्य यूपै-क्यविधायिवाक्योपलक्षणार्थत्वं पश्वेकादशिनीविधानोक्तेः सूचय-न्व्याचष्टे * एकेति * यूपैक्यविधिस्तुत्यर्थत्वोपपादनार्थं यदित्यादि-भाष्यं पक्षसम्माने तावत्स्पष्ट एवोक्तो दोषः वेदिसम्माने तु स्पष्ट-दोषाभावे ऽपि यूपान्तरालानां न्यूनातिरेकनिवृत्तये ऽतिनैपुण्यसम्पा-दनाय क्लेशलक्षणस्य दोषस्यापरिहार्यत्वेन यूपैकादशिन्या दुष्टत्वाद्यू-पैक्यमेव प्रशस्तमित्येवमर्थत्वेन व्याचष्टे * एकादशिन्यां हीति * नन्वग्नौ यूपैकादशिन्यभावात्कस्य चित्सम्मानस्याभावे ऽपि वाच-स्तोमादौ यूपैकादशिनीसद्भावे सम्मानत्रयसमावेशः कर्मैक्ये विरु-ध्येतेत्याशङ्कानिरासार्थं वाचस्तोमादिषु त्विति भाष्यं पक्षसम्मानस्य निन्दया वर्ज्यत्वावगमादनेकयूपत्वे ऽप्यप्राप्तेर्निन्दोन्नीतस्य च त-न्निषेधस्य नित्यानुवादत्वेन पक्षसम्माने विध्यभावाद्वेदिसम्मानोक्तेश्च जर्त्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा जुहुयान्न ग्राम्या-न् पशून् हिनस्ति नारण्यानित्यादिवद्विधेयान्यप्रशंसारूपत्वेन वि-धेयरूपैक्यप्रशस्ततरत्वज्ञापनार्थत्वाद्वेदिसम्माननिन्दार्थत्वावगतेर्नि-न्दोन्नीतस्य तन्निषेधस्यापि नित्यानुवादत्वावगतेर्वेदिसम्मानस्यापि विध्यभावाद्यूपैकादशिन्यां सत्यां रथाक्षमात्रान्तरालत्वस्यैव निवेशा-दविरोध इत्येवं व्याचष्टे * पक्षेति * पक्षवेदिसम्मानयोरभावे तत्र कीर्त्तनं निरालम्बनं स्यादित्याशङ्क्यासतोरपि जर्त्तिलादिवदन्यस्तुत्यर्थं कीर्त्तनं युक्तमित्यभिधानार्थं नित्यानुवादाच्चेति भाष्यं स्पष्टत्वान्न व्या-ख्यातं वेदिसम्मानोक्तेः स्तुत्यर्थत्वं दूषयति * इह त्विति * जर्त्ति-लादावनाहुतिर्वै जर्त्तिलाश्च गवीधुकाश्चेत्यादिनिन्दाश्रुतिवद्वेदिसम्मा-ननिन्दाश्रुत्यभावात् सम्मानविध्यन्यथानुपपत्त्या च शाखान्तरे यूपै-

कादशिनीविधानस्यापि कल्पयितुं शक्यत्वाद्यूपैकादशिनीपक्षे वेदिसम्मानविध्युपपत्तेर्नान्यस्तुत्यर्थत्वकल्पना युक्तेत्याशयः। कथं तर्हि नित्यानुवादता सूत्रकृतोक्तेत्याशङ्क्याह * अत इति * नन्वेवमपि वेदिसम्मानरथाक्षमात्रान्तरालयोः कर्मैक्ये विरोधः स्यादित्याशङ्क्याह * प्राकरणिकत्वाच्चेति * ज्योतिष्टोमे ऽग्न्यभावे पश्वेकादशिन्यविधानाद्यूपैकादशिन्यप्राप्तेर्यासु विकृतिष्वग्न्यभावे ऽपि पश्वेकादशिनी विहिता तद्विषयत्वं रथाक्षमात्रान्तरालविधेर्विकृत्युक्त्योक्तं विशिष्टमपि सूत्रं व्यवधारणकल्पनया गमयितव्यमित्याह*सूत्रमपीति* स चेत्यनेन निश्चितरूपातिदेशनाद्विधानाद्रथाक्षमात्रान्तरालत्वमेव व्यवतिष्ठेतेत्येवं निर्देशादित्यवयवो व्याख्यातः।

विहितप्रतिषेधात्पक्षे ऽतिरेकः स्यात् ॥ २६ ॥

षोडशिग्रहणस्य विहितत्वात्प्रतिषेधाच्च ग्रहणपक्षे द्वयोर्ग्रहणपक्षे तिसृणामतिरेकः स्यादित्येवं तृतीयलिङ्गपरिहारसूत्रं व्याचष्टे * वैकल्पिक इति *

सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २७ ॥

सर्वसोमयागानां ज्योतिष्टोमपश्चाद्भावनियमेन सारस्वते द्वादशाहवत्पक्षद्वये ऽप्यनिष्टप्रथमयज्ञत्वनिमित्तपुरोडाशित्वदर्शनविप्रतिषेधाद्यदा पुरोडाशिन इति कालभेदनिमित्तपुरोडाशित्वं स्यादित्येवं चतुर्थलिङ्गपरिहारसूत्रं व्याचष्टे * सारस्वते ऽपीति * मित्रावरुणयोरयने सारस्वतसत्रविशेषे यथामावास्यायामतिरात्रः स्यात्तथा दीक्षेरंस्ते ऽमावास्यायामतिरात्रं संस्थाप्य तदहरेव वत्सानपाकुर्यास्तं पक्षमामावास्येन व्रजित्वा पौर्णमास्यां गामुपेयुः पौर्णमासेनोत्तरं व्रजित्वामावास्यायामायुषमुपेयुरेवमावर्त्तयन्तो व्रजेयुरित्यनेन वाक्येन प्रतिमासमेकस्मिन्पक्षे ऽमावास्याख्यकर्मविधानात्पक्षान्तरेण पौर्णामावास्याख्यकर्मविधानात्पुरोडाशिशब्दः पौर्णमास्याख्यकर्मोपयोगिपक्षोपलक्षणार्थः सान्नायिशब्दश्चामावास्याख्यकर्मयोगिपक्षोपलक्षणार्थ इत्येवमवश्यं पक्षद्वये ऽपि वक्तव्यमित्यर्थः। ननु कालभेदाविवक्षायां पुरोडाशिनः सान्नायिन इति कर्तृभेदव्यपदेशो न युज्येतेत्याशङ्क्याह * भवति हीति * उपचारात्कर्तृव्यपदेश इत्याशयः। सूत्रार्थमुपसंहरति * तस्मादपीति *

उपहव्ये प्रतिप्रसवः ॥ २८ ॥

उपहव्यस्य भेदे सत्यतिदेशप्राप्तबृहद्रथन्तराविकल्पनिवृत्तिः

प्रतिप्रसवाख्या पुनःश्रुतिप्रयोजनं स्यात् ऐक्ये तु शाखाद्वयप्रत्ययत्वात्पुनः श्रुतावपि विकल्पापत्तेर्न तन्निवृत्त्याख्यः प्रतिप्रसवः प्रयोजनमिति पुनः श्रुत्यानर्थक्यं स्यादित्येवमनुभाषणार्थत्वेन यथाभाष्यं तावत्सूत्रं व्याचष्टे * अनुभाषणेति * उपहव्ये बृहद्रथन्तरपुनःश्रुतेर्न प्रतिप्रसवोऽस्माकं प्रयोजनत्वेनेष्टो येन तदसम्भवादानर्थक्यं स्यात्किं त्वन्यत्किंचिदित्येवं सामान्यपरिहारार्थत्वेन स्वयं व्याचष्टे * सामान्येति *

## गुणार्था वा पुनः श्रुतिः ॥ २९ ॥

यदेति भाष्यात् दक्षिणाव्यवस्थालक्षणगुणविध्यर्था निमित्तत्वेन बृहद्रथन्तरपुनः श्रुतिरिति सूत्रार्थः। प्रतिभाति स च संस्थाश्रु-
त्यानर्थक्यापत्तेरयुक्त इति मत्वोपलक्षणार्थत्वम्भाष्यस्य सूचयन्सूत्रं
६५२।१ व्याचष्टे * संस्थेति * संस्था सामदक्षिणा विशिष्टयागविधावरुणै-
कहायनीन्यायात्पार्ष्णिकपरस्परनियमावगमे सति सामश्रुतेः प्राप्तार्थत्वान्निमित्तपरत्वं प्रतीयमानमविशेषादुभयव्यवस्थार्थं प्रतीयतइत्याशयः * चशब्दार्थं वाशब्दः *

## प्रत्ययं चापि दर्शयति ॥ ३० ॥

शाखान्तरविहिताङ्गानुवादेन तद्धर्मविधानं शाखान्तराधीतस्य च मन्त्रस्य स्वशाखाधीतेन मन्त्रेण सह विकल्पवचनमन्योन्यधर्मसाङ्कर्यं सूचयन्सर्वशाखाप्रत्ययमेकं कर्म द्योतयतीत्येवं सिद्धान्तलिङ्गोक्त्यर्थं सूत्रं व्याचष्टे * शाखान्तरेति * सर्वाभिः शाखाभिः प्रत्ययो ज्ञानं यस्येति समासार्थः।

## अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥ ३१ ॥

सर्वशाखाङ्गोपसंहारलक्षणासिद्धान्तप्रयोजनाक्षेपार्थमेतत्सूत्रं व्याचष्टे * प्रतिशाखमिति * एकैकस्यामिति वीप्सा प्रतिशब्देन सूचिता ऋतवो वै प्रयाजा इत्यादावपि न शाखान्तरप्रयाजाद्यनुवादः किं त्वन्यप्रयाजादिविधिरिति सूचनार्थं विधिपृथक्त्वोक्त्या कर्मव्युत्पत्त्या विधेयान्यतोक्ता कालपरिमाणयोरपि क्रमोक्त्योपलक्षणं सूचयन् हेत्वर्थं व्याचष्टे * तथा सति हीति * कालो ऽप्या-

---

१ श्रुति--इति २ पु० पा०।

( ग्रहैकत्वन्यायः ) सर्वेषां ग्रहादीनां संमार्गाद्यधिकरणम् ॥ ७ ॥

## एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥

संस्कारादित्रयस्यापि यथासंयोगं विनियोगोक्त्या श्रौतविनियोगप्रकारपर्यवसानाचिन्तान्तराणामानर्थक्यमाशङ्क्याह * एवमिति * संयुक्ते ग्रहादौ सम्मार्गादेर्विनियोगे स्थिते स्वविशेषणैकत्वादिविशिष्टे विनियोगो ग्रहादिमात्रे वेति चिन्तैकवचनादिश्रुतिहेतुकाविनियोगविषया कार्येत्यर्थः। संस्कारविषयायाः विशेषचिन्तायाः संस्काराविनियोगचिन्तानन्तरं कार्यत्वशङ्कानिरासायेदानीमित्युक्तम्। सर्वशेषविनियोगपर्यवसानात्प्राग्विशेषा ऽनवसर इत्याशयः। तुल्यन्यायतयैकत्वग्रहणस्योद्देश्यस्थसंख्यामात्रोपलक्षणार्थत्वादुदाहरणतेत्याशङ्कावगमात्[1] द्वित्वबहुत्वयुक्तमपि वाक्यमुदाहार्यमित्याह*यथा चेति* ननु पुरोडाशक्षाणहविर्नाशयोर्निमित्तत्त्वेनोद्देश्यत्वान्नोदाहरणतेत्याशङ्क्याह *सर्वत्र चेति* प्रयाजशेषप्रतिपत्त्यर्थतायाश्चतुर्थे वक्ष्यमाणत्वात्प्रयाजशेषस्योद्देश्यत्वेन च हविषामनुद्देश्यत्वान्नोदाहरणतेत्याशङ्क्याह * सर्वत्र चेति * प्रयाजशेषप्रतिपत्त्यर्थत्वे ऽपि द्वितीयावगतहविः संस्कारार्थत्वस्यापि सम्भवतो त्याज्यत्वादेकस्यापि प्रतिपत्त्यर्थकर्मत्वयोः स्विष्टकृद्वदविरोधात्परप्रयुक्तद्रव्यसंस्कार्यत्वादसंस्कार्यत्वे ऽपि हविषां चतुर्थे वक्ष्यमाणशेषधारणात्प्रयोजकत्वाविरोधादुद्देश्यत्वं सम्भवतीत्याशयः। एवं च सत्युद्देश्यसंख्याया विवक्षिताविवक्षितत्वसन्देहान्मूलसंशयो युक्त इत्याह * तत्रेति*हेताविति करणः वेदे वक्तृभावाद्वचनेच्छानिच्छारूपविवक्षायोगात्प्रमाणभूतवेदप्रतीतस्य च त्यागायोगाच्चिकीर्षाचिकीर्षारूपविवक्षाविवक्षायोगात्प्रतीत्यप्रतीतिरूपविवक्षाविवक्षाविवक्षाभ्युपगमे तु यस्य कस्य चिदविवक्षायोगाद्धेतुभूतसन्देहमाक्षिपति * ननु चेति * प्रश्नपूर्वमाक्षेपाशयं विवृणोति * कुत इति * वेदवाक्यविशेषणफलोक्तिपूर्वं श्लोकं व्याचष्टे * यानीति * सम्भवति प्रमादो ऽभिप्रायान्तरं वा येषु वाक्येषु तानि सम्भवत्प्रमादाभिप्रायान्तराणि। प्रमाणान्तरगम्यो ऽर्थो येषां तानि प्रमाणान्तरगम्यार्थानीति बहुव्रीहिद्वयं कृत्वा सम्भवत्प्रमादाभिप्रायान्तराणि च प्रमाणान्तरगम्यार्थानि चेति कर्मधारयः। पुरुषाधीनोच्चारणत्वात्पुरुषधर्मयोः प्रमादाभिप्रायान्तरयोः पौरुषेयेषु च वाक्येषु सम्भवे

१ र्थत्वावगमादिति २ पु० पा०

ऽपि प्रमाणान्तरगम्यार्थत्वस्य वैदिकेष्वपि सम्भवात्तुल्यतामाशङ्क्य ज्ञातार्थे विवक्षायोगात्पौरुषेयेष्वैकान्तिकं प्रमाणान्तरगम्यार्थत्वं वक्त्रनपेक्षैरपि श्रोतृभिः प्रमादाभिप्रायान्तराध्यवसानासिद्ध्यर्थमुपपादयितुं विवक्षोक्तिः । एवं च पुंवाक्येषु श्रुतस्याप्यर्थस्य वक्तृनिच्छारूपासम्भवत्याविवक्षेत्युक्ते विवक्षाकार्येण वाक्येनानुमीयमानाया विवक्षायाः कथमभावावधारणेत्याशङ्क्य * सा चेत्युक्तम् * वेदवाक्येष्वाश्रयभूतपुरुषाभावात् सद्भावे तत्प्रमादाभिप्रायान्तरायोगोक्त्यर्थः कस्य चिच्छब्दः । अभिप्रायान्यथात्वस्य तदुपलक्षितस्य च प्रमादस्य सम्भवाभ्युपगमे ऽपि कथनाख्यस्तावद्वेदे ज्ञानप्रकारो वक्त्रभावान्न सम्भवतीत्युक्ते वेदाधिकरणसिद्धान्तसूत्रोक्तभावोपपादनार्थम् * सर्वेत्युक्तम् * वायुक्षेपिष्ठादिवाक्यानामपि स्वरूपार्थस्य प्रमाणान्तरगम्यत्वे ऽपि लोके विषं भक्षय न तु पापिगृहे भुङ्क्ष्वेत्यादौ विवक्षानुमापकत्वादर्शनात्तात्पर्यार्थस्य च प्रमाणान्तरागम्यत्वाद्द्वितीयो ऽपि ज्ञानप्रकारो न सम्भवतीति न चेत्युक्तम् । न केवलमविवक्षाहेतुभूतप्रमादाभिप्रायान्तरायोगाद्वेदवाक्येषु विवक्षा न युक्ता किन्तु वचनेच्छानिच्छयोर्विवक्षाविवक्षात्वात् द्वारमित्यादौ संव्रियतामित्यादिपदानुच्चारणात्संवरणादिसम्प्रतिपादनेच्छाननुमाने ऽपि सम्वरणादिप्रतिपादनं विना नैराकाङ्क्ष्याभावात्तत्तत्प्रतिपादनाशयरूपां बुद्धिमनुमाय सम्वरणमनेन विवक्षितमिति वचनेच्छाहेतुभूते वचनाशयरूपे प्रत्ययविशेषे विवक्षाशब्दप्रयोगादवचनाशयरूपप्रत्ययविशेषाभावे च मौनिनो ऽनिच्छायामप्यविवक्षाशब्दाप्रयोगाद्वचनेच्छानिच्छाहेतुभूतयोः प्रत्यययोर्विवक्षाविवक्षात्वाद्वा स्वरूपेणापि विवक्षाविवक्षयोर्वेदवाक्येषु प्रयोगादपीति विवक्षेत्यनेनोक्तम् । तेनेत्यादिना श्लोकार्थोपसंहारः । अचिकीर्षारूपा विवक्षा वेदे सम्भवत्यपि प्रमाणाभावादयु-
७१५।११ क्तेत्यर्थान्तरन्यासेन दर्शयितुमाह * पुम्वाक्ये ऽपीति * विधेयाविधेयत्वस्वरूपविवक्षाविवक्षाभ्युपगमेन भाष्योक्तसन्देहहेतुभूतसन्देहं समाधातुमाह * उच्यतइति * वचनश्रुत्यैकत्वस्याभिधानात्स्वरूपेण प्रतीतिः पदश्रुत्या च ग्रहान्वयोक्तेर्ग्रहान्वयित्वरूपेण प्रतीतिरविवादेत्येवं पूर्वार्द्धं व्याचष्टे * एकत्वं तावदिति * उत्तरार्द्धं तावद्व्याख्यातुं सम्मार्जनीयस्य ग्रहस्यैकत्वान्वयावगतिमात्रेणैकग्रहसम्मार्गासिद्धेर्विधेयत्वचिन्तानर्थक्यशङ्कानिरासार्थं विनियोगाभिधानश्रुतिविषयभूतस्यापि विधिश्रुतिविषयत्वं विनानुष्ठानायोगं चिकीर्षाचिकीर्षारूपाविवक्षाविवक्षासिद्ध्यर्थं वा श्रुतित्रै-

विध्योक्तिपूर्वं विधेयत्वं विनानुष्ठानायोगं तावदाह * इह त्विति * तृतीयैव श्रुतिरनुष्ठानहेतुर्न पूर्वेत्यर्थः। उदाहरणनिष्ठं श्लोकं व्याचष्टे * प्रकृतीति * अभिधातृत्वस्वरूपमात्रबोधो ऽभिप्रेतः विध्यनपेक्षैः श्रुत्यादिभिस्तादर्थ्यं बोधाख्यविनियोगासिद्धेरन्वयमात्रबोधो ऽत्र विनियोगो ऽभिमतः। कारकविभक्तीनां प्रत्ययत्वेन स्वार्थस्वरूपबोद्धृत्वे प्रकृतिसमभिव्याहारात्मकपदत्वरूपेण प्रकृत्यर्थान्वयबोद्धृत्वे ऽपि क्रियान्वयबोधाधिक्यात्तयोः पृथगुक्तिः। षष्ठ्या अपि पदान्तरार्थान्वयबोद्धृत्वोक्त्यर्थश्चकारः। लिङादीनामपि कारकविभक्तिवदभिधातृत्वविनियोक्तृत्वसद्भावे ऽपि विधिसामर्थ्याधिक्यमुक्तं तत्रेत्यनेन श्लोकतात्पर्योक्तिः। विधिनिबन्धनत्वं प्रयोगस्यान्वयव्यतिरेकाभ्या[1]मुपपादयति *स हीति* सौर्यादियागे ऽनभिहिते ऽपि सक्तुषु होमसाधनत्वेनाविनियुक्तेष्वपि विधिसद्भावे प्रवृत्तेर्विध्यभावे च वायव्यश्वेतालम्भादौ धातुनाभिहिते द्वितीयया च विनियुक्ते ऽप्यप्रवृत्तेर्विध्यधीनत्वावगतिरित्यर्थः। नन्वश्रद्धयापि प्रवृत्त्युपपत्तेः नाप्रवृत्तिमात्रेणाभिधानविनियोगश्रुत्योः प्रेरणाशक्त्यभावो ऽवसीयते इत्याशङ्क्याभिधानश्रुत्या ऽस्तित्वमात्रपरिच्छेदाद्विनियोगश्रुत्या चान्वयमात्रपरिच्छेदात्सत्तान्वयविषयकार्यत्वबुद्ध्यनुत्पादकत्वेनानयोः प्रेरणाशक्त्यभावमुपपादयितुमाह* न हीति * उत्तरार्द्धव्याख्यानायानुष्ठानस्य विध्यधीनत्वमुपपाद्योत्तरार्द्धं तात्पर्यतो व्याचष्टे * तेनेति * विधिं प्रतीत्य विधिं लक्षणीकृत्य विधिलक्षणार्थं वचनमङ्गीकृत्य विवक्षाविवक्षे भवत इत्युक्ते सनो ऽपि इच्छार्थस्यास्मिन्पक्षे परिग्रहलक्षणार्थत्वापत्तेः। तस्य च श्रुतिवृत्तत्वासिद्धये ऽनुष्ठानं प्रतीत्यानुष्ठानलक्षणार्थं वचनमङ्गीकृत्येत्युक्तम्। द्वयमपि व्याख्यातुं विधित्सिनेत्युक्तं चिकीर्षिताचिकीर्षितत्वयोश्च मूलसन्देहविषयभूतकर्तव्यत्वाकर्तव्यत्वोपलक्षणार्थत्वेनोपायसन्देहहेतुत्वेनोपन्यसनीयत्वाद्भाष्ये ऽपि चैकत्वाविवक्षायामेकवचनायोगशङ्कायाः शब्दविषयत्वेनानुष्ठातृगता चिकीर्षाविषयत्वे ऽनुपपत्ते[2]र्विवक्षाविवक्षाशब्दयोर्विधेयत्वाविधेयत्वोपलक्षणार्थं विधित्सिताविधित्सितार्थत्वावसायात्सनः श्रुतिवृत्तिशक्तिप्रदर्शनमात्रार्थं विवक्षाविवक्षयोश्चिकीर्षिताचिकीर्षितात्मकतोक्ता न पारमार्थिकी। विधित्सिताविधित्सितात्मकमपि विवक्षिताविवक्षितत्वं विधायकस्य शब्दस्याचेतनत्वेनेच्छाभावादयुक्तमित्याशङ्क्य *नन्विति*

१ मनुपपत्ते रिति २ पु० ना०

[1]एकवचनेनैकत्वोक्तेर्निःशङ्कत्वेनात्र विवक्षाशब्दस्य आशङ्कायां सन् वक्तव्य इति स्मृत्यविषयत्वादौपचारिकतैव सनो युक्तेत्याशयः । उपचारेणापि चेच्छाव्यतिरिक्ते सन्प्रयोगोपपत्तौ सूत्रस्मृतेच्छावाचित्वत्यागेनान्यार्थत्वकल्पनायोगाद्वाक्यकृत्स्मृत्यनादरेण दृष्टान्ते ऽप्यौपचारिकत्वोक्तिः सन्प्रत्ययोपलक्षणार्थं इति परिहरति*उच्यत इति* सनश्चेच्छाफलप्रत्यासत्तिलक्षणार्थत्वदर्शनान्नात्यन्तादृष्टोपलक्षणेति दर्शनान्नात्यन्तादृष्टोपलक्षणेति दर्शयन् श्लोकं व्याचष्टे *यथैवेति * अनुष्ठानार्थौ परिग्रहपरित्यागशब्दौ मत्वा ऽभिधानविनियोगश्रुत्योरविधायकत्वे ऽपि विधेयसमर्पकत्वात्तद्विषयताया विधेयत्वावगतेर्विधायकश्रुत्यविषयत्वे ऽपि परित्यागो न युक्त इत्याशङ्कते * कथमिति * अप्राप्तत्वाद्विधानार्हत्वरूपविधेयत्वावगमे ऽपि विधेयत्वाधीनत्वादनुष्ठानस्य विधायकेनाग्रहणेनानुष्ठानं युक्तमिति परिहरति * नैष इति * पुम्वाक्यदृष्टान्तेनैतदेवोपपादयति * यथैवेति * श्लोकं व्याचष्टे * पुरुषेति * इच्छाशब्देनाज्ञादयः पुरुषाशयविशेषा प्रवर्तनासामान्यव्यक्तिभूता विवक्षिताः विधित्वशब्देन प्रेरणाख्यो लिङ्व्यापारः । शङ्कापरिहारमुपसंहरति * अत इति * विनियोगाभिधानश्रुतिसमर्पितत्वाविशेषे ऽपि विधिस्पर्शास्पर्शव्यवस्था न युक्तेत्याशङ्कते * कथं पुनरिति * समर्पितत्वाविशेषे ऽपि रूपरसयोश्चक्षुर्ग्रहणाग्रहणव्यवस्थावद्विधिग्रहणाग्रहणव्यवस्था युक्तेति परिहरति * तदिति * योग्येत्यनेनाध्याहृतापिशब्दकेनाभि-
७।१७।१ धानविनियोगश्रुतिवशत्वे निरस्ते दृष्टान्तत्वेन श्रोत्राशयवशत्वाभावोक्तिः । व्यतिरेकपूर्वं श्लोकं व्याचष्टे * यदीति * कस्मिन्नर्थे विधायकानां शक्तिरित्यपेक्षायामाह* तथा हीति * श्रौतं विधित्वं भावनाविषयं कारकविषयं चार्थमित्यर्थः । श्लोकं व्याचष्टे*श्रुत्या तावदिति * धात्वर्थस्य कारकत्वे ऽपि तदवच्छिन्नाया भावनाया निरूपणाशक्तेर्विध्ययोगात्पदश्रुत्यैव धात्वर्थविध्यवगतेस्तद्व्यतिरिक्तानामेवकाराणामार्थविधिविषयत्वसूचनायान्तरोक्तिः कारकत्वेन श्रुतस्य सङ्ख्यादेः साक्षात्कारकत्वायोगे ऽपि कारकीभूतद्रव्यद्वारा कारकत्वसम्भवे विधेयत्वानपह्नवसूचनायोत्तरार्द्धव्याख्याने तदाश्रयत्वोक्तिः विध्यवगतानुष्ठेयत्वानुपपत्त्या सामान्यतः किं चित्समीहितं प्रत्यङ्गत्वे ऽवधारिते श्रुत्यादेस्तद्विशेषसमर्पणमात्रे व्यापाराद्विध्यपरिग्रहे श्रुतस्याप्यङ्गत्वं नास्तीति सूचनायानुष्ठानं प्रत्यङ्गत्वं स्यात्तच्च विध्यभावान्नास्तीत्युक्तम् एकत्वादेर्विधिपरिग्रहापरिग्रहलक्षणाविवक्षिताविवक्षितत्व-

१ धाले कवचनेनेति २ पु० पा०

सन्देहे ऽप्येकस्य ग्रहस्य सम्मार्गादिकार्यम् सर्वेषां वेति मूलसन्देहस्य सिद्धिः कथमित्याशङ्क्य विवक्षिताविवक्षितत्वं सन्देहेनैकत्वादेः कार्यत्वाकार्यत्वसन्देहासिद्धिन्दर्शयितुमाह * तेनेति * उपक्रमोक्ता विवक्षाविवक्षितत्वसंदेहः सम्भवोपपादनसमाप्त्या बुद्धिस्थीकृतस्तच्छब्देन परामृष्टः हेत्वभावे वेदे सम्भवमात्रेण विवक्षिताविवक्षितत्वसन्देहासिद्धेस्तद्धेतुत्वेनैकत्वादेः सम्मार्गादिभावनाविशेषणत्वसदसद्भावसन्देहं दर्शयितुमाह * तत्रेति * भावनाद्रव्याङ्गत्वहेतुभूतकारकाकारकत्वसन्देहान्तरसूचनार्थं कारकत्वेनेत्युक्तं चिकीर्षितत्वात्मके विवक्षितत्वे विधिस्पर्शस्य हेतुत्वार्था पञ्चमी विधित्सितरूपे विवक्षितत्वे शब्दप्रवृत्तिमात्रे हेतुत्वम् । ननु विवक्षाविवक्षोक्त्योर्विधिपरिग्रहापरिग्रहलक्षणार्थत्वे कस्मादुद्देश्यसंख्या विधिना गृह्यते न वेत्येव सन्देहो न कृत इत्याशङ्क्याशङ्क्याह * तदेतदिति * विधिशक्त्यशक्त्यधीनयोर्विधिपरिग्रहापरिग्रहयोर्यद्विवक्षिताविवक्षितत्वं वाचोयुक्त्युच्चारणं तन्मन्दबुद्धिशिष्यप्रतिपादनफलं पौरुषेयवाक्यव्याख्यासादृश्यापादनार्थमित्युक्ते कस्मात्पुंवाक्यव्याख्यासादृश्यापादनं विना न शिष्यप्रतिपत्तिरित्याशङ्क्यालौकिकस्थनाबुद्धस्य वेदवाक्यार्थस्य विसदृशव्याख्यानप्रकारप्रकरणाशक्तेरित्युक्तं कया वृत्त्या परिग्रहापरिग्रहयोर्विवक्षिताविवक्षितवाचोयुक्तिरित्याशङ्क्यान्तर्णीतमुपमानं यस्याङ्गौणवृत्तौ तदाश्रयणेनेत्युक्तम् । कथमुपमानमित्यपेक्षायां परिग्रहापरिग्रहाख्यफलसामान्यदर्शनादित्युक्तं न केवलमेतदेव विवक्षिताविवक्षितवाचोयुक्त्युच्चारणं परिग्रहापरिग्रहविषयं किं त्वन्यत्रापि तस्मान्नैतत्किं चिदपि कर्तुं विवक्ष्यत इत्यादिभाष्यादौ यद्वेदविषयं विवक्षिताविवक्षितवाचोयुक्त्युच्चारणं तदेव मे विसमर्थनीयमिति ग्रन्थेत्यनेनोक्तमाव्याख्यार्थत्वच्यङ्गीकारेण वाच्या व्चिख्यासाव्याचिख्यासे विवक्षाविवक्षोक्तिभ्यामुच्येते इति समाधानान्तरमाह * अथ वेति * ननु सम्प्रदायानुसारेण व्याचक्षाणानां याज्ञिकानां न्यायशास्त्रे ऽभिप्रायाख्येच्छा चिन्ता न युक्तेत्याशङ्क्याह * शब्देति * सम्प्रदायस्य पौरुषेयत्वेन मूलप्रमाणापेक्षत्वाद्ग्रहैकत्वादिविवक्षाविषयभूतस्य च प्रमाणान्तरस्यादर्शनाददृष्टन्यायमूलत्वसम्भवे चादृष्टमूलान्तरकल्पनायोगान्न्यायमूलत्वावगतेर्न्यायाविरोधे सम्प्रदायाद्वेदार्थावगमे ऽपि विरोधे न्यायावगम्यविधिशब्दशक्त्यनुसारेणैव याज्ञिकैरपि व्याख्येयत्वात्तद्व्याचिख्यासा चिन्तयितुं युक्तेत्याशयः । यद्वेच्छाया निरङ्कुशत्वात्तद्वशेन शास्त्रार्थनिर्णयायोगाशङ्कानिरासार्थत्वेनायं श्लोकार्द्धो व्याख्येयः । व्याख्यात्रिच्छायाः

साङ्गत्वमेव विवृणोति * तत्रेति * विवक्षाविवक्षोक्त्योर्व्याख्यात्व्याख्यामार्थत्वमुपसंहरति* तेनेति*ननु ग्रन्थकारप्रयुक्तयोर्विवक्षाविवक्षाशब्दयोर्व्याख्यात्रिच्छानिच्छानिच्छार्थत्वसम्भवे ऽपि व्याख्यातुमुक्तयोरात्माश्रयदोषापत्तेर्व्याख्यात्रिच्छानिच्छार्थत्वं न सम्भवतीत्याशङ्क्याह * अत इति * संवत्सरवाचिना समाशब्देन कालोपलक्षणादतः पूर्वव्याख्यातृप्रतियोगित्वेनोपस्थापितादर्वाचीनाद् व्याख्यातुः पूर्वकाले वृत्ता जाता ये व्याख्यातारस्तेषामिष्टं यत्तेनार्वाचीनेन व्याख्यात्रविवक्षितमुच्यते तेषां चानिष्टं यत्तदविवक्षितमुच्यतइत्यर्थः । अतो वेदे ऽपि विवक्षिताविवक्षितत्वचिन्ता न विरुद्धेति प्रस्तुतोपयोगमाह * तस्मादिति * स्वरूपे ऽर्थे वेदप्रामाण्यात्सर्वस्य जगतश्चेतनाधिष्ठितत्वाभ्युपगमेन मुख्यवृत्त्यैव विवक्षाविवक्षोक्ती समाधत्ते * ऋग्वेदादीति * यो वै वेदेषु तिष्ठन्वेदानन्तरो यमयति यो वेदान्वेत्ति यं वेदा न विदुः यस्य वेदाः शरीरं एष त आत्मान्तर्याम्यमृत इत्युपनिषत्प्रामाण्यादृग्वेदादिष्वात्मानो ये प्रतिष्ठितास्तेषामिच्छानिच्छाख्यभिप्रायो विवक्षाविवक्षाशब्दवाच्य इत्युक्ते कर्मजन्यफलोपभोगार्थं देहाधिष्ठातृभिर्जीवैर्नित्यानां वेदानां कर्मानर्जितत्वेनाधिष्ठानायोगात्परमात्मनश्च देहानधिष्ठातृत्वाद् ऋग्वेदादीनां चेतनेच्छाधीनव्यापारत्वानुपपत्तेः । शब्दशक्त्यालोचनावशेन शब्दव्यापाराच्चेतनेच्छानुमानायोगेन सदसद्भावचिन्तानुपपत्तिमाशङ्क्य परमात्मनः कर्मजन्यफलोपभोगार्थं देहानधिष्ठाने ऽपि कार्यकारणप्रतिनियमसिद्ध्यै सर्वस्य जगतश्चेतनाधिष्ठानाकरणात्परमात्मनो ऽपि च क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारतेति देहाख्यक्षेत्रे ज्ञातृत्वाख्यक्षेत्रे ज्ञत्वस्मृतीर्वेदेष्वधिष्ठातृत्वोपपत्तिसूचनार्थं क्षेत्रज्ञत्वे ऽभिहिते ।

विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि ।
व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ॥

इत्यनेन न्यायेन पदावयविवत् ऋग्वेदाद्यवयविनो वेदावयविनश्चानुपपत्तेरनारब्धावयविकानां चावयवानां देहत्वादर्शनादृग्वेदादीनां देहत्वायोगेन ।

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥

इति देहाख्यक्षेत्रमधिष्ठाय ज्ञातृत्वलक्षणक्षेत्रज्ञत्वायोगमाशङ्क्योपनिषत्प्रामाण्यादनारब्धावयविकेष्वप्यृग्वेदादिशब्दवाच्येषु मन्त्रब्राह्मणसमूहेषु क्षेत्रज्ञानामधिष्ठातृतोक्ता । ननु पञ्चधातूत्स्वयम

षष्ठ आदत्ते युगपत्प्रभुरित्यादिस्मृत्यालोचनेन महाभूताधिष्ठितस्यैवात्मनो ज्ञानेच्छादिमत्त्वावगमाद्वेदाधिष्ठितानामात्मनां ज्ञानाभावेन तत्पूर्वकविवक्षासम्भवात्सम्भवे ऽपि प्रमाणान्तरगम्यार्थत्वाभावाद्वेदाधिष्ठातृभिरकथितायाः परैर्ज्ञातुमशक्यत्वात्तत्सदसद्भावचिन्ता युक्तेत्याशङ्क्याह * महाभौतिकेति * यथा पृथिव्यप्तेजोवाय्वाकाशाख्यमहाभूतारब्धदेहाधिष्ठितानामात्मनां चैतन्याख्यज्ञानवत्त्वात्तत्पूर्विका विवक्षा सम्भवति वृषलैर्न प्रवेष्टव्यं गृहं ऽस्मान्नित्यादौ वा कथितापि बहुत्वाद्यविवक्षा प्रमाणान्तरगम्ये ऽपि चार्थे शब्दशक्त्यालोचनयैवान्यैर्ज्ञायते तथर्ग्वेदादिदेहाधिष्ठितानामप्यात्मनां चैतन्याख्यज्ञानवत्त्वात्तत्पूर्विका विवक्षा सम्भवति शब्दशक्त्यालोचनया चान्यैर्ज्ञातुं शक्यत इति तथर्ग्वेदादयो देहा इति वक्ष्यमाणान्वयेन व्याख्येयम् । अकथितत्वसूचनायान्तर्गतत्वोक्तिः प्रमाणान्तरवशत्वनिरासार्थः शब्दशक्त्यैवेत्येवकारः । ननु देहानां पार्थिवत्वव्याप्तेर्ऋग्वेदादीनां व्यापकपार्थिवत्वानिवृत्त्या व्याप्यदेहत्वनिवृत्त्यवगमान्नात्मभिराधिष्ठानं युक्तमित्याशङ्क्याह * देहेति * पृथिवीपरमाणवादीनां देहप्रकृतिभूतानां देहारम्भवैचित्र्याद्देहानां भिन्नाः प्रकारा इत्युक्तं प्रकृत्यारम्भवैचित्र्यनिमित्तापेक्षायामपरमात्मनां जीवानां देहविचित्रकर्मजन्यविचित्रफलोपभोगापादकापूर्वाख्यशक्तिवशानुगा इत्युक्तम् । ततश्च शुद्धायाः पृथिव्याः क्व चिद्देहप्रकृतित्वाभावाद् बाहुल्यस्य च भूतान्तरेष्वपि भावाद्देहत्वस्य पार्थिवत्वेन व्याप्तिरसिद्धेति परिहाराशयः । वैचित्र्यं विवृणोति * पार्थिवेति * स्वेदजाण्डजोद्भिज्जैरादिशब्दोक्तैः संख्यापूरणं तोयबाहुल्योपपादनार्थं स्वेच्छावयवरूपतोक्ता । वायुबाहुल्योपपादनार्थं भ्रमन्तीत्युक्तम् । अग्निदृष्टान्तेन तेजोबाहुल्योपपादनार्थं रात्रौ विक्षिप्तेन सौर्येण तेजसा आप्यायन्तइत्युक्तं वाक्यशेषे ऽपि ।

एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति ।
स गच्छति परं स्थानं तेजो मूर्त्तिर्यथार्जुन ॥

इति मानवाभिधानेन च तैजसानां देहानां चेतनाधिष्ठतनोपपादिता । नाभिहित इतिपाठे ना पुरुषः । ननु जीवात्मनां स्वकर्मोपात्तफलोपभोगदेहाधिष्ठातृत्वसम्भवे ऽपि वेदाधिष्ठातृत्वेनाभिमतस्य परमात्मनः कर्त्तृभोक्तृत्वाभावाद्देहाधिष्ठातृत्वं न सम्भवति वेदानां च नित्यत्वेनात्मकर्मानुपात्तत्वान्न तद्देहत्वे सम्भवतीत्याशङ्क्य नित्यानां वेदानां व्योमदृष्टान्तेन परमात्माधिष्ठितत्वमुपपादयितुमाह * तथेति * क्रमार्थस्तथाशब्दो न तु दार्ष्टान्तिकत्वोक्त्य-

र्थः। परमात्मनो ऽनश्नन्नन्यो अभिचाकशीति श्रुतेः। प्रयोजनाभावाद्देहानधिष्ठातृतामाशङ्क्य भोक्तृत्वासिद्ध्यै तत्सवितुर्वरेण्यमिति सवित्रधिष्ठानतच्छब्दवाच्यब्रह्माख्यपरमात्माभिधायिन्या गायत्र्योत्क्षिप्यमाणेन वारिणेज्यनइत्युक्तम् । तद्यो ऽहं सो ऽसौ यो ऽसौ सो ऽहमित्युपनिषच्छ्रुतेः । सूर्य आत्मा जगतस्तस्थुषश्चेति मन्त्रवर्णाच्च ब्रह्मणः सवित्रधिष्ठातृत्वावगतिः कृत्स्नदेहाधिष्ठानस्यापि चात्मनो हृदयाधिष्ठानोपासनवत् कृत्स्नव्योमाधिष्ठानस्यापि व्योमान्तर्गतसवितृमण्डलाधिष्ठानोपासनाविरोधः कस्याः श्रुतेर्व्योमशरीरता श्रुतेत्यपेक्षायां खम्ब्रह्मेति श्रुत्या व्योमशरीरतयोदितइत्युक्तम्। य आकाशे तिष्ठन्नाकाशमन्तरो यमयतीति य आकाशं वेत्ति य आकाशं न वेद यस्याकाशः शरीरमेष त आत्मा सर्वान्तर्याम्यमृत इति श्रुत्यन्तरसूचनार्थश्चकारः । नित्यस्यापि नियमत्वलक्षणभोग्यत्वाद्देहत्वोपपत्तिसूचनार्था नित्योक्तिः। नन्वेवमपि देहानां भौतिकत्वव्याप्तेर्ऋग्वेदादीनां व्यापकभौतिकत्वनिवृत्त्या देहत्वनिवृत्त्यवगमान्न देहता युक्तेत्याशङ्क्य महाभूत (गुणानामपि यो रूपेषु तिष्ठन्नपाण्यन्तरो यमयतीत्यादिश्रुतिप्रामाण्याद्देहत्वावगतेर्भौतिकत्वेनापि देहत्वस्य व्याप्तिरसिद्धेति सूचयितुमाह * रूपेति * देहत्वोपपादनार्थं नियमलक्षणसम्भोगाधिष्ठानता सम्भोगहेतुशब्देनोक्ता पृथिव्यादिमहाभूतवत्समुदितानामेव रूपादीनां देहत्वशङ्कानिरासार्थं प्रत्येकमित्युक्तम् । शब्दब्रह्मवादस्य च चेतनाचेतनयोर्ब्रह्मशब्दयोस्तादात्म्यानुपपत्तेः। शब्दो ब्रह्माधिष्ठानमित्येवं व्याख्येयत्वाच्छब्दात्मकानामपि वेदानान्देहत्वाम्ब्रह्माख्यस्य च परमात्मनोऽपि देहाधिष्ठातृतां शब्दब्रह्मवादिनामपि मतं प्रकृतर्ग्वेदाद्यधिष्ठातृक्षेत्रज्ञासिद्ध्यै सूचयितुमाह * शब्देति * यद्वेदाख्यं शाब्दं शब्दब्रह्मेत्युच्यते तत्परमात्मनाधिष्ठितमिति कृध्याहारेणयोज्यम् । अनादिनिधनम्ब्रह्म शब्दतत्त्वमिति शब्दमात्रस्य ब्रह्मत्वोक्तावपि शास्त्रत्वाख्यैश्वर्ययोगिकूटस्थनित्यब्रह्माधिष्ठानस्य कूटस्थनित्यं शास्त्रं विनानुपपत्तेर्वेदातिरिक्तस्य च शास्त्रस्य कूटस्थनित्यत्वाभावाद्वेदाख्यं शास्त्रमिति विशेषतः परमात्माधिष्ठानमात्रेण तर्हि चेतनाधिष्ठितत्वसिद्धेः। क्षेत्रज्ञाधिष्ठानोक्तिरनर्थिकेत्याशङ्क्य द्वा सुपर्णा सयुजा सखायेत्यादिश्रुत्यालोचनया सर्वस्य साधारणचेतनद्वयाधिष्ठानत्वावगतेः । सर्वसाधारणपरमात्माधिष्ठितस्यापि प्रतिबिम्बवत्स्वासाधारणाधिष्ठितत्वोपपत्तिसूचनार्थं सर्वामेकेनेत्युक्तम् । सर्वस्यैकाधिष्ठितत्वे वेदमात्रस्यैकाधिष्ठितत्वोक्तिरयुक्तेत्याशङ्क्य ।

सर्वेषाञ्च स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥

इत्यादिस्मृत्यालोचनया सर्वस्याभिधानाभिधेयजातस्य वेदान्तर्गतत्वाद्वेदात्मकत्वसूचनायेदमित्युक्तम् । रूपादिदृष्टान्तेनाभौतिकानामपि वेदानान्देहत्वसम्भवे ऽपि ज्ञानसाधनेन्द्रियाद्यभावात्परमात्मवच्च क्षेत्रज्ञाधिष्ठाने ऽपि ज्ञानानुपपत्तेस्तत्पूर्विका विवक्षा न सम्भवतीत्याशङ्कां निरस्यन् दार्ष्टान्तिके ज्ञानपूर्वं विवक्षोपपत्तिं योजयति *तथेति* यथा माहाभौतिकदेहेष्वात्माधिष्ठानाच्चैतन्याख्यं ज्ञानमस्ति तथर्ग्वेदादयो ऽपि देहत्वेन श्रुत्योक्तत्वाद्देहानाञ्चात्मयोग्यत्वव्याप्तेर्ज्ञानञ्च विना भोगायोगाच्चैतन्याख्यज्ञानान्विता इत्यर्थः । परमात्मन एव वेदान्स्वार्थप्रतिपादने नियन्तुं वेदाख्य-क्षेत्राधिष्ठातृत्वेन क्षेत्रज्ञव्यपदेश्यत्वान्नित्यज्ञानत्वोपपत्तेः । साधनाभावेन ज्ञानाभावाशङ्कानिरासः सदेत्यनेन सूचितः । शब्दब्रह्मैव क्षेत्रज्ञशब्देनोक्तं स्यादित्याशङ्क्य वेदपुरुष इति यमवोचामयेन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदमिति श्रुत्या प्रत्येकमसाधारण्येन ऋग्वेदादीनान्देहत्वोक्तेः सर्ववेदसाधारणत्वाच्छब्दब्रह्मणः प्रतिवेदमसाधारण्येन क्षेत्रज्ञस्य वैलक्षण्यसूचनार्थं पृथक् पृथगित्युक्तम् । यथा च भौतिकदेहस्थानात्मनामन्तर्गतापीच्छा शक्त्यालोचनया ऽन्यैर्ज्ञायेत तथा वेददेहस्थानामपीत्याह * तेषाञ्चेति * वेदक्षेत्रज्ञाशयविषयविवक्षाविवक्षोक्तिपक्षमुपसंहरति * विधीति * शब्दब्रह्मवादाभ्युपगमे तु ब्रह्मणो ऽपि सर्ववेदात्मकदेहाधिष्ठातृत्वाद्विवक्षाविवक्षे वक्तुं शक्येते ते च विधिशक्तितो ज्ञायेते इत्याह शब्देति[1])। एवंशब्देन प्रत्येकम्वेदा-धिष्ठातृणांदृष्टान्ततोक्ता * नन्वनादिति *

नन्वनादिनिधनं ब्रह्म शब्दतत्त्वं व्यवस्थितम् ।
विवर्त्तते ऽर्थभावेन प्रक्रिया जगतो यतः ॥

इति वदद्भिः शब्दब्रह्मवादिभिः शब्दव्यतिरिक्तार्थनिरासात्तस्मिन्पक्षे ऽर्थविवक्षानुपपत्तेस्तद्विषयत्वेन विवक्षोक्तिव्याख्या न युक्तेत्याशङ्क्याह *अनादीति* अर्थापह्नवे सर्वप्रमाणविरोधापत्तेरभिधेयवाचिनो ऽर्थशब्दात्कृदन्तादुत्पन्नेन भावप्रत्ययेन वाच्यवाचकसंबन्धोक्तिमङ्गीकृत्य वाच्यविषयशक्तियुक्तत्वेन विवृत्त्यर्थभावेन[2] विवृत्त्युक्तेर्व्याख्येयत्वसूचनायानादिनिधनत्वस्योपलक्षितस्य शब्दब्रह्मणो वेदवेदार्थाधिष्ठानतोक्ता । शब्दब्रह्मपक्षे त्वेवं वेदक्षेत्रज्ञपक्षोक्तप्रकारेण वि-

(१) अयं पा० २ पु० ना० ।
(२) विविधवृत्त्यर्थतया अर्थभावेनेति २ पु० पा० ।

वक्षाविवक्षाशब्दयोर्व्याख्येयमुख्यावृत्त्यायुक्तेरित्यर्थः। उपासनाविधिशेषत्वेनान्तर्यामिब्राह्मणादेः स्वरूपार्थपरत्वाभावात् कार्यकारणप्रतिनियमस्य च शक्तिव्यवस्थयोपपत्तेः सर्वस्य जगतश्चेतनाधिष्ठितत्वे प्रमाणाभावात्परमात्मनस्तु यो ऽयमशरीरः प्रतिज्ञातेत्यशरीरत्वश्रुतेर्जीवात्मनां च कर्मानपेक्षाणां च देहानधिष्ठातृत्वान्मुख्यवृत्तिव्याख्यानस्याभ्युच्चयमात्रत्वसूचनार्थो ऽपिशब्दः वेदवाक्येषु विवक्षाविवक्षासन्देहस्य चतुर्धोपपादितं युक्तत्वमुपसंहरति * ततश्चेति* तस्मान्नैतर्हि किंचिदपि कर्त्तुर्विवक्ष्यतइत्यादिभाष्यादेव विविधसन्देहावगमसूचनार्थं न विवक्षितमिति स्थापयिष्यतीत्युक्तम्। एकत्वयुक्तं कर्मैकस्य द्रव्यस्यानुष्ठेयं विधानं वैकत्वयुक्त द्रव्यस्यैकस्य ज्ञेयमित्येवं द्वेधा सूत्रं पूरयन्पूर्वपक्षमाह * किं तावदिति * श्रुतिसंयोगं विधिश्रुत्याशयत्वेन व्याख्यातुमाह * सर्वत्रेति * नन्वक्रियात्मनः कारकत्वेन विध्यन्वयाभ्युपगमात् संख्यायाश्च कारकीभूतविधेयद्रव्यविशेषणत्वद्वारा कारकत्वस्याभ्युपगमनीयत्वात् । ग्रहादेश्च द्वारभूतस्य द्रव्यस्येहाविधेयत्वेन तद्द्वारा कारकतया संख्यादिविध्ययोगाद्विधिश्रुत्यसंयोग इत्याशङ्क्य श्रुतिसंयोगोपपादितप्रतिज्ञां तावत्करोति * तत्रेति * कारकत्वेन वा कारकविशेषणेन वेति सर्वात्मनेत्यस्यार्थः । कारकविशेषणत्वेन तावद्विधेयत्वमुपपादयति * तत्रैकस्तावदिति * अनभिमतत्वसूचनायैकशब्दः द्रव्यादिविशिष्टक्रियाविध्यन्यथानुपपत्त्या विधेयक्रियाविशेषणभूतद्रव्यादिविधिकल्पनैव संख्याविशिष्टद्रव्याविशिष्टक्रियाविध्यन्यथानुपपत्त्या विशेषणभूतसंख्याविधिकल्पनापि युक्तेत्यर्थः । स्वरूपेण च प्रकृतं कर्माङ्गत्वेन च ग्रहस्य प्राप्तावपि सम्मार्गान्वयित्वेनाप्राप्तत्वाद्विधेयत्वोपपत्तिरित्याशयः। अष्टाकपालादिवाक्ये च क्रियाविशेषणपुरोडाशविशेषणकपालविशेषणभूतस्याष्टत्वादेरपि विधिप्रतीतेर्विशेषणविशेषणस्य सुतरां विध्युपपत्तिरिति सूचयितुमाह * एवमिति * अर्थाक्षेपलभ्यत्वाच्चानेकार्थविधिर्न गौरवं शब्दस्यापादयतीत्यर्थान्तरन्यासेनाह * परस्परस्यापीति * शुद्धस्य द्रव्यस्य विशेषणत्वे द्रव्यविशिष्टक्रियाविधिना द्रव्यविशेषणानाक्षेपात्संख्यादेश्च क्रियाविशेषणत्वाभावे तद्विशिष्टस्य क्रियाविशेषणत्वायोगात्कारकविशेषणत्वेन विधेयत्वानुपपत्तेः । कारकत्वेनैव ग्रहैकत्वस्य विधेयत्वमुपपादयितुमाह * अथ वेति * यद्यपि द्रव्यविशेषणपर्यन्तं विधिप्रत्ययो न गच्छेत्तथा स्वविशेषणविशिष्टक्रियान्यथानुपपत्तिलक्षणयैवार्थापत्त्या संख्यापि विधातुमिष्यते तथापि ग्रहैकत्वस्यापि भावनाविशेषणतेत्येवं

ग्रहैकत्वविधानं प्रतिपादनीयमित्येवं तथाशब्दार्थततः शब्दापिशब्दाध्याहाराद्यभ्युपगमेन योज्यम् । यद्वा यदीत्यसंदिग्धे संन्दिग्धवचनं नामवचनः कथं चिच्छब्दार्थे गच्छातिनान्वेतव्यः । ततश्चेति चशब्दाध्याहारस्तुल्यः । उद्देश्यविशेषणस्योद्देश्यत्वेन क्रियान्वयाभ्युपगमे प्रत्युद्देश्यं वाक्यसमाप्त्यापत्तेरुद्देश्यद्वयस्यैकक्रियावशीकाराभावेनान्योन्यानियमादुद्देशोपादानयोश्चैकस्मिन्पदे ऽनुपपत्तेरुपादेयत्वेन क्रियान्वयायोगाद् ग्रहैकत्वयोर्विशेषणविशेष्यत्वायोगेनैकपदलक्षणायाः श्रुतेस्ताद्विषयत्वायोगात्तादर्थ्यविषयत्वमापाद्य वाक्यीयक्रियान्वयबोधकत्वं शङ्कते *ननु चेति* पदश्रुतेस्तादर्थ्यविषयत्वाभ्युपगमेनैव ग्रहाणां निर्ज्ञातदशसंख्यत्वेन स्वरूपतः संख्यानपेक्षत्वात्संस्कार्यस्वरूपेणैकत्वं प्रत्यङ्गित्वावगतेः संमार्गभावनान्वयित्वाख्यसंस्कार्यरूपाङ्गत्वस्यैकस्य भावनाङ्गत्वविरोधमाह * नैष इति * वस्तुस्वभावनिबन्धनोद्देश्योपादेयत्वयोः शब्दव्यापाराविषयत्वादेकपदोपात्तयोरव्यवस्थोपपत्तेर्ग्रहमिति द्वितीयोक्तस्यापि चैकत्वस्यानुपयोगित्वेनासंस्कार्यत्वात्सक्तुवद् गुणत्वप्रतीतेः । साक्षाच्च निष्क्रियत्वेनाश्रयत्वेनाश्रयद्रव्यापेक्षायामेकपदलक्षणाया श्रुतेराश्रयद्रव्यसमर्पकत्वेनाविरोधसम्भवे विरोधापादकग्रहार्थताविषयत्वकल्पनायोगमभिप्रेत्यान्यथाविरोधाभावमाह * भिन्नेति * विरोधे सत्येकत्वस्य क्रियाङ्गत्वं विना विधेयत्वायोगात् श्रुत्युक्तस्य ग्रहाङ्गत्वस्यानुपपत्तेर्वाक्यीयो ऽपि क्रियान्वयो न बाध्यतइति परिहारान्तरमाह * अथ वेति * श्रुत्युक्तविशेषणविशेष्यभावसिद्ध्यै वापेक्ष्यतएव क्रियान्वयः । श्रुत्येति परिहारान्तरमाह * यद्वेति * तादर्थ्यविषयश्रुत्यभ्युपगमे त्वेकत्वस्य क्रियान्वितग्रहान्वयनिमित्तक्रियान्वयपक्षात्पूर्वोक्तात्प्रकारान्तरेणैकत्वान्वितस्य ग्रहस्य क्रियान्वयाभ्युपगमे तस्यैकाभिधानश्रुत्यैकाभिधानश्रुत्यैकपदोक्तात् ग्रहात्प्राक् संस्कार्यत्वप्रतीतेः । स्वतन्त्रस्य चैकत्वस्य क्रियायोगात्प्रत्युद्देश्यं वाक्यसमाप्त्यनुपपत्तेर्ग्रहस्यैकत्वान्वयपूर्वकः क्रियान्वयः ।

गुणत्वेन तु क्रियाभ्युपगमे द्वितीयायाः कारकसामान्यलक्षणार्थत्वोपपत्तेः योग्यत्वाद् गुणप्रधानभावावधारणे सति द्वयोर्विप्रकर्षतुल्यत्वद्योतनार्थं समानदेशोक्त्या लक्षणयैककालतोक्ता । एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * विशिष्टत्वेन श्रुतो यो ऽर्थो भावनां विशिनष्ट्यसौ विशिष्टो भूत्वा पश्चाद्विशिनष्टि न त्वक्लृप्तविशेषणावस्थ इति कृत्वा ऽसौ विशेषणपूर्वं भावनां प्रविशतीत्युक्ते तदुपपादनार्थं भावनाया विधानार्हत्वात्कात्स्न्र्यसिद्ध्यैव

विशेषणापेक्षत्वादविशिष्टेन च विशेषणे ऽपि कात्स्न्र्यासिद्धिरिति वक्तुं विध्युक्ता कर्मव्युत्पत्त्या भावनोक्ता।

यौगपद्यपक्षे पूर्वोक्तिः साहित्यलक्षणार्था भावनापि विशिष्टमेव ग्रहं गृह्णाति न त्वगृहीतविशेषणमित्याह * गृह्णातीति* सति त्वेकत्वान्वितस्य ग्रहस्य क्रियान्वये तस्यापि ग्रहवद्विध्यन्वयात्साक्षाच्च क्रियान्वयायोगेनाश्रयद्रव्यापेक्षायां पदश्रुत्यवगतग्रहान्वयित्वनियमादवघातभावनार्थस्यापि प्रोक्षणस्योलूखलमुसलार्थत्ववद्ग्रहार्थतोपपादिता भवतीति प्रकृतोपयोगमाह *एवं चेति * एकाभिधानश्रुत्या चैकत्वस्य कारकविशेषणत्वावगतेः कारकत्वस्य क्रियान्वयिरूपत्वेन कारकद्वारा क्रियाविशेषणत्वादेकपदश्रुत्योक्तग्रहविशेषत्वात्कारकैकत्वयोः साम्येन मिथो ऽन्वयायोगान्नैकत्वस्य कारकविशेषणता युक्तेत्याशङ्क्याह * प्रत्ययार्थत्वाच्चेति * प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेतिप्रत्ययार्थप्राधान्यस्मृतेः लिङ्गसंख्ययोश्च प्रत्ययार्थप्राधान्यस्मृतेर्लिङ्गसंख्ययोश्च प्रत्ययार्थत्वाविशेषेणैकस्मिन्पदे ऽनेकेषां प्राधान्यायोगादेकस्यैकव प्राधान्ये ऽवगते कारकत्वेन प्रयोजनवत्त्वात्प्राधान्यप्रतीतेर्लिङ्गसंख्यापेक्षया च प्रातिपदिकार्थप्राधान्यस्मृत्युपपत्तेः कारकमेव प्रधानमित्यर्थः। प्रयोजनवत्त्वसमुच्चयार्थश्चकारः।

ननु प्राधान्ये ऽपि कारकत्वस्याद्रव्यत्वेनैकत्वाख्यगुणाश्रयत्वायोगान्न तद्विशेष्यत्वं सम्भवतीत्याशङ्क्याह * सर्वं चेति * कुंकुमास्योष्ट्राश्रितस्यापि राजशेषत्ववत्संख्यादेर्द्रव्याश्रितस्यापि कारकं प्रत्यङ्गता न विरुद्धेत्याशयः। अतः कारकद्वारैकत्वस्य क्रियान्वयाद्युक्ता विधेयतेत्युक्तमुपसंहरति * तेनेति * विशिष्टविधानाच्चावाक्यभेदापत्तेर्युक्तमेकत्वविधानमित्याह * तत्त्विति * पश्वेकत्वविवक्षाधिकरणन्यायेनैव दृढयितुमाह * वक्ष्यति हीति *गौरवभयेनैकत्वस्यापि विधेयत्वाभ्युपगमे दशापवित्रादेरविधेयत्वं स्यादित्यर्थान्तरन्यासेनाह * यथैवेति * ननूद्देश्यत्वेन ग्रहस्य क्रियया वशीकारायोगात्तत्क्रियाङ्गभूतेनैकत्वेन विशेष्यनियमः सम्भवतीत्याशङ्क्याह * सर्वेषां चेति * एकक्रियाविशेषणत्वस्यान्योन्यनियमहेतुत्वादुद्देश्यस्यापि वाक्यार्थीभूतक्रियाविशेषणत्वाविरोधान्नियमोपपत्तिरित्याशयः। वाक्यभेदप्रसङ्गेनोद्देश्यविशेषणविवक्षानुपपत्तिमाशङ्क्य वस्तुस्वभावकृतस्योद्देश्योपादेयत्वस्य शब्दव्यापारविषयत्वाद्वाक्यभेदाप्रसक्तिसूचनार्थं यथा पशुमालभेतेति भाष्यस्य दर्शयन्पूर्वपक्षमुपसंहरति * तस्मादिति * ननूपादेय-

स्यलिङ्गविवक्षादृष्टान्तोक्तैकत्वयुक्तवाक्योदाहरणस्योद्देश्यविशेषणमात्रोपलक्षणार्थत्वप्रतीतेः संख्यामात्रविवक्षोपसंहारो न युक्त इत्याशङ्क्याह * पुंपशुश्चेति * उद्देश्यविशेषणाविवक्षायां वाक्यभेदापत्तिलक्षणस्य न्यायस्याविवक्षासाधकस्य तुल्यत्वे ऽपि यथोभयपदानर्थक्यपरिहारायोभयत्वस्योद्देश्यान्तर्गतत्वेन विवक्षाशङ्काधिक्यान्नेहोदाहरणत्वं तथा स्वर्गकामस्योपादेयत्वशङ्काधिक्यात्संख्याविचारेण लिङ्गविचारपर्यवसानानुपपत्तेर्वाक्यभेदापत्तिलक्षणन्यायतुल्यत्वे ऽप्यनुदाहरणतेति सूचनार्थः प्रायशब्दः । स्वर्गकामपदस्योपादेयकर्तृसंख्यावाच्याख्यातान्तसामानाधिकरण्येनोपादेयार्थत्वशङ्का तर्ह्यत्रैव स्वर्गकामपदस्य फलसमर्पकत्वात्फलस्य चानुपादेयत्वात्कर्तुरेव च फलभागित्वात्सामानाधिकरण्योपादेयार्थत्वानुपपत्तिरित्येवं कस्मान्न निरस्तेत्याशङ्क्याह *माभूदिति* यथात्र्यधिकरणपौनरुक्त्यभयादुभयत्वस्योद्देश्यान्तर्गत्या शङ्का हविर्द्वयातिगमने च पञ्चशरावे ऽधिकार्यैकहविरार्तिगमने ऽपि चेति (विवेकाय शष्ठे निरसिष्यमाणात्र निरस्यते यथा स्वर्गकामपदस्योपादेयत्वशङ्का पुमानेव ज्योतिष्टोमादावधिकारी सर्वापि वेति) निरसिष्यमाणात्र न निरस्यत इत्यर्थः ।

सर्वेषां लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १४ ॥

ग्रहजात्या द्रव्यं लक्षयित्वेति क्त्वाप्रत्ययेनाविधेयत्वसिद्ध्यर्थोद्देश्यत्वसूचनार्थत्वं भाष्यस्य द्योतयन्सिद्धान्तमारभते * व्यक्तीरिति * ग्रहोद्देशेन विधिं विना सम्मार्गस्य तद्गुणत्वासिद्धेर्ग्रहशब्दस्य पात्रवाचित्वे जात्या ग्रहणसंस्कृतसोमवाचित्वे वादिशब्दोक्तेन संस्कारेणोपलक्षितानां प्रकृतापूर्वसाधनभूतानां ग्रहव्यक्तीनामुद्देश्यत्वस्य च विध्यपेक्षितत्वात्तच्छब्दव्यापारविषयत्वावगतेः प्रकृतापूर्वसाधनत्वस्य विधानापत्तेरविषयत्वाधीनत्वाद्विषयस्य च विधेयत्वायोगाद्ग्रहान्वयित्वेन सम्मार्गविधाने ऽपि ग्रहश्रुत्युक्तस्य ग्रहत्वस्यापूर्वसाधनांशलक्षणार्थत्वेनाविधेयत्वात्तल्लक्षितस्यापूर्वसाधनांशस्य विध्यन्तरविषयत्वेनाविधेयत्वादविधेयस्य च विधेयद्वारा ऽस्य चैकत्वस्य निष्क्रियत्वेन कारकतया विध्ययोगाविवक्षेत्याशयः । ग्रहस्योद्देश्यत्वासिद्ध्यै प्राधान्यं सम्मार्गस्य चाङ्गत्वमुपपादयन् श्लोकं व्याचष्टे * इह तावदिति * लक्षणत्वेन स्वरूपेण व्यक्तिलक्षणयाष्टवर्षब्राह्मणत्वेनोपनयनसंस्कार्यतयोद्देश्यतया ब्राह्मणव्यक्ते-

(१) अयं पा० २ पु० गा० ।

लक्षिताया अप्युपनयनान्वयित्वेन विधेयत्वायाष्टवर्षत्वविशेष्यत्ववद्ग्रहव्यक्तेरपि सम्मार्गान्वयित्वेन विधेयत्वादेकत्वविशेष्यतोपपत्तेर्विध्यनर्हापूर्वसाधनांशलक्षणाप्रदर्शनायैव वेत्युक्तम्। एवं च सति वैगुण्यपरिहारायापि सर्वे सम्मार्ष्टव्या इत्याह * तत्रेति * ग्रहैकत्वस्य पश्वैकत्वसाम्यं पूर्वपक्षोक्तमपि वैगुण्यापत्त्यनापत्तिवैषम्यादेवायुक्तमित्याह * यदि त्विति * प्रधानानां धर्मान्वये हि साहित्यस्याविवक्षितत्वात्प्रतिग्रहं समार्गावृत्त्यवगतेस्तस्याः शास्त्रावृत्त्यधीनत्वाच्छास्त्रभेदोक्तिः । न्यायलभ्यत्वेनावृत्तेः शास्त्रानधीनत्वाद्देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामितिवद्द्विवचनपदोपादाने प्रत्येकं वाक्यसमाप्तेः कल्पनाभावेन शास्त्रभेदानुपपत्तेरपरितोषात्स्वमतेन शास्त्रैक्ये ऽप्यन्योन्यानपेक्षैकग्रहसम्मार्गानुष्ठानस्य तथाविधज्ञानभेदाधीनत्वात्तद्भेदमप्यभ्युपेत्य प्रतिग्रहं सम्मार्गाकरणे यस्य न क्रियते

७२३।४ तद्विषयं ज्ञानं बाध्येतेत्याह * अथापीति * ज्ञानस्याप्यैक्याभ्युपगमे तु प्रतिग्रहं सम्मार्गविषयत्वं ज्ञानस्य बाध्येतेति विशेषणप्रधानार्थत्वेन व्याख्येयम् । ननु ज्ञानप्रामाण्यस्यानुष्ठानानधीनत्वान्नाननुष्ठानमात्रेण ज्ञानबाधापत्तिरित्याशङ्क्याह *अबाधिते त्विति* प्रतिग्रहं समार्गविषयज्ञानबाधाभावायोन्यो द्वितीयादिः सम्मार्गसंस्कृतो न क्रियते तस्मिन्ग्रहे वैगुण्यलक्षणप्रत्यवायाङ्गीकारापत्तेस्तत्परिहारार्थबाधो ऽभ्युपेतव्य इत्याशयः । सामान्यावगमाद्विशेषानवबोधाच्चेति हेतुद्वयोक्ते संयोगतो ऽविशेषात्प्रकरणाविशेषाच्चेति सर्वधर्मत्वहेतुद्वयोपलक्षणार्थत्वं सूचयन्सिद्धान्तमुपसंहरति * तस्मादिति * सर्वेषां ग्रहाणां सम्मार्ष्टव्यत्वप्रतीतेरित्यर्थः । अविशिष्टं हि लक्षणमिति सूत्रावयवस्यैकत्वविशिष्टं समार्ष्टव्यानां व्यक्तीनां लक्षणं भविष्यतीति शङ्कोत्तरत्वेन व्याख्यानार्थं नन्वितिशङ्काभाष्यं श्रुतस्याप्येकत्वस्याविवक्षितत्वादयुक्तमाशङ्क्याह * नन्विति* विशेषणत्वेनैकत्वस्य विध्यपरिग्रहाख्यायामविवक्षायां विध्यनर्हत्वरूपकारणोक्त्यर्थं नैतादित्यादिभाष्यं तात्पर्यतस्तावद्व्याख्यातुमारभते * अत्रेति * विधिपरिग्रहो ऽनुष्ठेयत्वोक्तो लक्षितः एकत्वस्याप्राप्तत्वाद्विध्यनर्हत्वे ऽपि वाक्यभेदापत्त्या द्रव्ये क्रियायां वा तादर्थ्यबोधाख्यविनियोगानर्हत्वेन पुरुषार्थाननुबन्धित्वाद्विध्यपरिग्रहं वक्तुं विध्यधीनविनियोगोक्तिभ्यां तदर्हत्वे लक्षिते ऽनुष्ठानकाले विधिश्रुत्यधीनः पुरुष इत्यादिवार्तिके ऽन्वयमात्रबोधाख्यविनियोगस्यानुष्ठानोपयोगनिरासादविरोधः। एतदेवोपपादयति * विहित इति * यस्मात् द्रव्यदेवतान्वयाद्यनुमितं ऽप्यप्राप्तत्वेन विध्यनर्हत्वाद्भावनायां च करणत्वेन विनियोगा-

र्हत्वात्तादर्थ्येन विधिना गृह्यते श्रुतो ऽपि वायव्यश्वेतालम्भादिः प्राप्तत्वेन विध्यनर्हत्वात्सक्तवादिहोमश्च सक्त्वाद्यर्थत्वेन विनियोगानर्हत्वात्तादर्थ्येन विधिना न गृह्यते तस्मात्तत्र विधिपरिग्रहो कार्यैः श्रुतैरश्रुतैर्वाक्यार्थैर्विधिर्विनियोगार्हत्वे अपेक्षणीयं इत्यर्थः । तस्मात्प्रप्रकृतिप्रत्ययश्रुत्यभिहितानां पदश्रुतिविनियुक्तानामपि चार्थानां मध्ये को विधिविनियोगाभ्यां गृहीतः को वा नेति चिन्तायां तत्सिद्ध्यै को विधिविनियोगार्हतया समर्पितः को वा नेति विचार्यमित्याह * तादिति * पञ्चम्यर्थे तादित्यव्ययं वाक्यभेदापत्तेरपरिग्रहहेतुत्वसूचनायैकवाक्योक्तिः ग्रहैकत्वस्य विनियोगानर्हग्रहविशेषणत्वेन विधिविनियोगानर्हत्वानिश्चयाद्विचारणा न युक्तेत्याशङ्क्य ग्रहाश्रितेनैकत्वेन सम्मार्गभावनां कुर्यादित्यादिवचनव्यक्त्यन्यथात्वाभ्युपगमेन तस्यापि विधिविनियोगार्हत्वप्रतिभानात्कात्र वचनव्यक्तिर्युक्तेति निर्णयार्थं विचारणा युक्तेत्युक्तम् ।

ननु द्वितीयासंयोगेनैकत्वस्य लोकदृष्ट्या विधिविनियोगानर्हत्वावगमाद्वचनव्यक्त्यन्यथात्वशङ्का न युक्तेत्याशङ्क्याह * मीमांसका हीति*न्यायाभासावगतवचनव्यक्त्यन्तरनिरासेन लोकावगतशक्त्यनुसारिवचनव्यक्त्यवधारणा कार्येत्याशयः । ननु लोकावगतशब्दशक्त्यनुसारात्सम्मार्ष्टीति वर्तमानापदेशस्याविधायकत्वान्निर्निमित्तं विधित्वाचिन्ता नैव युक्तेत्याह * वर्तमानेति * अप्राप्तार्थत्वेनास्य वर्तमानापदेशत्वायोगेन तत्सारूप्ये ऽपि पञ्चमलकारत्वावधारणात्तस्य लोकप्रयोगाभावे ऽपि लिङर्थे लेडिति लिङर्थे स्मृत्या विधौ साधुत्वाद्युक्तेयं चिन्तेत्याशयः । एवमपि भावनामात्रविधायित्वेन स्मृत्युपपत्तेरलौकिकार्थान्तरविध्यन्वयित्वायोगान्न युक्तेत्याशङ्क्याह * केवलेति * एवं च सति भावनाविशेषणत्वेनार्थान्तरस्य विधेयत्वात्तस्यां च विनियोगात्सम्मार्गग्रहतत्संख्यानां मध्ये किं भावनाविशेषणं किं वा नेति विधिविनियोगार्हत्वसिद्ध्यै विचार्यमित्याह * सेति * सम्मार्गस्य करणत्वेन ग्रहस्य च कर्मत्वेन विशेषणत्वाद्भिन्नार्थत्वेन समुच्चयावगतेर्नेयं चिन्ता युक्तेत्याशङ्क्य सम्मार्गस्यापि लोकप्रसिद्धेन धात्वर्थस्य भावनाकरणत्वरूपेण विशेषणत्वमङ्गीकृत्येयं चिन्तेत्युक्ते तथाप्यद्रव्यकसम्मार्गभावनानुष्ठानाशक्तेः समुच्चयो ऽपरिहार्य इत्याशङ्क्य येन केनचिदपि द्रव्येणानुष्ठेयत्वस्योपपन्नताशक्यशब्देनोक्ता दशापवित्रमपि कस्मान्न चिन्त्यत इत्याह * दशापवित्रेति * दशापवित्रमितिशब्दो यस्य केवलदशाग्रन्थ्याख्यस्यार्थस्य स दशापवित्रशब्दो विवक्षितत्वेन निश्चितत्वा- ७२४।१

न्नान्यैः सह विचार्यत इत्युक्ते ग्रहकर्मत्वपक्षे दशापवित्रस्य करणत्वेन भिन्नविशेषत्वात्समुच्चयोपपत्तेरविचार्यत्वे ऽपि सम्मार्गकर्मत्वपक्षे ग्रहस्य कर्मत्वायोगेन करणत्वापत्तेर्ग्रहो वा करणत्वेन भावनाविशेषणं दशापवित्रं वेति विचारो युज्यतैवेत्याशङ्क्य सम्मार्गस्यापि कर्मत्वपक्षे तस्याकर्मकस्यानुष्ठानायोगात्कर्मापेक्षायां तत्कर्मत्वेन ग्रहान्वयोपपत्तेरश्रुतकारणत्वकल्पनायोगाद्दशापवित्रस्य करणत्वाव्याघातोक्त्यर्थं सर्वेषामपि सम्मार्गादिषु कर्मत्वेन विशेषणभूतेषु दशापवित्रशब्दस्य करणत्वरूपार्थतुल्यत्वाच्च दशापवित्रशब्दवाच्यो ऽर्थो न विचार्यते सम्मार्गादीनां करणत्वेनाविशेषणरूपवचनव्यक्तिभेदे तु अयं न विचार्यते अपि तु विचार्यतएवेत्युक्तम् । ग्रहतदेकत्वसम्मार्गाणां च मध्ये ग्रहसम्मार्गयोस्तावत्किं ग्रहएव भावनां विशिनष्टि सम्मार्गएवेति नियोगेन विशेषणत्वं किं वा ग्रहो वा सम्मार्गो वेति विकल्पो यथा ग्रहश्च सम्मार्गश्चेति समुच्चयो ऽथ ग्रहसम्मार्गयोः सम्बन्धः अथ समुदायो वा अथ वा ग्रहविशिष्टः सम्मार्गः सम्मार्गविशिष्टो वा ग्रह इत्यष्टपक्षीनिरूपणा कार्येत्याह॥ ॥ ग्रहादीनां चेति ॥ भावनाविशेषणत्वचिन्ताया विधेयसिद्ध्युपयोगितामाह ॥ विशिषन्निति ॥ सम्मार्गैकत्वयोरप्यष्टपक्षीमतिदिशति ॥ सम्मार्गेति ॥ ग्रहैकत्वयोरप्यतिदिशति ॥ विचार्येति ॥ तथा किं सम्मार्गविशिष्टो ग्रह एव भावनां विशिनष्टि एकत्वमेव वेत्यादिनियोगविकल्पादिरूपाष्टपक्षी किं ग्रहविशिष्टः सम्मार्ग एवैकत्वमेव वेत्यादिरूपा द्वितीया किं एकत्वविशिष्टो ग्रह एव सम्मार्ग एवेत्यादिरूपा तृतीया किं ग्रहविशिष्टं एकत्वमेव सम्मार्ग एव वेत्यादिरूपा चतुर्थी किमेकत्वविशिष्टः सम्मार्ग एव ग्रह एवेत्यादिरूपा पञ्चमी किं ग्रहविशिष्टमेकत्वमेव सम्मार्ग एव वेत्यादिरूपा षष्ठीति पूर्वोक्ताभ्यस्तिसृभ्यो ऽष्टपक्षीभ्यो ऽन्याः षडष्टपक्ष्यो विचार्या इत्याह ॥तथेति॥ नन्वेकविधवचनव्यक्तिप्रतिभासेनैकत्वस्य द्वितीयोक्तिद्वितीयविध्यनर्हत्वविषयलोकदृष्टिप्रतिघाताद्विधेयत्वशङ्कायामपि ग्रहवदुद्देश्यत्वप्रसङ्गात्प्रत्युद्देश्यं वाक्यसमाप्त्या वाक्यभेदोपपत्तेर्विधेयता न युक्तेत्याशङ्क्योपपादनानर्हत्वस्यापि विध्यनर्हत्ववद्विचारमन्तरेणासिद्धेर्यथाविध्यर्हानर्हत्वस्य विवेकाय भावनाविशेषणत्वं विचार्यं तथा ग्रहतदेकत्वयोः संहत्य प्रत्येकं वा सम्मार्गान्वय इति विवेकायोपादेयोद्देश्यत्वे अपि विचार्ये इत्याह॥तथा किमिति ॥ग्रहैकत्वसम्बन्धसमुदायादीनामुद्देश्योपादेयत्वचिन्ताया निष्प्रयोजनत्वेना-

कार्यत्वे ऽपि ग्रहस्योद्देश्यत्वे तदेकपदोपादानानामप्युद्देश्यत्वापत्तिः किमुत संख्याया इति सूचनार्थमेषामिति बहुवचनं कस्मिन्पक्षे संहत्यान्वयः कस्मिन्वा प्रत्येकमित्यपेक्षायामाह * तत्रेति * क्रियाप्राधान्योक्त्येतरयोरुपादेयत्वं सूचितम् । साहित्योपपादनार्थं कृत्स्नक्रियाकरणात् कृतकृत्यत्वं भवत्युभयान्वितताया एव च कार्त्स्न्यसिद्धिरित्युक्ते ऽनुष्ठानावृत्त्यापि कार्त्स्न्यं सेत्स्यतीत्याशङ्क्य गुणानुरोधेन प्रधानावृत्त्ययोगसूचनार्थं सकृदित्युक्तम् । चशब्दो हेतौ । प्रत्येकं वाक्यसमाप्त्युक्त्या प्रत्येकमन्वयो दर्शितः। उद्देश्योपादेयत्वयोरपि विशेषणत्वं द्विचारमन्तरेणासिद्धेरुद्देश्यत्वे तावत्किं ग्रह एवोद्देश्यः सम्मार्गे प्रत्येकत्वमेव वा थ ग्रहो वैकत्वं वा ऽथ ग्रहश्चैकत्वं चाथ ग्रहैकत्वयोः सम्बन्धो ऽथ समुदायो ऽथैकत्वविशिष्टो ग्रहो ऽथ ग्रहविशिष्टमेकत्वमिति विशिष्टाष्टपक्षी विचार्येत्याह * तत्रापि त्विति * उपादेयत्वे ऽपि इहश्यैवाष्टपक्षी विचार्येत्याह * क्रियां चेति * एवं चानेकविधवचनव्यक्तिप्रतिभासे सति द्वितीयासंयोगेनैकत्वस्य विधानोपादानानर्हत्वविषयलोकदृष्टिप्रतिघाताद्विधेयोपादेयत्वशङ्का युक्तेत्याह * एवमिति * वाक्यभेदपरिहारायोपादेयतयेत्युक्तम् । नन्वक्रियाविशेषणस्यं विधातुमशक्तेर्ग्रहे विध्ययोगात्सम्मार्गे च वाक्यभेदापत्तेः। प्राधान्येन द्वितीयाविरोधाच्च गुणत्वेन विध्ययोगान्नैकस्योपादानं विधिर्वा सम्भवतीत्याशङ्क्याह * येन येनेति * तत्रैकस्तावत्पक्ष इत्यापूर्वपक्षवार्त्तिकोक्तेन येन येन प्रकारेण ग्रहे सम्मार्गे चैकत्वस्योपादानं विधिर्वा सम्भवति तंतं प्रकारं ननु सम्मार्ष्टीतिशङ्काभाष्येण द्रव्यविशेषणस्यापि विध्यर्हत्वसूचनादेवैकत्वं सम्मार्गे उच्यतइत्यनेन च सम्मार्गविशेषणत्वाशङ्कनात्पूर्वपक्षयापादयिष्यतीत्यर्थः। यच्छब्दानुसारात्तच्छब्दो ऽप्यावर्तनीयः । उद्देश्यत्वे ऽपि चैकत्वस्य द्रव्यनिरपेक्षस्य क्रियान्वयायोगात्प्रत्येकं वाक्यसमाप्त्यनापत्तेर्देशकालवच्चोद्देश्यत्वमात्रस्य विधेयत्वानापादकत्वाद्विधेयत्वाविरोध इत्याह * यथा चेति * प्रत्येकं वाक्यसमाप्त्यनापत्तिश्चशब्देन सूचिता। कथं तर्हि सिद्धान्तसिद्धिरित्याशङ्क्याह * यां यामिति * कथं दूषयिष्यतीत्यपेक्षायामुपादेयत्वं तावत्संख्याया दूषयति*प्राधान्यादिति*प्रकृतापूर्वसाधनत्वेन यथासंख्यं ग्रहस्योद्देश्यतया संख्यानाकाङ्क्षत्वात्स्वातन्त्र्येण च निष्क्रियत्वायोगेनैकत्वोपपादनस्य ग्रहोपादानाधीनत्वावगमान्नैकत्वोपपादनं शक्यमित्याशयः। विधिरप्यशक्य इत्याह *ग्रहं चेति * ग्रहे वैकत्वं विधीयेत सम्मार्गे वेति विकल्प्य ग्रहे तावदावृत्तिलक्षणवाक्यभेदापत्ते

रशक्यतामुपपादयति* न तावदिति * कथमावृत्त्यापत्तिरित्यपेक्षाया-
माह * एवमिति * विधायकावृत्तिं विना तावत्सम्बन्धद्वयासिद्धिं
७२६।४ विवृणोति * विदधदिति*ग्रहशब्दावृत्तिं विना सम्बन्धद्वयासिद्धिं
विवृणोति *संख्येति* सकृदुच्चारिताभ्यां क्रीणातितद्विधायका-
भ्यां द्रव्यगुणान्वयवद्ग्रहविधायकाभ्यामपि सकृदुच्चारिताभ्यां
सम्मार्गान्वयद्वयसिद्धिर्भविष्यतीत्याशङ्क्याह * ग्रह इति * ग्रहस-
म्मार्गानिष्पाद्यत्वेन सम्मार्गक्रियाया अनिष्पादकानेकानेकार्थवशी-
काराशक्तेरेकत्वान्वयमात्रेणोच्चारणापर्यवसानाद्वैषम्यमित्याशयः ।
कथमावृत्तेर्दोषतेत्याशङ्क्याह * पुनरिति* अनावृत्तस्य च प्रत्ययस्यै
कत्वविध्यशक्तेः सम्मार्गे ऽप्येकत्वविध्ययोगादविवक्षा सिद्धेत्याश
येनाह* सर्वेति* पृथक्भूताभिर्निष्कृष्टाभिर्वचनव्यक्तिभिर्ग्रहान्वयि-
त्वेन विधेयतया विशिष्टस्यैकत्वस्य तु विधातुमशक्यत्वावधारणान्न
विधिना ग्रहणं सम्भवतीत्यर्थः । तच्छब्दो हेतौ ।

ननु सर्वग्रहसम्मार्गे ऽप्येकत्वाविधाने गुणभूतस्यापि सम्मार्गस्य
लाघवार्थं सर्वेषां ग्रहणानन्तरं संहतानां हविरभिमर्शनादितिवत्स-
कृदनुष्ठानापत्तेः प्रत्येकमावृत्त्यर्थत्वेनैकत्वविध्यर्थवत्त्वसम्भवात् ग्र-
हान्तरसम्मार्गानिरासानापादकत्वेनैकत्वविधानस्य निरासो ऽनर्थ-
क इत्याशङ्क्याह * केन चित्विति * एकवेदिदेशे सन्नानां हविषां
सर्वेषामनुलिप्तसाधारण्येन सकृदभिमर्शनसम्भवादावृत्त्यभावे ऽपि
ग्रहणानन्तरं विहितस्य सम्मार्गस्य सर्वग्रहणप्रतीक्षणेन विक्षेपस्या-
शास्त्रीयत्वाद् गृह्यमाणस्य च सोमस्याधोऽवसेकनिरासायानुष्ठे-
यसम्मार्गस्य सर्वग्रहणानन्तरमनुष्ठाने ऽधोवसेकनिरासाशक्तेर्नैष्फ-
ल्यप्रसङ्गादल्पपरिमाणेन च दशापवित्रेण सकृत्सर्वग्रहसम्मार्गाश-
क्तेर्न्यायादेवावृत्तेः प्राप्तायाः प्रयोजनवत्त्वयोगाद् ग्रहान्तरसम्मार्ग-
निरास एवैकत्वविधिप्रयोजनमित्याशयः । ननु संस्कार्यत्वाद्वस्तुतो
ग्रहस्य प्राधान्येन वाक्यार्थत्वेन भावनायाः शब्दतः प्राधान्याद्ग्रह-
तदेकत्वादिविशिष्टसमार्गभावनाविधिप्रसूतेनार्थेन विन्ध्यतरेण ग्रहैक-
त्वविधिः सेत्स्यतीत्याशयेनाशङ्कते*तत्रेति* ग्रहार्थत्वेन विधिं विना
ग्रहस्य संस्कार्यत्वासिद्धेर्विशेषणविशेष्यत्वरूपगुणप्रधानत्वालो-
चनया भावनायाः प्राधान्ये ऽप्युपकार्योपकारकत्वलक्षणगुणप्रधा-
नत्वालोचनया ग्रहाङ्गत्वेनैव विधानादङ्गत्वे ऽपि च राजाङ्गभूतस्य
राजपुरुषस्य समासार्थत्ववद्वाक्यार्थत्वाविरोधाच्छब्दतो ऽपि स-
म्मार्गभावनायामङ्गत्वप्रतीतेर्विध्यन्तरविहितत्वाच्च ग्रहस्याप्रवृत्तप्र-
वर्तनस्वभावविधिविषयत्वायोगात्प्रत्यक्षविध्यन्तरप्राप्तस्यैव च सं-

मार्गसंस्कार्यत्वसम्भवे विशिष्टविधिप्रसूतग्रहविषयार्थविधिकल्पनायोगात् ब्राह्मणादेरिवोपयनसंस्कार्यतया ग्रहस्य सम्मार्गसंस्कार्यतया विध्यनुपपत्तेर्ग्रहाविधानाच्च तथैकत्वविध्यनुपपत्तेर्न ग्रहतदेकत्वयोर्विधिः सेत्स्यतीत्याशयेन परिहरति * यदीति * यास्य पूर्वपक्षिणो ग्रहत्ववदेकत्वस्यापि विवक्षेष्टा सा सेत्स्यतीति सर्वस्यापीत्यपिशब्दापकर्षेण योज्यम् । एवं नैतदस्तीत्यादि तस्मान्नेतत्किं चिदपि कर्तुं विवक्ष्यतइत्यन्तमुत्तरभाष्यं समुदायतात्पर्यतो व्याख्यायावयवशो व्याचिख्यासुर्नैतदिति भाष्यावयवं श्रुतत्वादेकवचनं विशेक्ष्यतीति यच्छङ्कितं तन्नास्तीत्येवं व्याख्यातुमाह * तस्मादिति * तस्मादुपादीयमानपश्वादिवदेवेति वार्त्तिकोक्तोद्देश्यविशेषणस्योपादेयविशेषणतुल्यताप्यत एवायुक्तेत्याह * अत इति * श्रुतत्वमात्रस्य विधिग्रहणाख्यविवक्षाहेतुत्वाभावात्सोमारौन्द्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणामित्यादिभिरुपादेयविशेषणैर्नोद्देश्यविशेषणं तुल्यमित्यर्थः एकत्वं हीत्यादिशङ्कानिरासोपपादनभाष्यं ग्रहं विशेक्ष्यति*क्रियां वेति*विकल्पनिरासार्थत्वेन व्याख्यातुं विकल्पं तावदाह * द्रव्यस्येति * सम्मार्गविशेषणत्वं भाष्ये संशिष्यमाणं धात्वर्थस्यापि भावनाविशेषणत्वाद् गुणानां च परार्थत्वादसम्बन्धः सममत्वात्स्यादित्यनेन न्यायेनैव विशेषणानन्वयाद्धात्वर्थानवच्छिन्नाया भावनाया विशेषणान्वयोक्त्यर्थं न तु सम्मार्गस्यैकत्वान्वयोक्त्यर्थमिति सूचनार्थं क्रिययोरित्युक्तं तथैकत्वं हीत्यादिना द्रव्यएकत्वं नियम्यत इति शक्यमाश्रयितुमित्यन्तं द्रव्यान्वयपक्षनिरासायेत्याह * तत्रेति * अयोगव्यावृत्त्यैकत्वं द्रव्यविशेषणम् अन्ययोगव्यावृत्त्यै वेति विकल्प्याद्यपक्षनिरासार्थत्वेनैकत्वं हीत्यादि न क्रियेतेत्यन्तं भाष्यावयवव्याख्यातुमाह * तद्धीति * द्वितीयपक्षशङ्कार्थं तत्रेत्यादिभाष्यावयवं व्याचष्टे * तत्रेति * एतच्छङ्कानिरासार्थं नैतदिति भाष्यावयवमभिप्रायतो व्याख्यातुमाह * नैतदिति * सामान्यतः प्राप्तावस्यस्य विशेषश्रुतेः परिसंख्यार्थत्वे स्वार्थहानपरार्थकल्पनप्राप्तबाधात्मकदोषत्रयापत्तेः सामान्यप्राप्तितः प्राग्भावे सति विशेषश्रुतेः परिसंख्यौचित्यादसमाप्ते च वाक्ये विध्यपर्यवसानेनैकवाक्यस्थत्वे पदयोः पौर्वापर्ये अपि पदार्थविधिपौर्वापर्यायोगान्नास्या पुनः श्रुतेः परिसंख्यार्थता युक्तेति प्राप्ता अयतद्यति भाष्याद्वर्तमानोक्त्या सूचितं कस्मान्नेह विशेषश्रुतेः सामान्यप्राप्तितः प्राग्भावः सम्भवतीत्याशङ्काह * तत्रेति * विरोधाद्ध्येकस्मिन्वाक्ये प्राप्तिपरिसंख्ये न युक्ते इत्याह * तन्नात्य-

७२७।१

न्तमेवेति * इह त्वेकपदस्थत्वात्सुतरां विरोध इत्याह * न-चेति * श्लोकं व्याचष्टे * प्रातिपदिकेन हीति * अशक्यतामे-वोपपादयति * अन्या हीति * अत्रापीत्यन्वयः एवमपि वा-क्यैक्यात्पदैक्ये को विशेष इत्याह * तत्रैव हीति * प्रातिपदि-कोक्तानामपि सर्वग्रहाणां क्रियान्वयप्राप्तेः कारकविभक्त्यधी-नत्वात् क्षणैक्योक्तिः प्रत्यक्षश्रुतिप्राप्तपरिसंख्यायां च दोषत्र-यपरिहाराशक्तेरानुमानिकप्राप्तिविषयत्वात्परिसंख्यायास्तत्रोपपत्तेरि-त्याह * किं चेति * आनुमानिकप्राप्त्याश्रयतामेवोपपा-दयति * निर्दोषत्वं हीति * कल्पत्वेनानुमानिकस्याप्राप्तावर्थादे-व गर्दभाभिधायिन्यां मन्त्रे पाठक्लृप्ताद्वाक्यान्मन्त्राश्वाभिधानी-विशिष्टादानविधाने सति परिसंख्याया निर्दोषत्वं कल्प्यत इति इत्यु-क्ते विधित्वे निवर्त्तकत्वाख्यपरिसंख्यात्वायोगमाशङ्क्य फलादेवाश्री-यतइत्युक्तं प्रातिपदिकाधीनात्मलाभत्वाच्च प्रत्ययस्य प्रातिपदिकप्रा-
७२८।१ प्तार्थपरिसंख्यातृतात्यन्तायुक्तेत्याह * समानेति * वाक्यपदैक्ययोः परिसंख्यानुपपत्तिहेतुत्वं दृष्टान्तयोक्तम्।ननु मन्त्रस्य चेत्यादिभाष्या-न्मन्त्रस्यादानान्वयाभावेन लिङ्गप्राप्तानुवादायोगादश्वाभिधान्या र-शनाद्ययादाने प्राप्तमन्त्रविशेषणत्वानुपपत्तेर्विधीयमानमन्त्रविशेष-णत्वाद्गर्दभाभिधानीनिवर्त्तकत्वं युक्तम्।एकत्वस्य तु विधीयमानग्रह-विशेषणत्वाभावात्प्राप्तग्रहविशेषणत्वेन च द्वितीयादिग्रहनिवर्तक-त्वे दोषत्रयापत्तेर्न युक्ता निवर्त्तकतेति वैषम्यप्रतीतेरन्याहग्वैषम्या-भिधानव्याख्या न युक्तेत्याशङ्क्य यथाश्रुतभाष्यमुपन्यासपूर्वं दूषयितुमुपक्रामति * यत्विति * मन्त्रादानान्वये यदनेनादत्ते त-दश्वाभिधानीमिति विशेषणसामर्थ्याद्गर्दभाभिधानीतो मन्त्रनिवृत्ति-सिद्धेः स्वार्थहानपरार्थकल्पनाभावे ऽप्यनुवादतः प्राप्तस्यादानमन्त्रा-ङ्गत्वस्य बाधापरिहारान्नेयं वचनव्यक्तिरिष्टा मन्त्राश्वाश्वाभिधाव-चनव्यक्तिप्रदर्शनस्य तावदन्यान्वयवत्वादानान्वयाभावादप्रा-प्तावस्थस्यैव मन्त्रस्याश्वाभिधानान्वयविधानात्प्राप्तबाधपरिहारोप-पत्तेरनेनाश्वाभिधानीमितीयमेव वचनव्यक्तिरिति यद्दर्शितं यच्चादा-ने प्राप्तत्वादिति मन्त्रादानान्वयवचनव्यक्तिनिरासे कारणमुक्तमि-त्यर्थः । प्रश्नपूर्वमिष्टानिष्टवचनव्यक्तिप्रदर्शनस्य तावदयुक्तत्वमुपपा-दयति * कुत इति * । आददातिपरस्य विधायकस्याख्या-तार्थानपेक्षमन्त्राश्वाभिधानान्वय पर्य्यवसानायोगसूचनायाश्वाभि-धान्यामिति सप्तमी । कारणोक्त्ययुक्तत्वमुपपादयति* आदाने चे-ति* नन्वनुष्ठेयस्मृत्यर्थत्वान्मन्त्रस्य कारकस्य च क्रियाद्वारानुष्ठेय-

त्वादादाने प्राक् मन्त्रप्राप्तिः पश्चाद्रशनायामित्याशङ्क्याह* न चेति* क्रियाया अप्यकार्म्मिकाया अननुष्ठेयत्वात्क्रियाकारकसंयोगस्यैवानुष्ठेयत्वावगतेस्तद्द्वारा द्वयोरपि रशनादानाख्ययोः कर्म्मक्रिययोर्युगपन्मन्त्रप्रकाश्यत्वप्रत्यवायान्नास्य रशनाम्प्रति विप्रकर्ष इत्यर्थः।प्रत्युत ब्राह्मणवाक्ये एवेमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यस्मिन्मन्त्रस्याददातिधात्वर्थान्वये सन्निकर्षो ऽश्वाभिधानीनामन्वये विप्रकर्ष इति विवेकादादानरशने प्रति सान्निकर्षविप्रकर्षविशेष उपलभ्यत इत्याह*सुतरामिति*वाक्ये तावद्विशेषं विवृणोति* पदेति*क्रियानिरपेक्षकारकान्वयाप्रतीतेर्न्नामान्वयःपदत्रयापेक्षत्वाद्विप्रकृष्टो धात्वर्थान्वयस्तूश्वाभिधानीपदानर्थक्यप्रसङ्गात्तदन्वयं विना विधापर्यवसाने ऽपि स्वरूपेण तावत्पर्यवस्यतीत्याशयः।विधायकप्रत्यये विवृणोतिप्रत्ययश्चेति।मन्त्रे ऽपि विपरीतविशेषमाह*मन्त्रो ऽपीति*हृग्रहोर्भः छन्दसीति लोकाप्रयुक्तछन्दोविषयभकारयुक्ततया क्लेशावगम्यवाचकत्वेन प्रकृतिभागेनोक्तत्वाद्गृहणास्य न शीघ्रप्रतीतिरित्यर्थः।ननु सामान्यवाचिनो नाश्वरशनाप्रतीतिः शीघ्रम्भवतीत्याशङ्क्याह*न चेति* अपूर्वसाधनीभूतं विशेषएव मन्त्रविनियोगेन सामान्यविनियोगपूर्वकत्वाभावान्न विप्रकर्षइति श्लोकत्रयाशयः ।नन्वादानान्वये लिङ्गप्राप्तरशनामात्रादानान्वयानुवादेनाश्वाभिधानीविशेषविध्यापत्तेस्त्रैदोष्यस्यापरिहार्यत्वप्रसङ्गान्मन्त्रस्याश्वाभिधान्यन्वय एव युक्त इत्याशङ्क्याह* तस्मादिति* यस्मादुभयत्रापि मन्त्रप्राप्तिस्तुल्या तस्मादादानान्वयानुवादो ऽश्वाभिधान्यन्वयविधिश्चेति वैषम्यमयुक्तन्ततश्चानुवादाभावे ऽनुवादासिद्ध्यर्थादानान्वयप्राप्त्यभ्युपगमानिमित्तप्राप्तबाधानापत्तेः न तद्भयेनान्वयनिरासः क्रियानपेक्षकारकान्वयायोगाच्चाश्वाभिधान्यन्वयविधिरयुक्त इत्याशयः । ननु मन्त्रादानान्वयस्य विधेयत्वे ऽश्वाभिधानीपदानर्थक्यापत्तेरश्वाभिधानीविधेये ऽनु वाद्यतावसीयतइत्याशङ्क्याह * किंत्विति * मन्त्रादानवदश्वाभिधान्या अपि विधेयत्वान्न तत्पदानर्थक्यापत्तिर्विशिष्टभावनाविधानाच्चानेकार्थविध्यनापत्तिरित्याशयः । नन्वादानभावनायां मन्त्रस्य लिङ्गादेव प्राप्तेर्न विधिः सम्भवतीत्याशङ्क्याह * नचेति * श्रुत्यैवानुमितया प्राप्तिर्भविष्यतीत्याशङ्क्याह * रूपेति * प्रकरणगम्यसामान्यसम्बन्ध्यपेक्षत्वाद्रूपशब्दोक्तस्य लिङ्गस्य श्रुत्यनुमानविलम्बोक्तौ प्रकरणोक्तिः अतो ऽप्राप्तावस्य मन्त्रस्य दाने विधिः सम्भवतीत्याह * अप्राप्तेति * कथं तर्हि मन्त्राधिकरणे परिसंख्येति सूत्रमित्याशङ्क्याह * परिसंख्येति * एतदेव विवृणो-

ति * प्रयोजनमिति * प्रयोजनमितिगर्दभाभिधानीतो निवर्तनादस्य विधेः फलं नास्तीत्यर्थः। नन्वपदार्थस्याप्यन्यव्यवच्छेदाख्यभेदवाक्यार्थपक्षवद्वाक्यार्थत्वसम्भवात्कस्माद्गर्दभाभिधानीतो मन्त्रनिवर्त्तनाद्वाक्यार्थ एव न भवतीत्याशङ्क्याह*नत्विति*निवृत्तिहेतुनिर्वर्त्तनाख्यशब्दव्यापारलक्षणार्था निवृत्त्युक्तिः प्रवृत्तस्यैव निवर्त्यत्वेनाप्रवृत्तस्य निवर्तनायोगान्न वाक्यार्थो निवर्तनेत्युक्तं कथं प्रवृत्तएव निवर्त्यते इति नियम इत्याशङ्क्याप्रवृत्त एव प्रवृत्तस्य स्वतो प्रवृत्त्यैव निवृत्तकार्थसिद्धेर्निवृत्तिसिद्धे निवर्त्तनानर्थक्यप्रसङ्गादित्युक्तं कथालिङ्गाद् गर्दभाभिधान्यां मन्त्रप्राप्तेः प्रवृत्त एव प्रवर्त्यतामित्याशङ्का पूर्वोक्ता प्राप्तावस्थाविधिस्मरणेन निरस्यति * नचेति * एवं च लिङ्गाच्छ्रुतिकल्पनाभ्युपगमे ऽपि कल्प्यमानैव पुनःश्रुतिः स्यात् न प्रत्यक्षेत्याह * शीघ्रेति * परमार्थतस्तु पश्चादपि श्रुत्यनुमानाद्गर्दभरशनायां मन्त्रप्राप्तिर्न कदाचिदस्तीत्याशङ्क्याह*अश्वेति*शीघ्रापहृते ऽर्थेमन्थरानर्थक्यं लोकप्रसिद्ध्या दृढयति * सो ऽयमिति* ननु लैङ्गिकश्रुत्यनुमानं प्रति बाध एवानन्तर्यात् प्रत्यक्षश्रुतेः फलं स्यान्न तद्व्यवहिता गर्दभरशनातो मन्त्रनिवर्त्तनेत्याशङ्क्यालोचनात्पूर्वं गर्दभरशनातो मन्त्रनिवर्त्तनायां फलतां श्लोकपञ्चकेनोपपाद-
७३०।९ यितुमाह * प्रयोजनं त्विति * प्रयोजनं यदालोच्यते तदा यद्यश्वरशनामात्रे मन्त्रप्राप्तिमानुमानिकी श्रुतिः प्रत्यक्षश्रुतिवत् कुर्यात्ततस्तत्प्रतिबन्धे ऽपि प्रत्यक्षश्रुत्या ऽनर्थक्यापरिहाराद्रशनाद्वये मन्त्रप्राप्तिप्रतिबन्धस्य फलवत्त्वावगतेर्व्यवहितताया अपि गर्दभरशनातो मन्त्रनिवर्तनाया एव परिशेष्यात्फलत्वं सेत्स्यतीत्युक्तं कीदृगालोच्यतइत्यपेक्षायां भवत्येति सार्द्धश्लोकेन लैङ्गिकश्रुतिविरोधस्य प्रयोजनत्वासम्भवे ऽभिहिते लैङ्गिकश्रुतिनिरोधस्याशक्यत्वात्प्रयोजनत्वासम्भवो ऽभिहित इति भ्रान्तिनिवृत्त्यै सत्यमित्यनेन प्रयोजनत्वासम्भवे हेतुरुक्तः किमर्थं त्वरया विहितस्तथेतिप्रश्नस्योत्तरत्वेनैवमर्थं प्रत्यक्षाश्रुतिस्त्वरितेत्युक्तम्। एतदेव सार्द्धश्लोकेन विवृणोति * केवलेति * प्रत्यश्रुत्येवानुमानिक्या केवलायामश्वाभिधान्यां मन्त्रविधिर्न सिद्ध्येदिति कृत्वा यस्मात्प्रत्यक्षश्रुतिराम्नायते तस्मात्पौनरुक्त्यात्प्रत्यक्षा श्रुतिरर्थवती गर्दभरशनातो मन्त्रनिवृत्त्यर्थत्वाच्चेति चकारार्थः चकारार्थोपपादनार्थं पूर्वोक्तं श्रुत्यनुमानं स्मारयति * तस्मादिति * फलतः परिसंख्यायां च त्रैदोष्यं नास्तीति व्यतिरेकमुखेन तावदाह * यदा त्विति * दार्ढ्यायायमेव परिसंख्यासूत्रार्थो ऽस्माभिस्तत्राप्युक्त

इत्याह * तदिदमिति * यथाश्रुतभाष्यदूषणमुपसंहरति * ततश्चेति * इत्यश्वाभिधानीमिति वचनव्यक्त्यन्तरं यदिह वाक्ये भाष्यकृताञ परिसंख्यासूत्रे चोक्तम् । तत्र यथाश्रुतत्वादरो न कार्यः किं त्वादानभावनोत्तरकालीनो ऽरुणैकहायनीवन्मन्त्राश्वाभिधान्योः परस्परनियमोत्तरोपलभ्यवचनव्यक्त्यन्तरोक्तिरादानमात्रान्वयनिरासार्थश्चेत्यादत्तइति वचनव्यक्तिनिरास इत्येवं परिसंख्यासूत्रस्थभाष्यवदिह भाष्यं नेयं प्राप्त्युक्तिश्च सम्भवमात्राभिप्रायेति सूचनार्थो ऽतीवशब्दः । इह पुनरिति वैषम्योक्त्यर्थं भाष्यमर्थोभिधान्या मन्त्रविशेषणत्वाभावे वैषम्यसामञ्जस्यादयुक्तमाशङ्क्य विदेहत्वायोगोक्त्यर्थत्वाद्विधेयविशेषणत्वनिरासस्य विधेयाश्वाभिधान्यैकत्वस्य वैषम्यमुक्तं भवतीत्येवं समाधातुमाह * नचेति * ग्रहस्याविधेयत्वाद्विशेषणो विधिव्यापारायोगोक्तये ऽल्पाच्तरस्यापि ग्रहशब्दस्याविधेयार्थत्वेनानभ्यर्हितत्वसूचनार्थं परनिपातः । यथेति दृष्टान्तभाष्यं तात्पर्यतो व्याचष्टे * यथेति * उपघातकारिश्वादिनिराकरणापरत्वाद्वाक्यस्य श्वादीनां निवार्यत्वेन विधेयत्वात्कुतो नोपघातकारिविशेषणतेत्याशङ्कां प्रश्नपूर्वकं निरस्यति * कुत इति * श्वादीनामनुपयोगित्वान्निवारणासंस्कार्यत्वसूचनाय रक्ष्यत्वोक्तिः । अन्नाद्युपघातप्रतिबन्धार्थत्वात् श्वादिनिवारणायाः काकादिभक्षणेवोपघातस्य तुल्यत्वात्तस्यापि वारणावसीयत इत्याशयः । व्यवहारेणोपघातस्य प्राधान्यं सूचयितुं वृद्धश्लोकम्पठति*तथा चाहेति* संख्यामात्राविवक्षायां त्विदमुदाहरणं न युक्तमित्याशङ्क्ते * नन्विति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति* क्व तर्हीदमुदाहरणं युक्तमित्याशङ्क्याह*चमसेष्विति *चमससम्मार्गस्य पूर्वपक्षत्वेनास्थायित्वात्तत्रोदाहरणानुपपत्तिमाशङ्क्य स्थायिनि सिद्धान्तेपीदमुदाहरणं युक्तमित्याह * स्थितेति * क्वेत्यपेक्षायामाह *पशुप्रकरणाइति * संख्यामात्राविवक्षायान्तर्हि किमुदाहार्यमित्यपेक्षायामाह *इह त्विति * एतदेव विवृणोति * वृषलैरिति * न चात्रेति भाष्यविधायकाभावादपि ग्रहैकत्वान्वयविधिर्न सम्भवतीत्युक्ते सम्मार्ष्टीतिशब्दो ग्रहैकत्वान्वयस्य विधायको ऽस्तीत्याशङ्कार्थं नन्वितिभाष्यं संमृजिपरस्य ग्रहसम्मार्गान्वयविधायित्वेन ग्रहैकत्वान्वयविधायित्वायोगादयुक्तमाशङ्क्यैकत्वान्वितस्य सम्मार्गान्वयप्रतीतेरन्वयद्वयविधायकत्वेन व्याचष्टे * नन्विति * न हीत्यादि तथा द्वितीयस्यापीत्यन्तम्भाष्यन्तात्पर्यतोव्याचष्टे * नेति * नञा न हीत्ये-

तावन्निरासप्रतिज्ञानार्थत्वेनच्छित्वा पदश्रुत्या ग्रहोद्देशेन सम्मार्गविधिर्व्यवगतेः श्रुतिविरोधाद्वाक्येन ग्रहैकत्वान्वयविधिर्न सम्भवतीति हेत्वर्थत्वेनैतदित्यादिश्रुतीत्यनेन व्याख्यातः (न विरोधशङ्कानिरासार्थं श्रुत्यसम्भवं चेति भाष्यावयवव्याख्यातुं न हीत्युक्तम् । अत इत्यादिभाष्यशेषस्त्वत्रेत्यनेन व्याख्यातः ) ननु सम्मार्ष्टीतिशङ्काभाष्यसूचितविशेषणविशेषणस्यापि विधेयत्वोपपत्तिं दूषयितुमाविधीयमानविशेषणतोक्तेति सूचनार्थं भाष्यव्याख्यामध्ये तत्रैकस्तावत्पक्ष इत्यादिपूर्वपक्षवार्तिकोक्तां ग्रहविशेषणस्याप्येकत्वस्य विधेयत्वोपपत्तिं दूषयितुमनुभाषते *यत्त्विति* शुद्धो ग्रहः क्रियाविशेषणम्, एकत्वविशिष्टो वेति विकल्प्याद्ये तावद्ग्रहविशेषणस्य क्रियानन्तर्गतौ विधेयता न युक्ता विशेषणविशेषणस्य क्रियानन्तर्गतौ विशिष्टस्य क्रियान्तर्गत्ययोगात्संख्यायाः क्रियाविशेषणत्वाभावे शुद्धेनैव ग्रहेण क्रियाविशिष्टत्वापत्तेर्विशिष्टत्वेन विशिष्टत्वायोगादेकत्वविशिष्टग्रहविशिष्टसम्मार्गविध्यन्यथानुपपत्तेरर्थापत्त्यमन्तरेणैकत्वविधानमिति यदुक्तं तदयुक्तमित्याशयः । न त्वेकत्वविशिष्टस्यापि ग्रहस्य क्रियाविशेषणत्वे द्रव्यविशेषणं यावद्विधिप्रत्ययो न गच्छतीत्येवमेकत्वविधेर्निराकर्तुं शक्यत्वात्पूर्वपक्ष्यनुक्तशुद्धग्रहविशेषणत्वपक्षे दूषणोक्तिरनर्थिकेत्याशङ्क्य विशिष्टस्य ग्रहस्य क्रियाविशेषणत्वपक्षे ग्रहविशेषणस्यैकत्वस्य विधेयत्वनिरासाशक्तिमाह *यदीति*न केवलं विशिष्टस्य विशेषणत्वान्यथानुपपत्त्यैकत्वं पूर्वपक्षे किं तु क्रियाया विशिष्टेन ग्रहेण विशेष्यत्वान्यथानुपपत्त्यापीत्येवमित्यनेनोक्तम् । भावनाविशेषणतैव तर्हि निराकार्येत्याशङ्क्यैकत्वं सम्मार्गे उच्यतइत्यादिभाष्यव्याख्यानवेलायां निराकरिष्याम इत्युक्तम् । श्लोकोक्तस्य दूषणस्यार्थवत्तामुपपाद्य श्लोकं व्याचष्टे * शुद्धेति * विशिष्टत्वानिरासस्य प्रकृतोपयोगमाह * तत्रेति * संख्यापि ग्रहमात्रेण संबद्धेत्येतदुपपादयति*नहीति* भावनानन्वितस्य विध्यशक्तेरिति हेतुसूचनार्थं भावनानन्वितत्वे तच्छब्देनोक्तं भावनापि ग्रहमात्रेणेत्येतदुपपादयति * नचेति * ग्रहस्यैकत्वान्वितस्यैव श्रुतत्वात्कथं तथाभूतस्याग्रहणमित्याशङ्क्य ग्रहस्य स्वरूपेण विशेषणभूतेन व्यवहितत्वात्संख्याया भावनान्वयित्वेन नालोचयतीत्युक्तम् ।

ननु ग्रहस्य भावनाविशेषणत्वे सति तुल्यकक्षत्वाद्विशेषणान्तर्भूतैकत्वान्तरायकत्वस्यासंस्कार्यत्वेन तु ग्रहस्य प्राधान्याद्विशेष्यत्वावगतेर्भावनयैवैकत्वेनाप्यविरुद्धं विशेषणमित्याशङ्क्याह *
७३३।१ नापीति * एकत्वस्य ग्रहविशेषणत्वे भावनाविशेषणत्वस्याप्यपरि-

हार्यत्वापत्तेस्तस्य चोपरिष्टान्निराकरिष्यमाणत्वाद्भावनां प्रति विशेष्य-भूतस्यापि ग्रहस्य नैकत्वविशेषणमित्येकत्वं विशेषणमिति व्यवहितानुषङ्गेण योज्यं कथं ग्रहविशेषणमिति व्यवहितानुषङ्गेण योज्यं कथं ग्रहविशेषणत्वे भावनाविशेषणत्वापत्तिरित्याशङ्क्याह * न हीति * भावनानन्वितमेकत्वं विधातुमशक्यत्वान्न ग्रहं विशेष्टुं शक्नोतीत्यविशिष्टमित्यकारप्रश्लेषेण व्याख्येयम् । विशेषणस्य विधेयत्वनिरासमुपसंहरति * तस्मादिति * अयं चेति भाष्यं व्याख्यातुं चशब्दसूचितम् विधीयमानविशेषणत्वोक्त्याक्षिप्तं वाक्यभेदाख्यं तावद्दोषमाह * तथा सतीति * क्रियासाधनत्वेन विधीयमानस्य द्रव्यस्य निर्विशेषणस्याशक्योपादानत्वेन साध-नत्वायोगाद् विशेषणस्यापि क्रियासाधनत्वोपपत्तेर्विधीयमानवि-शेषणत्वे सत्येकत्वस्य भावनाविधिना ऽऽकाङ्क्षितत्वाद्युज्येताक्षेपः अ-नुवाद्यस्य तु यथाप्राप्तग्राह्यत्वेन विशेषणानाकाङ्क्षणाद्भावना-विधिना द्रव्यविशेषणाक्षेपानुपपत्तेरविधीयमानद्रव्यस्य विशेषण-विधौ वाक्यभेदापत्तिरित्यविधीयमानविशेषणोक्त्या ऽऽशयो ऽनेन व्याख्यातः । विधीयमानस्य सम्मार्गस्यानूद्यमानग्रहविशेषकत्वा-योगाच्छुद्धस्य ग्रहस्यैकत्वविधावपि सर्वग्रहसम्मार्गो ऽपरिहार्य इत्येवमर्थत्वेनायं चेति भाष्यं व्याचष्टे * अभ्युपेत्यापि त्विति * प्रसिद्धसम्बन्धो हि शक्नोति लक्षयितुमित्यत्रत्यभाष्योक्तोपपत्ति-रनागतावेक्षणन्यायेन विशेषणं हि प्रसिद्धं भवति न च विधीयमा-नावस्थः क्रयः प्रसिद्ध इत्यरुणाधिकरणवार्त्तिकेनोक्तेति सूचनार्थं न हीत्युक्तम् । द्रव्यविशेषणत्वपक्षे विधिग्रहणनिरासमुपसंहर-ति. * तस्मादिति * द्रव्यविशेषणभूतस्य तावदित्यन्वयः । क्रियाविशेषणत्वेनैकत्वस्य विधिग्रहणाशङ्कार्थमथेति भाष्यं व्या-चष्टे * अथेति * भावनां प्रति प्राधान्येन गुणत्वेन वैकत्वविधिरिति विकल्प्योभयथासम्भवप्रतिज्ञार्थं तत्रापीति भाष्यं व्याचष्टे * त-थापीति * आद्यकल्पासम्भवोपपादनार्थं न तावदिति भाष्यं व्याचष्टे * तत्रेति * पश्वेकत्वसाधनत्ववद्ग्रहैकत्वस्य संस्कार्यत्वं द्रव्यद्वारा भविष्यतीत्याशङ्कानिरासार्थं न चेत्यादिभाष्यं व्याचष्टे * न चेति*एकत्वस्य द्रव्यादन्यत्वात्। द्रव्याश्रिते संस्कारे कृते नै-कत्वं संस्कारः कृतो भवतीत्यनेनोपकरोतीत्यन्तभाष्यावयवे व्या-ख्याते चक्षुर्वृत्त्यधिष्ठाने कृतस्य संस्कारस्य तदाश्रितवृत्त्युपकारि-त्ववद्ग्रहे कृतस्य तदाश्रितैकत्वोपकारित्वं भविष्यतीत्याशङ्कानि-रासार्थं केन चिदित्यवयवं च व्याख्यातुं ग्रहस्येत्युक्तम् । एवं सति

यथा चक्षुर्वृत्त्यर्थो ऽपि संस्कारो ऽधिष्ठाने वैद्यैर्विधीयते तथैकत्वं प्रयोजनतया द्वारीकृत्य ग्रहस्यैव विधीयते ततश्च पुनः श्रुतित्वान्नैष्फल्यापत्तिरित्यर्थः । एकग्रहसंस्कारस्यान्यतो प्राप्तेरपौनरुक्त्यमाशङ्क्यानुष्ठानेत्युक्तम् । एकत्वसंस्काराविधाने ऽप्येकैकस्य ग्रहस्य संस्कार्यत्वात्संस्कार्यद्वयस्य वान्योन्यविशेषणविशेषणविशेष्यत्वायोगेनैकत्वस्य ग्रहविशेषणत्वायोगात् । द्वितीयादिनिवर्त्तकत्वानुपपत्तेर्नैकत्वविधितो ऽनुष्ठानान्यथात्वासिद्धिरित्याशयः । पश्वेकत्वस्य तु क्रियासाधनत्वेन विधानात्साधनानाञ्चैकक्रियावशीकारनिमित्तान्योन्यविशेषणविशेष्यत्वोपपत्तेर्वैषम्यं वक्तुं पश्वेकत्ववद्ग्रहैकत्वस्य द्रव्येण सह विशेषणविशेष्यत्वरूपान्वयाभावोक्त्यर्थत्वेनान्यस्योक्तिर्व्याख्येया । द्वितीयकल्पस्योपन्यासपूर्वमसम्भवोपपादनार्थमथेत्यादि भाष्यं व्याचष्टे * एवमिति * यद्यपीति भाष्यं शङ्कोत्तरत्वेनावतारणपूर्वं व्याचष्टे * कथमिति * क्रयाङ्गैकहायनीद्रव्यपरिच्छेदद्वारा ऽऽरुण्यं गुणो ऽपि क्रयाङ्गमिष्यते ग्रहस्य तु निष्फलसम्मार्गे प्रत्यङ्गत्वायोगान्न तत्परिच्छेदद्वारैकत्वस्य संमार्गाङ्गता युक्तेत्यर्थः । यदीति भाष्यावयवं व्याचष्टे * अनङ्गमिति * नन्वित्याशङ्काभाष्यं व्याचष्टे * नन्विति * ग्रहस्य होमनिर्वृत्त्यर्थत्वात्सम्मार्गनिर्वर्त्तकत्वायोगमाशङ्क्य प्रासङ्गिकोक्तिः । क्रियाङ्गभूतेन गुणेन परिच्छेद्यत्वस्य क्रियाङ्गभूतद्रव्यधर्मत्व दर्शनाद्ग्रहस्यानङ्गत्वेन परिच्छेद्यत्वायोगमाशङ्क्यानङ्गमपि साधनत्वे नोपकारिग्रहद्रव्यं विशिंषदेकत्वं सम्मार्गस्योपकरिष्यतीति परिहारार्थन्तच्चेति भाष्यावयवं व्याचष्टे * प्रधानेति * एतदुपपादनार्थत्वं नावमिकदृष्टान्तद्वयोक्तेः सूचयितुमाह * न हीति * न शेषमेवाश्रितः शेष उपकरोतीति नियमः किन्तूपकारिमात्राश्रित इत्यर्थः । गुणस्य साक्षात्क्रियासाधनत्वाभावेनाङ्गपरिच्छेदद्वारैवाङ्गत्वावसायान्नानङ्गाश्रितस्याङ्गता युक्तेत्याशङ्क्याह * शेषत्वं त्विति * साक्षादेवाङ्गत्वे श्रुत्यावगते पश्चात्तत्सिद्ध्यै द्वारकल्पनाद्यथासम्भवमेव द्वारकल्पनोचितेत्याशयः । अत्रेत्यादि नैतत्किञ्चिदपि कर्तुं विवक्ष्यत इत्यन्तं परिहारभाष्यं सङ्क्षेपतो व्याचष्टे
७३४।१ * सिद्धान्तेति * न ब्रूम इति भाष्यावयवव्याख्यार्थे वस्तुवृत्त्यालोचनया ग्रहस्य प्राधान्यक्रियाङ्गगुणपरिच्छेद्यत्वरूपानेकार्थत्वोपपत्तिरुक्ता । किन्तर्हीत्यादि न चैतदेवमित्यन्तावयवव्याख्यार्थे विधिशब्दाशक्त्युक्तिः । सम्बन्धद्वयविधौ वाक्यभेदापत्तेर्द्रव्येण सम्मार्गेण चैकवचनस्यासम्बन्ध इत्युपसंहारार्थं तस्मादित्यव-

एवं ग्रहस्यैकत्वान्वय एव त्याज्यो न सम्मार्गान्वय इत्यानर्थक्यादयुक्तमाशङ्क्य ग्रहैकत्वान्वयस्य परपदार्थत्वेन व्यवहितत्वात्सम्मार्गञ्च प्रति गुणत्वात्त्याज्यत्वोपपादनायोभयत्वस्य हविःशब्देन व्यवहितत्वाद्विशेषणत्वेन च गुणत्वात्त्याज्यत्वोक्त्यर्थमात्र्याधिकरणभाष्यं दृष्टान्तत्वेन पठितम् । एकत्वस्य क्रियाविशेषणत्वपक्षे विवक्षानिरासभाष्यमाक्षेप्तुमारभते * न त्विति * कस्मिन्प्रकारेऽयमाक्षेप इत्याक्षेपविषयं प्रश्नपूर्वं विवृणोति * कथमिति * प्राधान्येन क्रियान्वयपक्षे तावदमूर्त्तत्वेनाशक्यसंस्कारत्वं प्रातिपदिकार्थस्यापीष्टप्राधान्यविघातकारित्वाद्दूषणमाह * यत्तावदिति * जातेः साक्षात्संस्काराशक्तेः प्रतिमाद्वारा विष्णुपूजावद्व्यक्तिद्वारा संस्काराभ्युपगमेन परिहारः संख्यायामपि तुल्य इत्याह * अथापीति * जातेर्व्यक्तौ समवायाद्व्यक्तौ कृतस्य संस्कारस्य जातावनौपचारिकतापि संख्यायां तुल्येत्याह * अथेति * संस्कारस्यापूर्वसाधननिवेशित्वाद् द्रव्यस्यैव चापूर्वसाधनत्वाद् ग्रहशब्देन लक्षणया द्रव्यस्यैव संस्कारविध्यभ्युपगमेनापि परिहारः संख्याया द्रव्योपादानोत्तरकालमव्यापारात्प्राक् व्यापृतयाश्चोपयोक्ष्यमाणसंस्कारानपेक्षत्वात्सम्मार्गस्य चोपयुक्तसंस्कारत्वाभावादेकवचनस्यापि द्रव्यलक्षणत्वापत्तेः संख्यायामपि तुल्य इत्याह * तथेति * जातेर्द्रव्याव्यतिरेकान्मूर्त्तत्वमाश्रित्य साक्षात्संस्काराभ्युपगमेनापि परिहारः संख्यायां तुल्य इत्याह * अथेति * यदपि न चेति भाष्येण द्रव्यादन्यत्वात्संख्याया द्रव्यद्वारा संस्कार्यत्वे न सम्भवतीति दूषणमुक्तं तदपीष्टविघातकारित्वाद् दूषणमित्याह * यदपीति * जातेः संस्कार्यत्वानभ्युपगमान्नेष्टविघातापत्तिरित्याशङ्क्य लक्षणाभयादेकवचनस्य द्रव्यलक्षणार्थत्वानभ्युपगमे नैकत्वस्य संस्कार्यत्वपक्षे प्रातिपदिकस्यापि द्रव्यलक्षणार्थत्वायोगमापाद्य तुल्यत्वोक्तिरिति त्वत्पक्षोक्त्या सूचितम् । अस्त्वेव ग्रहप्रातिपदिकस्य व्यक्तिवाचित्वान्न मत्पक्षे जातेः संस्कार्यत्वापत्तिरित्याशङ्क्याऽऽकृत्यधिकरणविरोधेन निरस्यति *अथेति* विशिष्टाकारलक्षणोपाधिवशाद्भिन्नासु ग्रहव्यक्तिष्वेकशब्दप्रयोगोपपत्तेर्न ग्रहत्वजातिरस्तीत्याशङ्क्याह * न चेति * प्रतिव्यक्त्याकारवैलक्षण्यान्नाकारोपाधिकव्यक्तिवाचिता युक्तेत्यर्थः । आकारस्यापि संस्थानावयवसन्निवेशपरपर्यायस्य परिमाणविशेषात्मकतया गुणत्वेनामूर्त्तत्वाज्जातितुल्यत्वापत्तेर्नाकारवाचित्वशङ्कोचिता प्रत्येकं गृह्यमाणानान्तद्वदेव संस्कारे सतीति

च वक्ष्यमाणवार्त्तिकालोचनया ग्रहशब्दस्य कर्मव्युत्पत्त्या गृह्यमाणसोमवाचित्वावसायाद्देवतान्वितद्रव्यवाच्यैन्द्रवायवादिशब्दसामानाधिकरण्यादपि सोमवाचित्वस्यैव न्याय्यत्वाद् ग्रहादिसोमपात्रवाचित्वशङ्कानिरासंसामर्थ्यप्रदर्शनायेदं वार्त्तिकं यदपि केन चित्प्रकारेण नोपकरोतीति विशेषणेनैकत्वार्थमपि ग्रहे एव सम्मार्गस्य कार्यत्वात्तस्य च सम्मार्गविधिनैव सिद्धेरेकत्वे सम्मार्गविध्यानर्थक्यं सूचितं तदप्यनुभाषणपूर्वं परिहरति * यत्त्विति * संस्कार्यत्वे ऽप्येकत्वस्य स्वतन्त्रस्यासंस्कार्यत्वेन ग्रह विशेषणत्वावसायादर्थाद् द्वितीयादिग्रहनिवृत्त्यवगतेरेकग्रहसंस्कार-
७३५।५ विधिरित्याशयः । श्लोकं व्याचष्टे *अयमेवेति * पृथक्प्रयोजनोक्त्या भेदोक्तिः प्रयोजनभेदार्थत्वेन व्याख्याता । गुणत्वप्रतिज्ञायास्त्वथैकत्वं सम्मार्गं प्रति गुणभूतमिति भाष्यकृतायाः प्रणीताधर्मदृष्टान्तेन भाष्यकृतैवोपकार्याश्रिततयोपपादितत्वादयुक्तं दूषणमित्याह * गुणत्वेति * क्रियोपकार्याश्रितेनैवाङ्गेन क्रियाया उपकर्त्तव्यमित्यस्यापि नियमस्याप्रामणिकत्वाच्छेषाश्रितत्वनियमः सुतरामप्रामाणिक इत्याह * मन्देति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति* किमर्था सम्बन्ध्यपेक्षाश्रितत्वे इत्याशङ्क्यासम्बद्धैः सम्बद्धानां क्रियासम्बन्धायोगादित्यसम्बन्धिनो गुणताप्युपकार्याश्रितत्वायोपेक्षणीयेत्याशङ्क्याह * न त्विति* प्रधानस्याप्युपकारिता तावद्भाष्यकृतैवोक्ता ऽभ्युपगम्यापि त्वनुपकारितामुपकार्याश्रितेनैवोपकर्त्तव्यमिति नियमाभावात्सम्बन्धिगतयोः शेषशेषित्वयोर्गुणस्य क्रियोपकारित्वापादकानापादकत्वविशेषाभावोक्तिः । ननु साधनस्य निःसंख्यस्योपादातुमशक्यत्वादनुपात्तस्य च साधनत्वायोगात्परिच्छेदकसंख्यापेक्षत्वेन संख्यान्वयो युक्तः प्रधानस्य तूपात्तस्यैव संस्कारान्वयेनोपादानार्थसंख्यानपेक्षत्वान्न संख्यान्वयो युक्त इत्याशङ्क्याह * यथा चेति * होमायोपात्तस्यापि ग्रहस्य संस्काराय किं संख्यस्योपादेयतेत्यपेक्षोपपत्तेः प्रधानस्यापि संख्यान्वयो युक्त इत्याशयः । ननु यावदुपात्तं तत्सर्वं सम्मार्ष्टव्यमिति नियमाभावेन सम्मार्गान्वये ऽनवगतसंख्यत्वाद् ग्रहस्य संख्यापेक्षणे ऽपि सम्मार्गस्य प्रकृतापूर्वसाधनीभूतग्रहाविषयतया ज्ञातत्वेनानवगतसंख्ये ऽपि ग्रहे ऽनुष्ठातुं शक्यत्वात्संख्यायाः क्रियोपकारित्वानुपपत्तेः । क्रियाङ्गत्वं न सम्मार्गस्य प्रकृतापूर्वसाधनीभूतग्रहविषयतया ज्ञातत्वेनानवगतसंख्ये ऽपि ग्रहे ऽनुष्ठातुं शक्यत्वात्संख्यायाः क्रियोपकारित्वानुपपत्तेः । क्रियाङ्गत्वं न सम्भवतीत्याशङ्क्याह * ए-

तावच्चेति*क्रियाया अनुष्ठानानौपयिकत्वे ऽपि सस्कार्यपरिच्छेदद्वारा क्रियान्वयांत्तदङ्गत्वसम्भवः । प्रधानापेक्षयोः क्रियासम्बन्धकारणे.क्त्या सूचितः । अभ्युपगम्यापि प्रधानसंख्यायाः साक्षात्क्रियानुपकारितां क्रियाङ्गत्वं सम्भवतीत्युक्तम। वस्तुतस्तु प्रधानमुपकुर्वन्त्याः संख्यायाः प्रधानोपकारिण्याः साहाय्यकरणात्साक्षादपि संख्यायाः क्रियाङ्गता वक्तुं शक्येत्याह * अपि चेति * श्लोकं व्याचष्टे * क्रियया हीति * फलसम्बन्धात्स्वामियुक्तं प्रधानस्येत्यत्र यजमानसंस्काराणां प्रधानाश्रितानामपि क्रियाङ्गत्वस्य वक्ष्यमाणत्वाद् ग्रहसंख्यायामपि च तन्न्यायसाम्यात्प्रधानाश्रितायाः क्रियाङ्गता न विरुद्धेत्याह * यजमानेति*यापि वस्तुशक्त्यालोचनया प्रधानाश्रितस्याप्येकत्वस्य क्रियाङ्गत्वसम्भवे ऽपि सम्बन्धद्वयविधौ वाक्यभेदापत्तेरेकत्वस्याविधेयतात्रोच्यत इत्यादिभाष्येणोक्ता सा पश्वेकत्वस्याप्यविधेयत्वापादकत्वेनेष्टविघातकरत्वादयुक्तेत्याह * एवमिति * अविशिष्टतामुपपादयति * तत्रापि हीति * ननु पशोरप्राप्तत्वेन विधेयत्वात्तद्द्वारा लिङ्गसंख्ययोः क्रियाविशेषणत्वेन विधेयत्वोपपत्तेर्विशिष्टविधानाद्वाक्यभेदः परिहर्तुं शक्यः प्रहस्य तु प्राप्तत्वेनाविधेयसंख्याद्वारत्वानुपपत्तेः। स्वतन्त्रस्य च गुणस्य निष्क्रियत्वेन क्रियासाधनतया विध्ययोगाद् ग्रहसंख्याभ्यां विशिष्टायाः क्रियाया विध्यनुपपत्तेर्ग्रहोद्देशेन सम्मार्गं विधाय निवृत्तव्यापारस्य विधायकस्यावृत्तिं विना संख्याविधायित्वायोगादपरिहार्यो वाक्यभेद इत्याशङ्क्याह * अथापीति * स्वरूपेण होमाङ्गत्वेन च प्राप्तस्य सम्मार्गसंस्कार्यत्वेनाप्राप्तेर्विधेयत्वसम्भवाद्विशिष्टविधानादवाक्यभेदो ऽत्रापि तुल्य इत्यर्थः। ग्रहैकत्वस्योद्देश्यविशेषणत्वान्नोपादेयविशेषणपश्वेकत्वतुल्यतेत्याशङ्क्याह * तादिहेति * उद्देश्यस्यापि विधिस्पर्शाद्विशेषणविवक्षा सम्भवतीति वक्ष्यमाणो ऽभिप्रायः।उपहासायान्यथा वेत्युक्तम। भिन्नप्रसरत्वेनोद्देश्योपादेययोर्युगपदेकक्रिया।विशेषणात्वायोगाद्युगपदुभयविशिष्टक्रियाविध्यशक्तेर्वाक्यभेदो ऽपरिहार्य इत्याशङ्क्याह * अपि चेति * ग्रहोद्देशेनैकत्वविशिष्टक्रियाविधिनैवोभयविशिष्टक्रियाविधिनैवोभयविशिष्टक्रियाविधिसिद्धेर्न वाक्यभेदापत्तिरित्याशयः । अविवक्षापादकोद्देश्यपदोक्तत्वेनाविवक्षितादेकत्वात्पदान्तरोक्तत्वेन दशापवित्रादेर्विशेषमाशङ्क्याह * यत्त्विति * नोद्देश्यपदमाविवक्षापादकमिति वक्ष्यमाण एवाशयः । किञ्चिद्वैलक्षण्यमात्रेणातुल्यन्यायत्वाभ्युपगमे तुल्यन्यायविषयत्वाभावान्न

७३६।२ (beside line "एवमिति * अविशिष्टतामुपपादयति")

क्वचिदनुमानाङ्गं दृष्टान्तो नाप्युपमानव्यवहाराङ्गमुपमा स्यादित्यर्थः। विशेषालोचने चैकपदोक्तत्वाच्छीघ्रप्रतीतेर्वरङ्ग्रहैकत्वमेव विवक्षितं स्यादित्याह * किञ्चेति * उद्देश्योपादेययोर्विशेषणाविवक्षायामविशेषमुपसंहरति * तस्मादिति * उद्देश्यस्याविधेयत्वात्तद्विशेषणस्य विधेयत्वायोगमाशङ्क्याह * अस्ति हीति * ग्रहान्वयित्वेन सम्मार्गे विधीयमाने स्वरूपेणाविधीयमानोऽपि ग्रहः सम्मार्गान्वयिरूपेण विहितो भवतीत्याशयः । इममेवाशयमाशङ्कापूर्वं विवृणोति * अथेति * ग्रहस्य प्रकृतापूर्वसाधनत्वात्संस्कार्यत्वावगतेर्द्वितीयासंयोगावगतसंस्कारत्वसम्मार्गान्वयप्राप्तया विध्यनर्हत्वे पशोरपि द्रव्यत्वेन साधनार्हत्वावगतेः साधनापेक्षयागान्वयप्राप्तया विध्यनर्हत्वोपपत्तिरिति पर्यनुयोगसाम्यमाह* अथ ज्योतिष्टोमे इति* पशोः सामान्यतः साधनापेक्षक्रियान्वयप्राप्तावपि यागाख्यक्रियान्वयाप्राप्तिर्विध्यर्हत्वे ग्रहस्यापि सम्मार्गाख्यसंस्कारवि-
७३७।२ शेषान्वयाप्राप्तेर्विध्यर्हत्वोपपत्तिरिति परिहारसाम्यमाह * अथासाविति * सम्मार्गस्य ज्योतिष्टोमान्तर्गतत्वात् ज्योतिष्टोमान्तर्गतसन्निहितग्रहोद्देशेन विध्युपपत्तेर्ग्रहस्य सम्मार्गान्वयप्राप्तिसम्भवाद्विध्यनर्हत्वे यागस्यापि लोकान्तर्गतत्वाल्लोकान्तर्गतत्वापादितसन्निधानपशूद्देशेन विध्युपपत्तेः । पशोरपि यागान्वयप्राप्तिसम्भवाद्विध्यनर्हत्वापत्तिरिति परिहाराशक्तिसाम्यमाह * अथ सम्मार्गस्येति *सन्निध्यविशेषः शक्यं हीत्यनेनोक्तः । यः पशुरिति लोकप्राप्तपशुस्वरूपानुवादेऽपि यागानुष्ठानापाद्यत्वलक्षणोपादेयत्वोपपत्तेर्विधेयत्वं युक्तं ग्रहस्य तु संस्कार्यत्वेनानुपादेयत्वान्न युक्ता विधेयतेति वैषम्यमाह*उद्दिश्यमानत्वात्त्विति * विध्यनुवादशब्दौ कर्मव्युत्पन्नौ । चत्वारोऽपि विध्यादिशब्दा भावप्रत्ययाध्याहारेण व्याख्येयाः । अत्यन्तभेदमेवान्वयव्यतिरेकाभ्यामुपपादयति * अथाहीति * देशकालयोरनापाद्यत्वेनोद्देश्यत्वसद्भावे ऽप्यप्राप्तत्वेनानुवाद्यत्वाभावात्पश्वालम्भस्य वा चाद्यत्वलक्षणोपादेयत्वसद्भावे ऽपि शमिता पशुङ्कण्ठे गृह्णातीति ग्रहणविधिप्राप्तत्वेन विधेयत्वाभावाद्विधेयानुवाद्यत्वयोरुद्देश्योपादेयत्वयोरपि भेद इत्यर्थः । ननु देशकालयोरुद्देश्यत्वे ऽपि अङ्गत्वेन क्रियाविशेषणत्वाद्विधेयत्वोपपत्तिर्ग्रहस्य तु प्राधान्याद्विशेषणत्वानुपपत्तेर्विशेषणत्वाभ्युपगमे चैकत्ववद्ग्रहस्याप्यङ्गत्वापत्तेर्न युक्ता विधेयतेत्याशङ्क्याह * तस्मादिति * प्रधानस्यापि राजवद्विशेषणत्वाविरोधाद् ग्रहस्यापि क्रियाविशेषणत्वेन विधेयत्वोपपत्तेः । तत्परिच्छेदद्वारा क्रियासाधनत्वेनैकत्व-

विधिसम्भवो दृष्टान्तव्याजेनोक्तः । अविरोधोपपादनाद्यार्थादित्युक्तम्। यदा च ग्रहस्य विधेयतोपपादिता तदा तदेकपदोपात्तत्वाद्येकत्वस्याविधेयता न युक्तेत्याह * किञ्चेति * कर्मव्युत्पन्नौ विध्यविधिशब्दौ। पूर्वार्द्धं व्याचष्टे * एकस्मिन्नेवेति * विधानाद्धेतोरनुष्ठानं प्रति विषयत्वेनाश्रीयते इत्यर्थः। उत्तरार्द्धं व्याचष्टे * न चेति * स्वातन्त्र्यानियतयौगिकत्वात्प्रकृतिप्रत्यययोः प्रकृत्यर्थविशिष्टप्रत्ययार्थरूपैकार्थगमकत्वेनैकपद्ये ऽपि प्रात्यात्मिकार्थभेदात्पदान्तरताप्युपपन्नेत्याशयेनाशङ्कते * गमकत्वादिति * अतिप्रसङ्गापत्तेः पदशब्दस्य यौगिकत्वं निरस्यति* नेति * वर्णसंघत्वे ऽपि गमकत्वविशेषणे ऽतिप्रसङ्गमाह * एकस्मिन्नपि चेति * लोचनयापि पदशब्दः प्रकृतिप्रत्ययसङ्घवाच्येवेत्याह * पदमिति * पदान्तरत्वाभ्युपगमे ऽप्येकप्रत्ययोक्तयोः कर्मत्वैकत्वयोर्विधेयाविधेयत्ववैषम्यं न युक्तमित्याह * ऽभ्युपेत्यापि त्विति* उक्ताया अपि संख्याया विध्यनन्वयादविवक्षा भविष्यतीत्याशङ्क्याह * अविवक्षायामिति * एतदेवोपपादयति * यावदिति * अन्वयश्च वाक्यार्थ इत्यर्थ इत्याशयः। ततश्चेह ग्रहसंख्याविध्यनन्वये विभक्तेरश्रुतेः समत्वापत्तेः कर्मत्वस्यापि विध्यनन्वयप्रसङ्गाद् ग्रहस्य संस्कार्यतैव न स्यादित्याह *तदिति* द्वितीयां विनापि प्रयोजनत्ववत्प्रयाजशेषवत्संस्कार्यत्वसिद्धिं शङ्कते * प्रयोजनवत्त्वादिति * सामान्याक्रियान्वयपूर्वकत्वाद् गुणप्रधानत्वरूपविशेषान्वयस्य कारकविभक्त्यभावे सामान्यतो ऽप्यतो ऽन्वयाभावाद् विशेषान्वयासिद्धिरित्याशयेन निरस्यति *नेति* एतदेव विवृणोति *न हीति*अतः कर्मत्वस्यात्याज्यत्वात्तदर्थे विभक्त्यादरापत्तेः संख्यात्यागायोगान्न सर्वसम्मार्गसिद्धिरिति सिद्धान्ताक्षेपमुपसंहरति * तेनेति * कर्मत्वप्रतीत्यर्थे विभक्त्यादरे ऽप्येकत्वं त्यक्ष्यतइत्याशङ्क्य विभक्त्यर्थैकदेशात्त्याज्यत्वोक्तिः । अशक्यत्वमेव श्लोकत्रयेणोपपादयति * तथा हीति * एकपदोक्तस्य ग्रहस्यैकप्रत्ययोक्तस्य च कर्मत्वस्याविवक्षयेत्यर्थः । सदसत्त्ववच्छ्रुताश्रुतत्वकल्पनैकस्य विरोधान्न सम्भवतीत्युक्ते श्रुतस्यापि शब्दस्य कश्चिदर्थो विधिनास्याविवक्षयेत्यर्थः । सदसत्त्ववच्छ्रुताश्रुतत्वकल्पनैकस्य विरोधान्न सम्भवतीत्युक्ते श्रुतस्यापि शब्दस्य कश्चिदर्थो विधिना ग्रहीष्यते कश्चिन्नेत्याशङ्क्य श्रुतेत्युक्तम् । ७३८।५
तथा शब्दातिदिष्टं विरोधं द्रढयितुमर्द्धं कुकुट्याः पच्यतामर्द्धं प्रसवाय धार्यतामिति लोकप्रवादायातं पाशुपतं वाक्यं नैकस्यःवस्तुनो ऽर्द्धजरतीयं कथमनेन कुक्कुट्यर्द्धस्य वा पाकः प्रसवायार्द्धधारणमिति वा-

र्त्तिकालोचनया दृष्टान्तितं गम्यते । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति उत्तरपदसमासे संज्ञायां ङीपो ह्रस्वविकल्पस्मृतेः ह्रस्वत्वाविरोधः । सिद्धान्तमाक्षिप्तन्तावत्समाधातुमाह * अत्रेति * प्राधान्येनैकत्वस्य क्रियान्वये ग्रहं सम्मार्ष्ट्येकं सम्मार्ष्टीति प्रत्येकं वाक्यसमाप्तयान्योन्यानपेक्षयोर्ग्रहैकत्वयो क्रियान्वयोपपत्तेः एकत्वाविवक्षायामपि सर्वग्रहसम्मार्गप्रसङ्गान्निष्फलाविवक्षा गुणभूतत्वेन त्वेकत्वविवक्षा द्वितीयाविरोधान्न युक्तेत्यर्थः । पूर्वार्द्धं व्याख्यातुमुपक्रमते * यदा हीति * विधायकावृत्तिलक्षणो पर इति तावच्छब्दार्थः । ननूद्देश्ययोरन्योन्यानन्वयाद्वाक्यभेदे सत्युपादेययोरप्यन्योन्यानन्वयादरुणया क्रीणात्येकहायन्या क्रीणातीति प्रत्येक-
७३९। वाक्यसमाप्तिलक्षणवाक्यभेदापत्तिरित्याशङ्क्याह * उपादेयेति * उपादेयानां साधकत्वेन क्रियान्वयात्तस्याश्चानेकसाधनसाध्यत्वेनैकैकसाधनान्वयमात्रेणापर्यवसानात्समुदाये वाक्यसमाप्तेर्न वाक्यभेद इत्याशयः । ननु ग्रहैकत्वयोः साधत्वेनानन्वये ऽपि वस्तुतः साधनत्वस्यापि सद्भावेन क्रियां प्रति गुणत्वात्तद्वशीकारेणान्योन्य नियमस्तावत्सेत्स्यतीति समुदाय एव वाक्यसमाप्तेर्न वाक्यभेदो ऽपीत्याशङ्क्याह * अस्मिन्नेव चेति * क्रियोद्देशेन विनोपकारित्वे ऽप्यङ्गत्वायोगान्नोद्देश्यत्वपक्षे क्रियावशीकारः सम्भवतीत्यन्योन्यानपेक्षयोर्ग्रहैकत्वयोः कर्मत्वरूपकर्त्तव्यत्वावगमात्प्रत्येकं वाक्यसमाप्तिर्दुःपरिहरेत्याशयः । नन्वेकत्वस्य द्रव्यानपेक्षस्य संकर्त्तुमशक्यत्वान्न तन्मात्रान्वये वाक्यसमाप्तिः सम्भवतीत्याशङ्क्याह * तद्धेति * ग्रहस्य निर्ज्ञातदशसंख्यत्वात् संस्कारान्वयस्य वा ऽपूर्वसाधनत्वप्रयुक्तत्वेन यथाप्राप्तस्यैव संस्कारान्वयत्त्ववगतेः संख्यानपेक्षत्वादन्यतराकाङ्क्षामात्रेण चान्योन्यान्वयायोगात्संख्यान्तरावरुद्धस्य चैकत्वान्वयायोगेनैकत्वाकाङ्क्षयापि ग्रहस्याकाङ्क्षोत्थापनायोगाद् ग्रहानपेक्षस्यैकत्वस्य संस्कार्यत्वोपपत्तिरित्याशयः । एवं सति स्वतन्त्रस्यैकत्वस्य संस्कर्त्तुमशक्यत्वात्कस्मिंश्चिदाश्रयभूते द्रव्ये ऽनुक्ते ऽप्यपेक्ष्यमाणे यद्येकपदोक्तत्वाच्छीघ्रं बुद्धिस्थत्वाद् ग्रह एवाश्रयोऽभ्युपगम्येत ततो द्वयोः संस्कार्ययोस्तन्त्रेण संस्कारे सम्भवत्यावृत्त्ययोगादन्योन्यसापेक्षयोः संस्कारकरणापत्तेरन्योन्यानपेक्ष संस्कारान्वयेन यत्प्रत्येकं संस्कार्यत्वलक्षणं प्राधान्यं शास्त्रेणावधृतं तद् बाध्येतेत्याह * तत्रेति * अविहितसम्मार्गद्रव्यान्तराश्रयत्वाभ्युपगमे तु किं तादित्यज्ञानादव्यवस्था स्यादित्याह * अथेति * अज्ञानमेवोपपादयति * न हीति * सर्वस्य स्वरूपेणैकत्वादन्यापेक्ष-

था चानेकत्वादन्यानपेक्षत्वेनैकत्वावधारणहेतोश्चैकः पुरुषो ऽस्मिन्न गृह इतिवत्कस्य चिदवच्छेदकस्याभावाद्यथा ग्रहत्वोपलक्षितं द्रव्यं निर्द्धारितरूपं प्रकरणे दृश्यते नैवमेकत्वोपलक्षितमित्यर्थः । तत्प्रकरणस्थत्वाविशिष्टमेकवचनान्तशब्दचोदितत्वमेकत्वेन संख्येयस्य द्रव्यस्यावच्छेदकं भविष्यतीत्याशङ्कते * नन्विति * चमसाध्वर्यून्वृणीत इत्याद्युत्पत्तौ बहुवचनान्तशब्दचोदितानां चमसाध्वर्य्वर्यादीनां चमसांश्चमसाध्वर्यवे प्रयच्छति तान्स वषट्कर्त्रे हरतीत्याद्येकवचनान्तशब्दविनियुक्तानामुत्पत्त्युक्त्या व्यावृत्तिः । यूपं छिनत्त्यौदुम्बरी भवति सदो मिनुयादित्याद्येकवचनान्तशब्देनोत्पत्तौ ज्योतिष्टोमप्रकरणचोदितानामपि बहुत्वात्किमेकं सम्मार्ष्टव्यमिति निर्द्धारणाशक्तेर्नेदमप्यवच्छेदकं सम्भवतीति परिहरति * नेति * सर्वेषामेकवचनान्तेन शब्देनोत्पत्तौ ज्योतिष्टोमप्रकरणे विहितानां द्रव्याणां सम्मार्गो ऽस्त्वित्याशङ्कते *अथेति * परिहरति * नेति * विकल्पेन सम्मार्गः समुच्चयेन वेति विकल्पाद्यकल्पे तावच्चोदितहानिमाह * तथा हीति * बहुष्वपि पुरोडाशकपालेषु सत्स्वेकेनैव तुषोपवापे ऽपि यथा न चोदितहानिस्तथेहापीत्याशङ्क्याह *गुणेति * द्वितीयकल्पे तु चोदितहानिरचोदितकरणं चेत्याह * यदीति * ननु युगपत्सर्वे सम्मार्गे संख्यान्तरोपजनः स्यादिह त्वेकत्वोद्देशेन विधीयमानस्य सम्मार्गस्यैकत्वान्वयित्वेनानुगतेर्यौगपद्ये च तद्रूपानुष्ठानासिद्धेः प्रत्येकं सम्मार्ष्टव्यत्वावगमान्न संख्यान्तरोपजननापत्तिरित्याशङ्क्याह * वीप्सार्थश्चेति * अश्रुतवीप्सार्थे कल्पनापत्तेर्न प्रत्येकानुष्ठानं विधातुं शक्यमित्याशयः । ७४०।१
नन्वेवं सति ग्रहस्यापि प्रत्येकं सम्मार्गविधिसिद्ध्यै ग्रहं ग्रहमिति वीप्सार्थकल्पनापद्येतेत्याशङ्क्य प्रत्येकं सम्मार्गस्य विद्ध्यनपेक्षित्व सूचनार्थं सर्वाणि हवींष्यमृशतीत्याभदौ हविष्ट्वादिजात्युद्देशेनाभिमर्शनादिसंस्कारविधौ युगपदनेकसंस्कृतावपि न जात्यन्तरापत्तिर्येन प्रत्येकमावृत्त्याभिमर्शनादि विधीयते क्वचिच्चा शुक्लादिगुणान्तरोद्देशेन युगपदनेकत्र सम्भवदनुष्ठानावेक्षणादिसंस्कारविधौ युगपदनेकसंस्कृतावपि न गुणान्तरापत्तिरित्याह * जातीति * सामान्यन्यायेन युगपदनेकग्रहसम्मार्गे ऽपि जात्यन्तरानापत्तिमुक्तामप्यबुध्यमानं प्रति विशेषनिष्ठोक्त्याक्षरत्रयन्यूनपादत्रयेण विवृणोति * तथा हीति * यथा युगपदनेकद्रव्यान्तरसम्मार्गे संख्यान्तरोद्भवस्तथा युगपदनेकग्रहसम्मार्गे ऽपि ग्रहत्वाज्जात्यन्तरस्योद्भवो नास्तीत्यर्थः । याज्ञिकानां तर्हि प्रतिग्रहं सम्मार्गावृत्तिर्विरुध्येतेत्याह *

इतीति * प्रत्येकं गृह्यमाणानामिति वार्त्तिकवक्ष्यमाणप्रतिग्रहसम्मार्गावृत्तिहेतुसूचनायेतिकरणः । एवमपि सकृदनेकग्रहसम्मार्गानुष्ठानस्य जात्यन्तरानापादकत्वेन ग्रहसंस्कार्यत्वव्याघातकत्वाभावाद् ग्रहस्य संस्कार्यत्वनिर्द्धारणार्थविधेः प्रतिग्रहं सम्मार्गावृत्तिविधायित्वाभावे ऽपीत्यध्याहृतापिशब्दकैवंशब्दार्थः । एतीत्यस्मिन्नर्थे समर्थादिणः क्विबन्तात्सप्तम्याम् इतीति रूपं।सकृत्सर्वग्रहसम्मार्गस्य जात्यन्तरानापादकत्वाद् ग्रहसंस्कार्यत्वाव्याघातकत्वमात्रपरामर्श्येवंशब्दः । एवं युगपत्सर्वसम्मार्गस्य जात्यन्तरानापादकत्वेन ग्रहार्थत्वाबाधकत्वादावृत्तिमविधायापि इति गच्छतिः एवंवस्यत्यपि भिन्नकालग्रहणानन्तरकालत्वादल्पपरिमाणदशापवित्रसाधनकत्वाच्च सम्मार्गस्य सकृत्सर्वत्रानुष्ठातुमशक्तेः सामर्थ्यादापन्नावृत्तिर्नैव विरुध्यत इत्यर्थः । एवं तर्ह्यनेनैव न्यायेन सर्वेष्वप्येकत्वयुक्तेषु द्रव्यान्तरेषु संस्क्रियमाणेष्वावृत्तिसिद्धेरनुष्ठानवेलायामेकैकस्यैव सम्मार्गान्वयदर्शनात्संख्यान्तरोपजननिमित्तचोदितहान्यचोदितकरणापत्तिलक्षणविरोधानापत्तेस्तत्परिहारार्थं प्रत्येकमावृत्त्यानुष्ठानविधिसिद्ध्यै वीप्सार्थकल्पनानापत्तिरित्याशङ्क्यते * तत्रेति * वीप्सार्थकल्पनापत्तिभयात्प्रत्येकानुष्ठानाविधाने ऽपि सामर्थ्यात्प्रत्येकानुष्ठानसिद्ध्या संख्यान्तरोपजननिमित्तश्रुतहान्यश्रुतपरिग्रहापत्तिविरोधपरिहाराभ्युपगमे सति ग्रहैकत्वविवक्षायामपि सर्वग्रहसाद्गुण्यार्थत्वन्यायापन्नसर्वग्रहसम्मार्गाविरोधाद्विवक्षोक्तिर्निष्फला स्यादित्याह * तथा सतीति* श्लोकं व्याचष्टे * न हीति * सर्वग्रहसम्मार्गे ऽपि प्रत्येकमनुष्ठानसिद्धिरेकत्वविवक्षाफलमित्येकदेशी शङ्कते * नन्विति * गृह्यमाणानां सोमानामधःपात्यवयवनिर्हरणार्थत्वात्सम्मार्गस्यावृत्त्या च गृह्यमाणानामावृत्त्यैवाधो ऽवयवपातात्तन्निर्हरणार्थः सम्मार्गो ऽप्यावृत्त्यैव स्यादित्याशयेन परिहरति * नैतदिति * ग्रहणोत्तरकालान्वयिसम्मार्गस्य नैरन्तर्यविवक्षा वर्त्तमानसामीप्ये वर्त्तमानवद्वेति स्मृतिमालोच्य गृह्यमाणानामित्युक्तम् । अस्माच्च वार्त्तिकाद् ग्रहशब्दस्य ग्रहणसंस्कृतसोमवाचित्वप्रतीतेः स एव इन्द्रतुरीयो ग्रहो गृह्यते यदैन्द्रवायव इत्यादौ चैन्द्रवायवादिशब्दसामानाधिकरण्यात्पात्रसोमावयवान्वयाभावेनैन्द्रवायवादिशब्दवाच्यत्वायोगात्साक्षाच्च यागसाधनसोमसंस्कारसम्भवे व्यवहितोपयोगेन पात्रस्यासंस्कार्यत्वाद् ग्रहणादिसोमसंस्कारप्रस्तावाच्च सम्मार्गस्य सोमसंस्कारत्वप्रतीतेः पात्रस्य च गृह्यमाणावसिक्तसोमावयवस्य सं-

म्मार्गे ऽशुचित्वानापत्तेस्तन्निर्हरणार्थं सम्मार्गानपेक्षत्वात्सोमस्य तु विहितात्प्रदेशाद् बहिर्वृत्तौ वैगुण्यापत्तेस्तन्निरासार्थं सम्मार्गापेक्षत्वादपेक्षितविध्ये ऽपि सोमसंस्कारत्वावगतेराकलशेषु धावति- पवित्रे परिषिच्यते इत्यादिमन्त्रलिङ्गाद्प्येवमेवावगतेर्ग्रहादि सोमपात्रं यस्मिन्पात्रे ऽस्य सोमस्य ग्रहणे क्रियमाणे सोमो व्यवसिच्यते इत्याशङ्कां तत्सर्वं सम्मार्जयितव्यमिति चमसाधिकरणभाष्यस्य च पात्रश्लिष्टसोमसंस्कारार्थमपि क्रियमाणस्य सम्मार्गस्य नान्तरीयकपात्राश्रितत्वाशयतया व्याख्यातुं शक्यत्वान्न ग्रहपात्रं सम्मार्ष्टव्यमिति भ्रमितव्यम् । नानापात्रेषु गृह्यमाणानां सोमानां युगपत्सम्मार्गप्रसङ्गे ऽपि वायव्यैन्द्रवायवयोः सोमयोरेकस्मिन्पात्रे गृह्यमाणयोर्यौगपद्यप्रसक्तौ तन्निरोधो विवक्षाफलं भविष्यतीत्याशङ्क्याह * अभ्युपेत्येति * स्वतन्त्रस्यैकवाक्यस्याप्रतीतेः स्वतन्त्रं चाग्रहत्वनिरपेक्षमेकत्वं यस्य द्रव्यान्तरस्य तस्याप्रतीतेर्ग्रहगतत्वेनैकत्वविवक्षामभ्युपेत्य नैष्फल्योक्तिः । वस्तुतस्तु वाक्यभेदापत्तेर्नैकत्वविवक्षा संभवतीत्याशयः । द्रव्यान्तरगतत्वेनैकत्वविवक्षानिरासमुपसंहरति * अतश्चेति * सम्मार्गस्यैकत्वांशेन यो ऽन्वयस्तस्य द्रव्यविशेषनिष्ठतया ऽनवधारणेनेत्यर्थः । द्रव्यान्तरस्थत्वेन विवक्षाभ्युगमे ऽपि न सिद्धान्तहानिरित्याह * यद्यपि चेति * अनेन प्राप्नोति हि प्रधानस्येति पूर्वार्द्धं व्याख्यातम् । प्राधान्येनैकत्वस्य क्रियान्वयपक्षे सर्वग्रहसम्मार्गापत्त्युक्तेः संख्योद्देशेन संस्कारविध्ययोगोक्त्यर्थत्वं दर्शयितुमाह * तस्मादिति * यूपं छिनत्त्यग्नीनादधीत चमसाध्वर्यून् वृणीत इत्यादावप्राप्तोद्देश्यगतायाः संख्यायाः विवक्षाभ्युपगमात्तस्याश्च द्वितीयाविरोधापत्तेर्गुणत्वेन क्रियान्वयायोगाद्यथासंख्योद्देशेन छेदनादिसंस्कारो विधीयते तथात्रापि भविष्यतीत्याशङ्क्य यूपादेरनवगतसंख्यत्वेन परिच्छेदक संख्यापेक्षत्वाद्विधेयत्वाच्च तत्परिच्छेदकत्वेन संख्याविध्युपपत्तेर्द्वितीयाविरोधात् । क्रियान्वयायोगे ऽपि संख्याविशिष्टयूपादिविशिष्टच्छेदनादिक्रियाविध्यन्यथानुपपत्तिकल्पितेन विधिना क्रियाविशेषणीभूतयूपविशेषणत्वेन संख्याविध्यवगमात्संख्याविशिष्टयूपादेरुद्देश्यत्वे ऽपि संख्याया नोद्देश्यतेति सूचनार्थं कश्चिदित्युक्ते विधेयत्वे यूपादिसंख्याया द्वितीयया संस्कार्यत्वापत्तेर्देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यादौ चानेकत्र लोकवेदयोर्दर्शनेन प्रत्येकं वाक्यसमाप्तेरदोषत्वात्कस्माद्यूपं छिनत्तीत्यादौ न संख्योद्देशेन संस्कारो विधीयतइत्याशङ्क्य संख्यायाः स्वकीयगोचरे, वर्गं लक्षणं स्वभाव एवैष इत्युक्तस्वभा-

वोपपादनायोद्दिश्यमानानां पुनरवशीकृतत्वादिवार्त्तिकोक्तोपपत्ति स्तस्मोच्छब्देन परामृष्टा गुणभूतविवक्षा त्वित्युत्तरार्द्धं व्याचष्टे * अथ त्विति * वैरूप्याशयत्वेन विरोधोक्तिव्याख्यानायैकत्ववच्चे- त्याद्युक्तम् । प्रयोजनवत्तयैव ग्रहस्य प्राधान्यसिद्धेर्द्वितीयायास्ता- त्पर्ये नैष्फल्यापत्तेर्ग्रहस्यापि च क्रियान्वयसिद्ध्यै कारकत्वस्या- वश्यप्रतिपाद्यत्वान्निर्विशेषस्य च सामान्यस्यापर्यवसा- नात्सर्वे पाकादिसम्बन्धे ह्याकारान्तन्दुलादय इत्यनेन च न्या- येन साधनत्वस्याप्युपपत्तेः साधनस्य चाङ्गत्वप्रसिद्धेरवैरूप्यादा ङ्गत्वैव द्वयोर्द्वितीयार्थ इत्याशङ्कते * तत्रेति * ग्रहाङ्गत्वे तात्पर्य्या- भावसूचनार्थस्तावच्छब्दः । साधनत्वेऽपि ग्रहस्य प्रासङ्गिकोप- कारित्ववदनङ्गत्वाद्विद्यमानाङ्गत्वोक्तिः शाब्दस्य च प्राधान्यस्या-

७४१।१ र्थता न युक्तेति परिहरति* तत्रेति * यदि तु कथं चित्सगुणभाव- स्ततः पश्चादपि स एव विवक्ष्येत न प्राधान्यमित्यादावित्यनेनोक्तम् । अशाब्दस्य प्राधान्यस्य शाब्दक्रियानन्वयात्पश्चादपि शाब्दत्वाभ्यु- पगमापत्तेर्विप्रकर्षप्रसङ्गाच्छब्दात्सम्भवतः । प्राधान्यस्यार्थत्वा- योगमुपपादयन् श्लोकं व्याचष्टे * सर्वैवेति * श्रुतिवशाद्यत्प्रा- धान्यङ्गम्यते तद्यदि तावद्वास्तवत्वेन गृह्यते ततः प्रागपि प्राधान्य- मेव ग्राह्यं न गुणत्वं प्राधान्यासम्भवात्तु द्वितीयाश्रुतौ लक्षणाश्र- यणे पुरोडाशकपालवत्प्रयोजनवत्त्वेऽपि गुणत्वस्यैव शास्त्रीयत्वात्प- श्चादपि गुणभाव एव विवक्षित इत्यर्थः । असम्भवस्य वैरूप्याय काल्पनिकत्वात्सम्भवस्य च वास्तवत्वादविरोधमाशङ्क्याह * युग- पच्चेति * विरोधपरिहारसम्भवेऽपि सम्भवासम्भवपरिग्रहनि- मित्तस्यालोचनविक्षेपनिमित्तस्य च शब्दक्लेशस्यापरिहार्यत्वान्नै- वं कल्पना युक्तेत्याशयः । एतदेव विवृणोति * प्रथमं हीति * प्राधान्यस्याशाब्दत्वान्न शब्दक्लेशापत्तिरित्याशङ्क्याह * पश्चात्तन- मपि चेति * शाब्दस्यार्थस्याशाब्दार्थान्वये प्रामाण्याभावेनान्वय- सिद्ध्यै कल्प्यार्थवाचिशब्दकल्पनाहेतुत्वाच्छब्देनैव प्राधान्यं वाच्य- मित्युक्तेऽनुपलब्धिविरोधेनास्मिन्वाक्येऽसावप्युच्चारित इत्येवं क- ल्पयितुमशक्यत्वात्सत्तामात्रेण च कल्पनस्य व्यवहारानौपयिक- त्वेनानाशङ्क्यत्वात्केन रूपेण शब्दकल्पनेत्याशङ्क्य कल्प्यार्थवाच्यपि शब्दोऽस्मिन्वाक्ये व्याप्रियत इत्येवं कल्पनां सूचयितुं व्यापारशब्दे प्र- योक्तव्ये व्यापारस्यापि शब्दविशेषनिष्ठतया कल्पयितुम् अशक्यत्वा- त्कल्प्यार्थाभिधानशक्तशब्दमात्रव्यापारकल्पना शक्तिशब्देन सू- चिता द्वितीयारूपस्य वा प्राधान्यवाचिनः शब्दस्येह श्रुतत्वेन श- ब्दान्तरकल्पनायोगात्तस्यैव प्राधान्येऽपि व्यापारः शब्दशक्तिशब्देन

णार्था हविषश्च कार्यार्थत्वेन प्रयोजनवत्त्वात्तत्प्राधान्यं लक्षयन्ती प्रवर्त्तते तथेयमप्यविवक्षितगुणार्थाग्नेः प्राधान्यं च लक्षयन्ती प्रवर्त्तते इत्यर्थः। अतो ऽग्निवाक्ये ऽपि वैरूप्यलक्षणवाक्यभेदाः शक्या योजयितुमित्याह * ततश्चेति * प्रत्येकवाक्यसमाप्तिस्त्वग्न्येकत्वप्राधान्ये त्वनाशङ्क्यत्वेनानापत्तेर्न योजिता । ननु तृणानां द्वितीयायोगे ऽप्यपचयं प्रत्यप्रतिपाद्यत्वेनाप्राधान्याद्विवक्षितसंख्यत्वेनाप्राधान्याद्विवक्षितसंख्यत्वेन त्रयाणामेवापचयावगतेः शेषतृणानपचयेन तृणसंसर्गादापत्स्यमानस्योल्मुकबहिःपातस्यापरिहार्य्यतयाग्नेस्तृणापचयसंस्कार्यत्वायोगाच्च प्राधान्यमित्याशङ्क्याह * तृणानीति * विभागरूपत्वेनापचयस्य संयोगपूर्वकतया प्राक्सिद्धसम्बन्धापेक्षत्वादपचेयानान्तृणानां सिद्धत्वेनान्वयादप्राधान्ये ऽपि देशादिवदुद्देश्यतोपपत्तेरविवक्षितसंख्यत्वात्सर्वतृणापचयादग्निसंस्कारत्वोपपत्तिरित्याशयः । पूर्वोक्तानां वाक्यभेदानामत्रापि योजनीयत्वं व्याख्येयत्वोक्त्योक्तम् । प्राधान्याभावे गुणप्रधानत्ववैरूप्याभावात्कथं पूर्वोक्तवाक्य भेदयोजनेत्याशङ्क्य गुणप्रधानत्ववैरूप्याभावे ऽपि संख्यासंख्येययोर्द्वयोरुद्देश्यत्वेन क्रियान्वये प्रत्येकं वाक्यसमाप्तिलक्षणः संख्यायास्तूपादेयत्वेनान्वये ऽनुपादेयोपादेयत्ववैरूप्यलक्षणो वाक्यभेदः शङ्क्यो योजयितुमिति परिहारं बहुविषयत्वद्योतनायोदाहरणान्तरानिष्ठतया दर्शयति * तथेति * भेदनस्यैव निमित्तैकत्वस्यैव चेति नियोगपक्षे भेदनस्य निमित्तैकत्वस्य वेति विकल्पपक्षे वाक्यभेदाभावादन्योन्यानन्वयमात्रोक्तिः। प्रत्येकोक्तिश्चान्यानपेक्षत्वमात्राशया । समुच्चयस्य त्वन्योन्यानपेक्षत्वे ऽप्येकनिमित्तत्वान्वयमात्रेणोपपत्तेर्वाक्यभेदापादकतापि । सम्बन्धादिपक्षेषु प्रत्येकसमाप्त्यनापत्तेरादिशब्देनान्योन्यविशिष्टयोर्द्वयोः समुच्चयपक्षः सूचितः। पूर्वशब्देनोपादेयानुपादेयत्ववैरूप्यमुक्तमिति नानारूपत्वोक्त्या व्याख्यातं तस्य विरुद्धत्वोक्तिः सप्तम्युच्चारणावृत्त्या वाक्यभेदापादनार्थेति सूचनार्थैकवाक्यत्वोक्त्या सकृदुच्चारणोपलक्षणम् । भिन्ने जुहोतीत्यादिषु वचनाविवक्षेत्यन्वयः । एवमेतदेकत्वं ग्रहस्य न कचिदुपकारं करोति न सम्मार्गस्येति भाष्यं प्रधानभूतस्यापि ग्रहस्येयत्तावधारणेन संख्याया ग्रहस्य न कश्चिदुपकारं करोति न सम्मार्गस्येति भाष्यं प्रधानभूतस्यापि ग्रहस्येयत्तावधारणेन संख्याया ग्रहोपकारित्वसम्भवादनङ्गस्थितानामपि च प्रणीताधर्माणामुपकारिस्थितत्वमात्रेण क्रियोपकारित्वदर्शनाद् ग्रहस्य च सम्मार्गोपका-

रित्वसद्भावात्तत्परिच्छेदकत्वेनैकत्वस्य यजमानसंस्काराणां यागोपकारित्ववत्सम्मार्गोपकारित्वोपपत्तेरयुक्तमाशङ्क्य दशैतानध्वर्युः प्रातः सवने ग्रहान् गृह्णातीत्यादेः प्रमाणान्तरादेव विज्ञातसंख्यानपेक्षत्वान्नैकत्वस्य ग्रहोपकारित्वं तद्द्वारा वा सम्मार्गोपकारित्वं सम्भवतीति भाष्याशयं सूचयितुमाह * सत्यां चेति * यद्योद्देश्यविशेषणस्याविवक्षितत्वे ऽष्टवर्षब्राह्मणोपनयनादिविधावुद्देश्यब्राह्मणादिविशेषणमष्टवर्षत्वादिः अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यत्र चोद्देश्यामावास्याविशेषणमपराह्णः। प्राचीनप्रवणविधौ चोद्देश्यप्रवणविशेषणं प्राचीनत्वं यावज्जीवविशेषणं सामग्र्याद्यपि न विवक्ष्येत ब्राह्मणसुरापानादिनिषेधे चोपादेयब्राह्मणादिविशेषणं लिङ्गादि विवक्ष्येतेत्याशङ्क्य निरासार्थो ऽयं ग्रन्थः। आकाङ्क्षाधीनत्वाद्विशेषणविवक्षाया ब्राह्मणादेश्चोपनयनादावुद्देश्यत्वे ऽप्यन्यतो ऽनवगतरूपत्वेन विशेषणाकाङ्क्षत्वाद्विशेषणविवक्षानिषेधे चोपादेयत्वे ऽपि ब्राह्मणादेरनुवाद्यत्वेन प्राप्तस्यैव निषेधान्वयाद्विशेषणस्यानाकाङ्क्षितत्वेनाविवक्षायुक्तेत्याशयः। एवं तर्ह्युद्दिश्यमानस्य किं संख्या विवक्ष्यते नेति संशयोपन्यासो न युज्येतेत्याशङ्क्याह * सा चेति * विधेयक्रियानुष्ठानार्थत्वेनापाद्यत्वलक्षणोपादेयत्वाभावे ऽपि प्रतीक्ष्यत्वलक्षणोपादेयता ब्राह्मणामावास्यादिषु विवक्षिता। उपनयनपितृयज्ञाद्यनुष्ठानकाले हि ब्राह्मणामावास्यादेर्नियमेन प्राप्तत्वापादकस्य प्रकृतापूर्वसाधनत्वस्याभावात्स्वकालाप्राप्ते च ब्राह्मणादौ तदन्वितोपनयनाद्यनुष्ठानायोगात् ब्राह्मणादिसिद्धवत्कारेणोपनयनादिविधानाद् ब्राह्मणादेस्तत्कालापाद्यत्वायोगे ऽपि स्वतः सिद्धस्य प्रतीक्ष्यतावश्याभ्युपगन्तव्या। ग्रहादेस्तूपकृतापूर्वसिद्ध्यर्थमुपात्तत्वेन सम्मार्गादिकाले नित्यप्राप्तेर्निषेधस्य च प्राप्तविषयत्वनियमान्निषेधकार्यायाश्च निवृत्तेः प्रवृत्तिपूर्वकत्वनियमात्सुरापानादिनिवृत्तिकाले तत्कारिणो ब्राह्मणादेर्नित्यप्राप्तेरप्रतीक्ष्यत्वादुद्देश्यत्वं विवक्षितं। कीदृक् ब्राह्मणादिरुपनयनाद्यनुष्ठानार्थं प्रतीक्षितव्य इत्युपादेयेषु विशेषणाकाङ्क्षोत्पत्तेरुद्देश्येषु ग्रहादिष्वनुत्पत्तेरनाकाङ्क्षितत्वेनोद्देश्यविशेषणस्याविवक्षाव्युत्पादनायोद्दिश्यमानस्य किं संख्या विवक्ष्यते न वेति संशयोपन्यासो युक्त इत्याशयः। उद्देश्येषु विशेषणानाकाङ्क्षामुपपादयति * उद्दिश्यमानेषु हीति * प्रमाणान्तरावगतत्वात्संख्यानाकाङ्क्षायां प्रकृतापूर्वसाधनस्य प्रकरणात्संस्कार्यत्वावगतेरुद्देश्यस्वरूपस्यापि प्रमाणान्तरावगतत्वात्तत्समर्पकप्रातिपदिकार्थग्रहत्वान्वयस्यापि नाकाङ्क्षा स्या- ७४३।१

दित्याशङ्क्य प्रातिपदिकार्थानन्वये सम्मार्गस्य संस्कारत्वासिद्धेः प्रकृतापूर्वसाधनस्य संस्कार्यत्वावगत्ययोगादुद्देश्यस्वरूपानवगतेरुद्देश्यं च विना निष्फलत्वापत्तेर्विध्ययोगात्तत्समर्पकप्रातिपदिकार्थान्वयाकाङ्क्षोपपादनार्थं प्रातिपदिकार्थेत्युक्तम् । प्रकृतापूर्वसाधनत्वे ऽवगतसंख्यस्यापि ग्रहादेः सम्मार्गाद्यन्वये ऽनवगतसंख्यत्वात्संख्याकाङ्क्षा भविष्यतीत्याशङ्क्याह * अत इति * प्रातिपदिकार्थान्वितप्रकृतापूर्वसाधनमात्रस्य सम्मार्गाद्यन्वयावगतेर्विशेषणानाकाङ्क्षा अतःशब्देनोक्ता । अनेन चाविशिष्टं हि लक्षणमिति सूत्रावयवव्याख्यानस्य नैतदस्तीत्येवमादिभाष्यकृतस्योपसंहारार्थं तस्मान्नैतदितिभाष्यं व्याख्यातं कुत इति भाष्येण सर्वं संस्कार्यत्वहेतुप्रश्नपूर्वं विहितस्तु सर्वधर्मः स्यादिति सूत्रोक्तहेतुद्वयमनुकृष्यन्तल्लक्षणत्वादित्यनेनैव हेतूहत्वनाकाङ्क्षणादयुक्तमाशङ्क्य लक्षणत्वादित्यनेन ग्रहत्वादेर्विधेयसम्मार्गाद्यन्वयापूर्वसाधनलक्षणत्वेन सम्मार्गान्वयितया विधेयत्वाभावात्तद्विशेषणत्वेन विधिर्भविष्यतीत्याशङ्कायाः संस्कारान्वयितया विध्यनुपपत्तेः शुद्धविधौ च विशेषणस्याविधेयत्वापत्तेर्न्नापूर्वसाधनविशेषणत्वेनाप्येकत्वादेर्विधिः सम्भवतीत्येवं निरासार्थतद्धेतुद्वयानुकर्षणमिति सूचनायाविधेयत्वार्थतया लक्षणत्वोक्तिं व्याख्यातुमाह * सर्वेति *विधेयत्वानिवृत्त्यर्थो मात्रशब्दः ततश्च तद्विशेषणस्य सुतरामविधेयत्वादनुष्ठानान्वयित्वेनानादृत्यतेत्याशयः । लक्षणत्वोक्तेरविधेयार्थत्वप्रकटनायानादृत्यतानङ्गत्वोक्त्या लक्षिता । लक्षणस्यानादृत्यतां लौकिकदृष्टान्तेन द्रढयति * यथेति * ग्रहत्वस्यापि तद्वदनादरापत्तेश्च चमसेष्वपि सम्मार्गः प्रसज्येतेत्याशङ्क्याह * तत्रेति * ग्रहादेर्लक्षणत्वेन विना तल्लक्षितेष्वपूर्वसाधनेषु सम्मार्गाद्यनुष्ठानासिद्धेर्लक्षणत्वेन ग्रहाद्याद्रियते ततश्चानुष्ठानान्वयित्वेनानादरे ऽपि चमसेषु सम्मार्गान्वयपूर्वसाधनलक्षणग्रहत्वाद्यभावान्न सम्मार्गाद्यनुष्ठानापत्तिरित्याशयः । लक्षणत्वेनैव तद्येकत्वादिविशिष्टमेव ग्रहादि गृह्यतामित्याशङ्कानिरासार्थो मात्रशब्दः । यदीत्यादि भवितव्यमित्यन्ते शङ्काभाष्ये बहुषु विवक्षितेष्वित्येवं बहुत्वस्याप्यविवक्षितत्वादयुक्तमाशङ्क्यैकवचनायोगोक्तिशेषत्वास्वार्थतात्पर्याभावेन व्याख्यातुमाह * नन्विति *

(१) तद्विशेषणस्य सुतरां विधेयत्वं न संभवतीत्युक्तौ ग्रहादिस्वरूपविशेषणत्वे नैकत्वादेर्विध्ययोगेऽपि ग्रहत्वादिलक्षितापूर्वसाधनविशेषणत्वे विधिर्भविष्यतीति

उच्यत इत्यादिपरिहारभाष्यं व्याचष्टे * तत्रेति *. एकवचनस्य प्रमादपाठापत्तेरेतत्परिहारान्तरार्थमपि चेति भाष्यं व्याचष्टे *तेनेति * कारकसम्बन्धो ऽपीत्यपि शब्दसूचितं प्रातिपदिकानुग्रहार्थत्वं व्याख्यातम् । एवमप्येकवचननियमो ऽनर्थक इत्याशङ्क्य बहुत्वविधौ कपिञ्जलाधिकरणवक्ष्यमाणत्रित्वनियमदृष्टान्तेनार्थवत्तामाह*प्रथमं वेति*पुरोडाशाविति द्विवचननियमस्तर्हि किमर्थ इत्याशङ्क्याह * यस्येति * पौर्णमास्यामाग्नेयाग्नीषोमीयरूपस्य सान्नायरहितायाञ्चामावास्यायामाग्नेयैन्द्राग्नरूपस्य पुरोडाशद्वयस्याधिकृतत्वाद्द्विवचनमित्येतद् द्रढयितुमुभयस्योभयं हविरार्त्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदित्यार्त्तिगमनसम्बद्धस्य हविषो निमित्तत्वेनोद्देश्यत्वाद्धविष्ट्वस्य च प्रकृतापूर्वसाधनलक्षणत्वेन प्रतीतिमात्रौपयिकत्वाद्ग्रहवदविवक्षितविशेषणत्वसिद्धौ अप्युभयपदानर्थक्यापत्तेरुभयत्वस्योद्देश्ये ऽन्तर्गत्यभ्युपगमेन विवक्षां पूर्वपक्षयित्वाधिकारिकोभयत्वाभ्युपगमेनोभयपदानर्थक्यपरिहारः षष्ठाधिकरणे वक्ष्यमाणो दृष्टान्तितः । पुरोडाशद्वयसद्भावाद् द्विवचनस्य सालम्बनत्वे ऽपि नियमः किमर्थः इत्याशङ्क्याह * अन्यथा हीति * यथाग्नावैष्णवमेकादशकपालं निर्वपेत्सरस्वतीमाज्यस्य यजेतेति यागद्वये विहिते ऽमावास्यायामुपांशुयाजपक्षे तद्विकारे सारस्वते वेदानन्तरवेदिकरणपञ्चहोत्राभिमर्शनवृधन्वत्याज्यभागानुवाक्याप्राप्तेरग्नीषोमीयविकारे चाग्नावैष्णवे हविरधिवासनानन्तरवेदिकरणचतुर्होत्राभिमर्शनवार्त्रघ्न्यानुवाक्याप्राप्तेरग्नीषोमीयविकारे चाग्नावैष्णवे प्रसज्यत इति पूर्वपक्षयित्वा मुख्यं वा पूर्वचोदनाल्लोकवदिति द्वादशाधिकरणसूत्रेण मुख्यत्वादाग्नावैष्णवः कल्पः सारस्वते प्रसज्यतइति वक्ष्यते । तथा मुख्यत्वादाग्नेयस्यैव पुरोडाशस्य क्षीणस्य निमित्तत्वेन ग्रहणमिति भ्रान्तिनिवृत्त्यै नियम इत्याशयः । अपि चेत्यादिभाष्यं विधायकाभिधानश्रुत्यवगतक्रियान्वयविरोधेन पदश्रुत्यवगतद्रव्यान्वयबाधादयुक्तमाशङ्क्य द्रव्यान्वयाभ्युपगमे ऽपि सिद्धान्ताव्याघातोक्तिमात्राशयत्वेन व्याचष्टे * अपि चेति * ग्रहस्याप्यनेकसंख्यत्वान्नैकत्वेन विशेषणता युक्तेत्याशङ्क्याह * जातीति *

चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १५ ॥

---

( १ ) अनुवाक्याप्राप्तेरनियमेनैकास्य कल्पो ऽन्यत्र प्रसज्यत इ० २ पु०

परार्थत्व-व्याख्यार्थस्य यागार्थः पशुरिति भाष्यावयवस्य पशोरपि द्वितीयया प्राधान्यावगमादयुक्तत्वशङ्कां निरस्यन्सूत्रं व्याचष्टे * पशौ पुनरिति * भव्यस्य भावकापेक्षणाद् भूतस्य च भावकत्वोपपत्तेर्भूतस्य भव्यार्थत्वे दृष्टार्थत्वं भूतस्य तु भव्यानपेक्षणाद्भव्यस्य भूतार्थतायामदृष्टार्थतत्येकस्यैव न्यायस्य भूतभव्यसमुच्चारणे भूतभव्यायोपादिश्यत इति भाष्यारूढत्वं द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्ध इति सूत्रारूढत्वञ्च द्वयोक्त्या सूचितम् ।

अथ चमसादौ संमार्गाद्यप्रयोगाधिकरणम् ॥ ८ ॥

## संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥

यथाश्रुतं तावत्पूर्वपक्षभाष्यं व्याचष्टे * एकत्ववदेवेति * ग्रहत्वस्यापीत्यनेन प्रदर्शनार्थमित्यादि द्रष्टव्यमित्यन्तं भाष्यं पराभिमतपूर्वपक्षार्थत्वेन व्याख्याय प्रदर्शनार्थत्वं इत्यनेनोच्यत इत्यादि कल्प्यत इत्यन्तन्निरासार्थत्वेन व्याख्याय वाक्येन चेत्यनेन स्वाभिमतपूर्वपक्षार्थतयोच्यते सम्मार्ष्टीत्यादिभाष्यशेषो व्याख्यातः । श्रुत्या वाक्यबाधाभ्युपगमे लक्षणया ग्रहशब्दवर्णेनोक्तिरयुक्तेत्याशङ्क्य वाक्येन ग्रहान्वयाभ्युपगमे स्वरूपेणैवान्वयापत्तेस्तद्बाधेन शुद्धसम्मार्गविधिमभ्युपगम्य विच्छिन्नस्य ग्रहशब्दस्य का गतिरित्यपेक्षिते सम्मार्गस्य कैमर्थ्याकाङ्क्षायां सोमग्रहणानन्तरकालत्वेन योग्यतया ऽधो ऽवसिक्तसोमनिर्हरणार्थत्वावसायात्सोमस्य संस्कार्यत्वेनावगतस्य स्पष्टीकरणायोपलक्षणार्थतया ग्रहशब्दस्य गतिसूचनार्थो वाक्येन वेत्यवयवः । शुद्धसम्मार्गविधानात्पूर्वपक्षपरिग्रहे तेषामर्थाधिकरणोक्तशुद्धावघातादिविधिपूर्वपक्षसादृश्यात्तदनन्तरमेतदधिकरणारम्भापत्तिरित्याशङ्कानिरासायैकत्वसादृश्योक्त्याग्रहे तेषामर्थाधिकरणोत्तरानारभ्यतोपपादिता । ननु पदस्य केवलाप्रयोगित्वात्पदान्तरान्वये च श्रुतिबाधस्य वाक्याधिकरणे परिहृतत्वाद् ग्रहादाच्छिद्य केवलसम्मार्गविधिः पूर्वपक्षयितुमशक्य इत्याशङ्क्याह * इह त्विति * यथा बाढं संयुक्ता अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या वाक्येनैषां व्रीह्यादिसंयोग इति तेषामर्थाधिकरणसन्देहोपपादनभाष्याद्यथाश्रुतप्रतीयमाने शुद्धावघातादिविधौ न त्वेतद्युक्तमिवेत्यादिवार्त्तिकेनाक्षेपं कृत्वा विधीयते ऽवघातादिः श्रुत्या व्रीह्यादिसङ्गेन इत्यादिवार्त्तिकेन बाढमवघातादयो व्रीह्यादिसंयुक्ताः श्रुत्या विधीयन्ते किं त्वपूर्वसाधनांशलक्षणात्मकेन

वाक्येनैषां समीहितापूर्वसाधनभूतेन व्रीह्यादिना योगो न स्वरूपेणत्येवं व्याख्यया परिहारः कुतस्तथेह सम्मार्ष्टीतिविधिशब्दो ऽनाद्दत ग्रहत्व-ग्रहशब्दोपलक्षितापूर्वसाधनमात्रान्विते सम्मार्गे पुरुषेच्छायोनिकं प्रयत्नं विधातुं पुरुषार्थपर्यवसायित्वस्वभावापादकाप्रवृत्तप्रवर्त्तनात्मक विधिश्रवणेनैव शक्नोति आवृतग्रहत्वग्रहशब्दान्वयात्मकेन तु वाक्येन सम्मार्गस्य ग्रहत्वसम्बन्धं विधातुं शक्नुयात् । ततश्चापूर्वसाधनमात्रान्वयेन पर्यवसिता श्रुतिर्वाक्यीयविशेषान्वयं बाधते।तस्माद्-पूर्वसाधनमात्रलक्षणमात्रग्रहशब्दो वर्णनीयः तेन चमसेष्वप्यपूर्वसाधनत्वाविशेषात्सम्मार्गसिद्धिरित्येवं व्याख्यया कार्य इति परिहारे ऽत्यन्तमवघातादि-साम्याभावे ऽपि कथं चित्साम्यादवघातवद्भावोक्तिः । भङ्गाख्याक्षेपसाम्यस्य प्रसिद्धत्वादुदूधाराख्यपरिहारसिद्धौ दृष्टान्ततयोक्तिः एवं तर्ह्यवघातादिन्यायेन सम्मार्गस्यापि परमापूर्वप्रयुक्तत्वायोगेनावान्तरापूर्वप्रयुक्तत्वसिद्धेर्ग्रहत्वलक्षितस्य चावान्तरापूर्वसाधनत्वस्य चमसेष्वभावाद्व्यवस्थासिद्धेर्नैतदधिकरणमारभ्यमित्याशङ्कते *नन्विति* एकत्ववद् ग्रहत्वैकार्थसमवायित्वस्याप्युद्देश्यापूर्वसाधनविशेषणस्याविवक्षितत्वशङ्कापत्तेस्तेषामर्थाधिरणसिद्धान्ताक्षेपेणैतदधिकरणारम्भेण परमतेन तावत्पौनरुक्त्यं परिहरति * सत्यमिति * वाच्यैकार्थसमवायित्वं विना ऽपूर्वसाधनत्वस्य लक्षयितुमशक्यत्वेन वाच्यैकार्थसमवाय्यवान्तरापूर्वसाधनत्वस्यैव लक्ष्यत्वात्तस्योद्देश्यत्वेनोद्देश्यविशेषणत्वाभावात्तेषामर्थाधिकरणसिद्धान्ताक्षेपायोगेनैतत्परिहारापरितोषात्स्वमतेनान्यथा परहरति * अथ वेति * ननु तेषामर्थाधिकरणोक्तयथासंयोगव्यवस्थाक्षेपेणात्र पूर्वपक्षे स्थलसम्मार्ज्जनादिवत्संयोगानादरसिद्धौ संस्कारत्वहेतूक्तिर्युक्ता तदनाक्षेपे तु किमर्थेत्याशङ्क्याह * संस्कारादिति * प्रतिप्रधानमावृत्त्या संस्कारानुष्ठानस्यापूर्वसाधनेन प्रयुक्तत्वाच्चमसेषु संस्काराभावे वैगुण्यापत्तेरपूर्वसाधनत्वव्याहतिसूचनार्थं संस्कारत्वोक्तिरित्याशयः । सर्वप्रधानेष्वनुष्ठानमेवोपपन्नन्ते नानुष्ठानं चमसेष्वपीत्येतदाख्यानार्थं संस्कारोक्तिरिति सावधारणानुष्ठानवाचिक्रियाशब्दाभ्युपगमेनोपपन्नत्वाख्यानार्थोपपादनशब्दाभ्युपगमेन च व्याख्येयम् ।

व्यवस्था वार्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥ १७ ॥

यथाश्रुतपूर्वपक्षभाष्यव्याख्याने सिद्धान्तभाष्यमपि यथा श्रुतमेव व्याख्येयमिति सूचयितुमाह * यथास्थूलन्तावदिति * ग्रह-शब्देन ग्रहमुद्दिश्य तत्सम्बन्धित्वेनैव सम्मार्गो विधीयते न शब्द इ-त्येवं ग्रहशब्देनेति भाष्यं व्याख्यातुं ग्रहेत्युक्तम्। ग्रहसम्मार्गान्वयस्य विधेयत्वे सम्मार्गस्वरूपस्याविधेयत्वापत्तेर्वाक्यानुरोधेन पदश्रु-त्यवगतसम्मार्गस्वरूपविधिबाधप्रसङ्गात्तद्विरोधेन वाक्यीयग्रहस-म्मार्गान्वयबाधैवोचितेत्याशङ्क्य विशिष्टक्रियास्वरूपविधिकल्प्यत्वा-द्विशेषणान्वयविधेः क्रियास्वरूपविधिबाधकत्वायोगोक्त्यर्थं न चे त्यादि न श्रुतिर्बाधिता भवतीत्यन्तं भाष्यं व्याख्यातुं ग्रहाख्यस्य स-म्बन्धिनोऽन्यतः प्राप्तत्वेऽपि सम्मार्गाख्यस्य सम्बन्ध्यन्तरस्यान्यतो ऽप्राप्तत्वात्समे यजेतेत्यादिवत्क्रियास्वरूपविध्यनपेक्षान्वयविध्यनुपप-त्तेर्ग्रहसम्मार्गसम्बन्धविधौ सम्बन्ध्यन्तराविधेरवश्यम्भावित्वादि-त्युक्तम्। प्रदर्शनार्थत्वपक्षेऽप्यवश्यं भावित्वात्कस्य चित्सम्बन्ध्य-न्तरस्येत्येवमिदं व्याख्येयम्। अनेन चार्थस्य विधेयतया प्रयोजन-भूतस्य सम्मार्गस्य श्रुत्या ग्रहसंयोगाद्ग्रहेष्वेव सम्मार्गव्यवस्थेव सू-त्रव्याख्या सूचिता। परमार्थतस्त्वर्थस्योद्देश्यस्यापूर्वसाधनस्य श्रुत्युक्तग्रहत्वसंयोगेनैव लक्ष्यत्वात्परमापूर्वस्य चोत्पत्त्यपूर्वमात्र-पर्यवसायिग्रहत्वनियमसाध्यत्वाभावेन ग्रहत्वान्वयाभावाद्ग्रहत्वेन लक्षणाशक्तेर्ग्रहत्वैकार्थसमवायिनोऽवान्तरापूर्वसाधनत्वस्यैव ल-क्षणयान्याय्यत्वादित्येवं सौत्रहेतुव्याख्यार्थं ग्रहत्वस्यापूर्वसाधन-लक्षकत्वानभ्युपगमे ग्रहश्रुतिबाधापत्तेर्ग्रहत्वस्य लक्षकत्वानभ्यु-पगमे ग्रहश्रुतिबाधापत्तेर्ग्रहत्वसमवाय्यवान्तरापूर्वसाधनं लक्षयि-त्वा तस्य सम्मार्गान्वयो विधीयते। न च ग्रहत्वसमवाय्यवान्तरापूर्व-साधनविशेषान्वयितया सम्मार्गविधिश्रुतेरपूर्वसाधनमात्रान्वय-विषयतामभ्युपगम्य ग्रहपदैकवाक्यतया ग्रहसमवायितया विशेष-णात्सङ्कोचलक्षणबाधापत्तिरित्युक्ते कुत इति प्रश्नपूर्वं यद्यपि पुरु-षार्थपर्यवसायिस्वभावविधिश्रुत्या सम्मार्ष्टीतिशब्दोऽपूर्वसाधनान्वि-तसम्मार्गगतं प्रयत्नं विधातुं शक्नोति तथापि ग्रहान्वयाभावे सम्मा-र्गस्यारादुपकारित्वापत्तेरपूर्वसाधनद्रव्यान्वयावगमेन ग्रहान्वय-स्यावश्याभ्युपगमनीयत्वाद्ग्रहसमवाय्यपूर्वसाधनविशेषान्वयस्यैवाव-गतेः सम्मार्गविधिस्वभावालोचनैवाविशेषान्वयावगतौ न क-श्चिद्विशेष इति विधिस्वभाववाच्युत्पद्यमानशब्दाभ्युपगमेन यथो-क्तोपस्कारयुक्तं सिद्धान्तभाष्यं व्याख्येयमिति सूचयितुमाह * अ-थ वेति * नन्वित्याशङ्काभाष्यं प्रत्यभ्यासमपूर्वभेदादयुक्तमाशङ्क्य

व्याचष्टे * नन्विति * नानादेवतायुक्तग्रहणसंस्कृतद्रव्यभेदाक्षिप्तानामपि यागाभ्यासानामविधेयत्वाद्धिष्येकसमधिगम्यत्वाच्चापूर्वस्य प्रत्यभ्यासमपूर्वभेदाभावात्पयसा मैत्रावरुणं श्रीणातीत्यादौ च प्रत्यभ्यासमपूर्वभेदेन श्रपणव्यवस्थाया नवमे वक्ष्यमाणाया एतदधिकरणाधीनत्वेनेदानीमसिद्धावस्थत्वाद्यागापूर्वस्यैव प्रयोजकत्वावगतेः तस्यैवैकत्वाशयमेतद्भाष्यमित्याशयः । अत्रेत्यादिप्रत्यक्षेत्यन्तं परिहारभाष्यं शङ्काशयनिराससमर्थत्वेन व्याख्यातुमाह * सत्यपीति * प्रत्यक्षाभ्यासविध्यभावे ऽपि देवतायुक्तद्रव्यभेदान्यथानुपपत्तिकल्प्यविधिविहितत्वेनाभ्यासानां प्रत्यभ्यासमपूर्वभेदोपपत्तिरित्याशयः । नन्वभ्यासैर्विना ज्योतिष्टोमरूपासिद्धेर्दृष्टार्थत्वेनाभ्यासानामवघातादिवन्नापूर्वार्थतास्तीत्याशङ्क्याह * विनाऽपि चेति * ज्योतिष्टोमशब्दस्याभ्यस्तरूपयागवाचिताया यागाभ्यासविधिनिमित्तकत्वेनाभ्यासविध्यभावे ऽनभ्यस्तस्यापि यागस्य ज्योतिष्टोमशब्दवाच्यस्वरूपसिद्धेर्न दृष्टार्थत्वमभ्यासस्य सम्भवतीत्याशयः । तस्मादित्युपसंहारभाष्यं व्याचष्टे * ततश्चेति * नन्वभ्यासापूर्वाणां प्रत्यासन्नत्वे ऽप्यफलत्वात्प्रयोजकत्वासम्भवो ऽतिक्रमकारणमस्तीत्याशङ्क्याह * अवघातादिवदेवेति * फलन्त्विति सूत्रे ऽवघातादेरपूर्वप्रयुक्तत्वसिद्धौ यद्यपि चैषां साक्षादफलत्वं तथापि स्वरूपसिद्ध्यन्यथानुपपत्त्यैव प्रयोजकत्वं भविष्यतीत्यादिवार्त्तिके यो ऽर्थो वर्णितः सो ऽत्रापि योज्य इत्यर्थः । ग्रहैकत्वसम्बन्धे पुनरिति भाष्यस्य तात्पर्यमाह * न चेति * स्थलसम्मार्गवैषम्यांस्त्वर्थत्वेन तस्य शब्दप्रमाणत्वादिति सूत्रावयवव्याख्यार्थं यत्त्वित्यादिभाष्यं स्पष्टत्वान्न व्याख्यातम् ।

सप्तदशारत्नितायाः पशुधर्मताधिकरणम् ॥ ९ ॥

## आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

ग्रहेष्वेव सम्मार्गो न चमसेष्वित्युक्ते सप्तदशारत्नित्वं षोडशिपात्रे निविशते यूपे वेति चिन्तायाः प्रासङ्गिकत्वेनानन्तरसङ्गतिं चतुर्थाकरणाधिकरणस्य चमसाधिकरणसङ्गत्याभिधानेन सूचयिष्यमाणत्वात्स्पष्टत्वेनानभिधाय भाष्योक्तसन्देहं वचनव्यक्तिसन्देहेनोपपादयति * यदीति * यूपशब्दानुवादसामर्थ्यात्सप्तदशारत्नित्वस्य यूपसदृशे षोडशिपात्रे निवेशाभ्युपगमे ऽनुवादात्षोडशिपात्रप्राप्तिस्तत्प्राप्तेश्चानुवाद इत्यन्योन्याश्रयापत्तिमाशङ्क्य सप्तदशारत्नित्वस्य वाजपेयाङ्गत्वेन विधीयमानस्य साक्षाद्वाजपेयान्वयायोगाद्वाजपेया-

न्वयियोग्यद्रव्यापेक्षायां यूपस्य वाजपेयानन्वयित्वात्साक्षाद्वाजपेया-ङ्गभूतायाश्च सोमलतायाः क्वचिदभावात्प्रादय सोमरसाधारत्वद्वारा षोडशिपात्रस्य वाजपेयान्वयात्पात्रान्तरापेक्षया च तस्य सामान्यतो दैर्घ्यप्राप्तेर्दैर्घ्यविशेषात्मकसप्तदशारत्नित्वविध्यौचित्यात्षोडशिपात्रप्राप्तिः यथा कथं चिच्छब्देनोक्ता । सप्तदशारत्निशब्दस्य लोहितोष्णीषन्यायेनाप्राप्तविशेषणविध्यर्थत्वे ऽप्युपात्तान्यपदार्थबहुव्रीह्यवयवयोगाद्वाजपेयशब्दस्यान्यपदार्थे समर्पकत्वाभ्युपगमे सम्बन्धिपरत्वोपपत्तेः । को ऽसौ वाजपेयसम्बन्धीत्यपेक्षायामनन्तरोपात्तस्य यूपस्य साक्षाद्वाजपेयासम्बन्धित्वेन नप्तृवद्व्यवधाने ऽपि तद्व्यपदेशोपपत्तेः । कथं षोडशिपात्रे निवेश इत्याशङ्क्यायापीत्युक्तम् । सम्बन्धिनोनुवाच्यत्वाद्यूपेन विशेषणे वाक्यभेदापत्तिसूचनार्थो यच्छब्दः । यूपस्योद्देश्यत्वे व्यवहितवाजपेयान्वयसम्भवे ऽपि विशेषणाविवक्षायां वाक्यभेदापत्तेर्वाजपेयशब्दस्य विशेषणत्वायोगमाशङ्क्यागत्या वाजपेयविशिष्टस्य यूपस्योद्देश्यत्वादुद्देश्यान्तर्गत एव वाजपेयो नोद्देश्यविशेषणमिति सूचनार्थो यथा कथं चिच्छब्दः । अविशेषितस्या ऽप्युद्देश्यत्वसम्भवे विशेषणस्यानाकाङ्क्षितत्वादुद्देश्यान्तर्गतावप्युभयत्ववद्वाक्यभेदापत्तेर्विशेषणत्वापरित्तोपाद्वाजपेयप्रकरणाम्नानेन वाजपेयसम्बन्धित्वस्य प्राप्तस्यानुवादपक्षः स्वमतेनोक्तः । बहुव्रीहेर्विशेषणपरत्वसूचनार्था परिमाणोक्तिः तत्र निवेशे सति वाजपेयशब्द आञ्जस्येन भवति मत्पक्षे तु वाजपेयप्रकरणमनुगृह्यतइति भाष्यद्वयोक्तस्य हेतुद्वयस्यापरहेतुद्वयोपलक्षणार्थत्वं दर्शयन्पूर्वपक्षमाह * किमिति* सप्तदशारत्निवद्वाजपेयस्येत्यनन्तरान्वयसम्भवे वाजपेयशब्दव्यवहितयूपशब्दान्वयायोगात्प्रधानभूतवाजपेयान्वयसम्भवे वाङ्गभूतपश्वङ्गयूपान्वयायोगात् वाजपेयान्वयाच्च तत्कथं भावलक्षण प्रकरणाबाधसम्भवे तद्बाधायोगाच्छ्रुतिवृत्तवाजपेयप्रातिपदिकषष्ठीश्रुतिभ्यां च वाजपेयान्वयसम्भवे प्रातिपदिकलक्षणावृत्त्यापादकवाक्यीययूपान्वयायोगाद्वाजपेयाङ्गतैव युक्ता न पशुयागाङ्गयुपाङ्गतेत्युक्ते वाजपेयान्वये ऽपि षोडशिपात्राङ्गत्वाभ्युपगमेन साक्षाद्वाजपेयाङ्गत्वाभावात्पारम्पर्येण च वाजपेयाङ्गत्वस्य यूपान्वये ऽप्युपपत्तेः। प्रधानत्वादिहेतूनां पक्षद्वये ऽप्यविशेषात्पूर्वपक्षासाधकतामाशङ्क्य यूपाङ्गत्वावेदकवाक्यवत्षोडशिपात्राङ्गत्वावेदकप्रमाणाभावेन षोडशिपात्रस्य द्वारमात्रत्वादव्यवधायकत्वसूचनार्थः साक्षाच्छब्दः । सप्तदशारत्नित्वस्य साक्षाद्वाजपेयान्वये कथं षोडशिपात्रे निवेश इत्याशङ्क्याह * साक्षादिति*एवमपि यूपस्यापि पशुयागद्वारा वाजपे

थाङ्गत्वात्कथं षोडशिपात्रे निवेश इत्याशङ्क्याह * तत्रेति * वाजपेयाङ्गषोडशिग्रहाख्यसोमरसाधारत्वद्वारा ऽपि पात्रस्य वाजपेयान्वये ग्रहैर्जुहोतीत्यातिदेशिकेन वाक्येन प्रक्षेपाधिकयागरूपहोमाङ्गत्वाविरोध इत्याशयः । अनेन चानन्तर्याच्छ्रुतेरित्यानन्तर्यशब्दस्यावृत्त्या साक्षात्त्ववाचिनः श्रुतिशब्दान्वयभङ्गीकृत्य साक्षात्सम्बन्धिनि षष्ठीश्रुतेर्विनियोक्तृत्वादित्यपि व्याख्या सूचिता । मत्पक्षे त्विति भाष्यं वाजपेयप्रकरणान्तर्गतपशुयागान्वयद्वारा सप्तदशारत्नित्वस्य वाजपेयान्वयित्वात्सिद्धान्ते ऽपि प्रकरणानुग्रहोपपत्तेरयुक्तमाशङ्क्याधिकारलक्षणप्रकरणाबाधे ऽपि कथं भावलक्षणप्रकरणबाधाशयत्वेनोपपादयति * यद्यपीति * वाजपेयशब्दाङ्गस्योक्त्या द्विविधश्रुत्युक्तावपि प्रातिपदिकश्रुतेरितरथेति भाष्येणैव व्याख्यातत्वात्षष्ठीश्रुतिं व्याचष्टे * वाजपेयस्येति * पक्षद्वयसाम्याल्लक्षणावृत्तेरपर्यनुयोज्यत्वाशङ्कापरिहारार्थस्योच्यते इति भाष्यस्याशयमाह * नन्विति * अदितिः पाशम्प्रमुमोक्त्वे तमादितिः पाशान्प्रमुमोक्त्वे तानित्येकबहुवचनान्तमन्त्रयोर्दीक्षप्रकरणाम्नातयोर्बहुवचनान्तस्यैकपाशके कर्मण्यसमवेतार्थत्वादुत्कर्षं पूर्वपक्षयित्वा प्रतिपत्तौ विकल्पः स्यात्समत्वाद् गुणे त्वन्यायकल्पनैकदेशत्वादिति नवमाधिकरणसूत्रेण बहुवचनस्यासमवेतार्थत्वे ऽपि तदनुरोधेनानुपसञ्जातविरोधावस्थायां श्रुतस्य प्रतिपदिकस्योत्कर्षायोगात्तस्यैव तु प्रातिपदिकात्परप्रयोज्यत्वस्मृतेः प्रातिपदिकपारतन्त्र्यलक्षणगुणत्वावसायात्प्रातिपदिकानुरोधेन प्रातिपदिकार्थद्रव्यलक्षिततदवयवसंख्यावाचित्वलक्षणन्यायकल्पनार्था युक्तत्वात्कर्मबहुत्वरूपानेकबहुवचनार्थसमुदायैकदेशत्वाच्च बहुत्वस्य समवेतकर्मत्वप्रकाशनार्थं प्रयोज्यत्वेनावगतस्य बहुवचनस्यार्थैकदेशबहुत्वानुरोधेनोत्कर्षायोगान्मन्त्रद्वयस्य प्रकरणाम्नानसाम्याद्विकल्प इति सिद्धान्ते वक्ष्यमाणे पश्चाच्छ्रुतत्वेन बहुवचनस्य प्रातिपदिकं प्रति गुणत्वोक्तेर्यूपशब्दं पश्चाच्छ्रुतत्वेन वाजपेयशब्दं प्रति गुणत्वमुपचर्येत इति तत्सूत्रैकदेशोपन्यासः । युपशब्दस्योर्द्धपात्रे गौणत्वाभ्युपगमाल्लक्षणोक्त्या गौणत्वं विवक्षितम् । तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे *तस्मादिति* साक्षाद्वाजपेयसम्बन्धिनि सप्तदशारत्नित्वविधौ साक्षात्सम्बन्धिना ऽपि षोडशिपात्रस्य सामान्यतो दैर्घ्यप्राप्तिमात्रेण विधेयसप्तदशारत्नित्वविषयताया निष्प्रमाणकत्वेनावधारणाशक्तेर्यूपशब्दस्य गौणवृत्त्या षोडशिपात्रसमर्पणार्थं साक्षाद्वाजपेयसम्बन्धिनिर्देशकत्वाभ्युपगमप्रसङ्गात्परपदसामानाधिक-

रण्याभावेन च गौणवृत्त्ययोगाद्यूपस्यैव साक्षाद्वाजपेयसम्बन्धित्वेन निर्देशापत्तेः तस्य च साक्षाद्वाजपेयसम्बन्धित्वाभावेन साक्षाद्वाजपेयसम्बन्धिनि सप्तदशारत्नित्वविध्यानर्थक्यप्रसङ्गाद्वाजपेयाङ्गभूतपशुयागसम्बन्धिनि यूपे सप्तदशारत्नित्वविधिरित्येवं सूत्रव्याख्यार्थमेवमित्यादिभाष्यं तात्पर्यतो व्याचष्टे * इतीति * न चोदूर्ध्वपात्रशब्दसमभिव्याहृतो यूपशब्दः प्रतीयत इत्यर्थः * श्लोकं व्याचष्टे*योहीति* अगत्यभावो त्त्वर्थेनास्मत्पक्षे त्वित्यादिना वाजपेय एवेत्यादिभाष्यं व्याख्यातम् । आनन्तर्यादिति पूर्वपक्षहेतोर्द्वेधा व्याख्यासूचनायानन्तर्यषष्ठीश्रुती एकहेलयानुभाषते*यत्त्विति* नैरन्तर्यं तावद्वाजपेयशब्दस्य मध्यपाठात्सप्तदशारत्निशब्दवद्यूपशब्देनापि तुल्यमित्यादि व्याख्याशयेनानुभाषणे परिहरति * तदिति * साक्षात्सम्बन्धिनि षष्ठीश्रुतेरिति द्वितीयव्याख्याशयेनानन्तर्याच्छ्रुतेरित्यनुभाषणपक्षे वाजपेयान्वयस्यानुवाद्यत्वान्न साक्षात्वादर इति परिहरति * अतश्चेति * यूपस्य सप्तदशारत्नित्वविधौ वाजपेयान्वयाननुवादमाशङ्क्यानन्तर्यबलादेव विवक्षितस्याप्यन्वयस्यावगमो ऽतश्चेत्यनेनोक्तः । ननु दीक्षाः सोमस्येत्यादिवत्प्रकरणप्राप्तस्यापि प्रधानान्वयस्य परिसंख्यार्थत्वेनापि विधिसम्भवे ऽनुवादत्वाभ्युपगमो न युक्त इत्याशङ्क्याह * अस्ति त्विति * बहुव्रीह्यपेक्षितस्यान्यपदार्थस्य वाजपेयशब्देन समर्पणाशक्तेर्यूपशब्देनैव तत्समर्प्यस्यावगमाद्यूपस्य च वाजपेयान्वयाभावात्सप्तदशारत्नित्वस्य वाजपेयान्वयपक्षत्यागेन यूपान्वयपक्षो ऽवलम्बित इत्यर्थः । सप्तदशारत्नित्वस्य च वाजपेयेन सह साक्षाद्वान्वयः स्यात्सम्बन्धिमात्रद्वारा यूपद्वारा वा सर्वथा न सम्भवतीत्याह* किं चेति* श्लोकं व्याचष्टे *सा-
२ क्षात्तावदिति* यूपस्य वाजपेयाङ्गत्वाभावे शक्ष्यति च स पशुयूपं विशेष्टुमिति भाष्ये वाजपेयस्य यूपविशेषणोक्तिर्न युज्येतेत्याशङ्क्य पारम्पर्यान्वयाविशेषणत्वं व्याख्येयमित्याह * तस्मादिति * स्वरूपे कार्ये चोपयोगिनो ऽङ्गत्वावसायाद्यूपस्य च प्रकृतौ विज्ञातोत्पत्तिप्रकारत्वेन स्वरूपोपयोग्यङ्गानपेक्षणात्कार्यस्यापि पशुनियोजनस्य पशुयागस्य चातिदेशादेवज्ञातोपायपरिमाणत्वेन तदुपयोगिनो ऽप्यङ्गस्यानपेक्षणात्सप्तदशारत्नित्वस्य वाजपेयापूर्वोपयोगित्वोक्तौ वाजपेयविशिष्टस्य यूपस्योद्देश्यताङ्गीकार्येति भाष्याशयः । विशिष्टानुवाददोषापत्तेर्भाष्योक्तदोषापरितोषात्स्वमतेनाधिकारलक्षणप्रकरणप्राप्तवाजपेयान्वयानुवादमाह * अधिकारेति * अनङ्गगतस्यापि च साप्तदश्यस्योपकारित्वितत्वमात्रेण वाजपेयोपकारित्वो-

पपत्तेः कथं भावात्मकमपि प्रकरणं न विरुध्यत इत्याह * वक्ष्यति हीति *

अभिक्रमणादीनां प्रयाजमात्राङ्गताधिकरणम् ॥ १० ॥

## कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥

आनर्थक्यापत्त्या श्रुतक्रियान्वयायोगेन तदङ्गावतारे स्थिते तद्विशेषचिन्तात्वेनोत्तराधिकरणद्वयस्यानन्तरसङ्गतौ स्पष्टायामभिक्रमणोपव्यानयोस्तदङ्गावतारे सति संस्कारत्वापत्तेः सम्मार्गाख्यसंस्कारचिन्तानन्तरमेव चिन्ता कार्या न साप्तदश्यगुणाचिन्तानन्तरमित्याशङ्क्याह * एवमिति * क्रियायाः साक्षात्क्रियान्वयायोगाद् गुणवक्रियासाधनद्रव्यद्वारा क्रियान्वयेनार्थात् द्रव्यसंस्कारत्वावगतेर्गुणाचिन्तानन्तरं चिन्ता युक्तेत्याशयः । ननु धातुसम्बन्धाधिकारणमुल्श्रुतिवशादभिक्रमणस्य क्रियान्तरान्वयावगमे ऽप्यारादुपकारित्वे ऽप्यन्वयाविरोधात्कथं संस्कारत्वावगतिरित्याशङ्क्याह * तत्रेति * आभीक्ष्ण्ये णमुल्चेति स्मृतेर्वीप्सार्थस्यावृत्तिरूपस्याभीक्ष्ण्यस्य णमुलोपादानादारादुपकारित्वे च तन्त्रत्वादावृत्त्यनुपपत्तेः संस्कारस्य तु कार्ययोग्यताधानार्थत्वात्प्रतिकार्यमावृत्त्युपपत्तेः संस्कारत्वावगतिरित्याशयः । प्रयाजविधायिसमिदादिवाक्येभ्यो ऽभिक्रमवाक्यस्यान्यत्वात्प्रयाजवाक्ये श्रूयतइति भाष्यमयुक्तमित्याशङ्क्यावान्तरप्रकरणाशयत्वं वाक्योक्तेः सूचयितुमाह * परश्चेति* तत्रेति सन्देहभाष्यं व्याचष्टे * तदिति * विस्पष्टजुहोतिसम्बन्धश्रुतेः पूर्वपक्षवचनव्यक्त्ययोगात्सन्देहायोगमाशङ्क्याह * सम्बन्धेति * यथा कथं पुनररुणयेति भाष्येण विस्पष्टक्रयसम्बन्धावगमेनारुणाधिकरणसन्देहमाक्षिप्येह गुणमरुणिमानमित्यादिभाष्येण शब्दवस्तुविसम्वादात्परिहारो ऽभिहितस्तथाभिक्रमणस्यापि णमुल्श्रुत्या क्रियान्तरसाधनत्वावगमादमूर्त्तत्वाच्च वस्तुस्वरूपालोचनेनासाधनत्वावगमात्सन्देहाक्षेपस्य परिहारो वाच्य इत्यर्थः । एतदेव विवृणोति * कर्मणा इति * पौनरुक्त्यात्तर्हि नेदमधिकरणमारभ्यमित्याशङ्क्याव्ययकृतो भावे भवन्तीति अव्ययत्वाण्णमुलो ऽभावमात्रवाचित्वस्मृतेरेकहायनीवत्समानाधिकरणद्रव्यानुपादानाद् द्रव्यविषयानियमे चोपपत्तिभूतस्य साध्यक्रियासम्बन्धस्य णमुल्कसमानकर्तृकपूर्वकालत्वान्यथा ऽनुपपत्तिसाध्यत्वेन कर्तृभूत-

द्रव्यान्वयात्प्रागवगतेर्द्रव्यनियमोपपत्तित्वायोगादपरिच्छेदकत्वेन च क्रियाया गुणवत्क्रियासाधनद्रव्योपादानानौपयिकत्वादध्वर्य्वाख्यस्य च द्रव्यस्येह द्वारत्वेनाभिमतस्यानेकक्रियासाधारण्येनैकहायनीवद्व्यवस्थितक्रियाद्वारत्वायोगाच्चतुर्द्धा वैषम्यमाह * अनेन चेति* कर्मणः कर्मणा सह साध्यसाधनत्वलक्षणान्वयायोगादभिक्रामं जुहोतीति वाक्यस्य विभागरूपो भेदः स्यादित्येवं पूर्वपक्ष-

७४८।४ सूत्रावयवव्याख्यार्थं किं तावदिति भाष्यं व्याचष्टे * किं तावदिति * कर्मैव विचार्यतइत्युपक्रमात्सर्वार्थमभिक्रमणाख्यं कर्मेति प्रतिज्ञायां पूरितायां जुहोत्यन्वयाद्धोममात्रार्थत्वप्रतीतेः कुतः सर्वार्थतेति पृष्टे कर्मणोऽभिक्रमणस्यामूर्त्तत्वाद्धोमाख्यं कर्मसाधनत्वं न प्रतीयतइति कर्मसाध्यमस्येति बहुव्रीहिणोक्ता जुहोत्यन्वयस्तर्हि कथमित्याशङ्क्य जुहोतिसम्बन्धं परित्यज्याभिक्रमणं विधीयते इत्युक्तम् । श्लोकं व्याचष्टे * न तावदिति * नन्वित्याशङ्काभाष्यं येनैव हेतुना क्रीणातिना न सम्बध्यत इत्यादि नास्ति वाक्यभेद इत्यन्तारुणाधिकरणशङ्काभाष्यवदानर्थक्यपरिजिहीर्षयैकवाक्यतापादनार्थत्वेन व्याचष्टे * नन्विति * अन्यत्र क्रियान्वयायोगे ऽपि कर्तृत्वेनावगतस्याध्वर्य्वादेः कर्तृत्वशक्तिजननार्थं संस्कारपेक्षायां देशान्तरस्थकार्थप्रत्यासत्तिजननेनाभिक्रमणस्य कर्तृशक्तिजनकतया कर्त्तारं प्रति संस्काररूपगुणत्वेनान्वयः सम्भवतीत्येवं परिहारार्थत्वेन कर्तृगुण इति सूत्रावयवव्याख्यार्थमुच्यत इत्यादिभाष्यं व्याचष्टे * परिहारश्चेति * जुहोत्यन्वयित्वेनावक्षिप्तकर्त्रन्वयाविरोधं नन्विति भाष्यावयवेनाशङ्क्य जुहोतीत्येष समानकर्तृवाचिणमुलुक्तत्वात्कर्तृभूतपुरुषान्वयित्वेनावगतमप्यभिक्रमणप्रयत्नमाख्याते क्रियाप्राधान्यात्तदङ्गतयैव विधातुं शक्नोति न गुणभूतपुरुषाङ्गतयेति परिहारार्थं नैतदिति भाष्यावयवं व्याख्यातुमाख्यातइत्युक्तम् । अन्यतोऽवगतकर्तृत्वस्य पुरुषस्य प्रयोजनत्वात्प्राधान्यभाक्त्वेनाङ्गान्वययोग्यत्वे ऽपि विधायकाख्यातत्यागात्तदङ्गतयाभिक्रमणस्य विधिर्न सम्भवतीति नन्वन्यत्रापीति भाष्यावयवेनाशङ्क्य प्रकरणावगतदर्शपूर्णमासाङ्गभावस्याभिक्रमणस्य कथं दर्शपूर्णमासयोरुपकर्त्तव्यमित्यपेक्षायां यथा शक्नुयादित्युपबन्धेन प्रत्यासत्त्याख्यकर्तृसंस्कारजनकस्य प्रयोगवचनाद्विधिर्भविष्यतीति परिहारार्थं चैष इति भाष्यावयवं व्याख्यातुमन्यत्र त्वित्युक्तम् ॥

साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण॥२०॥

सिद्धान्तसूत्रव्याख्यार्थं नैतादित्यादि प्रयाजेष्वेवाभिक्रमणं निविशत इत्यन्तं भाष्यं व्याचष्टे * सर्वथा तावदिति * पूर्वपक्षहेतोरनुभाषणपूर्वं परिहारार्थं नन्वित्यादिभाष्यं व्याचष्टे * शक्नोतीति * आख्याताक्षिप्तस्य कर्त्तुर्गुणभूतत्वात्कथं संस्कारान्वय इत्याशङ्क्याह*अरुणत्ववदेव चेति * कर्त्तुः श्रुत्या होमं प्रत्यङ्गत्वे ऽभिक्रमणं च प्रति प्राधान्ये सति वैरूप्यं स्याद्यथात्वारुण्यस्य श्रुत्यनुगृहीताद्वाक्यादेकहायन्यन्वयो नैकहायन्या गुणत्वे ऽपि वैरूप्यदोषमापादयति तथाभिक्रमणस्याप्यर्थाल्लिङ्गात्कर्त्रन्वयो होमं प्रति कर्त्तुरुपसर्जनत्वे ऽपि न वैरूप्यदोषमापादयतीत्यर्थः । आरुण्यस्यैकहायन्यन्वयो द्वारमात्रत्वाच्छ्रौतक्रियाङ्गत्वाविरोधी अभिक्रमणस्य तु कर्तृसंस्कारत्वे तदङ्गत्वाभ्युपगमाद्धोमाङ्गत्वं विरुध्येतेत्याशङ्क्य संस्कारस्य योग्यताधानार्थत्वेन कार्यान्वितमेव संस्कार्यान्वितमेव संस्कार्यं प्रत्यङ्गत्वावसायात्कार्यमपि प्रत्यङ्गतास्त्येवेति परिहारसूचनार्थं तस्मादिति भाष्यं व्याचष्टे * एवं चेति * पूर्वपक्षस्याति तुच्छत्वेन भाष्योक्तविचारापरितोषात्स्वयं जुहोत्येकवाक्यतामभ्युपगम्यैवेतिकर्त्तव्यताकाङ्क्षालक्षणत्वात्प्रकरणस्याङ्गानां चाकरणत्वेनेतिकर्त्तव्यतानाकाङ्क्षत्वात्प्रयाजादीनामवान्तरप्रकरणाऽनुपपत्तेर्महाप्रकरणेनाभिक्रमणस्य सर्वार्थत्वं पूर्वपक्षयित्वाङ्गानामपि करणानुग्रहभावनायां करणत्वादितिकर्त्तव्यताकाङ्क्षोपपत्तेरवान्तरप्रकरणसम्भवात्तस्य च महाप्रकरणाद् बलीयस्ताया बलाबलाधिकरणे वक्ष्यमाणत्वादवान्तरप्रकरणेन प्रयाजमात्रार्थत्वसिद्धान्तो ऽस्मिन्नधिकरणे वर्ण्यत इत्याह * यदा त्विति * यदैतं पूर्वपक्षकरणं तदा कर्तृगुणत्वेनाभिक्रमणे जुहोत्युक्तकर्मान्वयिनि प्रयाजकर्मणो ऽवान्तरप्रकरणाकाङ्क्षं त्विति प्रयाजचोदनातः प्रसूता या कथंभावाकाङ्क्षा तन्निमित्तो यो ऽभिक्रमणस्य प्रयाजैः सहाङ्गाङ्गिसम्बन्धस्तद्द्वारा यदभिक्रमणवाक्यस्य प्रयाजवाक्यैकवाक्यरूपमवान्तरप्रकरणं तदेव सिद्धान्तो ऽभिधीयते इत्येवं सूत्रद्वयं व्याख्येयमित्यर्थः । नन्ववान्तरप्रकरणरूपवाक्यैकवाक्यत्वविवक्षयैकवाक्यत्वोक्तौ स्वार्थसमाप्तस्यैव वाक्यस्य वाक्यान्तरान्वयाभ्युपगमादसमाप्त्युक्तिर्न युज्येतेत्याशङ्क्याह * यद्यपीति * प्रयाजस्वरूपविधिमात्रेण प्रयाजावान्तरप्रकरणासमाप्तावपि जौहवचतुर्गृहीतादिप्रयाजगुणविधिना समाप्तिर्भविष्यतीत्याशङ्क्य गुणविधिनेत्युक्तम् । कथं समाप्तिरवसीयत इत्याशङ्क्याह * येनेति * यस्मादभिक्रमणादूर्ध्वं प्रयाजशेषाभिघारणाख्यः प्रयाजा-

नां गुणो ऽभिधास्यते तस्मात्प्रयाजानां प्रकरणमद्याप्यवसीयत इत्यर्थः।
॥ उपवीतस्य प्राकरणिकाङ्गताधिकरणम् ॥ ११ ॥

सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥२१॥

नन्वाभिक्रमणस्य णमुलश्रुत्युक्तक्रियान्तराङ्गत्वोपजीवनेन पूर्वोत्तरपक्षविचारात् श्रुतिपादे सङ्गतिर्युक्ताउपव्यानस्य तु वैयग्र्यापादकशीतवारणसामर्थ्यरूपाल्लिङ्गात्कर्तृसंस्कारत्वावगतेः सामान्यसम्बन्धापेक्षायां च प्रकरणात्प्रकृतकर्माङ्गत्वावगतेः क्वचिदंशश्रुतिव्यापाराभावान्न श्रुतिपादे सङ्गतिरित्याशङ्क्य प्रासाङ्गिकत्वेन सङ्गतिमाह * सिद्ध इति * कर्मणामपि कर्तृसंस्कारद्वारा कर्मान्वये सिद्धे प्रसङ्गात्किमवान्तरप्रकरणेनोपव्यानस्य सामिधेन्यनुवचनमात्रे विनियोगो महाप्रकरणाद्वा कृत्स्ने दर्शपूर्णमासप्रकरणइति भाष्यमते सङ्गतिः। वार्त्तिकमते त्ववान्तरप्रकरणात्कर्मणामभिक्रमणादीनामङ्गभूतप्रयाजादिकर्मान्वये किं सामिधेन्यनुवचनावान्तरप्रकरणमुपव्याने ऽनुवर्त्तते न वेति सङ्गतिरित्यर्थः। सामिधेन्यादीनामुदाहरणत्वशङ्काभाष्यस्थयज्ञोपवीतशब्दाच्च तस्माद्यज्ञोपवीत्येवाधीयीताध्यापयेद्यजेत याजयेदिति काठकशाखाविहितकर्माङ्गभूतनवसूत्रातन्तुकयज्ञोपवीतशङ्कोपवीतोक्त्या निरस्ता । भाष्ये तु सर्वधर्मत्वशङ्कानिरासाय प्रकृतयज्ञाङ्गत्वोक्त्यर्थो यज्ञशब्दः । अस्मिन्ननुवाके सामिधेन्यो ऽस्मिन्निविदइत्यादिविभागोक्तेः प्रयोजनमाह * तत्रेति * सामिधेनीप्रकरणे वर्त्तमानस्योपवीतमाम्नातान्निवृत्ते वा तत्प्रकरणे इति न ज्ञायत इत्येवं सौत्रे सन्दिग्धशब्दे व्याख्याते सामिधेनीनामवान्तरप्रकरणस्याभावादनुवृत्त्यनुवृत्तिसन्देहो न युक्त इत्याशङ्कार्थे नन्वितिभाष्यं पूर्वाधिकरणे भाष्यकृतावान्तरप्रकरणाव्युत्पादनादेवान्तरप्रकरणभावाशयत्वेन तावद्व्याचष्टे * नन्विति* महाप्रकरणेनाङ्गतया सामिधेन्यादीनां ग्रहणात्करणत्वाभावेनेति कर्त्तव्यताकाङ्क्षालक्षणं प्रकरणं न सम्भवतीत्याशयः। स्वमते तु पूर्वाधिकरणएवावान्तरप्रकरणव्युत्पादनात्प्रयाजादिष्वदृष्टार्थेष्वङ्गेष्ववान्तरप्रकरणसद्भावे ऽपि सामिधेनीनां दृष्टार्थत्वेनेति कर्त्तव्यतानाकाङ्क्षत्वान्नावान्तरप्रकरणमस्तीत्येवमाशयत्वेन व्याचष्टे *अथ वेति* अस्मिन्पक्षे परस्य द्रव्यस्य प्रकृष्टत्वकरणमतिशयाधानम्परप्रकरणशब्देन विवक्षितम् । सत्यमिति परिहारभाष्यं अवान्तरप्रकरणव्युत्पादनाशयत्वेन तावद्व्याचष्टे * नैतदिति * महाप्रकरणावगत प्रधानभावनाङ्गत्वोपपादकत्वात्प्रधानानुग्रहकरणस्य न महाप्रकरणावगतेनाङ्गत्वेन कथं भावः प्रतिबध्यत इत्यर्थः। नन्वङ्गभावनानाम-

ङ्गान्वये प्राधान्यापत्तेः प्रधानभावनान्वयो विरुध्येतेत्याशङ्क्याह * यथैवेति * यथाङ्गवाक्यानामवान्तरवाक्यार्थापेक्षया परिपूर्णस्वार्थानामपि महावाक्यार्थापेक्षया साकाङ्क्षत्वात्प्रधानवाक्यैकवाक्यत्वं तस्यामपि चावस्थायां स्वार्थे परिपूर्णत्वमात्मीयरूपं न विरुध्यते तथाङ्गभावनानां स्वाङ्गानि प्रति प्राधान्ये ऽपि प्रधानभावनां प्रत्यङ्गत्वन्तस्यामपि चावस्थायां स्वाङ्गानि प्रति प्राधान्यमविरुद्धमित्याशयः। पूर्वाधिकरणएवावान्तरप्रकरणव्युत्पादने तु यद्यपि परस्य द्रव्यस्य प्रकृष्टत्वकरणे ऽतिशयाधाने सामिधेन्यः श्रूयन्ते तथापि तासामवान्तरप्रकरणमस्तीत्येवं भाष्यं व्याख्येयमिति सूचयितुमाह * संस्कारो ऽपीति* नन्वदृष्टार्थस्य प्रोक्षणादिसंस्कारस्यावान्तरस्यावान्तर प्रकरणसद्भावे ऽपि सामिधेनीनां दृष्टार्थत्वेनेतिकर्त्तव्यतानाकाङ्क्षत्वात्तन्न स्यादित्याशङ्क्य तास्वपि नियमादृष्टांशसिद्धये इतिकर्त्तव्यताकाङ्क्षणादस्त्येवावान्तरप्रकरणमित्याह * दृष्टार्थेष्वपीति * किं च केवलदृष्टार्थेष्वपि दृष्टार्थेतिकर्त्तव्यताकाङ्क्षणात्तदस्त्येवेत्याह * दृष्टे ऽपि चेति* अतः संस्काररूपाणामप्यङ्गानामवान्तरप्रकरणमस्तीत्युपसंहरति *तस्मादिति * नन्वेवमपि दृष्टार्थयैवेतिकर्त्तव्यतया सामिधेन्यनुवचनस्य नैराकाङ्क्ष्यसिद्धेर्वासोविन्यासविशेषरूपोपव्यानात्मिकायाश्चेतिकर्त्तव्यतायाः शीतवातादिवारणात्मकदृष्टार्थत्वमात्रेणापर्यवसानाददृष्टार्थत्वावगतेस्तदाकाङ्क्षा न सम्भवतीत्याशङ्क्याह * अतश्चेति * विवक्षादिक्रमेणोपजनितो यो वर्णग्रहणसामर्थ्यकरणरूपः श्रोत्रसंस्कारस्तदनुगृहीतेनेत्यर्थः। तस्माददृष्टार्थोपव्यानादीतिकर्त्तव्यताकाङ्क्षाप्यस्तीत्युपसंहरति * तस्मादिति * सामिधेनीनामवान्तरप्रकरणसद्भावे वासोविन्यासरूपस्योपव्यानस्य तदङ्गत्वसम्भवेन प्रकरणविच्छेदकत्वायोगात्प्रकरणनिवृत्तिरूपसिद्धान्तशङ्कानुपपत्त्या॥सन्देहाक्षेपार्थे कथं पुनरिति भाष्यमवान्तरप्रकरणनिवृत्त्यनिश्चयेनावान्तरप्रकरणविरोधानिश्चयान्महाप्रकरणेन दर्शपूर्णमासार्थत्वसिद्धान्तसिद्धेरयुक्तमाशङ्क्योपपादयितुमाह * एवं तर्हीति * सन्दिग्धे ऽपि बलवद्विरोधे दुर्बलस्य विनियोक्तृत्वं न सम्भवतीत्याशयः। सामिधेनीप्रकरणविच्छेदकोक्त्यर्थे निवित्पदानीतिभाष्यं व्याचष्टे * उच्यते इति * एवं सत्यवान्तरप्रकरणानुवृत्तिरूपपूर्वपक्षशङ्कानुपपत्तेः सन्देहो न सम्भवतीत्याक्षेपार्थे यदीति भाष्यं व्याचष्टे * एवं तर्हीति * निविद्भिर्विच्छिन्नस्यापि सामिधेनीप्रकरणस्य काम्यैः सामिधेनीकल्पैरुज्जीवनसम्भवासम्भवसन्देहादनुवृत्त्यननुवृत्तिसन्देहोपपादनार्थे परस्तादितिभाष्यं व्याचष्टे * नैत-

दिति * किन्तावदित्यादि पूर्वपक्षभाष्यं तात्पर्यतोऽव्याचष्टे * किन्तावदिति * निविद्भ्यः प्राक्पश्चाच्च सामिधेनीनाङ्कीर्त्तनात्काम्यसामिधेनीकल्पपर्यन्तं सामिधेनीप्रकरणानुवृत्तावप्युपव्यानपर्यन्तं कथमनुवृत्त्यवगतिरित्याशङ्क्य तिष्ठन्नन्वाहान्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्योऽथान्वाहेत्युपव्यानात्पश्चादपि सामिधेनानुवचनाङ्कीर्त्तनात् देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्निति च स्रौवाघाराविध्युपक्रमे सामिधेन्यनुवचनोपसंहारादुपव्याने ऽपि सामिधेनीप्रकरणानुवृत्तिः स्थितोक्त्या सूचिता । निविदामव्यव्यवधायकत्वार्थे सन्देहसमर्थनोपसंहारभाष्यानुसारात्परप्रकरणे पाठमुक्त्वा पदोत्तरत्वेनोत्तरसूत्रं व्याख्यातुमथ वेत्युक्तम् । सामिधेनीवन्निविदामपि अग्निसामिन्धनप्रकाशनार्थत्वे ऽपि सामिधेनीनामग्निसमिन्धनार्थेध्मकाष्ठप्रक्षेपप्रकाशनार्थत्वान्निविदामिध्मप्रक्षेपफलाग्निसमिन्धनानिष्पत्ति प्रकाशनार्थत्वादगन्मस्वः संज्योतिषा भूमेति दर्शपूर्णमासफलनिष्पत्तिप्रकाशनार्थस्य मन्त्रस्य दर्शपूर्णमासाङ्गत्ववत्सामिधेनीप्रकाश्येध्मप्रक्षेपफलनिष्पत्तिप्रकाशनार्थत्वान्निविदां सामिधेन्यङ्गता युक्तेत्याशयः । उत्तरार्द्धं व्याचष्टे * यथेपि * पूर्वपक्षमुपसंहरति * इतीति * सिद्धान्तमाह *इति प्राप्त इति * सौत्रवाक्यभेदशब्दोक्तेऽवान्तरप्रकरणरूपवाक्यैकवाक्यत्वाभावे ब्रूम इत्यनेनार्थाद्व्याख्याते तदुपपत्तित्वेन व्यवायोक्तिव्याख्यार्थं विच्छिन्नेत्युक्त्वा काम्यैः सामिधेनीकल्पैः सामिधेनीप्रकरणोज्जीवनान्न निविदां विच्छेदकत्वं भवतीत्याशङ्क्य न हीत्युक्तम् । न हीत्येतावतो निषेधार्थत्वाद्धि शब्दस्यापौनरुक्त्यम् । निविदामपि सामधेन्यङ्गत्वात्कथं तत्प्रकरणविच्छेदकतेत्याशङ्क्य सामिधेनीभिरसम्बद्धेन ग्रन्थेनेति भाष्यावयवसूचितं निविदामनङ्गत्वमुपपादयितुमाह * तावद्धीति * नन्विद्ध इति भूतनिष्ठया सामिधेनीप्रकाश्येध्मप्रक्षेपफलाग्निसमिन्धननिष्पत्तिप्रकाशनादगन्मस्वरित्यादीनां दर्शपूर्णमासाङ्गत्ववन्निविदां सामिधेन्यङ्गत्वं भविष्यतीत्याशङ्क्याह * तत्रेति * दर्शपूर्णमासादिफलस्यादृष्टद्वारसाध्यत्वेन श्रद्धापेक्षत्वाच्छ्रद्धाजननात्फलनिष्पत्तिप्रकाशनस्याङ्गत्वं युक्तम् । इध्मप्रक्षेपफलस्यात्वग्नेः समिद्धत्वस्य दृष्टद्वारसाध्यत्वेन श्रद्धानपेक्षत्वात्फलनिष्पत्तिप्रकाशनस्याङ्गत्वं न युक्तमित्याशयः । सामिधेनीनामपि निवित्प्रकाश्याग्निसमिन्धनसाधनेध्मप्रक्षेपप्रकाशनार्थत्वान्निविदङ्गता कल्पयितुं शक्येत्याह * अथेति * पूर्वार्द्धं व्याख्यामुपसंहरति * तेनेति * उत्तरार्द्धं व्याख्यातुमाह * कस्यास्त्विति * एकविंशतिमनुब्रूयात्तत्प्रतिष्ठाकाम-

स्येत्यादिषष्ठीश्रुत्या काम्यकल्पानां पुरुषार्थत्वावगतेः प्रकरणेनाग्रहणात्तदुज्जीवनं न सम्भवतीत्याशयः । नन्वेवं सति काम्यकल्पेनैव प्रकरणविच्छेदसम्भवान्निविद्भिर्विच्छेदोक्तिरनर्थिकेत्याशङ्क्याह * यदि पुनरिति * नन्वनङ्गत्वे ऽपि निविदां परप्रकरणपाठसम्भवान्न प्रकरणविच्छेदकतास्तीत्याशङ्क्याह * अथापीति * काम्यकल्पानामङ्गत्वाभावेन प्रकरणानुवृत्तिप्रमाणाभावान्न तद्बलेन परप्रकरणपाठकल्पना युक्तेत्याशयः । एवं च निविदामङ्गत्वस्य परप्रकरणपाठस्य वा कल्पयितुमशक्यत्वादवान्तरप्रकरणविच्छेदकत्वासिद्धेर्महाप्रकरणेनोपवीतस्य कृत्स्नदर्शपूर्णमासार्थता युक्तेति सूत्रार्थमुपसंहरति *नत्विति* ननु दध्नेन्द्रियकामाधिकरणन्यायेनैकविंशत्यादेर्गुणात्फलावगतेर्निराश्रयस्य च गुणस्य फलान्वयानुपपत्तेः विच्छिन्ने च प्रकरणे तेनापादानाद्वाक्येन त्वाश्रयदाने गुणफलाश्रयाश्रयिसम्बन्धद्वयकरणात् वाक्यभेदापत्तेर्भावनान्तरत्वाद्वा वाक्यभेदपरिहारे रेवतीवारवन्तीयादिष्वपि वाक्येनाश्रयदानाद् गुणफलान्वयोपपत्तेः स्थितसिद्धान्तहानिप्रसङ्गात्प्रकरणेनाश्रयलाभार्थं विच्छिन्नस्या ऽपि प्रकरणस्य काम्यकल्पैरुज्जीवनावगतेरुपवीतस्या ऽपि सामिधेन्यङ्गत्वप्रसङ्गाद् दुर्घटः सिद्धान्त इत्याशङ्क्ते * ननु चेति * प्रकृताश्रयालाभात्कर्मण एवात्र फलं न- ७५२।४
गुणादिति परिहरति * उच्यते इति * श्लोकं व्याचष्टे * नैवेति * ननु कर्मान्तरत्वे संख्येया ऽनुपादानात्संख्यामात्र विशिष्टानुवचन विधिरपरिपूर्णः स्यादित्याशङ्क्यातिदेशात्संख्येय साम्यमह * कथमिति * ननु कर्मान्तरत्वे ऽपि काम्येनैव सामिधेन्यनुवचनेन प्रसङ्गात् क्रत्वर्थसामिधेन्यनुवचनकार्याग्निसमिन्धनप्रकाशनसिद्धेर्गुणकामतुल्या ऽनुष्ठानावगमात्कर्मान्तरत्वोक्तिः किमर्थेत्याशङ्क्याह * यद्यपि चेति * अनुष्ठानाविशेषे ऽपि प्रकृताश्रयालाभाद् गुण फलान्वया ऽनुपपत्तेः कर्मान्तरविधिं विना वाक्यानर्थक्यप्रसङ्गात्कर्मान्तरतोक्तेत्याशयः । ननु कर्मान्तरत्वे पृथक्प्रयोगापत्तेस्तेन प्रसङ्गात् क्रत्वर्थसामिधेन्यनुवचनकार्यासम्भवात्कर्मान्तरत्वयोरनुष्ठानविशेषो ऽस्त्येवेत्याशङ्क्ते * नन्विति * प्रकृतानुपयोगित्वादेव तावन्नेयं शङ्का युक्तेत्याह * न तावदिति* न च कर्मान्तरत्वे ऽपि पृथक्प्रयोगापत्तिरित्याह * न चेति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * यस्य नमः प्रवक्त्रइत्यादि निगदस्य पश्चात्सामिधेनीवचने क्रियमाणे पश्चाद्वचनवाच्यैकविंशतिमनुब्रूयादित्ययमनुशब्दः प्रयुज्यते तस्य निगदरूपस्यान्यप्रयुक्तत्वेन पृथक्प्रयोगे सति साम-

धेनीभिरलाभादनुवचनत्वाविघातापत्तेर्न पृथक्प्रयोगो युक्त इति भावे शानचमङ्गीकृत्य व्याख्येयं पृथक्प्रयोगेऽपि सामिधेन्यङ्गत्वान्निगदो लप्स्यत इत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * यो हीति * जातवेदो रमया पशून्मयीति लिङ्गान्निगदस्याप्यग्निप्रकाशनार्थत्वावगतेर्न सामिधेन्यङ्गतेत्याशयः । अग्नये समिध्यमानायानुब्रू-
७५३।४ हीति प्रैषपश्चाद्भावनिमित्तो ऽनुशब्दो भविष्यतीत्याशङ्क्य पृथक्प्रयोगे क्रत्वर्थाग्निसामिन्धनप्रैषप्राप्तेरनाशङ्क्यत्वान्निगदानन्तर्यनिमित्ततानुशब्दस्याशङ्क्येत सा च स्वातन्त्र्ये सति न सम्भवतीति परिहारार्थं तदनन्तरत्वेन चेत्युक्तम् । पृथक्प्रयोगे च सत्येकविंशत्यादिसंख्यापरिच्छेद्यत्वेनातिदेशप्राप्तानामपि प्रवोवाजा अभिद्यव इत्याद्यानामृचामग्निसमिन्धनप्रकाशकत्वेन सामिधेनीत्वाभावापत्तेरप्रयोगमध्यस्य चाग्नेर्निष्प्रयोजनत्वेनासमिन्धनीयत्वादृचामाग्निसामिन्धनप्रकाशकत्वानुपपत्तेः सामिधेनीनामेकविंशत्यादिसंख्यापरिच्छेद्यतातिदेशप्राप्ता विहन्येतेत्याह * किञ्चेति * श्लोकं व्याचष्टे * एकविंशत्यादिभिस्तावदिति * उत्तरार्द्धव्याख्यार्थं सचेत्युक्तम् । कथं तर्हि कर्मान्तरत्वे ऽप्यन्तः क्रतुप्रयोगसिद्धिरित्याशङ्क्याह * तेनेति * येन कारणेनाग्निसामिन्धनप्रकाशनत्वं विना सामिधेनीत्वं न सम्भवति क्रतुप्रयुक्तत्वं च विनाग्नेः समिन्धनीयत्वं न सम्भवति तेन कारणेनार्थाभिधानकर्म च भविष्यति संयोगस्य तन्निमित्तत्वात्तदर्थे हि विधीयते इति चतुर्थाधिकरणन्यायेनास्याग्निसमिन्धनप्रकाशनार्थासामिधेनीकर्मस्वरूपस्य प्रकृतिभूतक्रत्वर्थसामिधेन्यनुवचनवत्काम्ये सामिधेन्यनुवचने ऽनुप्रयोगवशात्प्रयोगमध्यपात्यग्निसमिन्धनाधीनत्वं कर्मान्तरभूतस्यापि काम्यस्य सामिधेन्यनुवचनस्येत्युक्ते प्रयोगमध्यपात्यग्निसमिन्धनप्रकाशनस्य पञ्चदशसंख्याविच्छिन्नसामिधेनीसाध्यत्वात्कथमेकविंशत्यादिसंख्यावच्छिन्नसामिधेन्यनुवचनेन सिद्धिरित्याशङ्क्य प्राकृतस्य चेत्युक्तम् । उपवीतस्य निविद्व्यवहित क्रत्वर्थसामिधेन्यनङ्गत्वेऽपि काम्यसामिधेन्यङ्गत्वं भविष्यतीत्याशङ्कार्थं ननु सामिधेनीकल्पानामिति भाष्यं व्याचष्टे * नन्विति * निविद्व्यवधानान्निवृत्तस्य क्रत्वर्थसामिधेनीप्रकरणस्य काम्येषु सामिधेनीकल्पेषु प्रकरणेनाश्रयालाभाद्वाक्येनाश्रयान्वयाभ्युपगमापत्तेस्तत्र च वाक्यभेदप्रसङ्गाद् गुणफलान्वयासम्भवेनाश्रयापेक्षाभावात्तन्निमित्तोज्जीवनानुपपत्तेः । प्रकरणेनाश्रयालाभे ऽपि गुणफलान्वयाभ्युपगमेनाश्रयतया सामिधेनीग्रहणे ऽपि तासां संख्यान्वयित्वमात्रेण ग्राह्यतया कर्त्तव्यत्वेना-

विधानात्संख्यासामिधेन्यन्वयस्य वाक्येनैवाभ्युपगमनीयत्वापत्ते-र्गुणफलान्वये ऽपि प्रकरणानपेक्षणात्सामिधेनीनां प्रकृतत्वाभावात्प्र-करणेनोपवीतग्रहणानुपपत्तेः सामिधेनीवाक्यानन्तर्गतत्वाच्च वा-क्येनोपवीतग्रहणस्यानाशङ्क्यत्वान्न काम्यानामपि सामिधेनीनामुपवी-तमङ्गमिति परिहारार्थं नेति ब्रूम इत्यादि भाष्यं काम्येषु सामिधे-नीकल्पेषु क्रत्वर्थसामिधेनीप्रकरणानुवृत्तावपि काम्यसामिधे-नीप्रकरणेनैवोपवीतग्रहणोपपत्तेर्गुणफलान्वयस्य च विच्छिन्नप्र-कृताश्रयत्वेनानिष्टत्वादुपेक्ष्य स्वयङ्काम्यानां सामिधेनीनां प्राकृताङ्ग-निराकाङ्क्षत्वेन प्रकरणाभावात्सद्भावे ऽपि देवा वै सामिधेनीरनूच्ये-त्यस्याधारार्थवादाङ्गत्वेन सामिधेनीप्रकरणानुवर्त्तकत्वादनुवर्त्त-कान्तरस्य चानाशङ्कनीयत्वात्सन्निधिनोपवीतमङ्गं स्यात्स च प्रक-रणात् दुर्बल इत्येवं परिहारमाह * नैतदिति * श्लोकं व्याचष्टे * सर्वास्वेवेति * अतिदेशलभ्यानामपि प्राकृतानामङ्गानां क्लृप्तोप-कारकत्वेनोपादिष्टेभ्यः प्राग्विकृतिभिर्ग्रहणात्पृषदाज्येनानुयाजान्यज-तीत्यादीनां च प्राकृतानां गुणत्वेनोपदिष्टानामपूर्वाणामप्यङ्गानां स्वाङ्गपरिपूर्णप्राकृताङ्गग्राहिण्या विकृतिभावनयाकृताङ्गग्रहणवे-लायामेव ग्रहणात्तदङ्गानाञ्चानिवृत्ताकाङ्क्षत्वात्प्रकरणेनैव प्राकृताङ्ग-गुणभूताप्राकृताङ्गग्रहणोपपत्तेस्तद्व्यावृत्त्यै यदित्युक्तम् । प्राकृता-ङ्गग्रहणसमकाललक्षणार्थो मध्यशब्दः । अभिषेचनीयसन्निधिपठि-तानां विदेवनादीनां स्थानादभिषेचनीयाङ्गत्वस्य प्रतिभासमानस्य प्र-करणावगतेन राजसूयाङ्गत्वेन बाधो बलाधिकरणे वक्ष्यमाणः काम्य-सामिधेनीसन्निधिनोपवीतस्य काम्यसामिधेन्यङ्गतायाः प्रकरणावग-तेन दर्शपूर्णमासाङ्गत्वेन बाधासिद्ध्यै दृष्टान्तितः तस्मादिति सिद्धान्तो-पसंहारभाष्यं व्याचष्टे * तस्मादिति *

॥ वारणवैकङ्कतादिपात्राणां कृत्स्नयागगुणताधिकरणम् ॥ १२ ॥
॥ मिथो ऽसम्बन्धन्यायो वा ॥

## गुणानां च परार्थत्वादसम्बन्धः समत्वा-स्यात् ॥ २२ ॥

पात्रविचारस्योपवीतचारासङ्गतिमाशङ्क्य वाजपेयाङ्गत्वेनाव-गतस्य सप्तदशारत्नित्वस्य तत्रासम्भवात्तदङ्गपशुयागावतारे ऽभिहिते तेनैव न्यायेनाभिक्रमणोपव्यानयोः कर्माङ्गभूतकर्त्रवतारे सिद्धे किम-भिक्रमणस्य कृत्स्नदर्शपूर्णमासाङ्गत्वात्तदङ्गेषु सर्वत्विक्ष्ववतारः प्र-

योजहोमाङ्गत्वाद्वा तदङ्गभूते ऽध्वर्युमात्रे उपवीतस्य च किं सामि-
धेन्यनुवचनमात्राङ्गत्वात्तदङ्गभूते होतृमात्रे ऽवतारः कृत्स्नदर्शपूर्ण-
मासाङ्गत्वाद्वा तदङ्गभूतेषु सर्वर्त्विक्ष्विति विचारात्पर्यवसितस्या-
नर्थक्यतदङ्गावतारन्यायस्य पवमानेष्टीनामाधानाङ्गत्वे ऽपि यज्ञ-
त्वाभावान्नाधानप्रकरणपठितानां पात्राणान्तास्ववतार इति प्रति
पादनात्स्वमतेनापवादतया सङ्गतिमाह * आनर्थक्यादिति * भाष्य-
मते तु किं पवमानेष्टीनामाधानाङ्गत्वात्पात्राणां तास्ववतारो ऽनङ्ग-
त्वाद्वानवतार इति विचारात्प्रासङ्गिकी सङ्गतिः। वैकंकतेषु नत्वे
तेनेति पर्युदासानुषङ्गशङ्कां निरस्यन्नग्न्याधेय इत्युदाहरणभाष्यं
७५४।२ व्याचष्टे * वारणेति * वारणानि होमव्यतिरिक्तपात्रकार्यार्था
नि वैकंकनानि सर्वपात्रकार्यार्थानीत्यर्थः। प्रकरणेनाधानाङ्गत्वावग-
मात्पवमानेष्टिष्वेव निवेशः सर्वयागेषु वेति सन्देहायोगमाशङ्क्य
यज्ञे ऽवचर्यते ऽनुष्ठीयते ऽनेनेति यज्ञावचरशब्देन यागाङ्गत्वाभिधाना-
त्प्रकरणगम्ययागरूपाधानाङ्गत्वबाधेन सन्देहोपपादनार्थं न चेत्या-
दि भाष्यं व्याचष्टे * यज्ञेति * किमित्यादि पूर्वपक्षभाष्यं व्याच-
ष्टे * आनर्थक्यादिति * एवमित्यादि सिद्धान्तभाष्यं सङ्क्षि-
प्य व्याचष्टे * तथेति * श्लोकं व्याचष्टे * प्रकरणेति * केन
वाक्येनेत्यपेक्षायां वाक्यमुदाहरति*किमितीति*भाष्यस्थस्येति कर-
णस्य येन वाक्येनाग्नेर्भवति तत्किं वाक्यमित्यग्न्यङ्गत्वप्रतिपा-
दकत्वपरामर्शार्थत्वं सूचितम्। पवमानेष्टीनां कैमर्थ्याकाङ्क्षायामा-
हवनीये जुहोतीति क्लृप्तफलाहवनीयसंयोगे तत्कल्प्यफलानामि-
ष्टीनां तादर्थ्यावसायादगारे गावो वास्यन्तामगारे कुसुमानीत्यादिवच्च
प्राधान्ये ऽपि सप्तम्यविरोधाज्जुहोत्यनुत्पत्तित्वेन चेष्टिनिरोधा-
नपेक्षणाद्विश्वजिद्वत्स्वर्गे ऽपि कल्प्यमाने जुहोत्युपलक्षिताद्यागात्स्व-
र्गो यागस्य चाहवनीयेनापरो ऽदृष्टः संस्कार इत्यदृष्टद्वयकल्प-
नापत्तेरग्निसंस्कारकल्पनस्यैवोचितत्वात्पवमानेष्टीनामप्याधानवद्वा-
क्येनाग्न्यङ्गत्वावगतेर्नाधानाङ्गतेत्याशयः। सिद्धान्तभाष्यं दूष-
यति * तत्रेति * आहवनीयप्रयोजनाभिधायिवाक्यान्तराश्रु-
तेरनेनैव वाक्येनाग्निहोत्राद्यङ्गतया ऽऽहवनीयस्य प्रयोजनवत्त्वप्रती-
तेरभ्युपगमनीयत्वादग्निहोत्रादीनां पवमानेष्टीनां च श्रुताश्रुतफ-
लत्ववैषम्ये ऽप्येकेन वाक्येनाहवनीयस्य क्वचिद् गुणत्वे क्व चित्प्रा-
धान्ये ऽभिधीयमाने वैरूप्यापत्तेः सप्तम्याश्च श्रुतिलक्षणावृत्तिविरो-
धापत्तेः पवमानेष्टिवच्च विश्वजिदादीनामश्रुतफलत्वेनाहवनीयाङ्ग-
त्वापत्तेर्नानेनाग्न्यर्थत्वं पवमानेष्टीनां गम्यतइत्याशयः। पवमानेष्टी-

नामपि च प्रकरणावगताधानाङ्गत्वेन फलवत्त्वावसायात्फलवद्-
फलत्वविशेषानुपपत्तेस्तद्दर्शनैकस्य वाक्यस्य गुणप्रधानभूता-
हवनीयोक्तिवैरूप्याभ्युपगमः सप्तम्याश्च श्रुतिलक्षणावैरूप्याभ्यु-
पगमो विश्वजिदादीनां चाहवनीयाङ्गत्वाभ्युपगमो न युक्त इत्याह *
सर्वं चेति * फलवदग्निहोत्रादिकर्मानुरोधेन च निष्पन्नाहवनी-
योपदेशादफलवत्पवमानेष्ट्यादिकर्मानुरोधेन च भाव्याहवनीयसं-
ज्ञाविधानादाहवनीयशब्दप्रवृत्तावप्यस्मिन्पक्षे वैरूप्यं स्यादित्याह *
* निष्पन्नश्चेति * फलवत्कर्मानुरोधेनेत्यकारसदसद्भावाभ्यामावृ-
त्त्योभयत्र योज्यम्।यदाहवनीये जुह्वति यद्गार्हपत्ये हवींषि श्रपयन्ति
यद्दक्षिणाग्नावन्वाहार्यं पचन्तीत्यनारभ्याधीतेभ्यः कर्माङ्गत्वेनाहव-
नीयादिविधायिभ्यो ऽन्येन पवमानेष्टिप्रकरणाधीतेनानारभ्याधीताह-
वनीयवाक्यसदृशेनाहवनीयाङ्गतया पवमानेष्टिविधिर्भविष्यतीति
परमतेन भाष्यं समाधत्ते * तस्मादिति * नन्वश्रुतप्राकरणिकवा- ७५५।१
क्यकल्पनां विनाप्यनारभ्यवाक्येनाश्रुतहोमासु पवमानेष्टिषु आह-
वनीयमुपदेष्टुमशक्नुवतातिदेशात्प्राप्तेनाहवनीयं प्रापयताङ्गत्वेना-
निष्पन्नाहवनीयप्रापणाशक्तेः साध्यत्वेन प्रापणावगमात्पवमानेष्टी-
नामग्न्यङ्गत्वसिद्धेरतिदेशप्राप्तवाक्यव्यापारोक्त्यर्थत्वेन वाक्यो-
क्त्युपपत्तेर्नाश्रुतवाक्यकल्पना युक्तेत्याशङ्कानिराससूचनार्थः कि-
लशब्दः । उपकारपृष्ठेनातिदेशप्रवृत्तेः पवमानेष्टिष्वनिष्पन्नत्वेना-
धारतया गुणत्वेन प्राप्त्यसम्भवे कार्यलोपात्कृष्णलेष्ववघातवदाह-
वनीयानिष्पत्तावप्याधानजन्यसंस्काररूपेणैकदेशनिष्पन्नत्वादतिदे-
शाभ्युपगमे ऽङ्गत्वस्याप्युपपत्तेः अतिदेशप्राप्तस्य चाहवनीयस्य
साध्यत्वाभ्युपगमे ऽन्योन्यानपेक्षास्वाधानानपेक्षासु चेष्टिष्वातिदेशप्रा
प्तेः तादृशीनामेवाहवनीयाङ्गत्वापत्तेराधानपवमानेष्टिसमुच्चयाभ्युपग-
मविरोधप्रसङ्गादतिदेशप्राप्तस्याहवनीयस्य साध्यत्वानुपपत्तेर्नाश्रुत
प्राकरणिकवाक्यकल्पनां विनाग्न्यङ्गत्वं पवमानेष्टीनां सेत्स्यतीत्या-
शयः । अनारभ्यवाक्यसदृशाश्रुतप्राकरणिकवाक्यकल्पने ऽप्या-
धानाङ्गत्वात्पवमानेष्टीनामाहवनीयोत्पादकत्वाभ्युपगमे ऽगारप्रावा-
रादिवदाहवनीयस्यानिष्पन्नत्वेनाधिकरणतया संस्कार्यत्वायोगा-
त्सप्तमीभङ्गापत्तेः सम्मार्गादिवत्पवमानेष्टीनां कर्मविशेषप्रकरणान-
धीतत्वेन कर्मविशेषयोग्यताधानात्मकसंस्कारार्थत्वायोगात्साधा-
रणयोग्यताधानस्य चाहवनीयस्वरूपोत्पत्तिमात्रात्सिद्धेरुपनयना-
दिवत्सर्वकर्मसाधारणस्य सर्वयोग्यताधानात्मकसंस्कारार्थत्वायोगा-
दग्न्यङ्गत्वासिद्धेर्नाश्रुतकल्पना युक्तेत्येतत्समाधानं दूषयति * वयं

स्त्विति * कथं तर्हि सिद्धान्तसिद्धिरित्याशङ्क्य पूर्वपक्ष्युक्ताधानाङ्गत्वाभ्युपगमेनापि पात्राणां पवमानेष्टिष्वनवतरणमुपपद्यतइत्याह * अन्यथापीति * अन्यथात्वमेव दर्शयति * भवन्तु नामेति * वाक्यगम्ययूपान्वयेन प्रकरणगम्यसाक्षाद्वाजपेयान्वयबाधाद्वाजपेयाङ्गाङ्गयूपद्वारापि च सप्तदशारत्नित्वस्य वाजपेयोपकारत्वं[1] किञ्चिदस्तीत्यर्थः । यज्ञग्रहणं पवमानेष्टिष्ववतारकारणं[2] भविष्यतीत्याशङ्क्याह * यत्त्विति*एकादशे ऽग्नियोगः सोमकाले तदर्थत्वात्संस्कृतैः कर्मणः परेषु स्वाङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यादिति सूत्रेणाग्नेः साङ्गप्रधानार्थत्वेनाग्नियोगस्यापि तद्द्वारा साङ्गप्रधानार्थत्वावसायात्साङ्गप्रधानापवर्गे ऽग्निविमोकं पूर्वपक्षयित्वा प्रधानापवर्गे तदर्थत्वादित्यनेन पञ्चभिर्युनक्ति पाङ्क्तो य इति श्रुतेर्यज्ञशब्दस्य च स एष यज्ञः पञ्चविधो ऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति वाक्यालोचनया प्रधानयागवाचित्वावसायादग्नियोगस्य प्रधानयागमात्रार्थत्वावगतेः प्रधानमात्रापवर्गे ऽग्निविमोकसिद्धान्तस्य प्रधानार्थो योगः प्रधानसंयोगेन हि श्रूयते पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेष यज्ञस्तमालभतइति यज्ञप्राप्त्यर्थं युनक्तीति ज्ञायतइति भाष्ये वक्ष्यमाणत्वाद्वार्त्तिककृतापि यज्ञसंयोगार्थवादस्य पञ्चभिर्युनक्तीति गुणवाक्यशेषतयाग्निं युनज्मि शवसा घृतेनेति जुहोतीत्युत्पत्तिवाक्यशेषत्वाभावेन सिद्धान्तदूषणाद्यद्यपि यज्ञसंयोगो भवेत्तथापि यज्ञशब्दो यागमात्रवचनो यागमात्रवचनश्चेदङ्गयागानपि वदतीति वार्त्तिके च यागमात्रवाचित्वोक्तेश्चेच्छब्देनैवानभिमतत्वसूचनात्पवमानेष्टीनां प्राधान्याभावेन प्रधानयागवाचियज्ञशब्दवाच्यत्वाभावमभिप्रेत्य प्रकृतयज्ञाभावाद्दीर्घसोमे सन्तृद्यादितिवत्प्रकरणादुत्कर्षेणानारभ्यवादरूपतां प्रतिपाद्य सर्वेषु दर्शपूर्णमासादिषु प्रधानयागत्वाद्यज्ञशब्दवाच्येषु यज्ञावचरग्रहणं पात्राणि विदधातीत्युक्तम् । अनेन चाधानगुणभूतानां पवमानेष्टीनाम्परार्थत्वेनायज्ञतयाधानसमत्वाद्यज्ञसंयोगेन श्रुतैः पात्रैरसम्बन्धः स्यादित्येवं सूत्रव्याख्या सूचिता । दर्शपूर्णमासादिषु जुह्वादिपात्राणाम्पर्णतादिविधावप्युलूखलादिपात्रेषु वारणवैकङ्कतत्वविध्यविरोधः । यज्ञशब्दस्य प्रधानयागवाचित्वेन पवमानेष्टीनां यज्ञत्वाभावप्रदर्शनार्थमेतत्सूत्रमन्यथा तु पवमानेष्टीनां यज्ञत्वाभावाद्यज्ञसंयोगेन श्रुतानां पात्राणाम्बलवत्प्रमाणविरोधेन प्र-

---

(१) कारित्वोपपत्तेः प्रकरणसंभवेऽत्यन्तबाधायोगाद्रूपे ऽवतरणं कल्पितं पात्रवाक्ये तु पवमानेष्ट्यग्रहणान्न तदवतार इ० २ पु० अधि० ।

(२) अवतारेण कारणमिति २ पु० पा० ।

करणादुत्कर्षणं पूषाद्यनुमन्त्रणन्यायेनैव सेत्स्यतीत्याधिकरणानर्थक्यं स्यादित्याह * तच्चेति* सूत्रस्य तर्हि का गतिरित्याशङ्क्य शङ्कोत्तरत्वेन पूर्वाधिकरणशेषतया सूत्रङ्गमयितव्यमित्याह * सूत्रन्त्विति * शेषतयेत्यध्याहार्यम्। कथमेतच्छङ्कोत्तरतास्य सूत्रस्येत्याशङ्क्याह * तदिति * तामेव व्याख्यां स्मारयति * तथा हीति *

॥ वार्त्रघ्न्यामनुवाक्यानामाज्यभागाङ्गताधिकरणम् ॥ १३ ॥

॥ वार्त्रघ्नीन्याय इति वा ॥

## मिथश्चानर्थसम्बन्धात् ॥ २३ ॥

यज्ञावचरवाक्येन पात्राणां प्रकरणादाधानाङ्गत्वबाधे ऽभिहिते ऽनुवाक्यानामपि क्रमावगताज्यभागाङ्गत्वबाधस्य प्रसक्तस्यापवादायैतदधिकरणमित्यनन्तरसङ्गतिमाह * यथासंयोगमिति * अनुवाक्यानां क्रमकृतमाज्यभागसंयोगमबाधित्वा निवेशार्थमित्यर्थः । एवं तर्हि वाक्यबलीयस्त्वेन क्रमकृतसंयोगबाधनिश्चयात्सिद्धान्तानुपपत्तेः सन्देहो न युज्येतेत्याशङ्कते * कुत इति * वाक्यक्रमकृतयोः संयोगयोः सम्प्रधारणे सन्देहायोगसूचनार्थातिकरणः । वाक्यकृतस्य प्रधानसंयोगस्य क्रमविरोध्याविरोधित्वेन द्वेधा प्रतिभानात्सन्देहोपपत्तिरिति सूचयति * संयोगस्यैवेति * बाधकत्वाभिमतवाक्यकृतसंयोगसूचनायैवकारः । एतदेव विवृणोति * साधारण्येनेति * पौर्णमास्यमावास्याशब्दयोः काले कर्माणि च साधारण्यात्कालाभ्यामनुवाक्यानां संयोगः । कर्मभिर्वाग्नेयादिभिरित्येवं वाक्यकृतः संयोगः सन्दिग्ध इत्यर्थः । कस्मिन्पक्षे क्रमवाक्ययोर्विरोधः कस्मिन्वा नेत्यपेक्षायामाह * विरुद्ध इति * वाक्येनानुवाक्यानामाग्नेयादिसम्बन्धे सति क्रमो वाक्यविरुद्धः कालसङ्गतौ न विरुध्यतइत्यर्थः । एतदेवोपपादयति * तुल्यकक्षौ हीति * वाक्येनानुवाक्यानामाग्नेयादिकर्मसम्बन्धे क्रमावगम्येनाज्यभागसम्बन्धेन सहाङ्गाङ्गित्वरूपतया तुल्यत्वं कालसङ्गतौ त्वङ्गाङ्गिरूपत्वाभावेनातुल्यतेत्यर्थः।पूर्वपक्षमाह*नित्यमिति *यस्माद्यागानामेवानुवाक्याभिः सङ्गतिर्युक्ता नतु कालयोः तस्माद्वाक्यावगतानुवाक्यानां प्रधानाङ्गतयाज्यभागाङ्गत्वबोधकः क्रमो बाधित इत्युक्ते ऽनुवाक्याभिः कालयोरङ्गाङ्गित्वरूपसङ्गत्ययोगे ऽपि व्यवस्थाप्यव्यवस्थापकत्वरूपा सङ्गतिर्भविष्यतीत्याशङ्कानिराससूचनार्थं नित्यमित्युक्तम्। आज्यभागयोः साक्षात्कालान्वयाभावात्पौर्णमास्याङ्काले याबाज्यभागौ तयोर्वार्त्रघ्न्यावमावास्याकाले यौ तयोर्वृधन्वत्याविति व्यवस्था- ७५६।४

ऽनुपपत्तेः कालकृतायां व्यवस्थायां य इष्ट्येति वाक्येन दर्शपूर्णमास-सोमविकारेषु पौर्णमास्यमावास्याकालविधानात्पौर्णमास्यां दर्शविकारानुष्ठाने वार्त्रघ्नीप्रसक्तेरमावास्यायां च पूर्णमासविकारानुष्ठाने वृधन्वतीप्रसक्तेः प्रकृतिवद्भाववैरूप्यप्रसङ्गात्प्रधानं पौर्णमासी चामावास्यां च नाज्यभागाविति पूर्वपक्षभाष्ये चाज्यभागयोः पौर्णमास्यमावास्याशब्दवाच्यत्वनिषेधात्सिद्धान्ते पौर्णमास्यमावास्याशब्दयोः प्रधानवाचिनोः प्रधानकालाज्यभागलक्षणार्थत्वावसायाद्व्यवस्थापक्षे ऽपि पौर्णमास्याख्यप्रधानकालीनयोराज्यभागयोर्वार्त्रघ्न्यावमावास्याख्यप्रधानकालीनयोर्वृधन्वत्याविति प्रधानयागद्वारैव व्यवस्थाया वाच्यत्वात्पक्षद्वये ऽप्यनुवाक्याभिः प्रधानयागानां सङ्गतिरित्याशयः । विस्तरेण चास्माभिस्तन्त्रसारे ऽनयोः पौर्णमास्यमावास्याशब्दयोरभिमर्शनमन्त्रविधायिवाक्यस्थपौर्णमास्यमावामास्याशब्दवत्प्राधानवाचितोपपादिता शक्यते च कालोक्तिः पौर्णमास्यमावास्याशब्दवाच्यप्रधानलक्षितकालविषयतया व्याख्यातुम् । साधारण्यर्नाति सन्देहोपपादनवार्त्तिकमपि व्यवस्थापक्षे ऽप्याज्यभागयोः साक्षात्कालानन्वयेन प्रधानद्वाराज्यभागकालस्य लक्षणीयत्वात्पौर्णमास्यमावास्याशब्दयोः पक्षद्वये ऽपि प्रधानवाचित्वसाधारण्यात्किं कर्मलक्षिताभ्याम् कालाभ्यां अनुवाक्यानां व्यवस्थाप्यव्यवस्थापकलक्षणः संयोगः कर्मभिरेव चाङ्गाङ्गिलक्षण इत्येवं सन्दिग्धः संयोग इत्येवं व्याख्येयम् । वारणवैकङ्कतपात्राणां पूषाद्यनुमन्त्रणन्यायेनैवोत्कर्षसिद्धेः गुणानां चेति सूत्रस्य प्रधानविषयत्वानभ्युपगमं त्वेतदधिकरणपूर्वपक्षे ऽपि योजयितुं शक्यमिति सूचयितुमाह * गुणानां चेति * पूर्वपक्षोपसंहारपूर्वं सिद्धान्तसूत्रमवतारयति * तस्मादिति * सूत्रे साध्यानभिधानात्पूर्वसूत्रस्थासम्बन्धपदानुषङ्गेण साध्याकाङ्क्षां पूरयन्व्याचष्टे * मिथश्चेति * पुरो ऽनुवाक्यामन्वाहेति विवक्षितैकसंख्यत्वेनानुवाक्यालक्षणानां मिथो युग्मभूतानां प्रधानैः सह देवताप्रकाशनाख्यकार्यरूपार्थद्वारसम्बन्धाभावादित्येवं हिशब्दार्थेच शब्देनोत्तरार्द्धेन सूत्रं व्याख्यातम् । पूर्वसूत्रोक्तसम्बन्धानुकर्षणार्थः सौत्रश्चशब्दः । पूर्वसूत्रेणैतदधिकरणपूर्वपक्षकरणे त्वचोदकाश्च संस्कारा इतिवत्पूर्वपक्षनिवृत्त्यर्थः । वार्त्रघ्नीवृधन्वत्यनुवाक्यालक्षणानां गुणानां प्रधानैः सहार्थद्वार सम्बन्धाभावोपपादनार्थत्वेन मिथःशब्दं व्याख्यातुमाह * द्वे तावदिति * पित्र्येष्टिवत्कर्मैक्ये ऽप्यनुवाक्याद्वयोपपत्तिमाशङ्क्य द्वे द्वे अनुवाक्ये इति ब-

दिह द्वित्वविद्ध्यभावादनेकार्थविधिगौरवापत्तेश्च तेनैव द्वित्वाविध्ययोगान्नानुवाक्याद्वयोपपत्तिरिति परिहारसूचनार्थं कथं च नेत्युक्तम्। कर्मद्वये तर्ह्यनुवाक्याद्वयं भविष्यतीत्याशङ्क्याह*द्वयोरपि न्नेति* एतदेवोपपादयितुमारभते * अमावास्यायां तावदिति * पौर्णमास्यामग्नीषोमीये सोमस्यापि देवतात्वात्सौमी विद्यमानार्था भविष्यतीत्याशङ्क्याह * पौर्णमास्यामपीति * एवं तर्ह्येकदेवत्ये कर्मण्यनपेक्षितत्वादनुवाक्याद्वित्वविध्ययोगे ऽप्यग्नीषोमीये ऽपेक्षितत्वात् द्वित्वाविध्युपपत्तेर्द्वयोर्वान्यत्रन्योः समुच्चयेन प्रयोगो भविष्यतीत्याशङ्क्याह * न चेति * श्रुतैकसंख्याविरोधान्न सामर्थ्यतो ऽनुवाक्याद्वयसमुच्चयो ना पि विधितो वाक्यभेदापत्तेरित्याशयः । नन्वाज्यभागयोरपि मन्त्रविशेषस्य कालस्य च विधानात्तुल्यो वाक्यभेद इत्याशङ्क्याह *आज्यभागयोस्त्विति* लिङ्गक्रमाभ्यामेव मन्त्रविशेषप्राप्तेर्न्यायप्राप्तप्रधानकालद्वारा व्यवस्थार्थासंयोगे वाक्यभेदापत्तिरित्याशयः । सिद्धान्तमुपसंहरति * तस्मादिति * अङ्गाङ्गिकल्पनमपेक्ष्य प्रधानकालद्वारव्यवस्थार्थः संयोगो[1] न्याय इत्युक्ते प्रधानवाचिनोः पौर्णमास्यमावास्याशब्दयोः । काललक्षणार्थत्वापत्तेरन्यायतामाशङ्क्य कालयोगेनैव प्रधानानां पौर्णमास्यमावास्याशब्दवाच्यत्वात्तस्य च कालस्य साक्षादाज्यभागमन्त्रव्यवस्थापकत्वायोगात्प्रधानान्वयपूर्वव्यवस्थाभ्युपगमेन प्रधानान्वयिरूपलक्षणापत्तावपि स्वरूपेण वाच्यत्वात्पूर्वप्रतीतेरदोष इति पूर्वेत्यनेनोक्तम् ।

मुष्टिकरणादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम् ॥ १४ ॥

## आनन्तर्यमचोदना ॥ २४ ॥

प्रधानान्वये ऽनुवाक्यानामानर्थक्यापत्तेस्तदङ्गभूतयोराज्यभागयोः क्रमानुसारेणावतारोक्त्या वारणाधिकरणापोदितानर्थक्यतदङ्गावतारोज्जीवने कृते मुष्टिकरणस्याङ्गुलिविसर्जनोत्तरकाल प्रधानान्वयायोगाद्वाग्यमस्य च वाग्विसर्गोत्तरप्रधानान्वयायोगाद्धस्तावनेजनस्य च हस्तलेपापादकपिण्डकरणोत्तरकालप्रधानान्वयायोगाद्वाग्यमस्य च वाग्विसर्गोत्तरप्रधानान्वयेनान्वयायोगाद्धस्तावनेजनस्य च हस्तलेपापादकरणस्याङ्गुलिविसर्जनप्राग्भाविषु ज्योतिष्टोमाङ्गभूतेषु वाग्यमस्य च वाग्विसर्गप्राग्भाविषु हस्तावनेजनस्य च दर्शपूर्णमासाङ्गभूतेषु पिण्डकरणप्राग्भाविषु पदार्थे-

(१) व्यवस्थामात्रविधानान्न इ० २ पु० पा० ।

ष्ववतारप्राप्तावानन्तर्यलक्षणक्रमानुसारान्मुष्टिकरणवाग्यमयोर्दीक्षि-
तावेदनमात्रे हस्तावनेजनस्य चोलपराजिस्तरणमात्रे ऽवतारः क्रमा-
नादराद्वा सर्वेष्वङ्गुलिविसर्जनप्राग्भाविषु मुष्टिकरणस्य सर्वेषु च
वाग्विसर्गप्राग्भाविषु वाग्यमस्य हस्तावनेजनस्य च सर्वेषु पिण्ड-
करणप्राग्भाविष्ववतार इति विचारस्यापवादत्वेनानन्तरसङ्गतिमाह
*क्रमेति* क्रमस्यैककर्तृकपदार्थविषयत्वान्मुष्टिकरणवाग्यमयोर्भिन्न-
कर्तृकेणावेदनेन क्रमानुपपत्तेः क्रमेणावेदनाङ्गत्वपूर्वपक्षायोगात्सन्दे-
७५७। हमाक्षिपति * मुष्ट्योरिति * प्रयोक्तृत्वेनावेदने ऽपि
यजमानस्य कर्तृत्वादयमदीक्षिष्टेत्यावेदने वा क्रियमा-
णे यद्दीक्षिस्याहं दीक्षितो ऽस्मि तस्मादवश्यं समा-
पनीयो ज्योतिष्टोमो मयेत्येवमध्यवसानरूपं कर्म तस्य मुष्टिकरणवा-
ग्यमसमानकर्तृत्वोपपत्तेः तदङ्गत्वपूर्वपक्षसम्भवात्सन्देहं समाध-
त्ते * नैष इति * एवमप्यानन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वे
तस्य पूर्वोत्तरयोः पदार्थयोस्तुल्यत्वात्पूर्वस्यैवोत्तराङ्गत्वन्नोत्तरस्य
पूर्वाङ्गतेति नियमायोगान्मुष्टिकरणादेः पूर्वमपि कृष्णाजिनाच्छादना-
दिपदार्थे प्रत्यङ्गत्वोपपत्तेः परमावेदनाद्येव प्रत्यङ्गतेति पूर्वपक्षो न
युक्त इत्याशङ्कते * कस्मात्पुनरिति * आवेदनोलपराजिस्तरणयो-
स्तु प्रकरणावगतप्रधानान्वयोपपत्तेस्तदङ्गावताराभावेन प्रकरणवि-
रोधपरिहारायोगान्न क्रमेण पूर्वपदार्थाङ्गत्वं शङ्कितुं शक्यम्। मुष्टिक-
रणादेः कृष्णाजिनाच्छादनाद्यङ्गतापि पूर्वपक्षिणो ऽभिमता। पूर्वस्य प-
राङ्गत्वोपादानन्त्वनियमप्रदर्शनार्थमेव । हस्तावनेजनस्य तु तन्त्रप्रक्र-
मभावित्वेनःप्राथम्यात्पूर्वेद्युः कृतपदार्थाङ्गत्वानुपपत्तेः पराङ्गत्वोपादा-
नं युक्तमेवेति परिहरति *अनियमेति* यद्वा न केवलं हस्तावनेजनस्य
नियमेन पराङ्गत्वं किन्तु मुष्टिकरणवाग्यमयोर्लिङ्गेन मनःसमाधाना-
र्थत्वेन हस्तावनेजनस्य च हस्तशुद्ध्यर्थत्वेन कर्माङ्गत्वावसायात्सर्वासु
मुष्टिकरणवाग्यमहस्तावनेजनभावनासु किमित्यंशेन मनःप्रणिधान-
हस्तशुद्ध्युपकार्योत्तरकालानुष्ठेयपदार्थापेक्षोत्पत्तेः पूर्वानुष्ठितपदार्था-
नपेक्षणात् मुष्टिकरणवाग्यमाभ्यां किङ्कर्मोपकर्त्तव्यमित्यपेक्षिते दी-
क्षितावेदनोपकारार्थत्वावसायान्मुष्टिकरणवाग्यमयोरपि नियमेन प-
राङ्गतेति परिहारान्तरमाह * अथ वेति * पूर्वानुष्ठितस्यापि पदा-
र्थस्याश्रद्धाहेतुवैगुण्यपरिहारायाविस्मृत्यै मनसः समाधानोपकारा-
र्थत्वेनापेक्षोपपत्तिमाशङ्क्योत्तरकालानुष्ठेयपदार्थापेक्षोपपत्तेः। प्रथमो-
क्त्या बलीयस्त्वोक्ता । एवं तर्ह्युत्तरकालानुष्ठेयसर्वपदार्थाङ्गतापद्ये-
तेत्याशङ्क्य सर्वेत्युक्तम्। पुरस्ताच्छब्दस्याग्रवाचित्वादनन्तरं पश्चादुच्च-

रितस्य ग्रन्थक्रमानुसारेण पूर्वालोचनात्तन्मात्राङ्गतैव युक्तेत्याशयः । प्रकृतोदाहरणानादरेण तु सर्वभावनासु किम्भावापेक्षायाः पूर्वोत्पत्तेः पश्चादुच्चारितस्य बाधस्य उच्चारितात्पूर्वालोचनात्पराङ्गता युक्तेति व्याख्याऽनुयाजादीनामप्यनेन न्यायेन प्राग्भाव्याग्नेयाद्यनङ्गत्यापत्तेर-निष्ठापादकत्वादयुक्ता । एवं सत्यपि यथावेदनमपि मनःप्रणिधाना-र्थे स्यात्ततो मनः प्रणिधानार्थमुष्टिकरणसाध्यत्वे योग्यत्वाभावाद्वाग्य-मवदतिक्रम्येत न त्वेतदस्तीत्याह * न चेति * निष्प्रयोजनता ऽतिक्र-महेतुर्भविष्यतीत्याशङ्क्याह * शक्यते चेति * सर्वोदाहरणसाधार-ण्यमस्य प्रकटयितुं हस्तावनेजने ऽप्येतन्न्यायमतिदिशति * एवमि-ति * उलपराजिशब्दं व्याख्यातुमाह*ऊर्ध्वैरिति*उत्पूर्वस्य लुनातेः कपन्प्रत्यये धात्वन्तोपसर्गान्तयोर्लोपनिपातनात्ककारनकारयोश्चेत्सं-ज्ञत्वेन लोपादुलपशब्दस्योर्ध्वलवनार्हसुगन्ध्यादिकठिनतृणवाचि-तोर्ध्वशब्देनोक्ता । तृतीययोलपैः कृता राजिरित्यर्थे तृतीयासमासो दर्शितः । रेखापरपर्यायराज्याकारत्ववाचितया राजिशब्दं व्याख्यातुं दीर्घमित्युक्तम् । ननु पाठसादेश्यलक्षणस्या ऽनुष्ठानसादेश्यलक्षण-स्य वा क्रमस्य प्रकरणादिकल्पनद्वारा विनियोजकत्वं युक्तम् । आन-न्तर्यलक्षणस्य तु क्रमस्य बहुषु पठितव्येष्ववर्जनीयतयोभयाकाङ्क्षा-दिरूपप्रकरणाद्यभावे ऽप्युपपत्तेस्तत्कल्पनायोगान्न विनियोजकता युक्तेत्याशङ्क्य सन्निधिविशेषाम्नानार्थवत्त्वाय प्रकरणादिकल्पनस्यान-न्तर्ये ऽपि तुल्यत्वाद्विनियोजकत्वं सम्भवतीति सूचयितुमाह * सर्वत्र चेति * योग्यत्वं लिङ्गं प्रकरणवाक्यकल्प्यत्वात्पश्चाद्वाच्य-मप्ययोग्यस्यानन्तर्ये ऽप्यन्वयायोगाद्योग्यतायाः प्राधान्यसूचनार्थ-मादावुक्तम्। आनन्तर्येणानन्तरभूतयोरेव पदार्थविशेषयोरन्योन्याका-ङ्क्षाकल्पनादवान्तरेत्युक्तं । यथा पाठसादेश्यलक्षणे अनुष्ठानसादे-श्यलक्षणे वा क्रमे लिङ्गादीनि कल्प्यन्ते तथानन्तर्यलक्षणे ऽपीति सर्व-त्रेत्यनेनोक्तम् । प्रत्यक्षमहाप्रकरणाविरोधेन क्रमस्यावान्तरप्रकर-णादिकल्पकत्वायोगमाशङ्क्याङ्गुलिविसर्जनाद्युत्तरकाले प्रधाने महा-प्रकरणेन मुष्टिकरणादिविनियोगाशक्तेः प्रधानप्रकरणस्य च प्रधा-ने निरपेक्षे ऽङ्गविनियोजकत्वायोगात्तद्विरोधाभावेन क्रमस्य प्रकर-णादिकरणादिकल्पनप्रतिबन्धानुपपत्तेः कल्पितस्या ऽपि प्रकरणादेः कल्पितश्रुतिवत्प्रामाण्याविशेषसूचनार्थं महाप्रकरणाद्वित्युक्तम् । महाप्रकरणेन क्रमबाधमाशङ्क्य बलवद्योग्यत्वाद्यनुग्रहेण बाधा-योगोक्त्यर्थतया त्वेतद्ग्रन्थव्याख्याक्रमं विनानवगतस्य योग्यत्वादेः

(१) ध्यन्तराले प्रधाने इ० २ पु० पा० ।

क्रमानुग्राहकत्वायोगान्महाप्रकरणस्य चात्र विनियोजकत्वायोगाद्
बाधकत्वाऽनुपपत्तेरयुक्ता । तस्मात्प्रामाण्याविशेषसूचनायैव ब-
लीयस्त्वोक्तिः । पूर्वपक्षमुपसंहरति * तस्मादिति * मुष्टिकर-
णस्य तर्ह्यनन्तरवाग्यमाङ्गता कस्मान्न पूर्वपक्षितेत्याशङ्क्याह * यो-
ग्यत्वेति * पूर्वाङ्गतायाः सर्वभावनासु किमित्युपकारापेक्षणमि-
त्यत्रैव वार्त्तिके निरस्तत्वाद्वाग्यमस्य मुष्टिकरणाङ्गत्ववन्मुष्टिकर-
णस्य वाग्यमाङ्गताप्यनाशङ्कनीयेति दृष्टान्तदार्ष्टान्तिकभावार्थः
परस्परशब्दः । अनन्तरवाग्यमातिक्रमात्सद्यावेदनोत्तरपदार्थाङ्गता
ऽपि मुष्टिकरणस्य कस्मान्न स्यादित्याशङ्क्याह * तेनेति * एकाङ्गाव-
तारमात्रेण प्रकरणाम्नानानर्थक्यपरिहारादेकान्तरितस्याऽपि च
द्व्यन्तरिताद्यपेक्षया सन्निधानानपायात्कारणं च विना सन्निहितातिक्रमायोगादित्याशयः । बहुषु पठितेषु कस्य चिन्दानन्तर्यस्यावर्जनी-
यत्वादनुष्ठानक्रमार्थत्वेन च तत्सान्निधिविशेषाम्नानार्थवत्त्वोपपत्तेः
उभयाकाङ्क्षादिरूपप्रकरणादिकल्पकत्वायोगाच्छ्रुतिवच्च क्रमस्य
साक्षाद्विनियोजकत्वाभावादानन्तर्यमङ्गाङ्गिसम्बन्धस्यानाक्षेपकमि-
त्येवं ब्रूम इत्यनेन सूत्रार्थं सूचयन्सिद्धान्तमुपक्रमते एवमिति *
सर्वैरिति भाष्येण मुष्टिकरणाङ्गुलिविसर्जनान्तरालवर्त्तिभिः सर्वैर्मु-
ष्टिकरणस्य वाग्यमवाग्विसर्गान्तरालवर्त्तिभिर्वाग्यमस्य हस्तावनेजन-
पिण्डकरणान्तरालवर्त्तिभिर्हस्तावनेजनस्यान्वय इति प्रतिज्ञाते वा-
क्यभेदो हेतुत्वेनोक्तः स वाक्येन पूर्वपक्षाकरणात् क्रमकल्प्यवाक्या-
सम्भवार्थत्वे तु वाक्यभेदोक्तेः प्रकरणाद्यसम्भवस्या ऽपि वाच्य-
स्यानुक्त्या न्यूनत्वापत्तेरयुक्त इत्याशङ्क्य क्रमकल्प्यसर्वप्रकरणा-
द्यसम्भवार्थत्वे तु वाक्यभेदोक्तेः प्रकरणाद्यसम्भवस्या ऽपि वाच्य-
स्या ऽनुक्त्या न्यूनत्वाय न तेषां परस्परेण कश्चित्सम्बन्धो ऽस्तीति भाष्यै-
कवाक्यत्वादिक्रमनिरासेन सूचितमिति । अर्थद्वयस्याभिधानादित्या-
दिभाष्येण क्रमकल्प्यैकवाक्यत्वाद्यसम्भवे ऽभिहिते प्रत्यक्षमेवैकवा-
क्यत्वाद्यनेन निरस्तमित्याशङ्कमानं प्रति न च पदार्थाकाङ्क्षया-
मित्यनेनानन्तर्यमात्रेणाकाङ्क्षारूपप्रकरणकल्पनाशक्तेः प्रकरणाक-
रणाकल्पनानिरपेक्षेण क्रमेणैकवाक्यत्वकल्पनाशक्तेः कल्प्यस्या-
प्येकवाक्यत्वादेरसम्भवः स्पष्टीकृत इति सूचनार्थं नार्थं दृश्यत
इत्युक्तम् । एकवाक्यत्वादर्शनमुपपादयति * न हीति * बलीय-
स्त्वसूचितप्रामाण्याविशेषनिरासायैकवाक्यत्वादेः कल्पनासम्भ-
वेनाकल्पितत्वादप्रामाण्यं न कल्प्यत्वमात्रेणेति सूचयितुं यदित्यु-
क्तम् । योग्यता समेत्यकारप्रश्लेषं विना तावद्व्याचष्टे * योग्यता

पुनरिति * असमेत्यकारप्रश्लेषेण व्याचष्टे * यद्वेति * उत्तरार्द्धं व्याचष्टे*न चेति * यदि चात्रावान्तरः कथं भावो भवेत् ततः कर्त्तव्यत्वेनावगतस्येतिकर्त्तव्यावाकाङ्क्षात्मककथंभावोत्पत्तेः पूर्वपदार्थभावनांशत्रयालोचनकाले ऽनन्तरस्य कर्त्तव्यत्वानवगमात्पूर्वस्यैव कथंभावो भवेत्ततश्चोत्तरमेव पूर्वस्याङ्गं प्राप्नोतीत्यनिष्टापत्तिमाह * यदीति * अस्तूत्तरं पूर्वाङ्गं तथा ऽपि सिद्धान्तासिद्धेः कानिष्टापत्तिरित्याशङ्क्याह * न चेति * अनेनेदं साध्यमित्यवगते कथं भावोत्पत्तेः साध्यांशदेशापूरणात्कथं भावोत्पत्त्ययोगान्नोत्तरं पूर्वाङ्गम्भवितुमर्हतीत्याशयः । पूर्वपदार्थभावनांशत्रयालोचनवेलायामुत्तरपदार्थकर्त्तव्यत्वानवगमे ऽप्युत्तरपदार्थभावनांशत्रयालोचनवेलायामुत्तरेण पूर्वस्य साध्यांशपूरणात्पूर्वस्योत्तराङ्गतैव पूर्वपक्ष्यभिमता सेत्स्यतीत्याशङ्क्याह*न चोत्तरेणेति*आवेदनोत्तरेण पदार्थेनावेदनस्य साध्यांशपूरणात् क्लृप्तप्रयोजनत्वेन मुष्टिकरणसाध्यांशपूरकत्वं भविष्यतीत्याशङ्क्याह * एवमिति*अतः प्रधानात्प्राचीनेन केनचित्पदार्थेन साध्यांशपूरणाशक्तेः सर्वमङ्गम्प्रधानपर्यन्तं प्राप्तं न त्वन्तराले पर्यवस्यतीत्याह * इतीति * नन्वक्लृप्तप्रयोजनावस्थत्वेनोत्तरस्य पूर्वसाध्यांशपूरणाशक्तौ गोदोहनादेः क्लृप्तप्रयोजनत्वेन साध्यांशपूरणाशक्तत्वात्सर्वेषां पूर्वाङ्गानाङ्गोदोहनाद्यङ्गत्वापत्तेः सर्वाङ्गानां यावत्प्रधानं प्राप्त्युक्तिरयुक्तेत्याशङ्कते * यदीति * महाप्रकरणगम्यप्रधानाङ्गत्वस्यावान्तरप्रकरणगम्येन गुणकामाङ्गत्वेन बाधो ऽवान्तरेत्यनेनोक्तः।सन्दंशं विनावान्तरकथम्भावानिष्पत्तेः गुणकामाङ्गत्वानुपपत्तिरिति परिहरति * उच्यत इति * श्रुतिलिङ्गे ऽपि वाक्योपलक्षिते गुणकामस्य प्रयोजनवत्त्वात्सन्दंशं विनापि प्रधानप्रत्कथम्भावासिद्धिमाशङ्क्य संस्थाधिकरणन्यायेनाश्रयभूतदर्शपूर्णमासादिधर्मैरतिदेशप्राप्तैर्नैराकाङ्क्ष्याद् गुणकामस्याभितो वाक्याद्यवगतगुणसद्भावे ऽपि वस्तुतः कथम्भावो नास्त्येवेति प्राकृतेन कथम्भावे तदीये पूरिते सतीति वार्त्तिके ऽभिहितम।अभ्युपेत्यवादमात्रेण तु सन्दंशाभिव्यङ्ग्यतोक्तेति सूचनार्थो नामशब्दः। सन्दंशान्तरालवर्त्तित्वं कथम्भावस्य मुष्टिकरणादेः श्रुत्याद्यगवतप्रधानगुणसन्दंशान्तरालवर्त्तित्वाभावात्प्रधानकथंभावेन ग्रहणं न स्यादित्याशङ्कानिरासायावान्तरविशेषणफलन्दर्शयितुमाह * प्रधानेति * अनन्तरेण सम्बन्धः स्यात्परस्याप्यनन्तरस्तदारूढः पुनः पश्चात्तदानन्तर्यमश्नुत इत्यनुषङ्गाधिकरणन्यायेनाङ्गान्तरव्यवधायकत्वाभावात्कथं भावविच्छेदबुद्धिपर्यन्तं सर्वाण्यङ्गानि प्रधानकथम्भावेन सङ्गच्छतीत्युक्ते पाश्चा-

त्याङ्गगमने ऽपि कथम्भावस्य यदि भवेत्पूर्वस्य कथम्भावइति वार्त्तिकोक्तेन न्यायेनाधस्तनाङ्गागमनान्मुष्टिकरणादेः प्रधानकथम्भावेनाग्रहणं स्यादित्याशङ्क्य फलवत्सन्निधावफलाम्नानस्य प्रधानकथम्भावग्रहणहेतोरुत्तराङ्गवत्पूर्वाङ्गेष्वविशेषात्प्रधानात्प्राक्पश्चाच्चोभयतः कथम्भावगमनमभितो ऽपीत्यनेनोक्तम् । गोदोहनद्वादशोपसत्त्वादीनामपि तर्हि कथं भावेनाग्रहणं स्यादित्याशङ्क्यान्यत्युक्तम् । प्रधानकथम्भावस्याभितो गमने ऽङ्गगुणस्य कस्यचिदसम्भवात्सन्दंशानुपपत्तेर्न क्वचिदवान्तरप्रकरणं स्यादित्याशङ्क्ते *नन्विति* बलवता प्रमाणेन प्रधानकथम्भावं बाधित्वाङ्गगुणत्वावगमे सन्दंशसम्भवेन परिहरति * उच्यत इति* पुनः शब्दस्य पश्चाद्भावार्थत्वाच्चकारेण च प्राग्भावसूचनाच्छ्रुत्यादिभिः प्राक्पश्चाच्चान्यप्रकरणस्थानामङ्गानामङ्गे ज्ञाते सन्दंशसम्भवादवान्तरप्रकरणमिष्यतइत्यर्थः । सर्वेषाञ्चावान्तरप्रकरणित्वेनाभिमतानां श्रुत्यादिभिः प्राक्तदङ्गमुक्त्वा पश्चादपि तदङ्गपरामर्शसद्भावान्न क्वचित्सन्दंशाभावः शङ्कनीय इत्याह * सर्वेषां हीति * किमर्थं सन्दंशापेक्षेत्याशङ्क्यावान्तरप्रकरणोपक्रमसमाप्तिमर्यादावधारणार्थतामाह * तत्पर्यन्तेति * अतः सन्दंशाभावेनावेदनादेः प्रत्यक्षावान्तरप्रकरणाभावादानन्तर्येण चावान्तरप्रकरणायोगान्मुष्टिकरणादेः प्रधानार्थत्वद्वारा तदङ्गाङ्गत्वसिद्धिरिति सूचयितुमाह * यत्र त्विति * पुनः शब्देन प्राक्त्वस्याप्युपलक्षणाद्यत्र प्राक्पश्चाच्छ्रुत्यादिभिः तदङ्गकीर्त्तनन्नास्तीत्यर्थः । प्रधानार्थत्वाध्यवसाने सति तदङ्गाङ्गत्वसिद्धिः कथमित्याशङ्क्य तत्सूचनार्थमाह * तस्य त्विति * अङ्गाङ्गस्य प्रधानानुपकारित्वे प्रधानार्थत्वावेदकस्य प्रकरणस्यात्यन्तबाधापत्तेः प्रकृतात्पूर्वसाधनत्वलक्षणाहेत्वभावात्स्वरूपार्थत्वे नैष्फल्यापत्तेर्बलीयसापि वाक्यादिनाङ्गाङ्गत्वस्यावङ्गन्तुमशक्यत्वाच्छेषादिकेवलस्य प्रधानस्याङ्गसाङ्गस्य वेति चिन्तानुपपत्तिप्रसङ्गेनाङ्गाङ्गस्यापि प्रधानोपकारित्वावसायात्प्रकरणावगतसाक्षात्प्रधानार्थत्वासम्भवे ऽङ्गाङ्गत्वेनापि प्रकरणानुग्रहसिद्ध्यै प्रधानार्थत्वे सत्यङ्गावतारन्यायादङ्गाङ्गत्वं सेत्स्यतीत्याशयः । ननु प्रकरणावगतप्रधानार्थत्वस्य मुष्टिकरणादेरङ्गावतारन्यायादङ्गाङ्गत्वे सत्येकाङ्गावतारमात्रेण प्रकरणाम्नानानर्थक्यपरिहारादनेकेष्वङ्गेष्ववतारकल्पनानुपपत्तेरेकस्मिन्नेवाङ्गे ऽवतारस्योचितत्वादानन्तर्यविशेषाच्च विशेषावधारणोपपत्तेरावेदनादिमात्रे ऽवताराक्सायान्न सिद्धान्तसिद्धिः स्यादित्याशङ्क्य मुष्टिकरणादेर्लिङ्गेन प्रयोगाङ्गभूतकर्तृसंस्कारार्थत्वावसायात्प्रयोगस्य च साङ्गप्रधानविषयत्वात्सौमिकवेदिवत्साङ्गप्रधानार्थ-

त्वस्यैवावगतेर्वस्तुतो न प्रधानार्थस्याङ्गेऽवतारः प्रयोगस्य तु साक्षादङ्गविषयत्वाभावेन न प्रधानद्वाराङ्गविषयत्वात्प्रयोगद्वाराङ्गप्रधानार्थत्वस्याङ्गस्य प्रधाननैरपेक्ष्येणाङ्गान्वयायोगमभिप्रेत्य प्रकरणाविरोधे क्रमेण पूर्वपक्षायोगात्प्रकरणस्य स्वरसभङ्गार्थाश्चिन्ताया आनर्थक्यतदङ्गावतारप्रकरणसङ्गतिसिद्ध्यर्थमौपचारिक्यवतारोक्तिरित्यविरोध इति सूचयितुमाह * तदिहेति * साङ्गोक्त्याङ्गानां प्रधानविशेषणत्वेन साक्षान्मुष्टिकरणाद्यन्वयाभावसूचनान्मुष्टिकरणादेः प्रधानद्वाराङ्गान्वयः सूचितः । योग्यतोक्त्या प्रयोगाङ्गभूतकर्तृद्वारत्वलक्षणोपपत्तिवन्मुष्टिकरणस्याङ्गुलिविसर्गोत्तरभाविषु वाग्यमनस्य च वाग्विसर्गोत्तरभाविषु हस्तावनेजनस्य च हस्तलेपापादकपिण्डकरणोत्तरपदार्थेष्वयोग्यत्वात्कृष्णविषाणग्रहणचात्वालप्रासनान्तरालवर्त्तिषु पदार्थेषु कृष्णविषाणकण्डूयनवन्मुष्टिकरणाङ्गुलिविसर्गाद्यन्तरालवर्त्तिनामेवाङ्गानां मुष्टिकरणाद्यङ्गमित्यपि सूचितम् । तुमुन्प्रत्ययाभावेनैकवाक्यत्वनिरासार्थं नहीत्यादिभाष्यं व्याख्यातुमाह * यदि त्विति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति *

## वाक्यानां च समाप्तत्वात् ॥ २५ ॥

पूर्वसूत्रेणानन्तर्यस्य प्रकरणाद्येकत्वेनाविनियोजकतोक्ता प्रकरणविरोधेनाविनियोजकत्वोक्त्यर्थन्त्वेतत्सूत्रमिति सूचयितुमाह *इतश्चेति* क्षिपतिचोदयत्योः प्रकरणवाचित्वेनैकार्थ्याद्भूमो ऽग्नेराक्षेपक इत्यादौ च क्षिपतेः प्रामाण्ये प्रयोगादर्शनात्तत्समानार्थस्य चोदयतेरपि प्रामाण्यवाचित्वानवगमादचोदनाशब्दो ऽप्रामाण्यवाचित्वेन व्याख्यातः । आनन्तर्यबाधकस्य वाक्यैकवाक्यत्वरूपस्य प्रकरणस्य वाक्यं बाधकं स्यान्नचात्र तदस्तीत्येतदर्थोक्त्यर्थत्वेन वाक्यसमाप्त्युक्तिं व्याख्यातुं यत इत्युक्तम् । प्रत्येकोक्त्या प्रकरणेन क्रमबाधः प्रकरणस्य च वाक्येन बाधो न समस्तेष्वित्यनेन सूचितः । वाक्यभेदादित्यादिभाष्येण पूर्वसूत्रे एकवाक्यत्वनिरासादत्रैकवाक्यत्वनिरासः पुनरुक्त इत्याशङ्क्य संहत्यैकार्थत्वाभावेन तत्रैकवाक्यता निरस्ता विभज्यमानसाकाङ्क्षत्वाभावेनात्रेति विवेकं सूचयितुमाह * नस्मादपीति * एकवाक्यस्थानां पदानामन्योन्यसाहित्यं विना प्रयोजनरूपार्थाभावेनान्योन्यसहितानामर्थो यस्मिन्नेकवाक्ये तदन्योन्यार्थमिति मध्यमपदलोपिना समासेनैकवाक्यतोक्तेस्तस्मात्पूर्वसूत्रोक्तात्संहत्यैकार्थस्वरूपैकवाक्यत्वलक्षणादर्शनाद्विभज्यमानसाकाङ्क्षत्वरू- ७५९।२

पैकवाक्यत्वलक्षणादर्शनादपि नैकवाक्यतेत्यर्थः ।

चतुर्धाकरणस्याग्नेयमात्राङ्गताधिकरणम् ॥ १५ ॥

शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥

चमसाधिकरणे ग्रहेष्वेव सम्मार्गो न चमसेष्वित्युक्ते तत्प्रसङ्गात्सप्तदशारत्निता षोडशिपात्रे निविशते यूपे वेति चिन्तायामानर्थक्यात्तदङ्गेष्वित्यनेन यूपनिवेशेऽभिहिते ऽभिक्रमणोपवीताधिकरणाभ्यां चाङ्गावतारविशेषेऽभिहिते वारणाधिकरणापोदितस्याङ्गावतारस्या ऽनुवाक्याधिकरणेनोज्जीवनाद्वाक्यविरोधे क्रमस्य परिहृते मुष्टिकरणादेरथ विरोधिना क्रमेण विनियोगमाशङ्क्यानन्तर्यरूपक्रमस्यानन्तर्याधिकरणेनाविनियोजकत्वोक्त्या चमसाधिकरणप्रसङ्गागतविचारेण समाप्तत्वप्रसक्त्या यो विचारस्तत्समाप्तौ स एव बुद्धिस्थो भवतीति बुद्धिस्थचमसाधिकरणप्रसङ्गेनास्य सङ्गतिं सूचयितुमाह * यथा संयोगमिति * अनन्तराधिकरणोक्तसर्वार्थत्वापवादाद्वानन्तराधिकरणेनैव सङ्गतिमभिप्रेतां स्पष्टत्वादनुक्त्वा चमसाधिकरणोक्तमथासंयोगव्यवस्थाविरोधात्पूर्वपक्षायोगेन सन्देहायोगशङ्कानिरासायाविरोधोक्त्यर्थो ऽयं ग्रन्थः। धर्मान्वयिनो ऽपूर्वसाधनस्य यदाग्नेयशब्देन केवलाग्निदेवत्यत्वमुपलक्षणमुक्तं तस्य द्विदेवत्ये केवलाग्न्यन्वयतद्विशेषदेवतात्वसमुदायात्मकस्य समस्तस्याभावात्समस्तेनोपलक्षणेनोपलक्षितस्य धर्मसंयोगाभ्युपगमे ऽद्विदेवत्यस्याग्नेयशब्देन ग्रहणायोगात्किं समुदायैकदेशेनाप्यग्न्यन्वयमात्रेणोपलक्षितस्य धर्मसंयोगः समस्तेनैव वोपलक्षितस्येति सन्देहाद्विदेवत्यौ गृह्यते न वेति विचार इत्यर्थः । पूर्वपक्षमाह * गृह्यते इति * तौ अपि हीति भाष्योक्तं हेतुं व्याचष्टे * शक्यते हीति * दृष्टान्तं व्याख्यातुं मनोताधिकरणभाष्यं पठति * यद्यपीति* ननु त्वं ह्यग्ने प्रथमो मनोतेति मन्त्रे वाचनिकविनियोगान्यथा ऽनुपपत्त्याग्निशब्दस्याग्नीषोमोपलक्षणार्थत्वं युक्तं तद्धितेन तु देवतात्वेनैवाग्न्यभिधानाद् द्विदेवत्ये चाग्नेः समवेतत्वे ऽपि देवतात्वाभावान्नोपलक्षणत्वं सम्भवतीत्याशङ्क्याह * समवेतत्वं चेति * सर्वत्राग्निकलिभ्यां ढग्वक्तव्य इत्यन्वयमात्रे ऽपि तद्धितस्मृतेः प्रकरणावगतस्य सर्वार्थत्वस्याति सङ्कोचपरिहारार्थं समवेतत्वमात्रस्येहोपलक्षणताश्रयणीयेत्याशयः । यद्यप्येकस्य शब्दस्यानेकार्थत्वाप्रयोगादन्वयमात्रवाचित्वे च

देवतात्वविशेषप्रतीत्ययोगाद्विशेषवाचित्वे तु लक्षणाया सामान्यप्रतीतेर्देवतात्वमेवाग्नेयशब्दवाच्यम ।तथा ऽप्यग्नेश्चतुर्द्धाकरणाख्यविधेयकार्ययोग्यपूर्वसाधनहविर्विशेषोपलक्षणमात्रे पर्यवसानाद्यागविधाविव चतुर्द्धाकरणविधौ साक्षात्कार्ययोगित्वाभावेनात्यन्तानादरणीयत्वात्प्रकरणातिसङ्कोचपरिहारार्थे समवेतत्वमात्रेणैवोपलक्षणता युक्तेत्याह * न चेति * पकपुरोडाशायां पौर्णमास्यां पुरोडाशद्वयस्योपलक्षणस्योपांशुयाजाख्यकार्ये ऽनादरो ऽनपायश्च कालस्य लक्षणं हि पुरोडाशाविति दशमान्त्याधिकरणसूत्रवक्ष्यमाणो दृष्टान्तः।पर्यग्निकृतं पात्नीवतमुत्सृजन्तीत्यत्रा ऽपि पात्नीवच्छब्दस्य पशूपलक्षणार्थत्वात्तेनैवोपलक्षणत्वेन हेतुना त्वष्टुरनादरः पात्नीवते ऽनुपूर्ववत्वादवच्छेद इत्यत्रोक्त इति दृष्टान्तान्तरमाह * तथेति * स्वयं वैदिकदृष्टान्तद्वयमुक्त्वा भाष्योक्तं लौकिकं दृष्टान्तमनुसन्धत्ते *तथेति*उपलक्षणत्वे कार्ययोगित्वाभावोक्त्यर्थत्वेन मिथस्तेषामिति सूत्रावयवं तच्छब्देन शेषशब्दोक्तस्य कार्यस्य गुणशब्दोक्तस्य चोपलक्षणस्य परामर्शः बहुवचनं चानेकोदाहरणत्वोपलक्षणकार्यबहुत्वाशयमभिप्रेत्य व्याख्यातुमाह *उपलक्षणेति* तद्धितवाच्यमुख्यदेवतात्वत्यागेन लाक्षणिकसमवेतत्वोपलक्षणत्वाभ्युपगमस्य प्रकरणातिसङ्कोचपरिहारार्थत्वेन तेषां साधारणोक्त्या साधारण्यविषयत्वेनोपस्थापितानामाग्नीषोमीयादीनामेकप्रकरणानन्वये सति प्रकरणातिसङ्कोचानापत्तेर्व्यवस्था स्यात्तेषान्त्वेकप्रकरणान्वयात्साधारणधर्मकत्वप्रतीतेरुपलक्षणार्थत्वेन तत्र श्रुत्यविरोधसम्भवे प्रकरणातिसङ्कोचायोगात्साधारणतैव युक्तेति व्यवधारणकल्पनया हेतूक्त्यर्थं सूत्रावयवव्याख्यानार्थे यदीत्यादिभाष्यमस्मिन्सूत्रे व्यवस्थावाचिशब्दाभावात्सिद्धान्तसूत्रव्यवस्थाशब्दान्वयेन तु पूर्वसूत्रपूरणाभ्युपगमे प्राथम्यात् व्यवस्थाशब्दोपेतस्यैव पूर्वपक्षसूत्रस्य पठनीयत्वापत्तेरयुक्तमाशङ्क्यानन्तर्यमचोदनेत्यंतत्सूत्रस्थाचोदनाशब्दस्याग्नेयातिरिक्तानाश्चतुर्द्धाकरणाचोदना स्यादित्येवं व्यवस्थावाचितामभ्युपगम्यानुषङ्गेण पूरणम्भाष्यकृतो ऽभिमतमित्याह *भाष्येति * व्यवहितानुषङ्गायोगादनाक्षेपकत्वात्मकाकारणत्ववाचिनश्चाचोदनाशब्दस्यानुषङ्गे ऽप्यन्यार्थत्वायोगात्कार्ययोगित्वाभावेन चोपलक्षणस्यानादृत्यत्वानुक्तौ प्रकरणानुरोधमात्रेण श्रुतिभङ्गायोगादस्या व्याख्यायाः स्वानभिमतत्वसूचनार्थम्भाष्यकारग्रहणम । लक्षणार्था गुणश्रुतिरिति सिद्धान्तसूत्रावयववक्ष्यमाणवैषम्यावताराय यथा प्राशित्रावदानरूपः शेषो ऽग्निगुणसंयुक्तो ऽपि साधार-

ण इत्यावृत्त्या दृष्टान्ततया व्याख्यार्थं यथेत्यादिभाष्यं तात्पर्यतो व्याचष्टे * भवति चेति *

व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥

यथा ग्रहत्वेनोपलक्षणेन ग्रहाणामेव संयोगात्सम्मार्गव्यवस्थोक्ता तथाग्निदेवत्यत्वरूपेण तद्धितार्थेनैकदेवत्यस्यैव संयोगाच्चतुर्द्धाकरणव्यवस्था युक्तेत्येवं सूत्रावयवव्याख्यार्थत्वमग्निनेति भाष्य-
७६०।४ स्य द्योतयितुमाह * यथैवहीति * दृष्टान्तोक्तेरुद्देश्यस्वरूपाविवक्षाशङ्कानिरासप्रयोजनत्वं सूचयितुमाह * उद्दिश्यमानन्तावदिति * द्विदेवत्यसंयोगनिरासार्थं समवेतत्वमात्रस्योपलक्षणत्वनिरासायाभिधेयवाचिनार्थशब्देन तद्धितवाच्यस्य देवतात्वस्योपलक्षणतोक्तेति सूचयितुमाह * न चेति * नन्वसम्बद्धस्याग्नेरुपलक्षणत्वायोगात्सम्बन्धमात्रमपेक्षितत्वाद्ग्राह्यं तद्विशेषस्तु देवतात्वं तद्धितोक्तमनपेक्षितत्वादग्राह्यमित्याशङ्क्य देवतात्वमेव प्रत्ययार्थत्वेन प्राधान्यादुपलक्षणं प्रकृत्यर्थत्वात्त्वग्निरुपलक्षणविशेषणमित्याह * अग्निः पुनरिति * बहुकर्तृकेऽपि सूत्रे प्रत्येकं कर्तृत्ववद्द्विदेवत्येऽप्यग्नेस्तावद्देवतात्वमस्त्येवेत्याशयेन कुत इति पृष्ट्वा तन्निरासार्थं यद्यपीत्यादिभाष्यं तात्पर्यतो व्याचष्टे * याग्नेति * एतदेवोपपादयति * नहीति * अतः कारणादग्नीषोमीय ऐन्द्राग्नो वा नाग्नेयशब्देनोच्यत इत्यर्थः । देवतात्वस्यासत्यामपि तद्धितेनोक्तौ तस्योपलक्षणमात्रार्थत्वान्नात्यन्तादर इत्याशङ्क्योपलक्षणं विना धर्मान्वयिनोऽपूर्वसाधनविशेषस्योपलक्षयितुमशक्यत्वान्नोपलक्षणस्याप्यनादरो युक्त इत्येवं परिहारार्थत्वेन लिङ्गस्योपलक्षणस्यापि देवतात्वस्य तद्धितवाच्यत्वादर्थेन सामर्थ्येनोपलक्ष्यसम्बन्धोपपत्तेरित्येवं व्याख्यार्थं देवतालिङ्गस्य हीति भाष्यं व्याचष्टे *तद्धितार्थोऽत्रेति* लिङ्गस्यार्थेनेति सामर्थ्यवाच्यर्थशब्दोक्ता निरपेक्षतार्थसंयोगार्थव्याख्यार्थे पूर्वभाष्ये ऽनागतावेक्षणेनोक्तेति निरपेक्षोक्त्या सूचयन् श्लोकं व्याचष्टे * आग्नेय इति * दृष्टान्ते प्राशित्रमवद्यतीति सामान्यवाक्येन हविर्मात्रात्प्राशित्रावदाने प्राप्ते कस्माद्धविःप्रदेशात्प्राशित्रमवदेयमित्यपेक्षायां मस्तकाख्यप्रदेश विशेषोपलेक्षणार्थाग्नेयत्वोपलक्षणश्रुतिरित्येवं वैपरीत्योक्त्यर्थत्वेनानुभाषणपूर्वमन्त्यसूत्रावयवव्याख्यार्थमथेत्याद्यनियम इत्यन्तं भाष्यं व्याख्यातुमाह * यत्त्विति * मस्तकाविभागस्य भञ्जनस्फोटनापरप-

र्थायैस्याग्नेयपुरोडाशविशेषे विधानार्थमेतद्वचनमिति वदता यदाग्नेयस्येति प्राशित्रावदानावान्तरप्रकरणप्राप्तमाग्नेयात्प्राशित्रावदानमनूद्य तन्मस्तकं विभज्येति वचनव्यक्तिर्व्याख्याता। प्राशित्रमवद्यतीति सामान्यवाक्यात्प्राशित्रावदानस्य साधारणता युक्तेत्युक्ते चतुर्द्धाकरणस्यापि तं चतुर्द्धा कृत्वेति सामान्यवाक्यात्साधारण्यं शङ्कितुमाह * स्थित इति * द्विदेवत्ये तद्धितार्थो न सम्भवतीत्येवमुक्तेन न्यायेनाधिकरणे स्थिते उभौ वाविशेषादिति कात्यायनाख्यसूत्रकृद्वाक्यबलात्प्रत्यवस्थीयते इत्यर्थः। कतस्यापत्यङ्गोत्रमित्यस्मिन्नर्थे गर्गादिभ्यो यञिति यञं कृत्वा कात्यस्यापत्यं युवेत्यस्मिन्नर्थे यञिञोश्चेति फक्प्रत्यये तस्य चायनादिसूत्रेणायनादेशे कृते कात्यायनस्येदमित्यस्मिन्नर्थे वृद्धाच्छ इति छप्रत्यये तस्येयादेशे नाजादित्वात्फक्फिञोरन्यतरस्यामिति फक्प्रत्ययस्य लुक्पक्षे कात्य इति यकारात्परतः छप्रत्ययप्राप्तावापत्यस्य च तद्धिते नातीति आकारादिवर्ज्जिते तद्धिते परेऽपत्यवाचिनो यकारस्य लोपात्कातीयमिति रूपसिद्धिः। न्यायविरोधात्कात्यायनीयवचनस्य बाधमाशङ्क्याबाधार्थं श्रुतिमूलतामाह * उक्तमिति * इह दर्शपूर्णमासप्रकरणे श्रुतिदृष्टेत्यर्थः। कासौ श्रुतिरित्यपेक्षायां पठति तमिति। सामान्यश्रुतेर्विशेषश्रुत्याग्नेयमात्रविषयत्वेनोपसंहारात्साधारण्यानापत्तिरिति परिहारमाह * अत्रेति * नित्योक्त्याऽनुपसंहारे विकल्पापत्तिरुपसंहारकारणत्वेन सूचिता। प्राशित्रवाक्ये व्याख्यातेन परपदार्थान्वयविधौ श्रुतिबाधापत्तेर्विशिष्टावदानविध्यवगमाद्विशेषशास्त्रत्वेन सामान्यशास्त्रोपसंहारकत्वं भविष्यतीत्याशङ्कते *प्राशित्रेति* वाक्यान्तरात्प्राप्तेः प्राशित्रावदानस्य विधातुमशक्यत्वाद् गुणमात्रार्थत्वावगतेर्विशिष्टावदानशास्त्रत्वाभावान्नोपसंहारकत्वं सम्भवतीति परिहरति *नेति* एतदेव विवृणोति *मस्तकमिति* पुरोडाशवाक्यस्यापि बर्हिःषत्त्वलक्षणगुणमात्रार्थत्वात्क्रममात्रार्थत्वाद्वा चतुर्द्धाकरणविधायित्वाभावे ऽविशेषशास्त्रत्वाभावान्नोपसंहार्यत्वं स्यादित्याशङ्क्याह * इदं त्विति * क्त्वाशब्दोक्तायां चतुर्द्धाकरणभावनायां गुणाश्रुतेराख्यातोक्तायाश्च बर्हिःषत्वकरणभावनायाः प्राधान्यप्रतीतेः क्त्वाशब्दोक्तभावनाविशेषणत्वायोगान्निर्गुणत्वोक्तिः। शाखान्तरी-

यस्याध्येतृभेदेन पुनर्वचनत्वस्य निरस्तत्वाच्छाखान्तरीयस्य च दूरस्थत्वेन प्रत्यभिज्ञायोगात्सगुणश्रवणे ऽपि विधेयैव क्रिया दूरस्थस्य प्रत्यभिज्ञाभ्युपगमे ऽपि त्वभ्यासेन क्रियाविधिः शक्यो वक्तुमिति प्रौढिप्रदर्शनार्था पुनर्वचनोक्तिः। शाखान्तरीयस्य सामान्यस्याबुद्धिस्थत्वेनोपसंहारायोगं शङ्कते * दूरस्थत्वादिति *

यस्य येनार्थसम्बन्धो दूरस्थेनापि तस्य सः।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणमिति॥

न्यायाद् दूरस्थो ऽप्युपसंहारो नाशक्य इति परिहरति *नेति* वृद्धश्लोकेन सामान्यन्यायमुक्त्वा तदुपजीवनेन दूरस्थस्या ऽपि सामान्यस्य विशेषणोपसंहारसिद्धिमाह * तेनेति * येन कारणेन दूरस्थस्या ऽपि योग्यत्वात्सम्बन्धो युक्तस्तेन कारणेन दूरस्थमपि सामान्यं विशेषेण विना ऽनुपपद्यमानत्वाच्छाखान्तरीयविशेषं प्रति गच्छति ततश्च श्रुतविशेषलाभे विशेषान्तरकल्पनायोगाद्विशेषशास्त्रेण स्वविषयभूते विशेषे स्थाप्यते दूरस्थत्वे ऽपीति श्लोकार्थः। दूरस्थयोरप्युपसंहार्योपसंहारकतावश्यध्रुवोक्तिभ्यामुक्ता युक्ता। सामान्यशास्त्रस्य पूर्वालोचनायामुपसंहारसम्भवे ऽपि विशेषशास्त्रस्य पूर्वालोचने सामान्यशास्त्रानर्थक्यं स्यादित्याशङ्क्य तस्मिन्पक्षे विशेषान्तर्गतत्वेन प्राप्तस्य सामान्यस्य तदुरकालबर्हिःषत्वकरणविधये ऽनुवादमाह * अथ वेति * बर्हिःषत्वकरणस्या ऽपि चतुर्द्धाकरणवच्छेषप्रतिपत्त्यर्थभक्षाङ्गत्वेन चतुर्द्धाकरणाङ्गत्वाभावादङ्गाङ्गिभावाया ऽनुवादायोगात्क्रमनिरपेक्षबर्हिःषत्वविधावनुवादानर्थक्यापत्तेः शाखान्तरप्राप्तचतुर्द्धाकरणा ऽनुवादाभ्युपगमे बर्हिःषत्वस्य शाखान्तरप्राप्तस्या ऽनुवादोपपत्तेः न विधिः सम्भवतीत्याशङ्क्य क्रममात्रं तर्हि विधीयतामिति पक्षान्तरमाह * अथेति * साधारण्याशङ्कापरिहारमुपसंहरति * अतश्चेति * मिथस्तेषामसम्बन्धादिति पूर्वपक्षसूत्रावयवस्य व्यवधारणकल्पनयास्यैकदेवत्यद्विदेवत्यानामेकप्रकरणान्वये योजितस्य विरुद्धत्वोक्त्यै यद्येकाद्विदेवत्यानां मिथः सम्बन्धो न स्यात्ततो द्विदेवत्यस्या ऽपि लक्षणार्थाग्निगुणश्रुतिर्भवेन्न त्वेतदस्तीत्येवं लक्षणार्थेति सिद्धान्तसूत्रावयवे ऽनुपक्तस्य पूर्वपक्षनिरासार्थत्वेन योजनार्थं यदि त्विति भाष्यं

# न्यायसुधायाम् ।

## तृतीयाध्यायस्य द्वितीयः पादः



बर्हिर्न्यायः । लवनप्रकाशमन्त्राणां मुख्ये विनियोगाधिकरणम् ॥ १ ॥

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्त-
स्मादुत्पत्तिसम्बन्धो ऽर्थेन नित्यसंयोगात् ॥ १ ॥

लिङ्गहेतुकस्य विनियोगस्य श्रुतिसापेक्षत्वाच्छ्रौतविनियोगप्र-
कारचिन्तानन्तरं लैङ्गिकविनियोगप्रकारचिन्तायां सङ्गतिमाह *
इदानीमिति * विशिष्टावृत्त्या विविधरूपविनियोगाभिधानाद्विनियो- ७६३।१
गप्रकारोक्तिः । सामर्थ्याख्यस्य लिङ्गस्य मन्त्रेष्विव द्रवावदानाद्यङ्ग-
भूतेषु स्रुवादिष्वपि विनियोजकत्वसद्भावात्तेष्वलिङ्गहेतुकविनि-
योगप्रकारचिन्ता कस्मान्न कृतेत्याशङ्क्य मुख्यएव विनियोगो गौणे
ऽपि चेत्येतत्प्रकारव्यतिरिक्तस्य लैङ्गिकविनियोगप्रकारस्याभावात्त-
स्य चार्थप्रत्यायनव्यतिरिक्तसामर्थ्यहेतुकत्वाभावान्मन्त्रव्यतिरिक्तस्य
चार्थप्रत्यायनसामर्थ्याभावान्मन्त्राणामेव लैङ्गिकविनियोगप्रकार-
चिन्ताविषयत्वं भाष्यकृतोक्तमिति दर्शयितुमाह * लिङ्गं नामेति*
गौणार्थप्रत्ययस्य तर्हि मुख्यार्थप्रत्ययजन्यत्वेन मन्त्रे मन्त्रजन्यत्वा-
भावान्मन्त्रसामर्थ्यानुपपत्तेर्बर्हिर्मन्त्रस्य मुख्येष्वेव कुशेषु विनियो-
गो गौणेष्वपि वा कुशसदृशेषूलपाख्येषु सुगन्धादिषु तृणान्तरेष्वि-
तीयं चिन्ता न युज्येतेत्याशङ्क्याह * तच्चेति * गौणस्यार्थस्याशाब्द-
त्वे शाब्दार्थान्तराननन्वयापत्तेर्गौणे ऽप्यर्थे शब्दव्यापारो ऽस्तीत्याश-
यः । कः पुनरिति भाष्यस्य गौणार्थाभावात्सन्देहायोगेनाधिकरणा-
क्षेपार्थत्वं सूचयितुमाह * तत्रेति * तत्सिद्धिसूत्रे गौणस्यार्थस्यो-
क्तत्वान्नेह तदभावाशङ्का युक्तेत्याशङ्क्याह * तत्सिद्धीति * गौण-
त्वानिमित्तविशेषानवधारणे गुणस्वरूपसद्भावमात्रेण प्रकृतचिन्ता-
सिद्धेरिह सामान्यतो गौणे ऽर्थे सिद्धे जहत्स्वार्थाभिधायित्वादि-
निमित्तत्रयस्य वेदे ऽनुपपत्तेः प्रस्तरादिशब्दानां यजमानादिषु

गुणवृत्तिसिद्धौ लक्ष्यमाणगुणयोगवृत्तित्वरूपो गौणत्वयोगौणत्वनिमित्तविशेषस्तत्सिद्धिसूत्रे व्याख्यात इत्युक्ते तथाप्यजहत्स्वार्थाः सर्वा वृत्तय इति तत्सिद्धिसूत्रे ऽभिहितत्वादुपपदाधीनत्वादिषु चेहाशङ्क्यमानेषु पञ्चस्वपि गौणत्वनिमित्तेषु स्वार्थत्वान्नेहोपपदाधीनत्वादिति निमित्ताशङ्का युक्तेत्याशङ्क्य स्वार्थापरित्यागवृत्तित्वमप्यर्थेन नित्यसंयोगादित्यत्रैव सिद्धं तत्सिद्धिसूत्रे व्याख्यातमित्युक्तमतो नैव गुणो नाम कश्चिदस्तीत्याशङ्का युक्तेतीति करणार्थः । एवं सति तत्सिद्धिसूत्रं पश्चात्कार्यमित्याशङ्क्याह * अयमर्थत इति * वक्ष्यमाणगौणत्वासिद्धवत्कारेणापि निमित्तविशेषोक्तिर्युक्तेत्याशयः । उच्यतइति परिहारभाष्यं व्याचष्टे * तत्र चेति * शङ्किष्यमाणोपपदाधीनत्वादिनिमित्तान्तरनिरासं विना गुणयोगनिमित्तत्वात्सिद्धेरुपक्रममात्रत्वसूचनार्थम् * तत्र चेत्युक्तम् * उत्पत्त्युक्त्यावगतिरुक्ता गुणादवगमनं गौणत्वे हेतुरित्यर्थः । शङ्काशयविवरणार्थं यद्येवमिति भाष्यं व्याचष्टे * शाखादिभ्य इति * कथं सर्वेषां शब्दाभिधेयतेत्याशङ्कां निराकुर्वञ्श्लोकं व्याचष्टे * परेति * पैङ्गल्यादिसामान्यस्य गुणत्वाभावाद्विशेषस्य चाग्निगतस्यान्यत्राभावादग्निगुणयोगेन माणवकावगत्यनुपपत्तेरग्नित्वपैङ्गल्यतीव्रत्वादेरसर्वगतत्वादग्निशब्दात्प्रतीयमानो ऽर्थो ऽभिधीयमानत्वादन्येन प्रकारेणावगत्ययोगान्मुख्य इत्यर्थः । अन्यशब्दस्याभिधीयमानत्वापेक्षायामपि नित्यसापेक्षत्वाद् गतिशब्दसमासाविघातः । उपपदाधीनत्वादीनां निमित्तानां सिद्धान्तिनो ऽनिष्टत्वादुपन्यासपूर्वको निरासो ऽनर्थक इत्याशङ्क्य गौणत्वनिरासार्थैकदेशि-
७६४।२ कल्पितानि निमित्तान्याशङ्किता दूषयितुमुपन्यस्यतीत्याह * तत्रेति * गौणस्य मुख्याद्विवेकायेहोपपदाधीनप्रत्ययस्य लक्षणत्वेन शङ्कनीयत्वाद्व्यापिनश्च धर्मस्यान्यतो व्यावर्त्तकत्वेन लक्षणत्वादग्निरधीतइत्यादौ चोपपदाभावे ऽपि गौणत्वप्रसिद्धेरुपपदाधीनप्रत्ययस्याव्यापित्वादर्थधर्मत्वाभावाच्च लक्षणत्वा ऽनुपपत्तेरथेति भाष्यमयुक्तमाशङ्क्याह * सर्वथेति * धर्मत्वाभावे ऽप्यन्यतो व्यावर्त्तकत्वाल्लक्षणत्वोपपत्तिः पूर्वार्द्धेनोक्ता उत्तरार्द्धेन पराधीना शब्दप्रवृत्तिर्यस्मिन्नर्थे पराधीनप्रवृत्तिरित्यर्थधर्मस्य पराधीनप्रवृत्तित्वस्य लक्षणतोक्ताग्निरधीतइत्यादावपि माणवकाद्युपपदस्यार्थप्रकरणान्नित्यशब्देनाव्याप्तता परिहृता । नित्यशब्दार्थं व्याचष्टे * न हीति * माणवके पैङ्गल्ये प्रत्ययो माणवकप्रत्ययः । एवमपि को ऽत्र गुणो विवक्षितो यत्सम्बन्धाद् गौणत्वं स्यादित्याशङ्क्याह *

तदेव चेति* अग्न्यादिनाम्नां पैङ्गल्यादिप्रवृत्तौ माणवकादिपदान्तरस्य हेतुत्वेनानुग्राहकतयाङ्गात्मके गुणत्वे ऽभिहिते कथं पादान्तरस्य पैङ्गल्यादावग्न्यादिनामप्रवृत्तिहेतुतत्याशङ्क्य सामान्योक्त्या 'समानाधिकरणकृतोक्ताग्निशब्दस्य माणवकगतपैङ्गल्यादिवाचित्वाभावे माणवकशब्दाग्निशब्दसमानाधिकरण्यायोगात्पैङ्गल्यादिवाचिताग्निशब्दस्यावसीयतइत्याशयः पदान्तरेण पदान्तरस्य स्वाभाविकशक्तिनाशेन शक्त्यन्तरानुत्पादकत्वादुपपदापेक्षित्वे ऽपि मुख्यत्वानपायान्मुख्याद्विवेकानापादकत्वेनैतल्लक्षणार्थं नैतदित्यादिभाष्यं व्याचष्टे* नैतदिति* स्वभावादेव पैङ्गल्ये ऽस्याग्निशब्दं प्रति मुख्यत्वं लक्षणवाच्यत्वं नापेतमित्यर्थः । श्लोकं व्याचष्टे *यथैवेति* सम्बन्धानुभवजन्यसंस्कारसम्बन्धस्मृतिग्रहणाद्यादिशब्दः।नचासाविति भाष्यं शब्दद्वयसमुदायावयवत्वाख्यं गुणशब्दात्प्रतीतेर्गौणतेत्येवं गौणत्वलक्षणदूषणार्थत्वेन व्याख्यातुं लक्षणान्तरमुपन्यस्यति *अथेति* माणवकाग्निशब्दसमुदायवाच्यस्य पैङ्गल्यस्याग्निशब्दात्मकमवयवं प्रति गौणतेत्यर्थः । एतल्लक्षणदूषणार्थत्वेन भाष्यं व्याचष्टे * तदिति * श्लोकं व्याचष्टे * तत्रेति * उभयोरपि पैङ्गल्यपिण्डस्वरूपयोर्वाच्यत्वादुभावप्यग्निमाणवकशब्दौ प्रात्यात्मिकयोरर्थयोर्मुख्यावित्युक्ते ऽर्थे विषयगौणमुख्याविवेकप्रस्तावादर्थमुख्यत्वोक्तौ शब्दमुख्यत्वोक्तिरिति सूचनार्थोतिकरणः । वाक्यार्थस्यैकं पदं प्रति वाक्यावयवत्वात्मकगुणवशात्प्रतीतेर्गौणतेत्येवं लक्षणान्तरोपन्यासार्थमथेति भाष्यं व्याचष्टे * इदानीमिति * सर्ववाक्यार्थानां तर्हि शब्दं प्रति गौणत्वापत्तिरिति परिहारसूचनार्थम् * पूर्ववदेवेत्युक्तम् * एतल्लक्षणदूषणार्थं नैतदितिभाष्यं व्याचष्टे *तदिति* अग्निमाणवकशब्दाभ्यामग्निमाणवकत्वयोरभिधानात्तद्विशिष्टः कार्योक्तिः सम्भवतीति वाशङ्क्याह*नत्विति*तच्छब्देनाग्निशब्दः परामृष्टः । पैङ्गल्यस्य तर्ह्यग्निशब्दवाच्यत्वात्पदार्थत्वोपपत्तेर्वाक्यार्थत्वसम्भवाद्युच्येत ततो वाक्यार्थता भवेदित्यनेनावाच्यत्वात्पैगल्यस्य वाक्यार्थत्वनिरासो न युक्त इत्याशङ्क्याह *नचेति* वाक्यार्थत्वनिरासमुपसंहरति *तस्मादिति * गौणमुख्यविभागादावसिद्ध्युपसंहारार्थन्तदेवमिति भाष्यं व्याचष्टे * तेनेति * पैङ्गल्यस्य शब्दावाच्यत्वोक्तेष्वविरोधमाशङ्क्याह * माणवकस्येति * मन्दप्रसिद्धत्वात्मकं गौणलक्षणोपन्यासार्थं तथेति भाष्यं मन्दप्रसिद्धस्य गुणादवगतत्वाभावेन गौणशब्दवाच्यत्वायोगादयुक्तमाशङ्क्य मन्दप्रसिद्धस्य मन्दप्रयोगविषयभूतस्य वाक्यार्थस्योपपादनं विना निश्चेतुमशक्यत्वादुपपदस्यैवात्रापि ७६५।४

पक्षद्वये ऽनुग्राहकत्वेनाङ्गत्वाद् गुणता विवक्षितेति सूचयन् व्याचष्टे * अथेति * यथा मन्दप्रसिद्ध्या कृतमुपपदस्याश्रयणं च यथा च सुष्ठु प्रसिद्ध्या कृतमनाश्रयणं तत एव दर्शयतीति मन्दप्रसिद्धत्वस्योपपदाश्रयणमिति तत्वोक्त्या मन्दप्रसिद्ध्यर्थे प्रतीतावुपपदस्यानुग्राहकत्वाद् गुणत्वसूचिते कथं तर्ह्युपपदाधीनत्वपक्षात्पक्षान्तरतेत्याशङ्क्य मन्दप्रसिद्धौ सन्तमप्युपपदव्यापारं लक्षणत्वेन * मुक्त्वेयुक्तम् * एतल्लक्षणदूषणार्थमिदमपीति भाष्यं व्याचष्टे * तत्रेति * ज्ञानस्य निरवयवत्वात्स्वतो न्यूनातिरिक्तत्वाभावे ऽपि ज्ञात्रल्पबहुत्वाभ्यां न्यूनातिरिक्तत्वसम्भवमाशङ्क्य ज्ञात्रल्पत्वात्संख्यातो ज्ञानाल्पत्वे ऽपि मान्द्याप्रसिद्धेर्निरवयवत्वेन च स्वरूपपरिमाणाल्पत्वायोगान्निरवयवसामान्यमात्रविषयत्वेन च शब्दस्य ज्ञानस्य विषयाल्पपरिमाणतया ऽप्यल्पपरिमाणयोगान्मान्द्यायोगसूचनायाञ्जस * इत्युक्तम् * अल्पप्रयोगित्वात्सकललक्षणोपन्यासार्थमथेति भाष्यमल्पप्रसिद्धत्वलक्षणाल्पप्रयोगित्वलक्षणस्य मूलभूतत्वेन विशेषं दर्शयन् व्या-
७६६।२ चष्टे * इदानीमिति * एतच्च लक्षणदूषणार्थेनैतादिति भाष्यं व्याचष्टे * तादिति * पुनः शब्देन सामर्थ्यनिमित्तप्रत्यायकत्वाच्छब्दस्य मुख्यत्वे ऽप्यर्थस्य गौणत्वनिरासः । प्रकृतं कथं सिद्ध्येदित्याशङ्क्य शब्दस्य मुख्यत्वे ऽर्थस्यापि मुख्यत्वापत्तिरिति परिहारार्थत्वेनातः सो-ऽपीति भाष्यव्याख्या सूचिता । यथा च तद्यथा गवादिशब्दानां पृथिव्यादिरित्यनेनोपपदधीनत्वस्येति व्याप्तिर्दर्शिता तथास्य प्रसिद्धिप्रयोगयोरपि दर्शयितव्येत्याह * इहापि सेति * अतिव्याप्तिमेव दर्शयितुं वृद्धश्लोकं पठति * तथा चाहेति * परकल्पितेषु गौणत्वलक्षणेषु मुख्याद्विवेकानापादकत्वेन दूषितेषु वाच्यगुणयोगेन प्रतीयमानत्वात्मकविवेकापादकलक्षणोक्त्यर्थमत्रेत्यादि भाष्यं तात्पर्यतो व्याचष्टे * इदानीमिति * अग्निस्तावदभिधानमित्युत्कृष्य तावच्छब्दो व्याख्येयः । अग्निवत्पैङ्गल्यस्य माणवके च पैङ्गल्यान्वयस्याप्यभिधानमस्त्वित्याशङ्क्याग्निसम्बन्धादेव परिशिष्टस्यार्थस्य प्रतीतेरनभिधेयतामुक्तामाकृत्यधिकरणन्यायेन दृढयितुम् *व्यक्तिवदित्युक्तम् * परगुणानां परशक्यतां परगुणानां चेति वार्त्तिकोक्तां परिहर्तुमाह * सन्ति चेति * गुणव्यक्तीनां परत्राभावे ऽपि सामान्यानि परत्र सन्तीत्युक्ते तत्सद्भावं दृढयितुं चित्रादौ यत्तु सादृश्यं सामान्यं तत्र किं भवेत् तत्रास्मि पृथिवीवर्णसंस्थानादिसमानतेति प्रश्नोत्तररूपोपमानवार्त्तिकोक्ततोक्ता । गुणयोगनिमित्तवृत्तित्वात्मकगौणत्वलक्षणव्युत्पादनस्य वेदे गौणत्वसिद्ध्यर्थत्वोक्त्यर्थमेवमिति भाष्यं

दर्शपूर्णमासयोस्तृणसदृशाभावात् कुशाविषयस्तृणशब्दो न कुशसदृशसुगन्ध्यादितृणान्तरोलपराजिस्तरणार्थविषयस्तृणसदृशशब्द इत्येवं स्पष्टत्वान्न व्याख्यातम् । गौणमुख्याविभागोक्तेरधिकरणारम्भसिद्ध्यर्थत्वोक्त्यर्थं तदेवमिति भाष्यं व्याचष्टे * तस्मादिति * सुखग्रहणार्थं गौणत्वलक्षणानि सङ्गृह्णाति * एते चेति * स्वार्थं जहातीति जहत्स्वार्थो ऽर्थान्तराभिधायी च तस्य भावो जहत्स्वार्थाभिधायित्वं गुणिरूपाग्न्यादिस्वार्थत्यागेन गुणरूपे पैङ्गल्यादौ वृत्तिर्गौणत्वे कारणम् अग्न्यादिजातिपैङ्गल्यादिगुणसङ्घातो ऽग्न्यादिशब्दवाच्यः सङ्घातिरहितगुणमात्रे शब्दप्रवृत्तिहेतुत्वाद् गौणत्वकारणम्। अग्न्यादिशब्दवाच्यस्याग्नित्वादेर्माणवकादावग्न्यादिगुणदर्शनेन कल्पनागौणत्वकारणम्माणवकाद्युपपदसहायस्याग्न्यादिशब्दस्य पैङ्गल्यादौ वृत्तिरङ्गाख्यगुणभूतोपपदाधीनत्वाद् गौणत्वकारणमग्निर्माणवक इत्यादिशब्दस्यावयवार्थानपेक्षवर्णसमुदायरूपेण पैङ्गल्यादौ या प्रसिद्धिस्तस्याभावं समुदायावयवभूतस्याग्न्यादिशब्दस्य पैङ्गल्यादौ समुदायावयवभूतत्वाख्यगुणवत् । प्रवृत्तिहेतुत्वाद् गौणत्वकारणं पैङ्गल्यादेरग्निर्माणवक इत्यादिवाक्यार्थत्वमग्न्यादिशब्दस्य पैङ्गल्यादौ वाक्यवयवत्वाख्यगुणवत्त्वाद् गौणत्वकारणमग्न्यादिशब्दस्य पैङ्गल्यादावकल्पश्रोतृप्रसिद्धत्वमङ्गाख्यगुणभूतोपपदापेक्षत्वप्रतिनिमित्ताद्गौणत्वकारणम् ।यस्मिन् पैङ्गल्यादावग्न्यादिशब्दस्याल्पैर्वक्तृभिः प्रयोगः सो ऽल्पप्रयोगी तस्य भावो ऽल्पप्रयोगिता ऽल्पसिद्धत्ववद्गौणत्वकारणम् एतान् गौणत्वकारणपक्षान्निरस्याग्न्यादिशब्दवाच्येनाग्नित्वादिनाग्न्यादिगुणस्य पैङ्गल्यादेर्लक्षणा माणवकादावग्न्यादिगुणवत्यग्निशब्दप्रवृत्तिहेतुत्वाद्गौणंशब्दवाच्यरूपगौणत्वकारणत्वेन साधितेति नवानां मध्ये युक्तायुक्तपक्षविवेकायोक्तं किं तावदिति पूर्वपक्षभाष्यं व्याचष्टे *तत्रेति *सकृदाम्नातस्य मन्त्रस्यावृत्त्यनापत्तिः साक्षान्मुख्ये ७६७।१
विनियोगस्य मूलं भविष्यतीत्याशङ्क्य प्रतिप्रधानमावृत्त्याविरोधोक्त्यर्थं परार्थत्वादित्युक्ते मुख्यविनियोगेन कृतार्थस्य गौणे विनियोजकश्रुत्यकल्पनादुभयाङ्गत्वायोगमाशङ्क्यानेन मन्त्रेण यदभिधातुं शक्नुयात्तदभिदध्यादिति गौणमुख्यसाधारणश्रुतिकल्पनेनोक्त्यर्थो नित्यशब्दः अप्राकरणिके ऽपि तर्हि विनियोगापत्तिरित्याशङ्क्य प्रकरणावगतसामान्यसम्बन्धसापेक्षत्वाल्लिङ्गस्याप्रकृते विनियोजकत्वायोगोक्त्यैव प्रकृते गौणे मुख्ये च * प्रयोगितेत्युक्तम् * संस्कारत्वादिति सूत्रस्य शङ्कोत्तरत्वेन व्याख्यार्थमपि चेति भाष्यं व्याचष्टे * एवं चेति * प्रकरणवच्चोदको ऽप्यनुग्रहीतव्य इत्याह * तथेति *

ऋषिशब्देन दृश्यते ऽनेनेति व्युत्पत्त्या वेदाभिधानाद्वैदिकं मन्त्ररूपमार्षशब्देनोक्तम् । औत्पत्तिकेन प्रथमावगतेन मुख्येनैवार्थेन मन्त्राणां सम्बन्ध इत्येवं सिद्धान्तप्रतिज्ञार्थमध्यमसूत्रावयवव्याख्यार्थत्वेन स्पष्टत्वान्मुख्य एव चेति भाष्यमव्याख्याय हेत्वर्थत्वेनाद्यावयवव्याख्यार्थं प्रकरणे हीत्यादिभाष्यं प्रधानैकवाक्यतां विनाप्यभिधेयार्थत्वोपपत्तेः प्रधानैकवाक्यतोक्त्यानर्थक्यादयुक्तमाशङ्क्य क्रतुशेषत्वोक्त्यर्थत्वेनार्थत्वं सूचयन्सूत्रावयवपाठपूर्वं व्याख्यातुमाह * एवमिति * मुख्यार्थप्रत्यायनद्वारा गौणे ऽपि शक्त्युपपत्तेर्गौणमुख्यसाधारणैकविधिनियोजकश्रुतिकल्पनेनाविशेषादुभयत्र विनियोगं न त्विति भाष्येणाशङ्क्यानुष्ठेयत्वेनावगते पदार्थे स्मारकापेक्षिणि लिङ्गेन मन्त्रविनियोगादन्योन्यानपेक्षाणां च पदार्थानामनुष्ठेयत्वावगतेरन्योन्यानपेक्षाणामेव स्मारकापेक्षत्वात्प्रत्येकमेव पदार्थेषु मन्त्रविनियोजिकायां श्रुतौ कल्प्यायां मुख्यप्रत्यायनं विना गौणप्रत्यायनाशक्तेर्मुख्यप्रत्यायनाशक्तेर्मुख्यविषयविनियोजकश्रुतिकल्पनां विना गौणविषयश्रुतिकल्पनायोगान्मुख्यविषयश्रुतिकल्पनायाः प्राथम्यावगतेर्मुख्यविनियोगेन मन्त्रस्य नैराकाङ्क्ष्यात् गौणे मन्त्रविनियोजककल्पना न युक्तेत्येवं परिहारार्थतया मुख्येनार्थेन गौणतार्थप्रत्यायनवेलायामपि मन्त्राणां प्रत्याय्य प्रत्यायनलक्षणा संयोगादित्येवमन्त्यावयवव्याख्यार्थं सत्यमित्यादिभाष्यं व्याचष्टे * मुख्येन चेति * गौणेन कृतार्थत्वान्न मुख्ये श्रुतिकल्पनेत्येवं कस्मान्न भवतीत्याशङ्कां निरस्य श्लोकं व्याचष्टे * अपि चेति * अपि वा प्रयोगसामर्थ्यान्मन्त्रो ऽभिधानवाची स्यादिति द्वितीयमन्त्राधिकरणसूत्रन्यायेन सामर्थ्याधीनत्वाच्छ्रुतिकल्पनस्य मुख्ये च निरपेक्षसामर्थ्यावगतेस्तत्रैव श्रुतेः प्राक्कल्पत्वाद् गौणे तु सामर्थ्यस्य मुख्यसामर्थ्यपूर्वकत्वान्न वैपरीत्याशङ्का निरासाशयः एतदुपपादनायैवार्थेन नित्यसंयोगादित्यनेनाऽहत्स्वार्थता गौणवृत्तेरुक्तेति सूचनार्थम् * यदीत्युक्तम् * मुख्येनैवार्थेनोपायान्तरनिवृत्त्या मन्त्राणां स्मृत्युपायत्वेन नित्यसंयोगात्प्रकरणाम्नानार्थवत्त्वोपपत्तेर्गौणस्मृतावुपायान्तरनिवृत्त्यशक्तेः सामर्थ्यप्राप्तोपायान्तरनिवृत्त्यशक्तेः सामर्थ्यप्राप्तोपायान्तरबाधापादकगौणविनियोगायोगात्क्त्यर्थतया ऽर्थेन नित्यसंयोगादित्यवयवस्यान्यथाव्याख्यार्थमपि च गौणस्येति भाष्यं व्याचष्टे * किं चेति * मुख्यविनियोगेन मन्त्रपाठस्य कृतार्थत्वे ऽपि मुख्यद्वारा गौणप्रत्यायनार्थं गौणा ऽपि मन्त्रो विनियोज्य इत्याशङ्क्योपायान्तरेणापि गौणप्रत्यायनोपपत्तेर्मन्त्रनियमो न युक्त इत्येवं परिहारार्थत्वेन यदि गौ-

णप्रत्यायनस्य नित्यं मुख्येनार्थेनोपायोपेयत्वलक्षणः संयोगो भवेत्ततो मुख्यद्वारा मन्त्रस्य गौणे ऽपि विनियोगः स्यान्न त्वेतदस्तीति व्यवधारणकल्पनया ऽर्थेन नित्यसंयोगादित्यवयवस्यान्यथाव्याख्यार्थमपि च यो गौण इत्यादि मुख्य एव विनियोग इत्यन्तं भाष्यमवयवशो व्याचिख्यासुः प्रत्याययतीत्यन्तं तावद्व्याचष्टे* अपि चेति * सचेदित्याशङ्काभाष्यं व्याचष्टे * अन्यथेति * यदित्युत्तरभाष्यं व्याचष्टे * नेति * अथेत्याद्याशङ्कोत्तरभाष्यं व्याचष्टे * पाक्षिकत्वे ऽपीति * यदेति प्रकृतसिद्ध्युपसंहारभाष्यं व्याचष्टे * नित्यमिति * उपायान्तरेण गौणप्रतीतिसिद्धावपि मन्त्रस्मारितस्याभ्युदयकारित्वाद् गौणे ऽपि मन्त्रविनियोगो भविष्यतीत्याशङ्कानिरासार्थत्वेन साधनविशेषानपेक्षणार्थस्मृतिमात्रेण प्रयोजनभूतेनार्थानुष्ठातुः संयोगाच्च मन्त्रस्मारिततादरणीयेत्याशङ्कानिरासार्थत्वेन मुख्येनार्थेन चेति भाष्यं व्याचष्टे * न चेति * मन्त्राम्नानानर्थक्यपरिहारार्थं मन्त्रस्मारिततादरणीयेत्याशङ्कानिरासार्थत्वेन मुख्येनार्थेन मन्त्रस्य स्मार्यस्मारकत्वसंयोगमात्रादाम्नानार्थवत्त्वोपपत्तेर्न गौणस्य मन्त्रस्मारिततादरणीयत्वमेवमवधारणार्थनित्यशब्दाभ्युपगमेनैव पञ्चमव्याख्यार्थमथापीति भाष्यं व्याचष्टे * मन्त्रेति * पञ्चस्वपि व्याख्यासु सकृत्सूत्रं योजयति * तेनेति * नित्योपपादनायाव्यभिचारितोक्ता * ७६८।१

## संस्कारत्वादचोदिते न स्यात् ॥ २ ॥

भाष्यव्याख्यार्थं सूत्रं योजयति अचोदित इति * लिङ्गेन प्रकरणबाधस्यादोषत्वोक्त्यर्थतया न च कश्चिदिति भाष्यावयवं व्याख्यातुं लिङ्गेन चेद्युक्तं कर्मान्तराङ्गत्वे ऽपि तर्हि प्रमाणाभावादानर्थक्यं स्यादित्याशङ्कते * कथं पुनरिति * वैदिकत्वसामान्योपस्थापितवैदिककर्मान्तराङ्गत्वं सन्निधानाख्येन पञ्चमप्रमाणेनाशङ्क्याहवनीयादिवत्सामान्यत कर्माङ्गत्वानवगमात्सामान्यमात्रेणानाकाङ्क्षिता कर्मविशेषाङ्गता बोद्धुमशक्येति परिहारसूचनार्थं वैदिकोक्तिः । कर्मानङ्गत्वे ऽपि लिङ्गाद्देवताङ्गत्वं भवतीत्याशङ्क्याह * कथं चेति * क्रत्वङ्गभूते ऽर्थे सामान्यतो मन्त्रविनियोगाभावे कर्मापूर्वसाधनत्वापेक्षायां विनियोगापत्तेर्नैष्फल्यप्रसङ्गान्न लिङ्गमात्रादङ्गत्वं सम्भवतीत्याशयः । परिहर-

(१) चतद्यादरणीयेत्येवमवधारणार्थनित्यशब्दाभ्युपगमेनान्यथा व्याख्यार्थमर्थेन चेतिभाष्यं * व्याचष्टे नचेति * इति २ पु० पा० ।

ति * तदिति * पूर्वार्द्धं व्याचष्टे * यागेति * उत्तरार्द्धं व्याचष्टे * तत इति * चोदकानुग्रहशङ्कोत्तरत्वे तु विकृता-वचोदिते ऽग्न्यादावग्न्यादिशब्दो यत्र भवति तत्तथा युक्तमित्येवं सूत्रयोजना स्पष्टत्वान्न कृता।

गार्हपत्यन्यायः । इन्द्रप्रकाशकमन्त्राणां गार्हपत्य विनियोगाधिकरणम् ॥ २ ॥

## वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥

गौणसामर्थ्यस्य विनियोजकत्वे निरस्ते विनियोजकश्रुतिसहायतापि गौणसामर्थ्यस्य न सम्भवतीति प्रसक्त
७६९।१ स्यापवादार्यैतदधिकरणमित्यनन्तरसङ्गतिमाह * अपवाद इति * निवेशनः सङ्गमनो वसूनां विश्वारूपा अभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे वसूनामित्युपमार्थो येन कारणोपमानतया ऽस्मिन्मन्त्रे निर्देशादप्राधान्यात् गतेर्धरो ध्रुवः तथा सोम आपश्चैवानिलो ऽनलः प्रत्यूषश्च प्रभासश्च वसवो ऽष्टौ प्रकीर्त्तिता इत्यनलशब्दवाच्यस्य वाग्नेर्वसुत्वस्मरणादुक्तानां मध्ये ऽग्निर्वा नाम वसुरिन्द्र इव सङ्ग्रामे स्थितवानित्यग्निस्तुतिप्रतीतेर्वसूनां पावकश्चास्मीति चाग्नेरेव वसुश्रेष्ठत्वस्मरणात्तत्समीपे ऽन्येषां वसूनां गमनाद्वसुसङ्गमनत्वेनाप्यग्नेरेव स्तुतिप्रतीतेर्नैयमृगैन्द्रीत्वेनोदाहार्येत्याशङ्क्याह *निवेशन इति * बलाबलाधिकरणे श्रुत्या लिङ्गबाधस्य वक्ष्यमाणत्वान्मन्त्रस्य स्वरससामर्थ्यानालोचनेनैन्द्र्यचेति देवतातद्धितश्रुत्यैन्द्रप्राधान्यावगमाद्रामरावणयोरिवेति वद्यानन्यचरितत्वेनेन्द्रस्यापीन्द्रोपमानरूपस्तुतिसम्भवादैन्द्रीत्वेनैषोदाहृतेत्याशयः । विज्ञायतइति कृत्वैतदुदाहरणं युक्तमित्यध्याहारेण ग्रन्थो योज्यः। मन्त्रस्वरससामर्थ्यालोचनेन च पूर्वपक्षकरणे बलाबलाधिकरणवदिहापि कदा चनस्तरीरसीत्यृचः शाखान्तरपठिताया उदाहार्यत्वापत्तेस्तद्धितश्रुत्यालोचनयैवेह पूर्वपक्ष इत्यपौनरुक्त्यसूचनायाह* केषां चित्विति * असमर्थविनियोगाशक्तेः श्रुत्या सहायत्वेनापेक्षितं सामर्थ्यं किं मुख्यमेव सहायतामश्नुते । गौणमपि चेति सन्देहो भाष्योक्तसन्देहस्य हेतुरिति सूचयितुमाह * तत्रेति * कुतः पुनरित्याद्याक्षेपपूर्वकसन्देहसमाधानार्थं भाष्यं शब्दवस्तुविसंवादात्संदेहो घटनीय इत्येवमर्थत्वेन तात्पर्यतस्तावद्व्याचष्टे * सत्यपि चेति * नच्चारुणवन्मन्त्रस्य कथं चिदपि शक्तिर्वक्तुं शक्या यतस्तन्निर्णये-

